॥ श्रीः ॥

मीमांसासाम्राज्यधुरन्धरमहामहोपाध्यायविद्वद्वर-
श्रीपार्थसारथिमिश्रशास्त्रिप्रणीता·

मीमांसाशास्त्रशिखामणिः
तर्कपादीया

# शास्त्रदीपिका

पञ्चनदीयपण्डितसुदर्शनाचार्यशास्त्रिप्रणीतया

शास्त्रदीपिकाप्रकाशाख्यव्याख्यया

संवलिता



काशी

विद्याविलासप्रेस

वैक्रमसंवत्
१९६४

॥ श्रीः ॥

# ॥ भूमिका ॥

अये विविधविद्याविलासोल्लासितसत्त्वभूमयो विद्वद्वरा महाशयाः !

धर्मैकमूलस्य स्वतः प्रमाणभूतस्य वेदस्य पूर्वोत्तरभेदेन द्वौ भागौ तत्रोत्तरभागमुद्दिश्य प्रवृत्ता ब्रह्ममीमांसा पूर्वभागं चोद्दिश्य प्रवृत्ताऽध्वरमीमांसेत्यपरनामधेया पूर्वमीमांसा या खल्वत्यन्ताभ्यर्हत्वादऽवश्यमुपादेयत्वात्सकलशास्त्रमूलत्वाद् ब्रह्ममीमांसातोपि पूर्वमेवाध्ययनीयत्वाच्च केवलमीमांसाशब्देनापि शक्यते, पूर्वं विद्वद्वरैः कृताधिकतरादराप्येषा मीमांसा संप्रति दैवकोपवशाद् भारतवर्षस्य भाग्यविपर्ययाच्च लुप्तकल्पेव वर्तते। अस्य च मीमांसाशास्त्रस्य मूलं मुनिप्रवरजैमिनिप्रणीतानि द्वादशाध्यायेषु संविभक्तानि सूत्राण्येव, तेषां च सूत्राणां केन चिद्विद्वद्वरेण वृत्तिर्विरचिता सा खलु नोपलभ्यते, शबरस्वामिना च भाष्यं प्रणीतं तत्र श्रीकुमारिलभट्टेन प्रथमपादे श्लोकवार्तिकं द्वितीयपादादारभ्य तृतीयाध्यायपर्यन्तं तन्त्रवार्तिकं चतुर्थाध्यायादारभ्य द्वादशाध्यायपर्यन्तं च टुप्टीकेति ग्रन्थत्रयं भाष्यव्याख्यास्वरूपं विरचितं तत्र भाष्यवार्तिकयोरभिप्रायेण श्रीमत्पार्थसारथिमिश्रः शास्त्रदीपिकामरचत्।

यद्यपि मीमांसाशास्त्रे बहवः सन्दर्भा उत्तमोत्तमाः सन्ति अधिकरणार्थज्ञानाय च माधवीयाधिकरणमालाया एव बहुशः प्रचारोस्ति तथापि लेखपरिपाकवशादेषा शास्त्रदीपिका विद्वद्बहुमानपात्रतां प्राप्ता । अत्र च ग्रन्थकृत् तर्कपादे बहूनां दर्शनानामतिगभीरान् विदुषामप्यायासप्रदान् सिद्धान्तान् पूर्वपक्षतयोपन्यस्य निरास्थत्, अयमेव च तर्कपादस्य क्लिष्टत्वे हेतुः । तत्रापि निरासायोपन्यस्तानि बौद्धप्रभाकरयोर्मतान्यऽतीवक्लेशप्रदान्येव तन्मतग्रन्थोपलब्धेरुपलभ्यमानग्रन्थावलोकनावृत्तश्च चिरेण निवृत्तत्वात्।

अस्याश्च शास्त्रदीपिकाया द्वितीयपादमारभ्य विद्वद्वरसोमनाथप्रणीता मयूखमालिका(सोमनाथी)व्याख्योपलभ्यते प्रथमस्य तर्कपादस्य तु न कस्या अपि व्याख्यायाः समाख्यापि श्रवणगोचरतां प्राप्नोति, अध्ययनाध्यापनपरिपाटिश्च विशेषतस्तर्कपादस्यैव लोकसरणिमनुवर्तते इत्यालोच्य मया विद्यागुरुभ्यो महामहोपाध्यायसीआईईविद्यैकनिधिश्री ७ श्रीमद्गङ्गाधरशास्त्रिभ्यो यदणुमात्रमवगतं तत्संकलय्य शास्त्रदीपिकाप्रकाश इतिसमाख्ययेयं तर्कपादस्य व्याख्या विदुषां हर्षाय छात्राणामुपयोगाय च प्रकाशितास्ति । अत्र च मूलपाठोपि प्राचीनलिखितपुस्तकानुकूल्येन प्रकाशित इति विदुषां प्रायः प्रीतिकरः स्यादिति सम्भावयामि ।

एतद्व्याख्यानिर्मितिसमाप्त्यनन्तरं मया प्रथमसूत्रीयतर्कपादस्यैका व्याख्योपलब्धा शङ्के सा केन चिन्माध्वेन निर्मिता स्यादिति तदवलोकनेनैतदवश्यं

वक्तुं शक्यते-एषा मन्निर्मिता व्याख्याप्यशुद्धा नास्ति प्रथमसूत्रीयविषयव्याख्याने संवाददर्शनादिति, तस्यां लेखपरिपाको वादश्च गभीरो हिन्नस्थानेषु दृष्ट इत्यन्यदेतत्। इदं च महच्छोकस्थानं यत्सापि टीका द्वितीयसूत्रादारभ्य नोपलभ्यते। अत्र च भूमिकाया अग्रे पदार्थस्वीकारेषु भट्टप्रभाकरयोर्मतान्यपि यथोपलब्धानि कानि चिद् यथामति मया प्रदर्शितानि।

तर्कपादस्य गाम्भीर्यमवलोक्य व्याख्यान्तरानुपलब्धिवशान्मया वैयात्येन प्रकाशोयं प्रकाशितः। यद्यपि "आत्मनः प्रियतया तनुभाजां नात्मनः कृतिषु दूषणदृष्टिः" इति न्यायात् मादृशसरागाणां स्वविरचितसन्दर्भे दोषदृष्टिर्नैव भवति तथापि नात्मप्रेमपूर्णनयननिरीक्षणमात्रेण कस्य चित् सगुणत्वं संभवतीत्येतत्सन्दर्भस्योत्तमाधमभावे निष्पक्षन्यायपरायणा विपश्चिद्वरा एव प्रमाणम्। अत्र च बलानां विस्पष्टप्रतिपत्त्यर्थं क्वचित् क्वचित् पुनरुक्तत्वं बुद्ध्यैवापादितमिति न तद् दोषदृष्ट्या निरीक्ष्यम्, तथा यथामति यथावकाशं च पूर्वपक्षिमतान्यपि तत्तन्मतीयसिद्धान्तवाक्योपन्यासपूर्वकं स्फुटीकृतानि चेति मन्ये मदीयाऽऽयासं सफलं करिष्यन्ति तत्रभवन्तो विद्वांसः स्खलितेषु च ससूचनं क्षमिष्यन्ते मामिति सविनयम्—

"तद्विद्वांसोऽनुगृह्णन्तु चित्तश्रोत्रैः प्रसादिभिः।
सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः॥
न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः।
दोषो ह्यविद्यमानोपि तच्चित्तानां प्रकाशते॥
आगमप्रवणश्चाहं नापवाद्यः स्खलन्नपि।
न हि सद्वर्त्मना गच्छन् स्खलितेष्वप्यपोद्यते॥"

इत्यादीन्यत्र वाक्यानि चिन्तनीयानि कोविदैः।
वार्तिककृद्भट्टपादमीमांसाद्विविपश्चितः॥
यथा चीनांशुकस्याधो विकृता शणपट्टिका।
पार्थसारथिलेखाधस्तथा मे विषमा लिपिः॥

इति निवेदयति

श्रीमतीयः पञ्चनदीयः

सुदर्शनाचार्यः

काशी

## मीमांसकाभिमतपदार्थसंग्रहः

| भट्टमतम्— | प्रभाकरमतम्— |
| --- | --- |
| १ ईश्वरो नास्ति । | १ ईश्वरो नास्ति । |
| २ आत्मा—विभुः प्रतिशरीरं भिन्नः कर्ता भोक्ता द्रष्टा ज्ञानसुखदुःखेच्छादीनां समवायी न तु ज्ञानसुखादिरूपः किं तु ज्ञानशक्तिकस्तस्याश्च ज्ञानशक्तेर्न कदापि विनाशः । स्वकृतपुण्यपापैश्च जन्मजात्यायुर्भोगान् यथायथमिह परत्र च प्राप्नोति । प्रारब्धकर्माणि भोगेन विनाश्यात्मज्ञानेन विमुक्तो भवति। मोक्षश्च दुःखाभावमात्रं न सुखस्वरूपः । मुक्तस्य च स्वरूपमात्रमवतिष्ठते नेन्द्रियादिकं नापि मन इति मुक्तस्य न स्वरूपज्ञानं स्वातिरिक्तज्ञानं वा भवति। | २ भट्टवदेव । |
| ३ ज्ञानमनुमेयं न स्वप्रकाशं स्वाविषयमात्रपरामर्शकं च | ३ सर्वं स्वज्ञानंस्वंप्रतिस्वयं प्रकाशंविषयवत् स्वस्वरूपमात्मानंचपरामृशति । |
| ४ शुक्तिरजपीतशङ्खादिज्ञानमयथार्थम् । | ४ सर्वं ज्ञानं यथार्थमेव शुक्तिरजतज्ञानादीनां विसंवादिप्रवृत्तिजनकत्वाद् भ्रान्तित्वमुच्यते न स्वरूपतोऽयथार्थत्वम् । |
| ५ प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धय इति षट् प्रमाणानि। | ५ पञ्च प्रमाणानि । अधिकरणातिरिक्तोऽभावपदार्थो नास्तीति नानुपलब्धिः प्रमाणान्तरम् । |
| ६ द्रव्यगुणकर्मसामान्यसमवायशक्त्यऽभावाः पदार्थाः । | ६ द्रव्यगुणकर्मसामान्यसमवायसंख्याशक्तिसादृश्यानि पदार्थाः । |
| ७ विशेषो न पदार्थान्तरम् । | ७ विशेषो न पदार्थान्तरं पृथक्त्वेऽन्तर्भावात् । |
| ८ क्षित्यप्तेजमरुद्व्योमकालदिगात्ममनस्तमोवर्णा द्रव्याणि । | ८ तमश्शब्दयोर्न द्रव्यत्वं तमसस्तेजोहीनाधिकरणात्मकत्वात् शब्दस्याऽऽकाशगुणत्वात् । |
| ९ क्षित्यप्तेजसां त्वाचचाक्षुषप्रत्यक्षविषयत्वम् । वायोश्च त्वाचप्रत्यक्षविषयत्वम् । | ९ तथा |
| १० व्योमकालदिशां च विशेष्यत्वेन प्रत्यक्षाविषयत्वेपि विशेषणत्वेन प्रत्यक्षविषयत्वमस्त्येव । | १० व्योमकालदिशामनुमेयत्वमेव न प्रत्यक्षत्वम् । |

| भट्टमतम्— | प्रभाकरमतम्— |
| --- | --- |
| १२ शब्दो द्विविधः—ध्वन्यात्मको वर्णात्मकश्च ध्वन्यात्मकस्तु वायुसमवेतो गुणो न त्वाकाशस्य गुणः। वर्णात्मकश्च द्रव्यमेव। वर्णाश्च विभवो नित्याश्च। पदं च वर्णात्मकमेव न तु वर्णावयवि पदम्। | १२ वर्णात्मकोध्वन्यात्मकश्च सर्वोपि शब्द आकस्यैव गुणस्तत्र वर्णात्मको नित्यः। पदं च वर्णात्मकमेव। ध्वन्यात्मकश्चानित्यः। |
| १३ रूपरसगन्धस्पर्शपरिमाणसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहसंस्काराऽदृष्टबुद्धिसुखदुःखेच्छाद्वेषप्रयत्ना इति विंशतिर्गुणा। सङ्ख्यापि गुण एव। | १३ |
| १४ कर्म चलनात्मकमेकम्। | १४ |
| १५ सामान्यं परापररूपं द्विविधम्। | १५ परसामान्यं नास्त्येव किं तु घटत्वगोत्वादिकमेव। |
| १६ समवायश्चैकः। | १६ |
| १७ शक्तिस्त्रिधा—सहजा आधेया पदशक्तिश्च। | १७ |
| १८ अभावस्त्रिधा—ध्वंसोऽत्यन्ताभावो भेदश्च। | १८ अभावो न पदार्थान्तरं किं त्वधिकरणात्मक एव। |
| १९ कर्म प्रत्यक्षमपि। | १९ कर्मानुमेयमेव न प्रत्यक्षम्। |
| २० सामान्यं प्रत्यक्षमपि। | २० तथा। |
| २१ अभावोनुपलब्धिगम्यः। | २१ अभावो न पदार्थान्तरम्। |
| २२ तथा | २२ मनश्चाणु। |
| २३ | २३ शरीरं त्रिविधम्-जरायुजाण्डजस्वेदजभेदात्। उद्भिज्जं न शरीरभेदः। |
| २४ | २४ शरीरं सर्वं पार्थिवमेव। |
| २५ संसारोयमनादिः सृष्टिप्रलयौ न स्तः | २५ तथा |
| २६ उपमानस्य दृश्यमानव्यक्तिप्रतियोगिकं सादृश्यं विषयः। | २६ तथा |
| २७ वैदिकशब्दो लौकिकश्चाप्तशब्दः प्रमाणम्। | २७ वैदिकशब्द एव प्रमाणम्, लौकिकशब्दस्य तु न पृथक् प्रामाण्यमनुमानविधयैव बोधकत्वेनानुमानान्तर्भावात्। |
| २८ यागादीनां धर्मत्वम्। | २८ यागादिजन्यापूर्वस्य धर्मत्वम्। |
| २९ प्रमाणानां सर्वेषां स्वतः प्रामाण्यमेव, दोषादिज्ञानैस्तस्य बाधो भवती- | २९ ज्ञानानां सर्वेषां यथार्थत्वादेव स्वतः प्रामाण्यम्, अयथार्थत्वाभावाद्बा- |

| भट्टमतम्— | प्रभाकरमतम्— |
|---|---|
| स्वप्रामाण्यं परतः । | ऽप्रामाण्यं परतोपि नास्ति । |
| ३० प्रत्यक्षं षड्विधम् । | ३० तथा । |
| ३१ अनुमानं द्विविधम्- सामन्यतोदृष्टं विशेषतोदृष्टं च। द्विविधमपि पुनर्द्वि-विधं स्वार्थं परार्थं च । केवलान्वयि-केवलव्यतिरेकिभेदौ नेष्टौ । परार्थानु-मानं त्र्यवयवमेव-उदाहरणपर्यन्तमु-दाहरणादिकं वा । | ३१ तथा । |
| ३२ अर्थापत्तिर्द्विधा-दृष्टार्थापत्तिः श्रुता-र्थापत्तिश्च । | ३२ तथा । |
| ३३ सुखाद्युत्पत्तौशरीरात्मसंयोगःकार-णम् । | ३३ सुखाद्युत्पत्तावात्ममनस्संयोगः का-रणम् । |
| ३४ आत्मा न स्वयंप्रकाशः किं तु मा-नसाहंप्रत्ययगोचरः । | ३४ स्वयं प्रकाश आत्मा नाहंप्रत्यविष-यः किं तु घटादिज्ञानेष्वेव विषयवदव-भासते । |
| ३५ अभिहितान्वयवादः । | ३५ अन्विताभिधानवादः । |

## विषयानुक्रमः

श्रीः

## मूलस्य शुद्धिपत्रम्

| पृ० | पं० | अशुद्धम्। | शुद्धम् | पृ० | पं० | अशुद्धम्। | शुद्धम् |
|---|---|---|---|---|---|---|---|
| १५ | १ | करि | कारि | २५४ | १ | त्वत् | त्वात् |
| २३ | ४ | कर्य | कार्य | ४२० | १० | ईतये | ईयते |
| ६२ | १ | ष्यज्य | षज्य | ४३५ | ३ | मात्र | मात्रा |
| ६८ | २ | पार्थ | पदार्थ | ५१४ | ७ | ज्ञानं | ज्ञाने |
| १६५ | ४ | वक्तम, | वक्तव्यम, | ६१५ | ३ | वभिष्यत् | भविष्यत् |
| २५० | ५ | लफं | फलं | | | | |

## टीकायाः शुद्धिपत्रम्

| पृ० | पं० | अशुद्धम्। | शुद्धम् | पृ० | पं० | अशुद्धम्। | शुद्धम् |
|---|---|---|---|---|---|---|---|
| ९ | १ | हृताश्वव | हृतश्वाव | २७० | १९ | शक्यते | शक्यते |
| ९ | १५ | मिक | किम | २७५ | १ | कारास्वीत् | स्वीकारात् |
| १३ | ९ | उपनय | उपनयन | २७८ | २४ | ध्याया | ध्याय |
| १४ | २२ | सिद्धर्थे | सिद्धयर्थे | २८१ | ११ | वय | व्या |
| १५ | ४ | विषयस्या | विषयस्याध्यापनस्या | ३०१ | (हेडिङ्ग) | पण्यम् | पणम् |
| ३२ | २३ | नीयादे | नीयत्वादे | ३१४ | १८ | प्रजा | प्राजा |
| ४१ | ३ | भूतग्र्ग् | भूतर्ग् | ३१५ | ४ | नाऽऽभा | नाऽभा |
| ४७ | ३ | नमेव | नामेव | ३१८ | १८ | मन्त्र | मन्त्रा |
| ६३ | १० | पादा | पदा | ३५६ | १२ | कर | कार |
| ७६ | १९ | विषस्य | विषयस्य | ३५९ | १९ | शक्तिग्र | शक्तिग्रह |
| १०१ | १७ | प्रतिशेध | प्रतिषेध | ४२७ | ८ | णाय | णाह |
| ११० | ५ | पुरुस्ये | पुरुषस्ये | ४८८ | ७ | प्रसिन्धा | प्रतिसन्धा |
| ११५ | १० | कस्ती | कमस्ती | ५१६ | १७ | स्यादित्य | स्या |
| १३२ | २१३ | पत | पीत | ५१९ | (हेडिङ्ग) | आन्दा | आनन्दा |
| १८३ | १२ | अवच्छेय | अवच्छेद | ५३३ | १६ | ग्रवा | गवा |
| १९० | १८ | विषण | विषय | ५५१ | २१३ | सूर्यस | सूर्यापेक्षया स |
| १९४ | १३ | करता | कारता | ५७० | २१ | षियक | विषयक |
| १९६ | ५ | नी | नीला | ५७६ | १० | प्रका | प्राक |
| २०७ | १८ | प्रत्यक्ष्य | प्रत्यक्ष | ५७६ | १५ | हेत्व | हेत्वन्त |
| २२५ | ९ | प्रमाणक्ष | प्रमाणलक्ष | ५७८ | ९ | लन्तः | लान्तः |
| २२७ | ४ | प्रामाणा | प्रमाणा | ५९७ | १५ | पन्हुतम् | मपन्हुतम् |
| २२७ | ७ | नगत | नवगत | ५९८ | १० | प्रण | प्रणा |
| २५१ | १ | तद्राभाव | तद्भाव | ५९८ | १४ | सिद्ध | सिद्धि |
| २५४ | १२ | न्तरर्भो | न्तर्भो | ६१४ | ८ | संभावात् | संभवात् |
| २६४ | १ | दृष्टान्त | दृष्टान्त | ६१६ | ५ | स्मणणे | स्मरणे |

॥ अवशं शिष्यतेऽशुद्धिः सूक्ष्मदृष्ट्यापि दर्शने ॥

॥ श्रीः ॥

छात्राणामुपयोगः स्याद्धर्षः स्याद्विदुषां तथा ।<br>
मया सुदर्शनेनातः प्रकाशोयं प्रकाशितः ॥<br>
विपुलध्वान्तयुक्तेयं यद्यपि शास्त्रदीपिका ।<br>
नातः कार्याऽत्र दुष्टा दृक् त्याज्यो दुष्टोपि नो मणिः ॥

उक्तं च—

" मर्त्यैरसर्वविदुरैर्विहिते क नाम<br>
ग्रन्थेस्ति दोषविरहः सुचिरन्तनेपि ?"

॥ श्रीः ॥

॥ श्रीः ॥

अथ

सटीका

# ॥ शास्त्रदीपिका ॥

॥ श्रीमते हयग्रीवाय नमः ॥

लक्ष्मीकौस्तुभवक्षसं मुररिपुं शङ्खासिकौमोदकी-
हस्तं मद्मपलाशताम्रनयनं पीताम्बरं शार्ङ्गिणम् ।
मेघश्याममुदारपीवरचतुर्बाहुं प्रधानात्परं
श्रीवत्साङ्कमनाथनाथममृतं वन्दे मुकुन्दं मुदा ॥

अथ

## ॥ शास्त्रदीपिकाप्रकाशः ॥

॥ श्रीमते हयग्रीवाय नमः ॥

॥ भगवते श्रीरामानुजाचार्यमुनये नमः ॥

आद्यं विद्यानिदानं विधिविबुधवरैर्वन्द्यमानाङ्घ्रिपद्मं
धाम्नां धामैन्दवानां दनुजभुजरुजां जन्मनां छद्म जिह्मम् ।
प्रज्ञाऽऽलोकार्कमूर्तिप्रतिकृतिमऽमतिध्वान्तदन्त्येणशक्रं
वक्रं भक्ताघचक्रे हरिमिह तुरगग्रीवमुग्रं प्रपद्ये ॥
संसारहीनपरहंसावतंसमऽतिकंसारिपादरतिदं
वेदान्तमार्गविधुखेदान्तकृद्विधिमऽभेदान्धकारतरणिम् ।
नारायणीयपदपारायणं निगमसाराय मन्दरगिरिं
रामानुजं त्रियुगवामास्तेनृपमऽकामाहतं हृदि भजे ॥
क्रियते बालबोधाय मिताक्षरपरिष्कृतः ।
श्रीशास्त्रदीपिकायास्तु प्रकाशोऽज्ञाननाशनः ॥

भगवतो नारायणस्य महत्त्वमनुस्मरन् ग्रन्थसमाप्तिकामो ग्रन्थकारः शिष्य-शिक्षायै विघ्नविघाताय शिष्टाचारपरिरक्षणाय च मङ्गलमातनोति–लक्ष्मीकौस्तु-

भेत्यादिना, लक्ष्मीः कौस्तुभश्च वक्षसि यस्य तम्, मुरस्य रिपुं शत्रुम्, शङ्खोऽसिः कौमोदकी=गदा च हस्ते यस्य तम्, "कौमोदकी गदा, खड्गो नन्दकः, कौस्तुभो मणिः" इत्यमरः। पद्मस्य पलाशवत्=पत्रवत् ताम्रं रक्तं नयनं यस्य तम्, पीतमम्बरं वस्त्रं यस्य तम्, शार्ङ्गाभिन्नचापधारिणम्, मेघ इव श्यामम्, उदारा भक्ताभीष्टफलप्रदाननिपुणाः पीवराश्च चत्वारो बाहवो यस्य तम्, प्रधानात्=प्रकृतेर्मायाया वा परं दूरे वर्तमानं प्रकृतिसंबन्धरहितं दिव्यानन्तकल्याणगुणगणार्णवमित्यर्थः, प्रधानस्यापि प्रधानमधिष्ठातारमिति वा, श्रीवत्सस्याऽङ्को लक्ष्म यस्य यस्मिन् वा तम्, अनाथानाम्=अन्यत्र सर्वत्र परित्राणरहितानां जनानां नाथो रक्षकस्तम्, उक्तं च "परित्राणाय साधूनाम्" इत्यादिना, एवंभूतं मुकुन्दं पुरुषार्थचतुष्टयप्रदं श्रीनारायणं मुदा=हर्षेण वन्दे=प्रणमामीत्यर्थः।

मीमांसाशास्त्रं हि यागीयविषयप्रतिपादकं यागे च सलकत्रस्यैवाधिकारादुक्तमत्र लक्ष्मीति। कोसौ यागो यत्र भगवान्नारायणो दीक्षितः? इत्याकाङ्क्षायामाह-अनाथनाथमिति, अनाथजनरक्षणलक्षणाध्वरे दीक्षित इत्यर्थः, तदुक्तं श्रीभगवद्रामानुजाचार्यैः-"विविधविनतभूतव्रातरक्षैकदीक्षे" इत्यादि। "मुक्तिमिच्छेज्जनार्दनात्" "नान्यः पन्था विद्यते अयनाय" इत्यादिप्रमाणैर्भगवान्नारायण एव मोक्षप्रदो यागादिफलमपि स एव ददाति स एव च तत्तद्देवतान्तर्यामित्वेन यागैराराधनीय इति शास्त्राभिप्रायं जानानः पार्थसारथिमिश्रस्तमेव भगवन्तं स्तौति। सकलश्रुतिस्मृतिप्रतिपाद्यं भगवतः परत्वं चानुवदति-प्रधानात्परमिति। प्रक्षिपतीव चाधुनिकमीमांसकानामऽनीश्वरवादम्। अत एव विंशतिलक्षणी ब्रह्ममीमांसेति श्रीवैष्णवैरुच्यते।

मङ्गलवादश्च विस्तरेण तार्किकाणां तत्त्वचिन्तामणौ द्रष्टव्यस्तत्र मीमांसकमतमाश्रित्यैवमुक्तम्-" इह खलु सलकशिष्टैकवाक्यतयाऽभिमतकर्मारम्भसमये तत्समाप्तिकामा मङ्गलमाचरन्ति। तथाविधशिष्टाचारानुमितश्रुतिरेव मङ्गलस्याभिमतहेतुत्वे मानम्। नच व्यभिचारः-निष्परिपन्थिश्रुत्या मङ्गलं समाप्तिसाधनमिति प्रमापिते तत्रापि तथैव ( समाप्त्या ) लिङ्गेन जन्मान्तरीयतदनुमानात्, तच्चेदमारब्धकर्माङ्गं कर्मार्थितया शिष्टैस्तत्पूर्वं क्रियमाणत्वात्। आचारमूलकश्रुत्यनुमानाभ्यां तदर्थितया तत्कर्तव्यत्वबोधनात् तत्फलक-

न्यायाभासतमश्छन्नशास्त्रतत्त्वार्थदर्शिनीम्।
कुमारिलमतेनाहं करिष्ये शास्त्रदीपिकाम्॥

(प्रथमं धर्मजिज्ञासाधिकरणम्)

## सू०—अथातो धर्मजिज्ञासा॥१॥

---

त्वबोधनाच्च। विघ्नध्वंसद्वारा चेदम् (मङ्गलम्) अङ्गम्। सति विघ्ने तद्ध्वंसद्वारा तस्याङ्गत्वात्। वस्तुतस्तु प्रायशो विघ्नसंशये तन्निश्चये वा नियमेन शिष्टानां मङ्गलाचरणे विघ्नाभाव एव द्वारत्वेनाभिमतः, निर्विघ्नं समाप्यतामिति कामनया तत्करणपक्षे श्रुतित एव द्वारत्वनिर्णयः। विघ्नसंशये निश्चये वा नियमेन शिष्टानां मङ्गलाचारात् विघ्नज्ञानं प्रवर्तकं तादृशाचारानुमितविधिनापि विघ्नज्ञानवानाऽऽरब्धसमाप्तिकामोऽधिकारी बोध्यते। अन्ये तु—मङ्गलं प्रधानमदृष्टद्वाराऽऽरब्धकर्मसमाप्तिः फलं तत्कामोऽधिकारी बोध्यते। अपरे तु—मङ्गलस्यारब्धनिर्वाहकत्वे विघ्नसंसर्गाभावद्वारा तथैव (विघ्नसंसर्गाभावत्वेनैव) प्रतिबन्धकाभावस्य (विघ्नाभावस्य) हेतुत्वात् स चाभावः सतो विघ्नस्य ध्वंसोऽनागतस्यानुत्पादश्च। एवं निर्विघ्नं समाप्यतामिति कामनया तदाचारोपि सङ्गच्छते।" इत्यादि। श्रीमथुरानाथेनाप्युक्तम्। "यद्यपि वेदोपि विवक्षितफलार्थिकर्तव्यत्वं न बोधयति तथापि समाप्तिसाधनतायां बोधितायामर्थात् तत्सिद्धिरिति भावः।" "मङ्गलमपूर्वं जनयति तेन चापूर्वेण विघ्नसंसर्गाभावो जायते विघ्नसंसर्गाभावाच्च समाप्तिरिति क्रमेण स्वजन्यापूर्वजनितविघ्नसंसर्गाभावद्वारा मङ्गलस्य समाप्तिहेतुत्वमिति केचिन्मीमांसका वदन्ति तन्मतमुपन्यस्यति—अपरेत्विति।"इति।

स्वकर्तव्यं ग्रन्थकृत् प्रतिजानीते—न्यायाभासेति, प्रभाकरोद्भासितैर्न्यायाभासलक्षणैस्तमोभिश्छन्नं यन्मीमांसाशास्त्रं तत्तत्त्वार्थप्रदर्शिनीं शास्त्रदीपिकां शास्त्रस्य मीमांसाशास्त्रस्य ब्रह्मविचारात्पूर्वमेव धर्मविचारायाऽध्ययनीयस्य दीपिकामिव, वार्तिककारस्य श्रीकुमारिलभट्टस्य मतेन=अभिप्रायानुकूल्येन करिष्ये। अत्र च पूर्वार्धस्य "शबरस्वामिनं नत्वा भट्टाचार्यं च जैमिनिम्" इत्यपि पाठान्तरम्।

व्याख्येयं सूत्रमवतारयति—"अथातो धर्मजिज्ञासा" इति। विषयप्रयोजनसम्बन्धाधिकारिष्वत्र धर्मो विषयः, धर्मज्ञानं च प्रयोजनम्, सम्बन्धश्च प्रति-

अनेन सूत्रेण प्रारिप्सितस्य शास्त्रस्य श्रोतृप्रवृत्ति-सिद्धये धर्मज्ञानं प्रयोजनं कथ्यते। यदा हि धर्मजिज्ञासा कर्त्तव्येत्युक्त्वा शास्त्रमारभ्यमाणं दृश्यते तदा नूनमिदं शास्त्रं धर्मज्ञानप्रयोजनमित्यवगम्यते।

विदितं तावत्प्रयोजनं संबन्धोपि शास्त्रस्य प्रस्ताव-हेतुर्वक्तव्यः? यथा शास्त्रान्तरेषु शिष्यप्रश्नानन्तर्या-दिसम्बन्धः प्रस्तावको वर्ण्यते, तथेहापि शास्त्रारम्भे प्रयोजकानां संबन्धानामन्यतमो वक्तव्यः? अनेन स-म्बन्धेनेदं शास्त्रमायातमिति। अन्यथा ह्यऽसंबद्धप्रल-

---

पाद्यप्रतिपादकभावः, अधिकारी चाधीतवेदः। तत्र विषयाधिकारिणोर्विस्पष्ट-त्वात् प्रयोजनसम्बन्धौ वक्तुमुपक्रमते–अनेनेत्यादिना, श्रोतॄणां जनानाम-स्मिन् शास्त्रेऽध्ययनविचारादिलक्षणप्रवृत्तेः सिद्धये, प्रारिप्सितस्य=प्रारम्भे-च्छाविषयस्यास्य धर्मविचारशास्त्रस्य, अनेन प्रथमेन सूत्रेण प्रयोजनमुच्यते। किं तत्प्रयोजनमित्याह–धर्मज्ञानमिति, अस्य मुनिप्रवरजैमिनिप्रणीतस्य सूत्रसमूह-रूपस्य शास्त्रस्य धर्मत्वावच्छिन्नविषयकं प्रमात्मकं ज्ञानमेव प्रयोजनमित्यर्थः। अत्र विनिगमनामाह–यदा हीति, यच्छास्त्रं यज्जिज्ञासामुक्त्वा प्रवर्तते तच्छास्त्रं त-त्प्रयोजनकमेव भवति यथा ब्रह्मजिज्ञासामुक्त्वा प्रवृत्ता–"अथतो ब्रह्मजिज्ञासा" इति ब्रह्ममीमांसा ब्रह्मज्ञानप्रयोजनिका, तत्र ब्रह्मज्ञानमेव प्रयोजनम्, तथात्र धर्मजिज्ञासामुक्त्वा प्रवृत्तस्यास्य धर्ममीमांसाशास्त्रस्य धर्मत्वावच्छिन्नप्रमितिरेव प्रयोजनमिति ज्ञायते। किं वा जिज्ञासेत्यत्र प्रत्ययार्थस्येच्छाया इष्यमाणप्रधान-त्वाद्धर्मज्ञानमिह विधीयते इति धर्मज्ञानमेव प्रयोजनमिति लब्धम्।

सम्बन्धज्ञानाय चोदयति–विदितमित्यादिना। प्रतिपाद्यप्रतिपादकभाव-सम्बन्धस्य स्पष्टत्वात्तमुपेक्ष्य सूक्ष्मदर्शी सम्बन्धव्याजेन शास्त्रप्रस्तावहेतुमेव पृ-च्छति–सम्बन्धोपीति, यथा "अथातो ब्रह्मजिज्ञासा" इत्यादिब्रह्ममीमांसाप्र-स्तावेऽद्वैतमतेन साधनचतुष्टयानन्तर्यं हेतुः, विशिष्टाद्वैतसंप्रदायेन च पूर्वकाण्डो-क्तकर्मज्ञानानन्तर्यं हेतुः, शान्त्यादिपर्वीयधर्मप्रस्तावेषु युधिष्ठिरप्रश्नानन्तर्यमेव हेतुः, तथात्र प्रस्तावस्यारम्भस्य को हेतुरितिजिज्ञासा। प्रस्तावकः=प्रस्ताव-

पितं स्यात् । सत्यम्, इह तु य एवायं प्रयोजनेन सह शास्त्रस्य साध्यसाधनत्वसंबन्धः स एव शास्त्रस्य प्रस्तावको नान्यः । भवति हि साधनत्वमेव साध्यार्थिनः साधने प्रवृत्तिहेतुः । स चायं सम्बन्धः प्रयोजनोक्त्यैवार्थाज्ज्ञायत इति न सूत्रकारेण पृथगुक्त इत्यदोषः ।

अत्रेदं चिन्त्यते—किमध्ययनानन्तरं धर्मजिज्ञासया गुरुगृहेऽवस्थातव्यम् ? उत गुरुगृहात्समावर्तितव्यम् ?

---

हेतुः, विपक्षे बाधकमाह—अन्यथेति, प्रस्तावहेतोरवचने शास्त्रकारस्याप्तत्वेनाभिमतस्य जैमिनेर्मुनेरसम्बद्धप्रलापित्वं स्यात् तदुक्तस्यास्य शास्त्रस्य चोपेक्षणीयत्वं स्यादऽसम्बद्धप्रलपितत्वात् । अंशेन स्वीकरोति—सत्यमिति, यद्यपि भवदुक्तं सत्यं तथाप्यत्र पूर्वोक्तकर्मज्ञानानन्तर्यादिवदऽन्यः कोपि प्रस्तावहेतुर्नास्ति किं तु धर्मज्ञानरूपप्रयोजनस्य शास्त्रस्य चास्य यः साध्यसाधनभावः सम्बन्धः स एव शास्त्रप्रस्तावस्यापि हेतुरस्तीत्यर्थः । उपपादयति—भवतीत्यादिना, साध्यार्थिनो जनस्य साधने प्रवृत्तिहेतुः साधनस्य साधनत्वमेव, यथा हि पाकार्थीन्धनादौ प्रवर्तते तत्कस्य हेतोः ? इन्धनादीनां पाकसाधनत्वादेवेति वक्तव्यम्, एवमिदं शास्त्रं धर्मज्ञानसाधनमिति युक्ता धर्मज्ञानार्थिनोऽत्र प्रवृत्तिरिति मनसि निधाय मुनिः शास्त्रं प्रणीतवानिति नासम्बद्धप्रलापित्वप्रसक्तिः । असम्बद्धप्रलापिता हि तत्र प्रसज्यते यत्राऽप्रयोजनानि वाक्यान्युच्यन्ते, सप्रयोजनं चेदं शास्त्रमिति सूपपादितं ग्रन्थकृता । प्रस्तावहेतुश्चोपपादितः । उपसंहरति— स चायमिति, अयम्=शास्त्रप्रस्तावहेतुः साध्यसाधनभावः सम्बधः । प्रयोजनोक्त्यैवेति—धर्मजिज्ञासया शास्त्रारम्भेण स्पष्टमेव विज्ञायते यद् धर्मज्ञानप्रयोजनकमिदं शास्त्रमिति, आक्षिप्तेन च धर्मज्ञानलक्षणप्रयोजनेन साध्यसाधनभावः सम्बन्धोप्याक्षिप्यते—धर्मज्ञानं प्रयोजनं तस्य साधनं चेदं शास्त्रमिति, यतो यच्छास्त्रं यत्प्रयोजनकं भवति तच्छास्त्रं तस्य प्रयोजनस्य साधनं भवत्येवेति भावः, इति न सम्बन्धस्य पृथगुक्त्यऽभावो दोषावहः ।

सकलशास्त्रसाधारणां चिन्तां कृत्वा संप्रत्यसाधारणामवान्तरचिन्तामुपक्रमते—अत्रेदमित्यादिना, अत्र=अस्मिन्नधिकरणे । द्विजातिभिरुपनयनानन्तरं गुरुगृह एवोषित्वा ब्रह्मचर्येण वेदाध्ययनं कर्तव्यं श्रूयते च—"स्वाध्यायोऽध्येतव्यः"

इति। यदि हि स्वाध्यायाध्ययनविधिना धर्ममात्रार्थमध्ययनं स्वर्गाद्यर्थेन विधीयते ततस्तन्मात्रेणैव शास्त्रार्थस्य समाप्तत्वात् "अधीत्य स्नायात्" इति स्मृतिवचनबलेन च समावर्तितव्यमिति।

अथाक्षरग्रहणादिपरम्परोपजायमानवाक्यार्थज्ञानार्थमध्ययनं विधीयते ? ततस्तस्य विचारमन्तरेणाऽ-

---

"अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत" इति, तत्राध्ययनानन्तरं धर्मस्वरूपविचाराय गुरुगृहेऽवस्थातव्यं न वेति संदेहः, "फलमपीह हेतुः" इत्यनेन क्वचित् फलस्यापि हेतुत्वेन विवक्षायां तृतीया भवतीति "अध्ययनेन वसति" इतिवद् धर्मजिज्ञासयेति हेतौ तृतीया, धर्मजिज्ञासार्थमित्यर्थः। यदि गुरुगृहे नावस्थातव्यं तदा समावर्तनीयम्, अर्थाद् वेदमधीत्य गुर्वाज्ञया ब्रह्मचर्यं समाप्य गृहस्थाश्रमः संपादयनीय इति पूर्वपक्षं सहेतुकमुपपादयति--यदि हीत्यादिना। यथा हि ज्योतिष्टोमादियागः स्वर्गाद्यर्थ एव धर्मस्वरूपतया वेदेन विधीयते न च तत्र दृष्टं प्रयोजनमस्ति तथा यदि "स्वाध्यायोऽध्येतव्यः" इति स्वाध्यायाध्ययनविधिनापि स्वर्गाद्यऽदृष्टप्रयोजनार्थमेव धर्मत्वेनाध्ययनं विधीयते तदा तन्मात्रेणैव=वेदाक्षराध्ययनमात्रेणैव शास्त्रार्थस्य=अध्ययनविध्याज्ञायाः समाप्तत्वात्=पर्यवसितत्वात् (कृतकार्यत्वात्) समावर्तितव्यम्=गुरुगृहवासनियमं (ब्रह्मचर्यलक्षणम्) समाप्य स्वगृहे गन्तव्यम्। स्वर्गाद्यर्थेनेति पूर्ववदेव तृतीया हेतौ। समावर्तने चैवंभूते प्रमाणमाह–अधीत्येति, "अधीत्य स्नायात्" इति स्मृतिवचनेनाप्येतदेव सिद्धं यद्वेदाक्षराध्ययनानन्तरं समावर्तितव्यमिति। स्नानं चेदं समावर्तनमेव। अध्ययनानन्तरपि धर्मस्वरूपविचाराय गुरुगृहस्थित्या "अधीत्य स्नायात्" इतिस्मृतिवचनोक्तमऽध्ययनस्नानयोरानन्तर्यं बाधितं स्यादिति—अदृष्टार्थमध्ययनम्, तथा च धर्मविचाराय न गुरुगृहेऽवस्थातव्यमित्येकः पक्षः।

द्वितीयपक्षस्वरूपं निर्दिशति–अथेति, अक्षरग्रहणेन पदज्ञानं तेन पदार्थोपस्थितिस्तया उपस्थितपदार्थैर्वा वाक्यार्थज्ञानमिति परम्परया=क्रमेण जायमानं यद्वाक्यार्थज्ञानं तदर्थं यदि "स्वाध्यायोऽध्येतव्यः" इति विधिनाऽध्ययनं विधीयते, ततः=तदा, तस्य=वाक्यार्थज्ञानस्य, विचारं विना संपत्त्यसंभावादऽध्ययन-

सम्भवादध्ययनविधिनैवाऽर्थाद्विचारो विहित इति गु-
रुगृह एवावस्थाय विचारयितव्यो धर्मः ।

तत्र—

विनापि विधिना ज्ञानलाभान्न हि तदर्थता ।
कल्प्यस्तु विधिसामर्थ्यात् स्वर्गो विश्वजिदादिवत् ॥

---

विधिना ऽर्थाद्विचारोपि विधीयते, यथा 'पाकं कुरु' इति पाकविधिनेन्धनादि-संपादनमर्थाद्विधीयते इन्धनादिकं विना पाकनिष्पत्तेरसंभवात्, एवमत्र विचा-राहते वाक्यार्थज्ञाननिष्पत्तेरसंभवादर्थादध्ययनविधिना वैदिकवाक्यविचारोपि विधीयते । अत्र च पक्षे "संभवति दृष्टफलकत्वे ऽदृष्टकल्पनाया अन्याय्यत्वा-त्" इति न्यायोप्यऽनुकूलः, अध्ययनस्यार्थज्ञानरूपे दृष्टे फले संभवति सति अ-दृष्टस्य स्वर्गादेरध्ययनफलत्वेन कल्पनाऽन्याय एवेत्यर्थः । तस्मादध्ययनान-न्तरमेव न समावर्तितव्यं किं तु गुरुगृह एव स्थित्वाऽधीतानां वेदानां वाक्यार्थ-स्य धर्मस्वरूपस्य विचारः कर्तव्य इत्याह—इतीति ।

इत्येवं संक्षेपेण पूर्वपरपक्षयोः स्वरूपं प्रदर्श्य पूर्वपक्षं तावद् व्युत्पादयति—विनापीति, यथा हि दण्डादीनां घटादिकारणत्वं सर्वलोकावगतमेवेति न तत्र विध्यपेक्षा तथाऽध्ययनमर्थज्ञानकारणमित्यन्वयव्यतिरेकाभ्यां सर्वलोकावगत-मेवेति नाऽर्थज्ञानार्थमध्ययनविध्यपेक्षेत्यध्ययनविधेस्तदर्थता=वाक्यार्थज्ञानार्थता नास्ति, न युक्ता वा, अज्ञातस्यैव विध्युद्देश्यत्वस्वीकारात् । उक्तं च—

" अज्ञाते फलवत्यर्थे विधीनां मानतेष्यते ।
न चाध्ययनमज्ञातमऽर्थज्ञानस्य कारणम् ॥" इति ।

अध्ययनमर्थज्ञानस्य कारणमिति न लोकैरज्ञातमित्यर्थः । ज्ञानलाभात्=ज्ञान-साधनत्वप्रतीतेः । एवं तर्ह्यध्ययनविधेर्नैरर्थक्यं स्यादित्याशङ्क्याह—कल्प्येति । अ-यं भावः—" विश्वजिदा यजेत " इति विश्वजिद्यागविधिरत्र किंकामेन विश्व-जिद्योगः कर्तव्यः इति न श्रूयते वेदवाक्यं च न निरर्थकं भवितुमर्हति दृष्टफ-लस्य कल्पने कदाचित् व्यभिचारः स्यादिति—"स स्वर्गः स्यात्सर्वान् प्रत्यविशि-ष्टत्वात्" इति न्यायेन स्वर्ग एवादृष्टं फलं कल्प्यते, तथा च यथा विश्वजिदादौ स्वर्ग एव फलत्वेन कल्प्यते तथा स्वाध्यायाध्ययनविधिसामर्थ्येनाऽध्ययनस्या-

स्वाध्यायसंस्कारद्वारेणाध्ययनस्यार्थज्ञानहेतुत्वं विनैव विधिना प्रमाणान्तरेण सिद्धमेवेति तादर्थ्ये विध्यानर्थक्यम् ।

न चावघातादिविधिवन्नियमार्थत्वम्, अवघातो हि दर्शपूर्णमासाऽपूर्वे नियम्यते—अवघातनिष्पन्नैरेव तण्डुलैरपूर्वं सिध्यतीति, न तण्डुलस्वरूपे प्रमाणान्तरविरो-

---

पि स्वर्ग एव फलत्वेन कल्पनीय इति । एतदेव विशदयति—स्वाध्यायेति, अध्ययनेन स्वाध्यायाः=वेदाः संस्करणीया इति स्वाध्यायसंस्कारद्वारा—स्वाध्यायसंस्कारार्थं कृतस्याध्ययनस्य वैदिकविधिं विनैव प्रमाणान्तरेण=प्रत्यक्षादिना अन्वयव्यतिरेकाभ्यां चाऽर्थज्ञानहेतुता सिद्धैवेति तादर्थ्ये=अध्ययनस्यार्थज्ञानार्थत्वे कल्पनीये स्वाध्यायाऽध्ययनविधेरानर्थक्यमेव स्यात् तस्य ( अर्थज्ञानार्थत्वस्य ) लोकत एव ज्ञातत्वात् सिद्धत्वाद्वा । संस्कारः=अधीतस्मरणयोग्यता ।

ननु मा भूदध्ययनस्यार्थज्ञानलक्षणदृष्टार्थकत्वं नियमार्थत्वं तु भविष्यति, एकस्मिन् पक्षे लोकतोपि प्राप्तस्य विधौ हि नियमो भवति यथा यागे देवतास्मरणं देवताचित्रादिना मन्त्रेण च संभवति तत्र मन्त्रैरेव देवताः स्मरणीया इति नियम्यते, यथा च पुरोडाशार्थं तण्डुलनिष्पत्तिर्हि नखविदलनेन चावघातेन च सम्भवति तत्र "व्रीहीनवहन्ति" इत्यवघातो नियम्यते, तदुक्तम्—"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति" इति, तथात्राधीतैरनधीतैश्च वेदैरवगतानां कर्मणां फलदातृत्वसंभावनायाम्—अधीतैरेव वेदैरवगतानि कर्माणि फलदानि भवन्तीति नियम एवाध्ययनविधिना बोध्यते इत्याशङ्क्याह—नचेति । व्यतिरेकेण दृष्टान्तीभूतस्यावघातस्य यथा नियमार्थत्वं तद्व्युत्पादयति—अवघातेति, "व्रीहीनवहन्ति" इति वचनेन प्राप्तोवघातो दर्शयागजन्याऽपूर्वे पौर्णमासयागजन्यापूर्वे च नियम्यते । नियमस्वरूपमाह—अवघातनिष्पन्नैरेवेति, अवघातनिष्पन्नैरेव तण्डुलैः कृतेन पुरोडाशेन कृते यागेऽपूर्वं सिध्यति न तु नखविदलनादिनिष्पन्नैरपि तण्डुलैरित्यपूर्वे एवावघातो नियम्यते न तु तण्डुलस्वरूपेपि प्रमाणान्तरविरोधात्=प्रत्यक्षप्रमाणविरोधात् प्रत्यक्षेण हि तण्डुलनिष्पत्तिर्नखविदलनादिनापि भवत्येवेत्यवगमात् यद्यवघातेनैव तण्डुलनिष्पत्तिः संभवेत्तदाऽवघातस्तण्डुलस्वरूपे नि-

धात्। तद्वदिहापि ज्ञानस्याध्ययनमन्तरेणापि दर्शनात् तत्स्वरूपे नियमासम्भवात् क्रत्वपूर्वेष्वेवाऽध्ययननियमो विधातव्यः—अधीतैरेव वेदैरवगतानि कर्माणि फलदानीति। न चैवं युक्तम्—अक्रत्वर्थत्वादध्ययनस्य अनारभ्याधीतत्वात्, श्रुत्याद्यऽभावाच्चाऽक्रत्वर्थत्वम्। तस्माददृष्टार्थमेव स्वाध्यायाध्ययनमित्यध्ययनमात्रादेव समाप्ते शास्त्रार्थे गुरुगृहात् समावर्तितव्यम्। इति प्राप्ते,

---

यम्येतापि नैवमस्ति नियम इति तण्डुलस्वरूपात्परिहृताश्चावघातोऽपूर्वे तिष्ठति।

प्रकृतमुपपादयति—तद्वदिहापीति। इह=अध्ययने। अध्ययननियमो हि भवता वेदवाक्यार्थज्ञानाय वाऽपूर्वाय वा वक्तव्यस्तत्र ज्ञानाय त्वध्ययननियमो न संभवति विनाप्यध्ययनं कोशव्याकरणादिव्युत्पत्त्या वेदवाक्यानामर्थज्ञानसंभवादित्याह—ज्ञानस्येति। तत्स्वरूपे=अर्थज्ञानस्वरूपे। तस्मात्क्रत्वपूर्वायैवाध्ययननियमो वक्तव्य इत्याह—क्रत्विति। नियमस्वरूपमाह—अधीतैरेवेति। न चैवमपूर्वायाप्यध्ययननियमः संभवतीति पराचष्टे—न चैवं युक्तमित्यादिना। अध्ययनस्य क्रत्वऽपूर्वार्थत्वाभावे हेतुमाह—अक्रत्वर्थत्वादिति। अक्रत्वर्थत्वे च हेतुमाह—अनारभ्याधीतत्वादिति। अयं भावः—यागप्रकरणमारभ्य यदधीयते=श्रुत्या निर्दिश्यते तत् क्रत्वर्थं भवति यथाऽवघातप्रोक्षणादयस्तेषां हि क्रतुमारभ्य "व्रीहीन् प्रोक्षति" "व्रीहीनवहन्ति" इत्यादिवचनैर्निर्देशात्। नत्वेवं क्रतुमारभ्य "स्वाध्यायोऽध्येतव्यः" इति वचनं निर्दिश्यते तस्मान्न क्रत्वर्थमध्ययनं येन क्रत्वपूर्वाय नियम्येत। अध्ययनस्याऽक्रत्वर्थत्वे हेत्वन्तरमाह—श्रुत्याद्यभावाच्चेति, अनारभ्याऽधीतत्वेऽप्यध्ययनस्य क्रत्वर्थत्वं स्याद् यदि श्रुतिलिङ्गादिषु मध्ये किमप्यध्ययनं क्रतौ विनियुञ्ज्यात्? न चैवमस्तीत्यर्थः। उपसंहरति पूर्वपक्षी—तस्मादिति। तस्मात्=अध्ययनस्य क्रत्वर्थत्वाभावादर्थज्ञानलक्षणदृष्टप्रयोजनकत्वाभावाच्च अदृष्टार्थमेवाध्ययनम्। इति=तस्मात्, अध्ययनमात्रात्=वेदाक्षरग्रहणमात्रादेव, समाप्ते शास्त्रार्थे=अध्ययनविधेश्चरितार्थत्वे प्राप्ते धर्मविचारमकृत्वैवाऽक्षरग्रहणानन्तरमेव गुरुगृहात् समावर्तितव्यं प्रमाणं चात्र—"अधीत्य स्नायात्" इति प्राप्तम्।

अभिधीयते—

लभ्यमाने फले दृष्टे नाऽदृष्टपरिकल्पना ।
विधेश्च नियमार्थत्वान्नानर्थक्यं भविष्यति ॥

यदुक्तम्—ज्ञानस्वरूपे क्रत्वपूर्वे वा न नियमः संभवतीति, तत्राभिधीयते—नोभयथापि ब्रूमः, कथं तर्हि ? योयमग्निहोत्रादिष्वधीतवेदानां त्रैवर्णिकानामेवाधिकारो नाऽनधीतवेदानां शूद्राणामित्यधिकारनियमः स प्रयोजनमध्ययनविधेः ।

---

संप्रति सिद्धान्तसमर्थनायोपक्रमते—इति प्राप्तेभिधीयते इत्यादिना। "संभवति दृष्टफलकत्वेऽदृष्टकल्पनाया अन्याय्यत्वात्" इति न्यायमनुसृत्याह—लभ्यमान इति, वाक्यार्थज्ञानरूपे दृष्टे फले लभ्यमाने=संभवति सति अध्ययनफलत्वेनादृष्टस्य स्वर्गस्य कल्पना न युक्ता, विश्वजिदादौ तु दृष्टं फलं न संभवतीति विवशमदृष्टं कल्प्यते इत्यर्थः । ननु दृष्टफलकत्वं तु लोकेनैव सिद्धमिति स्वाध्यायाध्ययनविधानस्य किं प्रयोजनमित्याह—विधेश्चेति । द्विजातीनामेवाग्निहोत्रादिष्वधिकारो न शूद्राणामित्यधिकारनियमार्थमेवाध्ययनमिति नाध्ययनविधिर्व्यर्थ इत्यर्थः । ननु वाक्यार्थज्ञानाय वा क्रत्वपूर्वाय वाध्ययनविधेर्नियमार्थत्वं वाच्यं तच्च त्वयैव न चावघाते त्यादिनाऽऽशङ्क्य निरस्तमिति कथमधुना नियमार्थत्वमुच्यते विधेरिति "यदुक्तम्" इत्यादिनोपस्थाप्य समाधत्ते—तत्रेति । नोभयथापीति—वाक्यार्थज्ञानाय वा क्रत्वपूर्वायवा न नियमार्थत्वं ब्रूम इत्यर्थः । तर्हि केनस्वरूपेण नियमार्थत्वमिति पृच्छति पूर्वपक्षी—कथं तर्हीति । सिद्धान्ती स्वाभिप्रेतनियमस्य स्वरूपमाह—योयमित्यादिना । करचरणादिभिश्चतुर्णामेव वर्णानां समानत्वेपि वैदिकेष्वग्निहोत्रादिकर्मसु द्विजातीनामेवाधिकारो न शूद्रत्वावच्छिन्नस्येति नियमार्थोऽध्ययनविधिः । अन्यथा विशेषाभावेन शूद्रस्याप्यधिकारः स्यात् । सति चाध्ययनविधावऽधीतवेदानामेवाग्निहोत्रादिष्वधिकारो वक्तव्यः, वेदाध्ययनं चोपनीतैरेव कर्तव्यम्, उपनयनं च "वसन्ते ब्राह्मणमुपनयीत" "ग्रीष्मे राजन्यम्" "शरदि वैश्यम्" इति वचनैर्द्विजातीनामेव सम्भवति न शूद्रस्येति न शूद्रस्याधिकार इत्यर्थः ।

एतदेवोपपादयति—असतीति । अध्ययनविध्यभावे न कोप्यध्ययनं कु-

तथा हि—असत्यऽध्ययनविधावऽग्निहोत्रादिशास्त्राणि विद्वांसमलभमानान्यविद्वांसमेवाधिकृत्य विद्यामन्तरेणानुष्ठानासंभवाद्विद्यामाक्षिपन्त्यऽविशेषाच्चतुरो वर्णानधिकुर्युः । सति त्वध्ययनविधौ त्रैवर्णिकानामेव विदुषामधिकारो भवति न तुरीयादेः ।

तथा हि—"वसन्ते ब्राह्मणमुपनयीत" "ग्रीष्मे राजन्यम्" "शरदि वैश्यम्" इति द्वितीयानिर्देशादुपनयनसंस्कृतास्त्रैवर्णिकाः 'किमस्माभिः कर्तव्यम्' इत्यपेक्षन्ते, तत्संनिधौ चाध्ययनमऽनिर्दिष्टकर्तृकं विधीयमानं कर्ता-

---

र्यादिति विदुषोऽअधीतवेदस्याऽलाभात्=अभावात् अग्निहोत्रादिबोधकवाक्यानि स्वप्रतिपाद्येष्वग्निहोत्रादिकर्मस्वऽविद्वांसम्=अनधीतवेदमेवाधिकुर्युः । अथ च विद्यां विना कर्मस्वरूपज्ञानाभावादनुष्ठानमपि न संभवतीति विद्याम्=वेदाध्ययनमप्याक्षिपेयुस्तत्र चाक्षिप्ते वेदाध्ययने चतुर्णामेव वर्णानामधिकारः स्यात् कुतूहलादिप्रयुक्ताया विद्याया द्विजातिभिर्नियमासम्भवादिति वैदिकाग्निहोत्रादिबोधकशास्त्राणि चतुरो वर्णानधिकुर्युस्तथा चाग्निहोत्रादिषु शूद्राणामप्यधिकारः स्यादित्यर्थः । सति चाध्ययनविधावुपनीतानामेवाध्ययनेऽधिकारोऽधीतवेदानामेव च कर्मस्वधिकार उपनयनं च द्विजातीनामेवेति कर्मसु द्विजातीनामेवाधिकारो न शूद्रत्वावच्छिन्नस्येति सिद्धमित्याह—सति त्विति । तुरीयादेः=शूद्रादेः । आक्षिपन्तीति शत्रन्तं जसो रूपम् ।

नन्वध्ययनविधावुपनीतानां त्रैवर्णिकानामधिकारस्याश्रवणाच्छूद्रस्याप्यधिकारः स्यादिति कथमग्निहोत्रादिभ्यः शूद्रादेर्निवृत्तिरित्याशङ्क्य "सति त्वध्ययनविधौ" इत्युक्तमुपपादयति—तथा हीत्यादिना । "वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यम्, शरदि वैश्यम्" इत्यत्र ब्राह्मणादिशब्दोत्तरद्वितीयानिर्देशादुपनयनरूपसंस्कारकर्मता हि ब्राह्मणत्वावच्छिन्ने क्षत्रियत्वावच्छिन्ने वैश्यत्वावच्छिन्ने च प्रतीयते न तु शूद्रत्वावच्छिन्नेऽपीति त्रैवर्णिकाः=ब्राह्मणक्षत्रियवैश्या एवोपनीता भवन्ति तत्र च यथाऽऽहूतो भृत्यो जिज्ञासते किं मया कर्तव्यम्, एवमुपनयनेन संस्कृतास्त्रैवर्णिका अपि 'किमस्माभिः कर्तव्यम्' इति स्वकर्तव्यमपेक्षन्ते,

**रमपेक्षते, तत्रापेक्षासंनिधियोग्यत्वैरेवं विज्ञायते—त्रैवर्णिकैरेवोपनीतैरक्षरग्रहणेनाऽध्ययनादिपरम्परयाऽर्थज्ञानं कर्तव्यमिति। एवं च फलवदध्ययनकर्तृभूतमाणवकसंस्कारत्वादुपनयनमध्ययनाङ्गम्, अध्ययनमपि दृष्टार्थज्ञानार्थम्, अर्थज्ञानं त्वनुष्ठानौपयिकत्वात्प्रसिद्धफलकमेवेति सर्वेषां फलवत्त्वम्।**

---

कर्त्तव्याभावे ह्युपनयनसंस्कारो निष्फलः स्यात्। किमर्थो ममायं संस्कार इति तूपनीतस्यावश्यं जिज्ञासा जायत एव। तत्संनिधौ="वसन्ते ब्राह्मणमुपनयीत" इत्यादिवाक्योक्तोपनयनसन्निधौ च "स्वाध्यायोऽध्येतव्यः" इत्येवमनिर्दिष्टकर्तृकमध्ययनं विहितं न चात्रोक्तम्—'अमुको ऽमुककामोवाऽध्ययनं कुर्यात्' इति, तस्माद् विधीयमानमध्ययनं स्वकर्तारमपेक्षते। तथा चोपनीतानां त्रैवर्णिकानां स्वकर्तव्यस्यापेक्षास्ति, अध्ययनस्य च स्वकर्तुरपेक्षास्ति, उपनयनवाक्यैः सहाध्ययनवाक्यस्य संनिधिरप्यस्ति, अध्ययनयोग्यताप्यस्त्युपनीतानाम, इति दग्धाश्वरथन्यायेनाध्ययनोपनीतयोः कर्मत्वेन कर्तृत्वेन च परस्परं प्रकरणस्थानाभ्यामन्वयो जातस्तदाह—तत्रेति। तथा चोपनीतैर्द्विजातिभिरेवाक्षरग्रहणलक्षणमध्ययनं कर्तव्यं तदनतरं तैरेव वेदवाक्यानामर्थज्ञानं संपादनीयं वेदवाक्यानि विचारयितव्यानीत्यर्थः।

एवं चेति—उपनीतैस्त्रैवर्णिकैरेवाध्ययनं कर्तव्यमिति सिद्धे च, अर्थज्ञानरूपफलवत् यदध्ययनं तत् स्वकर्तृभूतो यो द्विजातिमाणवकस्तस्य संस्कार एवेत्युपनयनमध्ययनस्याङ्गम्। यत उपनयनं विनाध्ययनं न भवति ततस्तेनोपनयनेन वटुरध्ययनयोग्यो भवति इत्यध्ययनार्थत्वादुपनयनं सफलम्। अध्ययनं च वाक्यार्थज्ञानसंपादनार्थत्वात्सफलम्। वाक्यार्थज्ञानं च कर्मानुष्ठानसम्पादनार्थत्वात्सफलम्, वाक्यार्थज्ञानं विना तत्तद्वाक्योक्तकर्माणामनुष्ठानासम्भवाद् विद्यावत्त्वस्याधिकारिविशेषणत्वादिति—उपनयनादीनां सर्वेषां सफलत्वं सिद्धम्। ननु कथमुपनयनं विनाध्ययनं न सम्भवति, उपनयनं विनाप्यध्येतुं शक्यत्वादिति चेत्? नात्र नास्तिकमतेः प्रवेशोस्ति, आस्तिकेन त्वेवं विज्ञेयम्—उपनयनप्रकरणे पठितस्यानिर्दिष्टकर्तृकस्याध्ययनस्योपनीता एवाधिकारिण उपनयनं च द्विजातीनामेवेति॥

एवं च त्रैवर्णिकेषु विद्वत्सु लब्धेषु नाग्निहोत्रादिविधयश्चतुर्थवर्णस्य विद्यामाक्षिपन्ति, किं तु त्रैवर्णिकानेव विदुषोऽधिकुर्वन्ति। सोयमधिकारनियमोऽपशूद्राधिकरणे वक्ष्यमाणोऽध्ययनविधिप्रसादलभ्य इति फलवानेव विधिः। तेनार्थज्ञानावसानमध्ययनमध्ययनविधिना विधीयत इति विचारमन्तरेण तदनुपपत्तेरध्ययनविधिरेव विचारमाक्षिपंस्तद्विरुद्धं स्मार्तं स्नानं बा-

---

उपसंहरति—एवं चेत्यादिना। एवं च=उपनयनद्वारा द्विजातीनामध्ययने सिद्धे, अधीतवेदा द्विजातय एव वेदवाक्यार्थं विचारयिष्यन्तीति द्विजातयो विद्वांस उपलब्धा इत्यग्निहोत्रादिविधयो न शूद्रस्य विद्यामाक्षिपन्ति कारणाभावात्। किं तु त्रैवर्णिका विद्वांस एवास्माकमधिकारिण इति बोधयन्ति। अन्यथा पूर्वोक्तक्रमेण शूद्रस्याप्यध्ययने प्रवेशः स्यादित्यर्थः। सोयमिति—उपनयनानन्तरमधीतवेदानां द्विजातीनामेवाग्निहोत्रादिष्वधिकारोस्ति न तुरीयादेरिति नियमः षष्ठाध्याये प्रथमपादे सप्तमेऽपशूद्राधिकरणे "चातुर्वर्ण्यमविशेषात्" इत्यत्र वक्ष्यमाणोऽस्यैवाध्ययनविधेः प्रसादेन ( अर्थापत्त्या ) लब्ध इत्यनेन त्रैवर्णिकाधिकारनियमेनाध्ययनविधिः फलवानस्ति। उपनयप्रकरणसंनिहितोयमध्ययनविधिरुक्तमधिकारनियमं बोधयति स्वफलत्वेनेति भावः। तेन=ततः। अध्ययनविधिनाऽर्थज्ञानावसानम्=वाक्यार्थज्ञानसम्पादनपर्यन्तमध्ययनं विधीयते। अर्थादक्षरग्रहणमात्रानन्तरं न समावर्तितव्यं किं तु वाक्यार्थज्ञानसम्पादनानन्तरम्। तदनुपपत्तेः=वाक्यार्थज्ञानानुपपत्तेः। वाक्यार्थविचारं विना वाक्यार्थज्ञानं न सम्भवतीत्यध्ययनविधिरेव वाक्यार्थविचारमाक्षिपति। आक्षिपन्=स्वफलसिद्ध्यर्थं प्रापयन्। ततश्च तद्विरुद्धम्=वाक्यार्थविचारविरुद्धं स्मार्तं स्नानम् "अधीत्य स्नायात्" इतिविहितमध्ययनविधिरेव बाधते। यतोऽक्षरमात्रग्रहणानन्तरं समावर्तनरूपे स्नाने कृते वाक्यार्थविचारो न स्यात्। किं वा "अधीत्य स्नायात्" इत्यस्याप्यध्ययनविध्यानुकूल्येन वाक्यार्थविचारपर्यन्तमेवाध्ययनं शक्यमस्तीति ज्ञेयम्। ननु त्रैवर्णिकानामेवाग्निहोत्रादिष्वधिकारो न तुरीयादेरिति नियमेन फलवानध्ययनविधिः कथं वाक्यार्थज्ञानसम्पादनावसानमध्ययनं विदध्यात्? वाक्यार्थज्ञा-

धते, इति सिद्धमध्ययनानन्तरं धर्मजिज्ञासा कर्तव्येति ।
केचित्पुनराचार्यकरणविधिप्रयुक्तत्वमध्ययनस्याङ्गीकृत्य किमाचार्यकसिद्धिरेवाध्ययनस्य प्रयोजनम् ? उतार्थज्ञानम् ? इति विचार्य, अन्तरङ्गत्वादर्थज्ञानमित्याहुः ।
किं पुनः कारणमाचार्यकरणविधिप्रयुक्तत्वेऽध्ययनस्य ?

---

नसम्पादनं विनाप्यध्ययनस्वरूपसम्पत्तेरिति चेन्न, वाक्यार्थज्ञानं विनाग्निहोत्रादिकर्म कर्तुं न शक्यत इति वाक्यार्थज्ञानसम्पादनावसानमध्ययनं विधीयते । उपसंहरति—इतिसिद्धमिति । इति = अध्ययन विधिनैव वाक्यार्थविचारस्याक्षिप्तत्वाद्धेतोः ।

इदानीं प्रभाकरमतमुपस्थापयति—केचिदित्यादिना । वेदाध्ययनं हि न "स्वाध्यायोऽध्येतव्यः" इत्यध्ययनविधिप्रयुक्तं संभवति नियोज्याश्रवणात्, नियोज्यं विना विध्यनुपपत्तेः । न च नियोग एव नियोज्यं कल्पयिष्यतीति वाच्यम्, गौरवात्, अध्ययनस्याध्यापनविधिप्रयुक्तत्वे चाध्यापनानुष्ठानसिद्ध्यर्थमेवाध्ययनस्य प्राप्तत्वेन नियोज्यकल्पनाभावाल्लाघवात्, तस्मादध्ययनं "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत" इत्याचार्यत्वसंपत्तिविधायकवाक्यप्रयुक्तमित्यर्थः । ननु वटुककृताध्ययनस्याध्यापके गुरावाचार्यत्वसिद्धिरेव प्रयोजनमुत वटुकसमवेतं वाक्यार्थज्ञानमिति तेषां संशयपक्षः । तत्रान्तरङ्गत्वादर्थज्ञानमेव प्रयोजनमिति तेषामपि सिद्धान्त इत्याह—किमिति । आचार्यकसिद्धिः = आचार्यत्वसिद्धिः । आचार्यशब्दादत्र "योपधाद्गुरूपोत्तमाद् वुञ्" इति सूत्रेण भावे वुञ् । अर्थज्ञानस्यान्तरङ्गत्वं चात्राध्ययनसामानाधिकरण्येन बोध्यम्, अध्ययनं हि माणवकेन क्रियते तत्रैव च वाक्यार्थज्ञानं समवायेनोत्पद्यत इत्यन्तरङ्गत्वादर्थज्ञानमेव प्रयोजनम् । आचार्यत्वं त्वऽध्यापके उत्पद्यत इति वैयधिकरण्यात्तस्य बहिरङ्गत्वम् । किं चाध्ययनमध्यापनं विना न संभवति आचार्यत्वं चाध्यापनानुनिष्पादीति नाचार्यत्वमध्ययनफलत्वेन स्वीकर्तुं शक्यते ।

नन्वध्ययनस्य शब्दशक्तिसङ्गतमध्ययनविधिप्रयुक्तत्वं परित्यज्य यदऽध्यापनविधिप्रयुक्तत्वमुच्यते तत्र किं कारणमिति पृच्छति भाष्यः—किं पुनरिति । किं वा ननु नियोज्याश्रवणेऽप्यध्ययनविधिः स्वात्मसिद्ध्यर्थं विश्वजिन्न्यायेन नियोज्यमाक्षिप्याध्ययनप्रयोजको भविष्यतीति किमर्थमध्यापनविधेरध्ययनप्रयो-

अध्ययनविधेरधिकारिशून्यत्वादाचार्यकरणविधिप्रयुक्त्या चात्मलाभे विश्वजिदादिवत् फलकल्पनानुपपत्तिः । कः पुनराचार्यकरणविधिः ? कथं वा तेनोऽध्ययनस्य प्रयुक्तिः ? ।

---

जकत्वमुच्यते इत्यभिप्रायेणाक्षिपति—किं पुनरिति । गत्यन्तराभावे ह्यश्रुतस्य कल्पना क्रियतेऽन्यथा प्रयाजादिविधावप्यन्यस्य नियोज्यस्य कल्पना स्यात्, अत्र चाध्यापनविधिनैवाध्ययननियोगस्यात्मलाभे सम्भवति सति न विश्वजिन्न्यायेन नियोज्यकल्पनावकाशः । अध्यापननियोगविषयस्याध्ययनमन्तरेणानुपपत्तेरध्यापनप्रयुक्तेनाप्यध्ययनेनाध्ययननियोगसिद्धेर्न तदर्थमध्ययनविधौ नियोज्यकल्पना युक्ता, अन्यथाध्ययनफलमपि विश्वजिन्न्यायेन स्वर्ग एव कल्पितः स्यादित्यभिप्रायेण प्राभाकर उत्तरमाह—अध्ययनविधेरिति । अयमर्थः—अध्ययनविधिवाक्येऽधिकारिवाचकपदाभावाद्विश्वजिन्न्यायेनाध्ययनफलत्वेन स्वर्ग एव कल्पनीयः स्यादित्यध्ययनस्याध्ययनविधिप्रयुक्तत्वे दोषः स्यात् तस्मादध्ययनमध्यापनविधिप्रयुक्तमिति युक्तम्, तच्चाध्यापनं परकृताध्ययनं विना न संभवतीत्यध्यापनमेवाध्ययनमाक्षिपतीत्यध्ययनमध्यापनविधिप्रयुक्तमेवेति न पृथगध्यनविधिस्वीकारापत्तिरिति लाघवम् । अध्ययनवाक्यस्य विधित्वास्वीकारेण च नाध्ययनफलत्वेन स्वर्गकल्पनापत्तिः । अध्ययनवाक्यस्य का गतिरिति चेत् ? अध्यापनविधिप्रयुक्तस्यैवाध्ययनस्यानुवादकमध्ययनवाक्यमिति वचनीयम् । अध्ययनवाक्यानुवाद्यस्याऽध्ययनस्य च तत्कर्तरि माणवक एवार्थज्ञानं दृष्टं फलत्वेनान्तरङ्गत्वात्कल्प्यते । विहितस्याध्यापनस्य च तत्कर्तर्यध्यापक एवाचार्यत्वसम्पत्तिरेव फलत्वेन कल्प्यते इति सर्वं सुस्थम् । फलकल्पनानुपपत्तिरित्यस्य स्वर्गादिफलकल्पनाऽऽपत्त्यभावो लाघवमित्यर्थः ।

नन्वाचार्यत्वविधायकं किं वाक्यमस्तीति पृच्छति भाट्टः—कः पुनरिति । सत्यप्याचार्यत्वविधायके वाक्ये धनलोभादिना क्रियमाणेनाविहितेन लौकिकेनाप्यध्ययनेनाध्यापनसिद्धिसम्भवात् कथमाचार्यत्वोत्पादकाध्यापनविधिप्रयुक्तत्वमध्ययनस्य स्यादित्याक्षेपेणाह—कथं वेति । प्रयुक्तिः=अनुष्ठानम्, आक्षेपो वा । उत्तरमाह प्राभाकरः—उच्यत इत्यादिना । आचार्यतासंपादकश्रुतिवचना-

उच्यते—

"उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥"

इति स्मृत्यनुमितः—'उपनीयाध्यापनेनाचार्यकं कुर्यात्' इत्याचार्यकरणविधिः । अत्र चाध्यापनमाचार्यत्वसाधनम्, उपनयनं तु क्त्वाप्रत्ययात्तस्यैवाङ्गम् । तच्च केन द्वारेणाध्यापनस्योपकरोतीत्यपेक्षायाम्—उपनेयासत्तिरेवास्य द्वारमङ्गीक्रियते लिङ्गात् । तदुपनेयोपि ना-

---

नुमापकं स्मृतिवचनमुपन्यस्यति—उपनीयेति । यो विद्वान् शिष्यमुपनीय सकल्पं=कल्पसूत्रसहितं सरहस्यम्=निगमनिरुक्तसहितं च वेदमध्यापयेत्तमाचार्यं प्रचक्षते । उक्तस्मृत्यनुमितमाचार्यताकरणविधिवाक्यमुपन्यस्यति—उपनीयाध्यापनेनेति । अत्रेति—अध्यापनेनाचार्यकं कुर्यादित्युक्ते ऽध्यापनमाचार्यत्वस्य साधनमित्युक्तं भवतीत्यर्थः । तत्राचार्यत्वस्याध्यापनमङ्गमध्यापनं विनाचार्यत्वस्यासिद्धेः । अध्यापनस्य चोपनयनमङ्गमुपनयनं विना माणवककर्तृकाध्ययननिरूपितस्य गुरुकर्तृकाध्यापनस्यानुपपत्तेः । अस्य चाङ्गाङ्गिभावस्योपनीयेति क्त्वाप्रत्यय एव बोधकः । यत्र हीन्धनमानीय वन्हिना पाकंकुर्वित्युच्यते तत्रेन्धनस्य वन्हिसाधनत्वेनाङ्गत्वं यथा ज्ञायते तथा ऽत्राप्युपनयनस्याध्यापनाङ्गत्वं विज्ञेयम् ।

ननु यदुपकारकं भवति तदङ्गमपि भवति न चोपनयनमध्यापनस्योपकारकत्वेन प्रतीयते येनाध्यापनस्याङ्गं स्यादित्याशङ्कामुत्थापयति—तच्चेति । तत्=उपनयनम् । उत्तरमाह—उपनेयासत्तिरेवेति । उपनीतासत्तिरेवेत्यर्थः । उपनयनस्याध्यापनाङ्गत्व उपनीतासत्तिरेव द्वारं प्रयोजकम् । उपनीतो हि द्विजवटुर्गुरुगृहे निवत्स्यति ततश्च गुरुरध्यापनं करिष्यति वटुककर्तृकगुरुगृहनिवास एवोपनेयासत्तिशब्देनोच्यते, उपनेयस्य=उपनीतस्य आसत्तिः समीप्यम् । अत्र हेतुमाह—लिङ्गादिति । "सामर्थ्यं सर्वशब्दानां लिङ्गमित्यभिधीयते" इति, "उपनीय" इति पदस्य शक्त्या—उप=समीपे नीत्वा, इत्यर्थात् । उपनेयासत्तिश्चोपनयनसंस्कारं विना न संभवति । तत्राध्यापनसंपादिका ह्युपनेयासत्तिरुपनेयासत्तिसंपादकं चोपनयनमेवेत्युपनीतासत्तिद्वारोपनयनस्याध्यापनाङ्गत्वं प्राप्तम् । उपनयनस्य चाध्यापना-

ऽकिंचित्करोऽङ्गमिति तद्व्यापारापेक्षायामुपनयनं प्रक्रम्य विहितमध्ययनमध्यापनोपकारित्वादुपनीतस्य व्यापारत्वेनाध्यवसीयते । तदेवं स्वाङ्गभूतमुपनयनं प्रयुञ्जानोऽध्यापनविधिस्तद्द्वारेणाध्यनं प्रयुङ्क्ते ।

---

ङ्गत्वे प्राप्त उपनीतस्याप्यङ्गत्वं प्राप्तमित्याह—तदुपनेयोपीति । स उपनीतोपीत्यर्थः । यथा ह्यवघातादेर्व्रीहिसंस्कारकत्वादङ्गत्वं व्रीहीणां च पुरोडाशसंपादकत्वादङ्गत्वं भवति तथोपनीतस्यापि कं चिद्व्यापारं कुर्वत एवाङ्गत्वं संभवति भृत्यस्येव राजाङ्गत्वम् । नाऽकुर्वतोप्यङ्गत्वमित्यर्थः । कश्च तेनोपनीतेन स्वस्मिन्नङ्गत्वसंपादनाय व्यापारः कर्तव्य इति जिज्ञासायामुपनयनप्रकरणे विहितमध्ययनमेवोपनीतस्य युक्तो व्यापारोऽध्यापनोपकारकत्वादित्याह—तद्व्यापारापेक्षायामिति । तत्=तस्योपनीतस्य । उपसंहरति—तदेवमिति । उपनयनं विनाध्यापनं न संभवतीत्यध्यापनविधिरुपनयनमाक्षिपति । उपनयनद्वारा चाध्ययनमाक्षिपति । तस्मादध्यापनविध्याक्षिप्तस्यैवाध्ययनस्य "स्वाध्यायोध्येतव्यः" इति वाक्यमनुवादकं न त्वप्राप्तस्याध्ययनस्य विधायकमिति भावः । तथा चाऽऽचार्यत्वसंपत्तयेऽध्यापककृताध्यापनस्यापेक्षा, अध्यापनसंपत्तये छात्रकर्तृकाध्ययनापेक्षा, अध्ययनार्थं च छात्रकर्तृकगुरुगृहवासापेक्षा, गुरुगृहवासाय च छात्रोपनयनापेक्षा, उपनयनं चोपनीतसंबद्धमित्युपनयनद्वारोपनीतस्याध्यापनाङ्गत्वम्, उपनीतस्य चाध्ययनव्यापारं विना नाङ्गत्वमिति परम्परयाऽध्यापनविधिरेवाऽध्ययनं स्वाधीनं कुर्वन् प्रयुङ्क्ते ।

उक्तं च प्राभाकरैः—"उपनयनं च क्त्वाप्रत्ययेनाध्यापनसमानकर्तृकमवगम्यमानमेकप्रयोगतया विना समानकर्तृकत्वासम्भवादऽङ्गाङ्गिभावेन च विना एकप्रयोगत्वानुपपत्तेराचार्यकभावनाकरणीभूतमध्यापनं प्रत्यङ्गत्वेनावतिष्ठते तदाश्रितश्च "अष्टवर्षं ब्राह्मणमुपनयीत" इत्यादिनियमः । उपनयनं च स्वभावत उपनेयासत्तिप्रयोजकमिति तद्द्वारेणैव तस्याङ्गत्वं न चाध्यापनं प्रत्यनुपयोगिनः, उपनेयस्यासत्तिरध्यापनोपयोगिनीत्युपनेयस्य कर्मापेक्षायामुपनयनं प्रक्रम्य "स्वाध्यायोध्येतव्यः" इत्यध्ययनं विधीयमानमुपनेयस्य कर्मेत्यवगम्यते, अध्ययनं चाध्यापनोपयोगीति सिद्ध्येतत्, तेनायमध्येष्यमाणस्य माणवकस्योपनयनमध्यापनाङ्गमित्यध्यापनविधिः स्वाङ्गभूतमुपनयनं प्रयुञ्जानस्तस्यान्यथानुपपत्त्याऽध्य-

**तदिदमनुपपन्नम्–तथाहि–नियोगार्थस्याध्ययनस्या-चार्यकप्रयोजनता अर्थज्ञानप्रयोजनता वा न शक्यते शास्त्रेण बोधयितुं साध्यद्वयस्यैकत्रासंभवात्। नियोगार्थतैव शास्त्रेण बोध्यते अर्थज्ञानार्थतायां त्वनुज्ञामा-**

यनमपि प्रयुङ्क्ते तत्प्रयुक्ताध्ययननिष्पत्त्या च लब्धसिद्धिरध्ययननियोगो नाधि-कारान्तरमपेक्षते, अतो नायं विश्वजिन्न्यायस्य विषयो नापि रात्रिसत्रन्यायस्य" इत्यादि। तथा "विधिपूर्वकं माणवकस्याचार्येणात्मसमीपप्रापणमुपनयनं तस्य चोपनेयासत्तिजननरूपाल्लिङ्गादुपनेयासत्तिरुपनयनस्या ऽध्यापनाङ्गत्वनिर्वाहिका तस्याश्चाध्यापनाङ्गत्वमुपनयनप्रकरणविहिताध्ययनद्वारेणैव न लौकिकाध्ययन-द्वारेण तस्योपनयनमन्तरेण सम्भाव्यमानस्योपनयनाङ्गत्वानिर्वाहकत्वादिति प्रणाड्याऽध्यापनविधेर्विहिताध्ययनप्रयोजकत्वम्।" इति।

केचिदित्यादिना प्रभाकरमतमुपन्यस्तं पराचष्टे–तदिदमनुपपन्नमिति। उपपादयति–तथा हीति। "किमाचार्यकसिद्धिरेवाध्ययनस्य प्रयोजनमुतार्थज्ञा-नम्" इत्येवं प्रभाकरकृतः संशयोऽप्यनुपपन्नः सुतरां सिद्धान्त इत्याशयेनो-भयत्रैवानुपपत्तिं प्रदर्शयति–नियोगार्थस्येत्यादिना। नियोगार्थस्य=अपूर्वो-त्पादकत्वेनाभिमतस्याध्ययनस्य प्रभाकरेण पूर्वपक्षेऽपूर्वसाधकत्वमाचार्यतासाध-कत्वमिति द्वयसाधकत्वं वक्तव्यं राद्धान्तपक्षे चापूर्वसाधकत्वमर्थज्ञानसाधकत्वं चे-तिद्वयसाधकत्वं वक्तव्यं न च शास्त्रेणैकत्र=एकस्य साधनस्य साध्यद्वयसाधक-त्वं बोधयितुं शक्यते एकस्य साधनस्यैककार्यकर्तृत्वनियमात्, वाक्यभेदप्र-सङ्गाच्च। उक्तं चाध्ययनस्यापूर्वार्थत्वं प्राभाकरैः–"नहि लिङादियुक्तवाक्येषु भावना भाव्यान्तरमपेक्षते अपूर्वस्य भाव्यस्य स्वशब्देनाभिहितत्वात्" इति। यद्यपि लोके त्वेकेनापि साधनेन कार्यद्वयं साध्यते एकेनाप्यग्निना पाचनप्रका-शनलक्षणकार्यद्वयसिद्धिदर्शनात्, तथापि नैषा शास्त्रीयमर्यादा। किं च शब्द-बुद्धिकर्मणां विरम्य व्यापाराभावात् शास्त्रेणाध्ययनस्यैकप्रयोजनकत्वे बोधिते पुनः प्रयोजनान्तरसाधकताविषयकबोधनानुकूलव्यापारासम्भवात्। ननु भवे-दयं दोषो यदि साध्यद्वयसाधकताबोधकत्वं शास्त्रस्योच्येत, न चैवमुच्यते, अ-पूर्वमात्रसाधकताबोधकत्वस्वीकारादित्यभिप्रायेणाह–नियोगार्थतैवेति। अप्रा-प्तमपूर्वार्थत्वमेवाध्ययनस्य शास्त्रेण बोध्यते नत्वर्थज्ञानार्थतापि तस्या लोकतो इ-

त्रमिति चेत् ? तथाप्यर्थद्वयं स्यादेव ।

किं चैवं सकृदुच्चरितस्य लिङ्प्रत्ययस्य विध्यर्थत्वमनुज्ञार्थत्वं चेति वैरूप्यमपि स्यात् तेन संशय एवानुपपन्नः । तथा सिद्धान्तोऽप्यनुपपन्न एव-प्रमाणान्तरसिद्धत्वादर्थज्ञानार्थत्वं न शास्त्रगोचरतामनुभवतीति ।

तत्र यदेवास्मदभिप्रेतं विधेर्नियमार्थत्वं महता प्रय-

---

त्नेनैव वा प्राप्तत्वात् तत्र शास्त्रस्यानुज्ञामात्रमिति नोक्तदोषः । परिहरति-तथापीति । बाढं भवत्वर्थज्ञानार्थतायामनुज्ञामात्रं तथाप्यध्ययनस्याऽपूर्वाऽर्थज्ञाने-त्युभयसाधकत्वं स्यादेवेत्यर्थः । अर्थद्वयम्=प्रयोजनद्वयं फलद्वयमिति यावत् । किं वानुज्ञार्थत्वं विध्यर्थत्वं चेत्यर्थद्वयपरत्वं वाक्यस्य स्यादेवेत्यर्थः ।

ननु भवत्वध्ययनस्याऽपूर्वार्थज्ञानेत्युभयसाधकत्वं तथापि शास्त्रस्यार्थज्ञानार्थतायामनुज्ञामात्रस्वीकारात् साध्यद्वयसाधकताबोधकत्वरूपस्तु दोषः परिहृत एवेत्यभिप्रायेण दोषान्तरमाह-किं चैवमिति । लिङ्प्रत्ययस्य=विधायकप्रत्ययस्य, अध्ययनविधिवाक्ये तव्यप्रत्ययश्रवणात् । विध्यर्थत्वम्=विधायकत्वमपूर्वंप्रति । अनुज्ञार्थत्वम्=अनुज्ञापकत्वमऽर्थज्ञानं प्रति । एकस्यैव प्रत्ययस्य विधायकत्वमनुज्ञापकत्वमिति विरुद्धरूपता, उक्तरूपद्वयस्य सामानाधिकरण्याभावाद्वाक्यभेदप्रसङ्गाच्चेतिभावः । उपसंहरति-तेनेति । तेनाध्ययनस्याचार्यतासिद्धिः प्रयोजनमुतार्थज्ञानमिति संशय एवानुपपन्नः, यतस्तवमते आचार्यत्वार्थज्ञानयोरुभयोरप्यध्ययनफलत्वं न सम्भवत्यध्ययनस्यापूर्वार्थत्वात् । पूर्वपक्षस्तु सुतरामनुपपन्नः । सिद्धान्तोऽप्यनुपपन्न इत्याह-तथेति । शास्त्रेण ह्यप्राप्तमेव बोध्यते प्राप्तस्य बोधने त्वनुवादकत्वलक्षणमप्रामाण्यं प्रसज्येत, अध्ययनस्यार्थज्ञानार्थत्वं तु लोके ऽन्वयव्यतिरेकाभ्यामेव सिद्धमिति न तत्र शास्त्रस्य व्यापारो युक्त इत्याह-प्रामाणान्तरेति ।

ननु त्वयापि भाट्टेन प्रमाणान्तरसिद्धार्थज्ञानार्थत्वमेवाध्ययनस्य स्वीकृतं तथा च कथं प्राभाकरं मां प्रति प्रमाणान्तरसिद्धत्वादर्थज्ञानार्थत्वानुपपत्त्युपालम्भ इत्याशङ्क्य मन्मतेऽध्ययनविधेरुक्तनियमार्थत्वान्न वैयर्थ्यं भवन्मते च नियमार्थत्वास्वीकारादर्थज्ञानार्थत्वस्य च लोकावगतत्वादानर्थक्यमेव, नियमार्थत्वस्वीकारे च त्वत्सिद्धान्तहानिर्मत्सिद्धान्तस्वीकारापत्तिश्चेत्यभिप्रायेण प्राभा-

त्वेन भवद्भिर्दूषितं तदेव भवद्भिरपि मुक्तलज्जैरनन्यगतिकत्वादाश्रयणीयमापन्नम्। नियमानङ्गीकारे च पूर्वपक्ष एव श्रेयानापद्यते। आचार्यत्वस्यादृष्टत्वेन प्रयोजनतोपपत्तेः। अर्थज्ञानार्थत्वे चाध्ययनं स्वाध्यायसंस्कारो नियोगार्थत्वे तु प्रधानकर्मेति वैरूप्यमपि स्यात्।

---

करमते दोषमुद्घाटयति—तत्रेति। नियमार्थत्वं च पूर्वमेव व्याख्यातम्। महता प्रयत्नेनेति—उक्तप्रकारेणेत्यर्थः। यथा—"उपनीय तु यः शिष्यम्" इति स्मृत्या "उपनीयाध्यापनेनाचार्यकं कुर्यात्" इत्यनेनानुमितेन श्रुतिवाक्येनाध्यापनविधिं प्रकल्प्य श्रुतस्य चाध्ययनविधेर्विधित्वं पराकृत्याध्ययनस्यार्थज्ञानलक्षणदृष्टप्रयोजनकत्वं च प्रकल्प्याध्ययनविधेर्नियमार्थत्वं यत्परिहृतं तदेव भवद्भिराश्रयणीयमापन्नं गत्यन्तराभावात्। भवद्भिः साधितस्य दृष्टार्थत्वस्य शास्त्रव्यापाराविषयत्वात् लोकत एव तत्सिद्धेरित्यादि सर्वमुक्तमेव। विपक्षे बाधकमाह—नियमानङ्गीकारेति। पूर्वपक्षस्य श्रेयस्त्वे हेतुमाह—आचार्यत्वेति। आचार्यत्वस्याध्ययनप्रयोजनत्वं न लोकावगतमित्यदृष्टत्वेन प्रमाणान्तरासिद्धत्वेनाचार्यत्वस्यैवाध्ययनतद्विधिप्रयोजनत्वोपपत्तेः पूर्वपक्ष एव श्रेयानापद्यते इत्यर्थः। उक्तं हि—"आचार्यत्वमलौकिकमाहवनीयत्वादिवत्" इति।

"नियोगार्थतैव शास्त्रेण बोध्यतेऽर्थज्ञानार्थतायां त्वनुज्ञामात्रम्" इत्यत्र सिंहावलोकितन्यायेन दूषणान्तरमाह—अर्थज्ञानार्थत्वे चेत्यादिना। एकस्यैवाध्ययनस्यार्थज्ञानार्थत्वात् स्वाध्यायसंस्कारकत्वेन गौणकर्मतापि प्राप्ता नियोगार्थत्वेन च प्रधानकर्मतापि प्राप्नोति वैरूप्यम्। अपूर्वजनकस्यैव कर्मणः प्रधानत्वव्यपदेशात्। स्वाध्याया वेदाः। वेदैश्च संस्कृतैरेव कर्मानुष्ठानं कर्तव्यं वेदानां संस्कारश्चाध्ययनमेवेति वेदानऽध्ययनेन संस्कुर्यादिति वक्तव्यं तथा चार्थज्ञानार्थमध्ययनं स्वाध्यायसंस्कार एवेति प्राप्तम्। कथमिदमिति चेत्? अर्थज्ञानं हि व्युत्पन्नस्य पुंसो लिखितपाठादिनापि संभवतीत्यर्थज्ञानोपायान् लिखितपाठादीन् परित्यज्यार्थज्ञानोपायत्वेनोपादीयमानमध्ययनं स्वाध्यायसंस्कार एव संवृत्तः स्यात्।

ननु शास्त्रेण त्वध्ययनस्य नियोगार्थत्वमेव बोध्यते न त्वर्थज्ञानार्थत्व-

**अर्थाज्जातमर्थज्ञानं प्रयोजनं न शास्त्रत इति चेत्? आचार्यत्वमपि प्रयोजनं न स्यात् तस्याप्यर्थाज्जातत्वात्। स्मृतिबाधेन च स्नानोत्कर्षो न स्यादऽशास्त्रस्वीकृतत्वाद्विचारस्य ।**

---

मपि येनोक्तवैरूप्यं स्यात्? वैरूप्यस्य शास्त्रबोधितद्वैधीभावे एव वक्तव्यत्वात् । अर्थज्ञानलक्षणं तु प्रयोजनं वेश्मार्थारोपितदीपस्य वीथ्यां प्रकाशवदार्थिकमेव न तु तत्र शास्त्रव्यापार इति नाध्ययनस्य स्वाध्यायसंस्कारत्वं प्रधानकर्मत्वं चेति वैरूप्यं नियोगार्थत्वेन प्रधानकर्मत्वस्यैव वक्तव्यत्वादित्याशयेनाह—अर्थाज्जातमिति, नियोगार्थकृताध्ययनसामर्थ्याज्जातमित्यर्थः। परिहर्तुं प्रतिबन्दीमाह—आचार्यत्वमपीति । यदि "स्वाध्यायोध्येतव्यः" इत्यत्रापूर्वमेव शास्त्रीयं प्रयोजनमर्थज्ञानं चार्थिकं तदा "उपनीय तु यः शिष्यम्" "उपनीयाध्यापनेनाचार्यकं कुर्यात्" इत्यत्राप्यपूर्वमेव शास्त्रीयं प्रयोजनं स्यान्नत्वाचार्यत्वमपि तस्य=आचार्यत्वस्याप्यर्थाज्जातत्वात्=आर्थिकत्वात्। यथाऽध्ययनेनार्थादेवार्थज्ञानं भवतीति लभ्यते तथाऽध्यापनेनाचार्यत्वमप्यर्थादेव भवत्येवेति लभ्यते इत्याचार्यत्वमपि प्रयोजनं न स्यात् । यदि तत्राचार्यत्वं शास्त्रत एव तदात्राप्यर्थज्ञानं शास्त्रप्राप्तमेव प्रयोजनं तथा चोक्तं प्रधानाप्रधानकर्मत्वरूपं वैरूप्यं प्राप्तमेवेत्यर्थः ।

किं च यद्यर्थज्ञानमार्थिकमेव प्रयोजनं न शास्त्रव्यापारविषयस्तदाऽशास्त्रीयत्वं विचारस्य प्राप्तं तथा च "अधीत्य स्नायात्" इति स्मृतेर्बाधो न स्यात् लौकिकेनार्थिकेन विचारेण स्मृतिबाधासंभवात्। तथा च स्नानस्य=समावर्तनस्योत्कर्षो न स्यात्=स्नानस्य विचारानन्तरभाविता न स्यात् किं तु विचारात्पूर्वमेवाक्षरमात्रग्रहणानन्तरभविता स्यात् तथा च विचारबाधेन कर्मस्वरूपाज्ञानात् कर्मानुष्ठानमपि न स्यादिति सर्वं व्याकुलं स्यादित्याशयेनाह—स्मृतिबाधेनेति । स्मृतिबाधेन=स्मृतेर्बाधेन। अस्माकं त्वक्षरग्रहणेनाध्ययनादिपरम्परयार्थज्ञानपर्यन्तमध्ययनपदार्थस्तच्चाध्ययनमुक्तरीत्या नियमार्थमेवेति न कोपि दोषः । तथा चोक्षरमात्रग्रहणेनार्थज्ञानपर्यन्तस्याध्ययनपदार्थस्याऽसंपन्नत्वान्नाक्षरमात्रग्रहणानन्तरं स्नानं भवति किं त्वर्थज्ञानलक्षणधर्मविचारानन्तरम्। तस्मादस्मन्मते न विचारबाधः ।

किंच—

नियोज्यः कल्पनीयोऽत्र विध्यर्थानुपपत्तितः ।
न चोपनयनस्याङ्गभावोऽस्त्यध्यापनं प्रति ॥
द्वितीयाश्रुतिसामर्थ्यात्सा माणवकसंस्क्रिया ।
तथा सत्यन्तरङ्गत्वादङ्गमध्ययनस्य तत् ॥

यत्तावन्नियोज्याभावादऽप्रयोजकत्वमध्ययनविधेरिति, तदयुक्तम्, अभावासिद्धेः, अश्रुतस्यापि विश्वजिदादिवत् कल्पनात् । कार्यं हि विध्यर्थः, संबन्धिश-

---

नियोज्याश्रवणादध्ययनविधेरध्ययनाऽप्रयोजकत्वं यदुक्तं तत्पराकरोति—नियोज्य इति । अत्र=अध्ययनविधिवाक्ये नियोज्यः कल्पनीयः, अन्यथा विध्यर्थस्य=अध्ययनविधानस्यानुपपत्तिः=वैयर्थ्यं स्यात् । "स्वाध्यायोऽध्येतव्यः" इतिश्रुते भवति ह्याकङ्क्षा—केनाध्येतव्य इति, यथा पाकः कर्तव्य इत्यत्र केनेति, स च कल्पनीयो नियोज्य उपनीतो द्विजातिवटुरेव, सा=उपनीतिः=उपनयनं च तस्य वटोः संस्क्रिया=संस्कार एव "वसन्ते ब्राह्मणमुपनयीत" इत्यत्र ब्राह्मणशब्दोत्तरद्वितीयाश्रुत्या—उपनयनेन ब्राह्मणं संस्कुर्यादित्यर्थादित्याह—द्वितीयेति । माणवकसंस्काररूपं चोपनयनं माणवककर्तृकाध्ययनस्यैवाङ्गं भवितुमर्हति अध्ययनस्य वटुकगामित्वेनाऽन्तरङ्गत्वादित्याह—तथा सतीति । तत्=उपनयनम् । नन्वध्यापनविधिः स्वाङ्गमुपनयनमाक्षिपन् तद्द्वाराध्ययनप्रयोजको भविष्यत्येवेति नाध्ययनविधिवाक्ये नियोज्यकल्पनावकाश इत्याशङ्क्य अध्यापनस्योपनयनसमवायिवटुकभिन्नाचार्यवृत्तित्वेन बहिरङ्गत्वान्नोपनयनस्याध्यापनाङ्गत्वं संभवति येनोपनयनद्वाराऽध्यापनविधेरध्ययनप्रयोजकत्वेनाध्ययनविधौ नियोज्यकल्पना न स्यादित्याशयेनोक्तम्—न चोपनयनस्येति । तथा सति=उपनयनस्य माणवकसंस्कारत्वे सिद्धे ।

पद्याभ्यां संक्षेपेणोक्तमर्थं स्वयमेव विशदीकुर्वन् प्रथमार्धं व्याचष्टे—यत्तावदित्यादिना । अध्ययनविधिवाक्येऽधिकारिबोधकपदाभावादध्ययनविधेरप्रयोजकत्वम्=अविधायकत्वमिति यदुक्तं तदयुक्तम्, अभावासिद्धेः=नियोज्याभावस्यासिद्धेः । नन्वश्रुतत्वादेवासिद्धिरित्यत्राह—अश्रुतस्यापीति, यथा—"विश्वजिता यजेत" इत्यत्राश्रुतस्यापि नियोज्यस्य कल्पना भवति तथाऽध्य-

दश्चायंकार्यमिति, कस्य चिद्धि किं चित् कार्यं भवति न सर्वं सर्वस्य, अतः कस्येदं कार्यमित्यस्ति सम्बन्ध्यपेक्षा, साऽवश्यमध्याहृतेन केन चिन्निवर्तनीया—अस्येदं कर्यमिति, यस्येदं कार्यं स एव नियोज्य इत्युच्यते ।

यद्यपि कथं चित् परप्रयुक्तानुष्ठानादेवात्मलाभः स्यात्,

---

यनविधावपीति । कल्पनाप्रकारमुपपादयति—कर्यं हीत्यादिना । यथा—यजेतेत्यस्य यागं कुर्यादित्यर्थस्तथाऽध्येतव्य इत्यस्याध्ययनं कर्तव्यमित्यर्थस्तथा च कार्यत्वमेव विध्यर्थस्तव्यप्रत्ययार्थ इति सिद्धम् ।

ननु कार्यस्य संबन्ध्यपेक्षित्वेपि चेतनसामान्यं तत्संबन्धि निश्चितमेवेति न विशेषतो नियोज्याकाङ्क्षेत्याशङ्क्याह—कस्य चिदिति, यद्यऽध्ययनविधिना कार्यसामान्यमेव प्रतिपाद्येत तदा तस्य सामान्यतश्चेतनसंबन्धेनाप्याकाङ्क्षा निवर्तेत न चैवमस्ति—अध्ययनविधिनाऽध्ययनविषयककार्यविशेषस्य प्रतिपादनात् तस्य च कर्तृविशेषभूतनियोज्यं विना निराकाङ्क्षत्वासंभवादवश्यंभाविनी नियोज्यकल्पनेति भावः । कार्यं च किं चित् केन चित्कर्तव्यं भवति न सर्वं सर्वेणेति कस्येदं कार्यम्=किंसंबन्धीदं कार्यं किं वा केनेदं कार्यं कर्तव्यमिति संबन्धिनो नियोज्यस्याकाङ्क्षा भवत्येवेति कार्यमेव स्वात्मलाभार्थं स्वकर्तारमाक्षिपति कार्यत्वस्य किं चिन्निरूपितत्वादित्यर्थस्तदाह—अत इति । सा=अध्ययनस्य संबन्धिनः कर्तुरपेक्षा केन चिदऽध्याहृतेनाऽवश्यं निवर्तनीया, अन्यथा वाक्यार्थानुपपत्तेः । संबन्ध्याक्षेपस्वरूपमाह—अस्येदमिति । कल्प्यमाननियोज्यस्वरूपमाह—यस्येदमिति । उक्तं च "कर्मणि चाधिकारो नियोज्यस्यावकल्पते यो हि ममेदं कार्यमिति प्रतिपद्यते स स्वकीयकार्यसाधनं कर्म स्वार्थतया प्रतिपद्यमानो ऽधिकारी स्यात्" इति ।

ननु किमर्थं नियोज्यः कल्प्यते ? अध्ययनविध्युक्ताध्ययनक्रियासंपत्त्यर्थमेव हि तत्र नियोज्यकल्पना कर्तव्या ? अध्ययनक्रियासंपत्तिस्त्वाचार्यत्वकामस्य गुरोः प्रेरणया भयादिना वा भविष्यति गुरुप्रेरितश्च द्विजवटुरध्येष्यतीति न नियोज्यकल्पनापेक्षेत्याशङ्क्याह—यद्यपीति । परप्रयुक्तानुष्ठानात्=अध्यापकादिप्रयुक्तवटुककृताध्ययनकर्मानुष्ठानात्, किं वाऽध्यापनविधिप्रयुक्ताध्ययनानुष्ठादेव, आत्मलाभः=अध्ययननियोगस्वरूपसंपत्तिः, स्यात्=संभवति ।

**तथापि न तावता कार्यत्वं सिध्यति । न हि कृतिसाध्यतामात्रं कार्यत्वम् । किं तर्हि ?, यत्कृतिसाध्यं कृतिं प्रति प्रधानभूतं तत् कार्यमित्युच्यते । प्राधान्यं च कृतेस्तदुद्देश्येन प्रवृत्तिः, ततश्चाध्ययननियोगेन कार्येण भवताऽवश्यं पुरुषव्यापारोद्देश्येन भवितव्यम् ।**

**न चाऽसति नियोज्ये तदुद्देशेन कश्चित्प्रवर्तेत । अध्यापनविधिना हि प्रवर्त्यमानो माणवकः कथं चिदध्य-**

---

तथापि तावता=उक्तपरप्रयुक्तानुष्ठानमात्रात् कार्यत्वं=अध्ययननियोगस्य कार्यत्वं न सिद्ध्यति । ननु कार्यत्वं हि कृतिसाध्यतापरपर्यायं कर्तव्यत्वमेव तच्च यथा स्वयं प्रवृत्त्या सिद्ध्यति तथा परप्रयुक्तानुष्ठानादपि सिध्यत्येवेति परप्रयुक्तानुष्ठानादेवाध्ययनस्यात्मलाभे संभवति व्यर्था नियोज्यकल्पनाऽध्ययनविधावित्याशङ्क्याह—न हीति । यदि कृतिसाध्यत्वमेव कार्यत्वं भवेत्तदा भवेदप्येवं नैवमस्ति । कार्यत्वस्वरूपं पृच्छति—किं तर्हीति । कार्यत्वस्वरूपमाह—यदिति । कृतिसाध्यत्वं कार्यत्वमित्युक्ते राजाज्ञया संपादितेष्वतिव्याप्तिः स्यात् । कृतिं प्रति प्रधानभूतत्वं कार्यत्वमित्युक्ते फलेतिव्याप्तिः स्यादत उभयदलं लक्षणम् । तथा च यथा यागाद्यपूर्वस्य कृतिसाध्यत्वेन कृतिं प्रति प्रधानत्वेन च कार्यत्वं तथाऽध्ययनापूर्वस्यापि विज्ञेयम् । कार्यत्वस्य किं नाम प्राधान्यमित्याह—प्राधान्यमिति । तदुद्देशेनेतिपाठान्तरम् । यदुद्देश्येन कृतेः प्रवृत्तिर्भवति तस्य तत्कृतिं प्रति प्राधान्यं भवति यथा पाकक्रियां प्रति पाकस्य प्राधान्यम् । तत्कस्य हेतोः ? पाकार्थमेव पाककृतौ प्रवृत्तेः । एवमध्ययनकृतेरध्ययनापूर्वार्थत्वादध्ययनकृतिं प्रत्यध्ययनापूर्वस्य प्राध्यान्यं ज्ञेयम् । तथा च कार्यत्वस्य प्रधानत्वात्तत्सिद्ध्यर्थमवश्यं नियोज्यकल्पना कर्तव्येत्याह—ततश्चेति । यद्यध्ययननियोगः कार्यं तदाऽवश्यं तत् पुरुषव्यापारोद्देश्यमन्यथा तस्य कार्यत्वं न स्यादेवेत्यर्थः ।

पुरुषव्यापारोद्देश्यत्वं नाम नियोज्यस्य पुरुषस्य यो व्यापारस्तदुद्देश्यत्वमेव तच्च नियोज्याभावे न संभवति, किं च नियोज्याभावे न कोप्यध्ययननियोगस्योद्देशेन प्रवर्ततेत्यध्ययननियोगो न सिद्ध्येदित्यावश्यिकी नियोज्यकल्पनेत्याह—न चासतीति । विपक्षे बाधकमाह—अध्यापनेति । यद्यध्यापनविधिप्रेरणयाऽध्ययने माणवकः प्रवर्तेत तदाध्ययनमात्रं कुर्यादपि न त्वपूर्वमुद्दिशेत् । यथा

**यनमात्रमनुतिष्ठेन्नत्व पूर्वमुद्दिशेत् । न हि तस्य तदुद्देश्यं प्रमाणाभावात् । प्रयाजाद्यपूर्वाणि दर्शपूर्णमासाऽपूर्वोपकारित्वात् तदधिकृतेन पुरुषेण तत्सिद्ध्यर्थमुद्दिश्य क्रियमाणानीति युक्तं यद्ऽसत्यपि साक्षान्नियोज्योपादा-**

---

जनकानुरोधेन प्रवृत्तो वटुर्नाध्ययनफलं ज्ञानमुद्दिशति किं तु विवशः सन्नऽक्षरमात्रग्रहणं करोति तथा । एतदेवाह—नहीति । तस्य=परानुरोधेन प्रवृत्तस्य माणवकस्य, तत्=अध्ययनापूर्वम्, उद्देश्यम्=इष्यमाणं न, अपूर्वस्य माणवकोद्देश्यत्वे प्रमाणाभावात् । उद्दिशेद्यदपूर्वं यद्यऽध्ययनविधिवाक्ये नियोगस्वाम्यबोधकमर्थज्ञानकामादिपदं स्यात् न चैवमस्ति, नियोज्याध्याहारश्च न तवाभिमत इति भावः । अध्याहृतश्च नियोज्यो नियोगमपूर्वमुद्दिशत्येव । परानुरोधेन प्रवर्तमानः पाचकादिर्यथा पाकादौ न स्वकीयं किमपि फलमुद्दिशति तथात्रापि परप्रयुक्तत्वे विज्ञेयम् । तदुक्तम्—"माणवकस्य नियोगस्वाम्यबोधकार्थज्ञानकामपदाभावादध्याहारानभ्युपगमाच्च" इति ।

ननु यथा प्रयाजादौ साक्षान्नियोज्यस्याभावेपि प्रयजाद्यपूर्वं कार्यं भवति तथाऽध्ययनेपि नियोज्याभावेप्यध्ययनापूर्वं कार्यं भविष्यतीत्याशङ्क्याह—प्रयाजाद्यपूर्वाणीति, अयं भावः—दर्शपूर्णमासयोस्तु साक्षान्नियोज्योऽस्त्येव—"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति श्रुतेः । नियोज्येन च साङ्गयोरेव दर्शपूर्णमासयोरनुष्ठानं कर्तव्यं साङ्गस्यैव फलप्रदत्वात्, अङ्गानि च प्रयाजादीन्येवेति प्रयाजादिजन्यापूर्वाणि दर्शपूर्णमासजन्यापूर्वस्योपकारकानि भवन्ति तस्माद् दर्शपूर्णमासयोर्नियुक्तः स्वर्गकामो नरो दर्शपूर्णमासापूर्वस्य सिद्ध्यर्थं प्रयाजादिकृत्या प्रयाजाद्यपूर्वं संपादयतीति प्रयाजाद्यपूर्वेषु नियोज्यस्य साक्षादुपादानाभावेपि प्रयाजाद्यपूर्वाणि कार्यत्वं लभन्ते दर्शपूर्णमासयोर्नियुक्तेन तदङ्गभूतप्रयाजादीनामवश्यंकर्तव्यत्वात् । वस्तुतस्तु यः पुरुषो दर्शपूर्णमासयोर्नियुक्तः स प्रयाजादिष्वपि नियुक्त एव, यतः फलायैव दर्शपूर्णमासयोरपि पुरुषः प्रवर्तते फलप्रदत्वं च तयोः साङ्गयोरेवेति साङ्गयोरेव कर्तव्यत्वात्साङ्गयोरेव पुरुषो नियोज्य इति तदङ्गभूतप्रयाजादयोपि स्वप्रधानीभूतयागद्वारा नियोज्यं लभन्ते एवेति । तदाह—युक्तमिति । नैवमस्त्यध्ययनपक्षे अध्ययनस्य किंचित्प्रत्यऽङ्गत्वाभावादित्याह—अध्ययननियोगस्येति । अध्यय-

**ने कार्यत्वं लभन्ते, अध्ययननियोगस्य तु नान्यौपयिकत्वं यतस्तद्रूपेणोद्देश्यता स्यात् ? । अर्थज्ञानस्य च नियमफलत्वेन नियोगाऽनपेक्षत्वात् । तस्मादस्य कार्यत्वसिद्धयेऽवश्यं नियोज्यः कल्पनीयः ।**

**यच्चाध्यापनविधेरुपनयनद्वारमऽध्ययनप्रयोजकत्वमुक्तम्, तदप्ययुक्तम्—उपनयनप्रयुक्तेरेवाभावात्, तद्-**

---

नजन्यापूर्वस्य नान्यौपयिकत्वम्=नान्याङ्गत्वम् । यद्यऽध्ययनापूर्वमन्यस्य कस्यचिदङ्गं भवेत्तदा तस्याङ्गिनः सिद्ध्यर्थमध्ययनापूर्वमपि संपाद्यं भवेत्तदा च तस्योद्देश्यतापि स्यादित्याह व्यतिरेकमुखेन—यतस्तद्रूपेणेति, अन्याङ्गत्वरूपेणेत्यर्थः ।

नन्वर्थज्ञानार्थमेवाध्ययनापूर्वस्यापेक्षा भवतु तथा चार्थज्ञानस्यैवाध्ययनापूर्वमङ्गमित्यर्थज्ञानसिद्ध्यर्थमध्ययनापूर्वं संपाद्यं भविष्यतीति किमर्थमध्ययनापूर्वे नियोज्यः कल्प्यत इत्याशङ्क्याह—अर्थज्ञानस्येति । यथा वितुषीकरणमवघातेन नखविदलनेन च प्राप्तं तत्र "व्रीहीनवहन्ति" इत्यनेनावघातो नियम्यते इत्यवघातनियमस्य फलं वितुषीकरणं न स्वसिद्ध्यर्थमपूर्वमपेक्षते तथात्राप्यर्थज्ञानमध्ययनेन लिखितपाठादिना च प्राप्तं तत्र "स्वाध्यायोऽध्येतव्यः" इत्यनेनाध्ययनं नियम्यते इत्यध्ययननियमस्य फलमर्थज्ञानं न स्वसिद्ध्यर्थमध्ययनापूर्वमपेक्षते येनार्थज्ञानद्वाराऽध्ययनापूर्वे नियोज्यः प्राप्नुयात्, अपूर्वं विनार्थज्ञानोत्पत्तावऽनुपपत्त्यभावात् । उपसंहरति—तस्मादिति । यस्मादध्ययानापूर्वे केनापि द्वारेण नियोज्यस्य प्राप्तिर्नास्ति कार्यत्वं त्वस्ति तस्मान्नियोज्यः कल्पनीयः इत्यर्थः । अस्य=अध्ययननियोगस्य ।

ननु "अध्यापयीत" इति विध्यनुरोधेनाध्यापनं कर्तव्यमेव तच्चाध्यापनमुपनीतकृताध्ययनं विना न सम्भवतीत्युपनयनद्वारोक्तरीत्याऽध्यापनविधिरेवाध्ययनस्य प्रयोजक इति नाध्ययनविधिवाक्ये नियोज्यकल्पनापेक्षा, किं वा "उपनीयाध्यापनेनाचार्यकं कुर्यात्" इत्यध्यापनविधिनोपनयनस्याध्यापनाङ्गत्वं प्राप्तमुपनयनस्य चाध्यापनाङ्गत्वमुपनेयकृताऽऽसत्त्यऽध्ययनाभ्यां विना नोपपद्यत इत्युपनयनद्वाराऽध्यापनविधिरेवाध्ययनप्रयोजक इति नाध्ययनविधौ नियोज्यकल्पनापेक्षेत्युक्तमुत्थापयति—यच्चेति । परिहरति—तदप्ययुक्तमित्यादिना । यदि तावदुपनयनमध्यापनप्रयुक्तं स्यात्तदोपनयनद्वाराध्यापनस्याध्ययनप्रयो-

द्वारेणाध्यापनप्रयुक्तिर्दूरापास्ता। क्त्वाप्रत्ययेन हि समानकर्तृकत्वमेवोच्यते तेन चैकप्रयोगता कल्प्यते, अङ्गाङ्गिभावस्त्वेकप्रयोगतावशात् कल्पनीयः, द्वितीयया तु

---

जकत्वं स्यादपि न चैवमस्ति—उपनयनस्याध्यापनप्रयुक्तत्वाभावात्, किं वा यदि तावदध्ययनस्योपनयनप्रयुक्तत्वं स्यात्तदोपनयनद्वाराध्यापनप्रयुक्तत्वमपि स्यान्न चैवमस्ति—प्रत्युतोपनयस्यैवाध्ययनप्रयुक्तत्वादध्ययनार्थमेवोपनयनसंस्कारस्य क्रियमाणत्वादित्याह—उपनयनेति। अध्यापनेनोपनयनस्य प्रयुक्तेरभावात् अध्ययनस्योपनयनप्रयुक्तत्वाभावाद्वेत्यर्थः। तद्द्वारेण=उपनयनद्वारेण। अध्यापनप्रयुक्तिः=अध्यापनप्रयुक्तत्वम्। दूरापास्ता=न सम्भवतीत्यर्थः।

ननु "उपनीय तु यः शिष्यम्" इत्यत्र क्त्वाप्रत्ययेनोपनयनस्याध्यापनाङ्गत्वं प्रतीतमऽङ्गं च प्रधानप्रयुक्तमेव भवतीति कथं नोपनयनमध्यापनप्रयुक्तमित्याशङ्क्य—क्त्वाप्रत्ययेन समानकर्तृकत्वमात्रं बोध्यते न त्वङ्गाङ्गिभावोपि "वेदं कृत्वा वेदिं करोति" "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इत्यादौ क्त्वाप्रत्ययसत्त्वेप्यङ्गाङ्गिभावाभावादिति भावेनाह—क्त्वाप्रत्ययेनेति। समानकर्तृकत्वम्=येनाध्यापनं कर्तव्यं तेनैव वटुकस्योपनयनं कर्तव्यमित्येवमध्यापनोपनयनयोरेककर्तृकत्वमेव क्त्वाप्रत्ययेनोच्यते। तेन=समानकर्तृकत्वेन उपनयनाध्यापनयोरेकप्रयोगता कल्प्यते, एकप्रयोगता ह्येकमहाव्यापारतारूपा विज्ञेया तथा च यथा भुक्त्वा गन्तव्यमित्यत्र भोजनगमनयोरेकमहाव्यापारविषयत्वं यथा च "वेदं कृत्वा वेदिं करोति" इत्यत्र वेदवेदिकरणयोरेकमहाव्यापारविषयत्वं तथात्रापि गुरुणोपनयनमारभ्य वेदाध्यापनपर्यन्तं व्यापारः कर्तव्य इति तादृशैकमहाव्यापारविषयत्वादुपनयनाध्यापनयोरेक एव प्रयोग इत्येकप्रयोगतावशादङ्गाङ्गिभावः=उपनयनस्याङ्गत्वमध्यापनस्याङ्गित्वं च कल्पनीयम्, कल्पनीयत्वान्निर्बलमित्यपि ध्येयम्। अवान्तरव्यापाराणामनेकत्वेपि सर्वेषां फलस्यैकत्वेन व्यापारैकत्वं च ज्ञेयम्। न चाङ्गाङ्गिभावे वैपरीत्यमेव किं न स्यादिति वाच्यम्, अध्यापनस्य गुरुगतत्वेन प्रधानत्वादुपनयनस्य च वटुकगामित्वेनाप्रधानत्वादिति प्रभाकराभिप्रायः। तत्र समानकर्तृकत्वकल्पितैकप्रयोगतावशात् प्राप्ते उपनयनाध्यापनयोरङ्गाङ्गिभावे बाधकमाह—द्वितीयेति। "वसन्ते ब्राह्मणमुपनयीत" इत्यत्र ब्राह्मणमिति द्वितीययोपनयननिरूपितमङ्गित्वं ब्राह्मणवटुक-

साक्षादङ्गित्वमेवोच्यते, अतो यथा त्रिवृता यूपपरिव्याणं यूपार्थं नोपाकरणार्थम्, एवमुपनयनमपि माणवकसंस्कारार्थं नाध्यापनार्थम्। स्मृतिगतश्च क्त्वाप्रत्ययः, प्रत्यक्षवेदगता तु "वसन्ते ब्राह्मणम्" इति द्वितीया, अतोपि माणवकार्थत्वम्।

भवतु माणवकसंस्कारस्तद्द्वारेण त्वऽध्यापनाङ्गं नाध्ययनाङ्गमिति चेत्? मैवम्, अन्तरङ्गत्वादध्ययनस्य

---

स्यैव प्रतीयते तथा ब्राह्मणवटुकनिरूपितमेवोपनयनस्याङ्गत्वं प्रतीयत इत्युपनयनवटुकयोः श्रुत्याऽङ्गाङ्गिभावे प्रतिपादिते कथमुपनयनाध्यापनयोरङ्गाङ्गिभावः स्याच्छ्रुतिविरोधादिति भावः।

उक्तार्थं दृष्टान्तेनोपपादयन्नुपसंहरति–अत इति, "आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति" इति श्रुतिः, अत्र हि– "अत्र रशनायाः पश्वन्वयात् पशुबन्धनेन पशोरितस्ततोऽपक्रमणनिवारणरूपदृष्टार्थलाभाच्च पश्वर्था रशना–इति चेत्? मैवम्, "त्रिवृता" इति तृतीयया "यूपम्" इति द्वितीयया च शेषशेषिभावावगमादऽव्यवहितान्वयलाभाच्च रशना यूपार्था" इति माधवेनोक्तम्। तथा च यथा यूपस्य परिव्याणम्=रशनया वेष्टनं यूपार्थं न पशूपाकरणार्थं, परिव्याणस्य यूपेनैव साक्षात्सम्बन्धाद् यूपाङ्गत्वमेव तथा प्रकृतेपि द्वितीयाश्रुत्या वटुकसंस्कारार्थस्योपनयनस्य वटुकाङ्गत्वमेवयुक्तं नाध्यापनाङ्गत्वमित्यर्थः। स्वपक्षे प्राबल्यमाह–स्मृतिगतश्चेति। अतोपि=श्रुतिगतद्वितीयायाः प्राबल्यादपि, द्वितीयायाः श्रुतिगतत्वादपि वा। माणवकार्थत्वम्=माणवकाङ्गत्वम्। उपनयनस्येति शेषः।

ननु संस्कारार्थस्याप्युपनयनस्य फलवदङ्गत्वमेव युक्तं न निष्फलाङ्गत्वम्, अध्ययनं च निष्फलमेव तत्फलाश्रवणात्, अध्यापनं तु सफलम् "उपनीयाध्यापनेनाचार्यत्वं भावयेत्" इति स्मृत्यनुमितश्रुत्या फलावगमादिति माणवकसंस्कारार्थस्याप्युपनयनस्याध्यापनाङ्गत्वमेव युक्तमित्याशङ्कते–भवत्विति। तद्द्वारेण=माणवकद्वारेण उपनयनमध्यापनाङ्गमेव–अनुपनीतं प्रत्यध्यापनासम्भवादध्यापनप्रवर्तकत्वादुपनयनमध्यापनाङ्गमिति भावः। परिहरति–मैवमिति। उपनयनलक्षणः संस्कारो माणवकगत एवाऽध्ययनमपि माणवकगतमेवेति

तादर्थ्यमेव संस्कारस्य युक्तम् । अध्ययनमपि फलवद् ध्यापनमपि तयोः कस्यायं माणवकसंस्कारोऽङ्गं भवतु—इत्यपेक्षायामध्यापनस्य पुरुषान्तरगामित्वेन बहिरङ्गत्वात् माणवकगताध्ययनार्थत्वमेव युक्तम् । यथैव ह्यध्ययनस्याऽऽचार्यकसिद्धिप्रयोजनतामनादृत्य "वेदमधीत्य स्नायात्" इति स्मृतिं बाधित्वाऽन्तरङ्गत्वादर्थज्ञानार्थतैवाऽऽश्रीयते तथोपनयनस्याप्यध्ययनार्थता वेदितव्या ।

स्मरणादपि पाणिनीयादध्ययनाङ्गतैवोपनयनस्याव-

---

संस्कारस्य=उपनयनस्य तादर्थ्यम्=अध्ययनार्थत्वमेव युक्तमध्ययनस्यान्तरङ्गत्वात् । इदमेव चाध्ययनस्यान्तरङ्गत्वं यदुपनयनसमवायिवटुकगतत्वम् । नत्वध्यापनं वटुकगतं तस्याध्यापकगतत्वादिदमेव चाध्यापनस्य बहिरङ्गत्वत्वम् । एतदेव विशदयति—अध्ययनमपीत्यादिना । पुरुषान्तरगामित्वेन=अध्यापकगामित्वेन । अध्ययनफलं माणवकस्याऽऽध्यापनफलं त्वध्यापकस्य तत्र माणवकसंस्कारार्थस्योपनयनस्य माणवकलभ्यफलविशेषसम्पादकाध्ययनाङ्गत्वमेव युक्तमित्यर्थः । तयोः=अध्ययनाध्यापनयोर्मध्ये ।

ननु स्मृतितदनुमितश्रुतिभ्यां सिद्धमध्यापनाङ्गत्वं कथमन्तरङ्गत्वमात्रेण त्यज्यत इत्याशङ्क्य, आचार्यत्वसिद्ध्यऽर्थज्ञानयोर्मध्येऽन्तरङ्गत्वादध्ययनस्य प्रतिवादिनोर्थज्ञानार्थत्वा ऽऽश्रयणदृष्टान्तेन परिहरति—यथैवेति, यथाऽध्ययनस्याचार्यत्वसिद्धिरप्याचार्ये फलं वटौ चार्थज्ञानमपि फलं तत्राध्ययनस्या चार्यत्वसिद्धिप्रयोजनकत्वे "वेदमधीत्य स्नायात्" इति स्मृतिवचनमप्यनुकूलम्—यतोऽक्षरमात्राध्ययनेनाचार्यत्वमपि सिध्यति वाक्यार्थविचारेऽप्रवृत्त्या चोक्तं स्मार्तं स्नानमपि बाधितं न भविष्यति तथाप्युक्तस्नानं बाधित्वाप्यर्थज्ञानार्थत्वमेव त्वयाऽऽश्रीयते तत्कस्य हेतोः ? अर्थज्ञानस्य माणवकगतत्वेनान्तरङ्गत्वात् आचार्यत्वस्याध्यापकगतत्वेन बहिरङ्गत्वात्, एवमुपनयनस्याध्ययनमपि फलमध्यापनमपीत्यन्तरङ्गत्वादध्ययनमेव फलमित्युपनयनस्याध्ययनाङ्गत्वमेव युक्तं तदाह—तथेति ।

व्याकरणस्मृत्या संप्रत्युपनयनस्याध्ययनाङ्गत्वं व्यवस्थापयति—स्मर-

गम्यते । अध्ययनाङ्गतां हि स्मरन्नाचार्यकरणे नयतेरा-
त्मनेपदं विधत्ते, अध्यापनाङ्गत्वे हि कर्त्रऽभिप्रायत्वात्
क्रियाफलस्य ञित्वादेवात्मनेपदं सिध्येत् । "उपनीय तु
यः शिष्यम्" इति क्त्वाप्रत्ययो हि कथं चित् "दर्शपूर्ण

---

णादपीति । अयं भावः—धात्वर्थस्य फले कर्तृगामिनि सति स्वरितेतो ञित-
श्च धातोराऽऽत्मनेपदं भवति "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इति सू-
त्रेण । फले परगामिनि च "शेषात्कर्तरि परस्मैपदम्" इत्यनेन परस्मैपदं भ-
वति । "संमाननोत्संजनाऽऽचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः" इति
सूत्रेण चाऽऽचार्यत्वकरणे पुनर्निञ आत्मनेपदं विहितम् । तत्र "अष्टवर्षं ब्राह्म-
णमुपनयीत" इत्यादावुपनयीतेति निञ आत्मनेपदस्यरूपम्, उपनयनकर्ता च
गुरुः, यद्युपनयनफलं गुरुगामि स्यात्तदा "स्वरितञितः" इत्यनेनैव ञित्वा-
न्निञ आत्मनेपदं प्राप्तमेवास्तीति पुनः "संमाननोत्संजन" इत्यनेन निञ
आचार्यत्वकरणे आत्मनेपदविधानं व्यर्थमेवेति प्राप्तं ततश्च "संमानन" इति
सूत्रं बोधयति–उपनयनफलं माणवकस्यैवेति । तथा चोपनयनफलस्य परगा-
मित्वेन "शेषात्कर्तरि" इत्यनेन निञः परस्मैपदं प्राप्तं तस्य बाधनार्थं च भग-
वता पाणिनिना "संमानन" इत्यनेन निञ आत्मनेपदं विहितम् । उपनयन-
फलस्य माणवकगामित्वेप्याचार्यकरणे निञः आत्मनेपदं स्यादिति तस्यार्थः ।
माणवकगतं चोपनयनफलमध्ययनमेवेत्युपनयनस्याध्ययनाङ्गत्वं व्याकरणस्मृ-
त्यापि प्राप्तम् । तदाह–अध्ययनाङ्गतामिति । स्मरन्=बोधयन् । विधित्ते पा-
णिनिरिति शेषः । विपक्षे बाधकमाह–अध्यापनाङ्गत्वेति । यद्युपनयनमध्यापनाङ्गं
स्यात्तदोपनयनफलमध्यापनमेव स्यात् तच्चोपनयनकर्तृभूतगुरुगतमेवेति फलस्य
कर्तृगामित्वेन "स्वरितञितः" इत्यनेनैवात्मनेपदं स्यादेवेति संमाननेति सूत्रं
व्यर्थं स्यादित्यर्थः । प्रभाकरमते क्रियाफलस्य=उपनयनफलस्याध्यापनस्य
कर्त्रभिप्रायत्वात्=कर्तृगामित्वात् ( गुरुगामित्वात् ) ।

ननूपनयनाध्यापनयोरङ्गाङ्गिभावाभावे "उपनीयतु यः शिष्यं वेदमध्याप-
येद्द्विजः" इत्यत्र क्त्वाप्रत्ययस्य का गतिः स्यात् ? उपनीयेति क्त्वाप्रत्ययेनो-
पनयनाध्यापनयोरङ्गाङ्गिभावस्य बोधनात् किं चोभयोरेवस्मृतित्वाद्विनिगमना-
विरह–इत्याशङ्क्याह–उपनीयेति । यथा "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत"

**मासाभ्यामिष्ट्वा" इतिवदसत्यप्यङ्गाङ्गिभावेऽवकल्पते पुनर्विधानं चात्मनेपदस्यात्यन्तानर्थकम्, तस्मादध्ययनाङ्गमुपनयनं स्यात् ।**

**न तु स्यात्, तज्जन्यः संस्कारो हि माणवकसमवायी । सत्यम्, माणवकसमवेतोपि न तदर्थः, कर्त्र-**

---

इत्यत्र "इष्ट्वा" इति क्त्वाप्रत्ययेन न दर्शपूर्णमासयोः सोमयागस्य चाङ्गाङ्गिभावो बोध्यते किं तु पूर्वापरकालिकत्वमात्रं बोध्यते—सोमं चिकीर्षुर्दर्शपूर्णमासौ कृत्वा तदनन्तरं सोमयागं कुर्यादिति, तथा "उपनीय तु यः शिष्यम्" इत्यत्राप्यध्यापनचिकीर्षावानुपनयनं कृत्वा तदऽनन्तरमध्यापयेदिति पूर्वापरकालिकत्वमात्रं क्त्वाप्रत्ययेन बोध्यते न त्वङ्गाङ्गिभावोपीत्यर्थः । अवकल्पते=समर्थितः=चरितार्थो भवति । संमाननोत्सञ्जनेत्यादिनाऽऽत्मनेपदविधानं तूपनयनस्याध्यापनाङ्गत्वे सर्वथाऽनर्थकमेव स्यात् ञित्वात् "स्वरितञितः" इत्यनेनैवात्मनेपदस्य प्राप्तत्वात् । माणवकसंस्कारपक्षे तूपनयनफलस्य माणवकगामित्वेन परगामित्वात् परस्मैपदं प्राप्तं तद्बाधनार्थं संमाननेत्यादिना पुनरात्मनेपदविधानं सार्थकम् । तदुपसंहरति—तस्मादिति, पुनर्विधानवैयर्थ्यप्रसङ्गात् । वटुकसंस्कारभूतमुपनयनमध्ययनस्यैवाङ्गमिति सिद्धान्तः ।

ननूपनयनस्याध्यापनाङ्गत्वेपि संमाननेति पुनरात्मनेपदविधानमनर्थकं न भवति—उपनयनफलभूतसंस्कारस्य वटुकगामित्वेन परगामित्वात् प्राप्तपरस्मैपदस्य बाधनार्थं भवदुक्तरीत्यैव सार्थत्वादिति शङ्कते—न तु स्यादिति । संमाननेत्यात्मनेपदविधानमनर्थकं न भवतीत्यर्थः । तज्जन्यः=उपनयनजन्यः । संस्कारः=उपनयनफलभूतः संस्कारः । हि=यतः । माणवकसमवायी=माणवकगामित्वात् परगामी, परगामित्वात् परस्मैपदं प्राप्तं तद्बाधनार्थं संमाननेति पुनर्विधानमिति शेषः, तथा चाध्यापनाङ्गमेवोपनयनमिति प्राप्तम् । अर्धमभ्युपगम्य पराचष्टे—सत्यमिति । उपनयनजन्यः संस्कारो माणवकसमवायीति सत्यमुक्तं किं तु स संस्कारो माणवकसमवेतोपि न स्वरूपेण माणवकार्थः स्यात् किं तूपनयनस्याध्यापनाङ्गत्वपक्षे ऽध्यापकार्थ एव स्यादिति पुनरात्मनेपदविधानमनर्थकमेव स्यादिति भावः । तदुक्तम्—"अध्यापनाङ्गमुपनयनमिति पक्षे माणवकसमवेतोपि संस्कार उपनयनकर्तृभूताचार्यार्थ एव, आचार्यत्वरूपफलभागि-

**र्थत्वं च फलस्य कर्त्रेऽभिप्रायत्वं न तु तत्समवायः. अन्यथा हि "अग्नीनादधीत" इत्यात्मनेपदं न स्यात्–**

---

त्वेनाचार्यः प्रधानं "फलं च पुरुषार्थत्वात्" इति फलस्यापि पुरुषशेषत्वस्य वक्ष्यमाणत्वात् तदर्थस्य (आचार्यत्वार्थस्य) अध्यापनस्य निर्वर्तकं यदध्ययनं तत्कर्तृसंस्कारोपि स्वाश्रयमाणवकनिष्पाद्याध्ययनाधीनाध्यापनजन्याचार्यत्वरूपफलशाल्याचार्यरूपकर्तृशेष एव कर्तृशेषत्वमेव क्रियाफलस्य कर्तृगामित्वं तच्छेषत्वं च तदभिलषितफलोद्देशप्रवृत्तकृतिव्याप्यत्वं तच्च माणवकसमवेतस्यापि संस्कारस्य संभवतीति "स्वरितञितः" इत्येवात्मनेपदसिद्धेः पुनरात्मनेपदविधानं प्रभाकरमतेऽनर्थकमापद्यते" इति, तस्मादध्ययनाङ्गत्वमेवोपनयनस्य युक्तं प्राप्तं च, नाध्यापनाङ्गत्वमित्यर्थः ।

ननु फलं यत्समवेतं भवति तदर्थमेव भवति यथात्मसमवेतं सुखमात्मार्थं तथा चोपनयनफलस्य संस्कारस्य माणवकसमवेतत्वेन माणवकार्थत्वमेव युक्तं न त्वध्यापकार्थत्वं तथा चोपनयनफलस्य संस्कारस्योपनयनकर्तृगुरुभिन्नगामित्वेन सार्थकं पुनरात्मनेपदविधानमिति नाध्ययनाङ्गमुपनयनं किं त्वध्यापनाङ्गमेवेत्याशङ्क्य समाधत्ते–कर्त्रर्थत्वमित्यादिना । फलं यत्समवेतं भवति तदर्थमेव भवतीति व्याप्तिर्नास्ति यतश्छेदनफलं द्वैधीभावः काष्ठसमवेतोपि न काष्ठार्थो भवति किं तु पाकाद्यर्थ एव तथा माणवकसमवेतोपि संस्कारस्तव पक्षेऽध्यापकार्थ एव स्यात्तस्यैव प्रधानत्वात् तथा चोपनयनफलस्योपनयनकर्तृगामित्वेन पुनरात्मनेपदविधानमनर्थकमेवस्यादित्यर्थः । तस्मात्–"स्वरितञितः" इत्यत्र यत् कर्त्रर्थत्वमुक्तं तन्न कर्तरि समवायरूपं किं तु कर्तृगामित्वम्=कर्त्रेऽभिप्रायविषयत्वमेव । अन्यथोक्तकर्त्रर्थत्वस्य कर्तरि समवायरूपत्वे "स्वरितञितः" इत्यनेनात्मनेपदं तत्रैव स्याद् यत्र क्रियाफलं कर्तरि समवेतं स्यात्, तथा चाऽऽधानफलस्याऽऽहवनीयत्वादेरग्निसमवेतत्वेन कर्तरि यजमाने समवायाभावात् "अग्नीनादधीत" इत्यत्रात्मनेपदं न स्यादेव तस्मात् कर्त्रभिप्रायत्वमेव कर्त्रर्थत्वं न तु कर्तृसमवेतत्वम्, तथा चाऽऽधानफलस्याहवनीयादेर्यजमानाभिप्रायविषयत्वेन "आदधीत" इत्यात्मनेपदं युक्तं तदुक्तं माधवेन षष्ठाध्यायषष्ठपादे–"आदधीतेत्यात्मनेपदमाधानफलस्य कर्तृगामितां दर्शयति तत्फलं चाग्नीनां कर्मयोग्यता" इति । तत्समवायः=कर्तृसमवायः । अन्यथा=कर्त्रर्थ-

आधानफलस्याऽऽहवनीयत्वादेरग्निसमवेतत्वेन कर्तृसमवायाऽभावात् । इयं च स्मृतिः–"उपनीय तु यः शिष्यम्" इति, अतो बलीयसी द्वितीयाश्रुतिः, तस्मान्नाध्यापनाङ्गमुपनयनमिति– न तद्द्वारेणाध्यापनस्य प्रयुक्तिः ।

यच्च 'उपनीतस्य व्यापारापेक्षायामुपनयनं प्रक्रम्य विहितमध्ययनं तद्व्यापारत्वेनाध्यवसीयते' इति, तदप्यऽबुद्धिपूर्वकम्–एवं हि वदताऽध्यापनाङ्गमध्ययनमि-

---

त्वस्य कर्तृसमवायरूपत्वे । न स्यादित्यत्र हेतुमाह–आधानेति । अनेन च कर्त्रभिप्रायत्वमेव कर्त्रर्थत्वं न तु कर्तृसमवाय इति सिद्धं तथा च माणवकसमवेतस्यापि संस्कारस्याध्यापकार्थत्वमेव तव मते युक्तं तस्यैव प्रधानत्वात् तस्मादुपनयनफलस्य माणवकसमवेतस्यापि संस्कारस्योपनयनकर्त्रऽध्यापकाभिप्रायविषयत्वेन "स्वरितञितः" इत्यनेनैव निञ आत्मनेपदे प्राप्ते पुनरात्मनेपदविधानमनर्थकमेव स्यात्, तस्मादध्ययनाङ्गमेवोपनयनम्, उपनयनफलस्याध्ययनस्य परगामित्वेन परस्मैपदे प्राप्ते तद्बाधनार्थं सार्थकं पुनरात्मनेपदविधानमिति प्रघट्टकार्थः ।

प्रभाकरमतापेक्षया स्वमते प्रदर्शितमेव विशेषं स्मारयति—इयं चेति । अतः=स्मृतितः । द्वितीयाश्रुतिः="अष्टवर्षं ब्राह्मणमुपनयीत" इत्यत्र । स्मृत्यपेक्षया श्रुतेः प्राबल्यं स्पष्टमेव श्रुतेरपौरुषेयत्वात् स्मृतिमूलत्वाच्च । श्रुतेः प्राबल्यात् स्मृतिप्राप्तमुपनयनस्याध्यापनाङ्गत्वं बाधितं भवतीति भावः । उपसंहरति–तस्मान्नेति । तद्द्वारेण=उपनयनद्वारेणाध्यापनप्रयुक्तत्वमध्ययने नास्ति । अध्यापनस्येति निरूपितत्वं षष्ठ्यर्थः–अध्ययनविषयाऽध्यापननिरूपिता प्रयुक्तिर्नास्तीत्यर्थः । अत्र च 'अध्यापनप्रयुक्तिः' इति पाठः साधुः स्यात् । किं वा प्रयुक्तिरित्यस्य प्रयोजकत्वमित्यर्थः ।

यत्तु पूर्वपक्षिणा–"तदुपनेयोपि नाऽकिंचित्करोऽङ्गमिति तद्व्यापारापेक्षायामुपनयनं प्रक्रम्य विहितमध्ययनमध्यापनोपकारित्वादुपनीतस्य व्यापारत्वेनाध्यवसीयते" इत्युक्तं तत् यच्चेत्यादिनोत्थाप्य पराकुरुते तदपीति । एतदेवोपपादयति–एवं हीत्यादिना । अयं भावस्तवमते माणवकोऽध्यापनार्थमेवोपनीत

त्युपपादितं भवति, यदा ह्यध्यापनार्थत्वेनोपनीतस्य माणवकस्य तदुपयोगिव्यापारापेक्षायामध्ययनविधिरध्ययनं तदुपयोगिव्यापारतया विधत्ते-त्रैवर्णिकैरुपनीतैरध्यापनौपयिकव्यापारापेक्षैरध्ययनव्यापारः कर्तव्य इति तदापि स्पष्टमेवाध्यापनशेषोऽध्ययनमिति दूरनिरस्तमर्थज्ञानार्थत्वमिति सुनिरूपितो वाक्यार्थः।

अथाऽध्ययनविधिरध्ययनमर्थज्ञानार्थतया विधत्ते नाध्यापनौपयिकतया, तदाऽऽस्थ-अध्ययनस्य तदौपयि-

---

उपनीतस्य च योयमध्ययनलक्षणो व्यापारस्तस्याध्यापनसिद्ध्यर्थत्वेन स्पष्टमेवाध्ययनस्याध्यापनाङ्गत्वं प्राप्तम्। तदुपयोगि=अध्यापनोपयोगि। पूर्वपक्षानुसारेण परिनिष्पन्नं विधिवाक्यार्थमाह-त्रैवर्णिकैरिति। एवमध्ययनस्य स्वाभिप्रेतमप्यर्थज्ञानार्थत्वं स्वयमेव त्वया भ्रंशितमिति वक्रोक्त्योपालभते-सुनिरूपित इति। स्पष्टमन्यत्।

यद्यपि सिद्धान्तेऽप्युपनयनं प्रक्रम्य विहितमध्ययनमुपनीतव्यापार एव तथापि तस्याध्यापनविधिप्रयुक्तत्वाभावादध्ययनविधिप्रयुक्तत्वाच्चार्थज्ञानार्थत्वमेव नाध्यापनाङ्गत्वम्। पूर्वपक्षे त्वध्ययनस्याध्यापनाङ्गत्वादर्थज्ञानार्थत्वं न स्यात्, अर्थज्ञानार्थत्वाभावे च विचारशास्त्रारम्भो बाधितः स्यात्, न चेदमिष्टं प्रभाकरस्यापीति नाध्ययनमध्यापनविधिप्रयुक्तमिति भावः। अबुद्धिपूर्वकम्=विचारशास्त्रारम्भबाधप्रसञ्जकाज्ञानमूलम्। एवं हि वदता="उपनीतस्य" इत्यादिवदता।

नन्वध्यापनविधिरध्यापनसिद्ध्यर्थमुपनीतव्यापारत्वेनाध्ययनं विधत्ते इति नोच्यते येनाध्ययनस्यार्थज्ञानार्थत्वं न स्यात्, किं त्वध्ययनविधिरर्थज्ञानार्थमेव विधत्ते, अर्थज्ञानार्थमध्ययनविधिना विधीयमानस्याप्यध्ययनस्य यदनुष्ठानं तदऽध्यापनौपयिकव्यापारत्वेनाध्यापनविधिप्रयुक्तमेवेत्युच्यते इत्याशङ्क्याह-अथेति। प्रभाकराभिप्रायं परिहर्तुमुपक्रमते-तदेति। यद्यध्ययनविधिरध्ययनमर्थज्ञानार्थतया=अर्थज्ञानार्थं विधत्ते नाध्यापनौपयिकतया=अध्यापनसाधनत्वेन तदाऽऽस्थ=कथय अध्ययनस्य तदौपयिकत्वम्=अध्यापनौपयिकत्वं केन प्रमाणेन गम्यते=ज्ञायते, त्वयेति शेष इत्यन्वयः। उक्तार्थे सामान्यतः प्र-

कत्वं केन प्रमाणेन गम्यते ? न ह्यत्र प्रत्यक्षादीनि क्रमन्ते । संनिधानादिति चेत् ? न संनिधानं नाम स्वयं प्रमाणं शब्दस्य त्वर्थं प्रतिपादयतः संनिध्यपेक्षायोग्यत्वानीतिकर्तव्यता नेत्रस्येवोन्मीलनम् । शब्दश्चेदध्यापनौपयिकतयाऽध्ययनं विदध्यात् नार्थज्ञानार्थता सिध्येत्, अर्थज्ञानार्थतया विधानेऽध्यापनौपयिकता न सिध्येत् । अतो नोपनयनसंनिधौ "स्वाध्यायोऽध्येतव्यः" इति विहितस्याध्ययनस्योपनयनद्वाराऽध्यापनविधिना प्रयुक्तिसंभवः ।

---

माणाभावमाह—नहीति । अत्र=अध्ययनस्याध्यापनौपयिकत्वे । अध्ययनस्याध्यापनौपयिकत्वमध्ययनविधिनैव प्राप्तं स्यादपि तस्यैव तत्र सामर्थ्यात् स तु नाध्ययनमध्यापनौपयिकतया विधत्ते प्रत्यक्षादीनां च न तत्र सामर्थ्यमित्यर्थः।

ननु यथा भोजनाङ्गशाकप्रकरणपठितस्य जीरकादेः संनिधानात्=संनिधिवशाद् भोजनाङ्गत्वं प्रतीयते तथा ऽत्रापि संनिधानादेवाध्ययनस्याऽध्यापनौपयिकत्वम्=अध्यापनाङ्गत्वं प्रतीयते, संनिधिश्चाध्यापनाङ्गोपनयनप्रकरणपठितत्वमेव, अध्ययनविधेरुपनयनप्रकरणे पठितत्वात् । उपनयनमध्यापनाङ्गमिति तत्प्रकरणपठितमध्ययनमप्यध्यापनाङ्गमिति । किं वा "अध्यापयीत" इत्यत्राध्यापनं तु णिजर्थो धात्वर्थस्त्वध्ययनमेवेत्येकपदोपात्तत्वेन संनिधिस्तत्र च प्रत्ययार्थाध्यापनस्य प्रधानत्वाद् धात्वर्थस्याध्ययनस्य तदङ्गत्वमित्याशङ्का पराचष्टे—न संनिधानमिति । अपेक्षा=आकाङ्क्षा । यथा हि नेत्रोन्मीलनं विना चाक्षुषं प्रत्यक्षं न भवतीति चाक्षुषप्रत्यक्षस्य नेत्रोन्मीलनमितिकर्तव्यता न प्रमाणान्तरं तथा शाब्दबोधस्य संनिध्यपेक्षायोग्यत्वानीतिकर्तव्यताभूतानि न पृथक्प्रमाणानि येन संनिधानेनाध्ययनस्याध्यापनाङ्गता स्यात् । "परस्परविरोधे हि न प्रकारान्तरस्थितिः" इति न्यायानुरोधेनोभयतःपाशारज्जुमाह—शब्दश्चेदिति । शब्दः=अध्ययनविधिः ।

वस्तुतस्तु संनिधानशब्दस्य श्रुतिलिङ्गादिगतस्थानप्रमाणे तात्पर्यम् । स्थानं च द्विविधं पाठसादेश्यमनुष्ठानसादेश्यं च, पाठसादेश्यमपि द्विविधं यथासंख्यपाठो यथासंनिधिपाठश्च, यथासंनिधिपाठस्योदाहरणमुक्तं लौगा-

**यदि परमध्यापनस्याध्ययनमन्तरेणासंभवात् पदार्थस्वभावेनाध्ययनमाक्षिप्यते ? तथा सत्यविहितेन लौकिकेनाध्ययनेन तत्संभवान्न विहितस्याध्ययनस्य नियो-**

---

क्षिभास्करेण—"वैकृताङ्गानुवादेन विहितानां सन्दंशपतितानां विकृत्यर्थत्वं सन्निधिपाठाद् यथाऽऽमनहोमानाम्" इति । तथात्रापि अध्यापनविधायकश्रुतेः स्मृत्यानुमीयमानत्वेन साक्षादध्यापनसांनिध्याभावेऽप्युपनयनद्वारा चाध्यापनसांनिध्यादध्ययनमध्यापनाङ्गमिति, इदमपि न युक्तम्—स्थानस्योक्तरीत्या प्रमाणत्वाभावत्, उपनयनस्य वटुकसंस्कारार्थत्वेनाध्यापनाङ्गत्वासम्भवाच्च । एकपदोपातत्वरूपसांनिध्ये च यथा यजेतेत्यत्र प्रत्ययार्थसंख्याया एव धात्वर्थयागाङ्गत्वं तथा प्रत्ययार्थाध्यापनस्यैव प्रत्युत धात्वर्थाध्ययनाङ्गत्वं स्यात् । तदुक्तम्—"यजेतेत्याख्याताभिहितसंख्याया आर्थभावनाङ्गत्वं समानाभिधानश्रुतेः, एकपदश्रुत्या च यागाङ्गत्वम्" इति । उपसंहरति—अत इति । प्रयुक्तिसंभवः=प्रयुक्तत्वसंभवः ।

नन्वध्ययनस्याध्यापनाङ्गत्वेऽर्थापत्तिरेव प्रमाणमस्ति तथा हि—अध्यापनं परकर्तृकाध्ययनं विना न सम्भवतीत्यध्यापनसिद्ध्यर्थमध्ययनमाक्षिप्यते=कल्प्यते, अध्यापनसिद्ध्यर्थं च कल्प्यमानमध्ययनमर्थादध्यापनाङ्गमेव स्यात्, यथा भोजनं विना पीनत्वं न सम्भवतीति पीनत्वसिद्ध्यर्थं कल्प्यमानं रात्रिभोजनं पीनत्वाङ्गमेवेत्याशङ्कते—यदीति । पदार्थस्वभावेन=अध्यापनस्वभावेन—अध्ययनं विनाध्यापनं न सम्भवतीत्याकारेणेत्यर्थः । परिहरति—तथा सतीति । यद्यध्यापनसिद्ध्यर्थमेवाध्ययनं कल्प्यते तदा लौकिकेन=न्यायव्याकरणादिकर्मकेनाप्यध्ययनेन तत्सम्भवात्=अध्यापनसिद्धिसम्भवात्, विहितस्य=वेदाध्ययनस्य नियोगतो न तत्प्रयुक्तिः—तत्=तेनाध्यापनेन प्रयुक्तिः=प्रयुक्तत्वम्, भावे क्तिन् । नियोगतः=नियोगसिद्ध्यर्थं अपूर्वसिद्ध्यर्थमित्यर्थः, अध्ययनस्याध्यापनाङ्गत्वेऽर्थज्ञानार्थत्वाभावेनाऽपूर्वमेव फलं कल्प्यं स्यादिति नियोगत इत्युक्तम् । वस्तुतस्तु नियोगत इत्यस्य सङ्केतमात्रेणेत्यर्थः, ग्रन्थकृतैव ।

"नियोगात् परतो वापि शब्देन व्यज्यतामियम्"

इतिवार्तिकस्थनियोगशब्दस्य सङ्केतपरत्वव्याख्यानात् तथा हि—"स्मार्यत्व-

**गतस्तत्प्रयुक्तिः। न च प्रयुक्तिलाघवादपि विहितोपजीवनम्। तदुपजीवनेपि प्रयुक्त्यनवलोपात्। विहितमप्यध्ययनमध्यापनविधिनैव त्वन्मते प्रयुज्यते न स्वविधिना। तस्माल्लौकिकमेवाध्ययनमुपनीतानामध्यापनविधिराक्षिपेत्। विधिविहितमध्ययनं परप्रयुक्त्यऽभावादधिकारं प्रकल्पयेत्।**

---

शक्तिरर्थस्य प्रागपि विद्यमानैव नियोगेन=समयेन व्यज्यते। नियोगशब्देन प्रयोगवाचिना तत्कारणं समयो लक्ष्यते" इति, समयश्च सङ्केत एव। विहितस्याध्ययनस्याध्यापनप्रयुक्तत्वं प्रभाकरसङ्केतेन न सम्भवतीति प्रघट्टकार्थः।

नन्वऽविहितस्य लौकिकाध्ययनस्य विध्यन्तरेणासिद्धत्वादध्यापनविधिना तदाश्रयणे अध्यापनविधेरेव तत्प्रयोजकत्वेन गौरवं स्यात्, अध्ययनविधिसिद्धस्य त्वध्ययनस्याश्रयणेऽध्यापनविधेस्तत्प्रयोजकत्वं न भवति किं त्वध्ययनविधिसिद्धस्यैवाध्ययनस्य स्वविषयाध्यापनसिद्ध्यर्थमाक्षेपकत्वमात्रमिति प्रयुक्तिलाघवमित्याशङ्क्याह—न चेति। विहितोपजीवनम्=विहितस्याध्ययनस्याश्रयणम्। तदुक्तम्—"नन्वध्यापनविधिः स्वविषयाध्यापननिर्वाहाय नियोज्यव्यापारमध्ययनमुदीक्षमाणो विहितमेवाध्ययनमध्यापनोपयोगित्वेन स्वीकरोति तदनुष्ठानस्य विध्यन्तरसिद्धत्वेनाध्यापनविधेः स्वविषयानुष्ठानमात्रप्रयोजकत्वेन लाघवात्, नाविहितमध्ययनम्, तदनुष्ठानस्य विध्यन्तरासिद्धत्वेनाध्यापनविधेरेव तत्प्रयोजकत्वे गौरवादित्याशङ्क्य प्रभाकरमतेऽध्ययनस्य स्वविधिप्रयुक्तत्वानङ्गीकारेण प्रयुक्तिगौरवं पक्षद्वयेपि तुल्यमित्याह—न चेति" इति।

न चेत्यनेनोक्ते परिहारे हेतुमाह—तदुपजीवनेपीति, तत्=तस्याध्ययनविधिविहितस्याध्ययनस्योपजीवनेपि=आश्रयणेपि। स्वविषयस्याध्यापनस्य सिद्ध्यर्थं विहिताध्ययनस्याश्रयणमात्रेपि कृते तव मतेऽध्ययनस्याध्यापनविधिप्रयुक्तत्वात् प्रयुक्तेर्लोपः=अभावो न सम्भवतीति कथं प्रयुक्तिलाघवं स्यादित्यर्थः। एतदेवाह—विहितमिति। न स्वविधिनेति—अध्ययनविधौ नियोज्याश्रवणेन तव मते तस्याध्ययनप्रयोजकत्वाभावात् नियोज्याध्याहारस्य त्वयाऽनभ्युपगमादित्यर्थः। उपसंहरति—तस्मादिति, अध्यापनविधिना विहिताध्ययनाश्रयणासम्भवात्। विधिविहितम्=स्वविधिविहितम्। परप्रयुक्त्यभावात्=अ[illegible]-

**किं च यद्युपनयनमध्यापनाङ्गं ततोऽध्ययनविधिरर्थज्ञानार्थः सन्नाध्यापनार्थतयोपनीतैस्त्रैवर्णिकैः संबध्येत, येऽध्यापनार्थतयोपनीतास्त्रैवर्णिकाः तदुपयोगिव्यापारमपेक्षन्ते तेऽर्थज्ञानार्थमधीयीरन्—इत्यसंबद्धमेव स्यात्। ततश्चोपनीतैरसंबध्यमानोऽध्ययनविधिश्चतुर्णामपि वर्णानां स्यादिति शूद्राधिकारप्रसङ्गः। तस्मादुपनीतानां प्रयोजनापेक्षिणामध्ययनकरणिकाऽर्थज्ञान-**

---

धिप्रयुक्तत्वाभावात्। अधिकारम्=नियोज्यविशेषणीभूतम्। प्रकल्पयेत्=प्रकल्पयति–'अर्थज्ञानकामैरुपनीतैरध्ययनं कर्तव्यम्'इति। तथा च नाध्यापनाङ्गमध्ययनमिति सिद्धम्।

किं च यद्युपनयनमध्यापनाङ्गमेव नाध्ययनाङ्गं तदाऽध्यापनोपयोगिव्यापारापेक्षिभिरुपनीतैरेवाध्ययनं न सम्बध्येत किं त्वध्यापनोपयोगिव्यापारपेक्षिमात्रेण सम्बध्येत, अध्यापनोपयोगिव्यापारापेक्षी तु शूद्रोऽपि सम्भवति शूद्रस्याप्यर्थज्ञानार्थमध्ययने प्रवृत्तिसंभवात् त्वयाध्ययनस्यार्थज्ञानार्थत्वस्वीकृतत्वाच्च शूद्रकर्तृकाध्ययनेनाध्यापनासिद्धेरपि संभवादिति विहिताध्ययने शूद्रस्याप्यधिकारः स्यादिति यदुक्तम्–"उपनयनं तु क्त्वाप्रत्ययात्तस्यैवाङ्गम्" इति तत्र दोषान्तरमुद्घाटयति–किं चेति। यद्युपनयनं नाध्ययनाङ्गं किं त्वध्यापनाङ्गं तदाऽर्थज्ञानार्थोयमध्ययनविधिर्नाध्यापनार्थतयोपनीतेन त्रैवर्णिकमात्रेण सम्बध्येत किं तु शूद्रेणापि सम्बध्येत। त्रैवर्णिकमात्रेणैव सम्बन्धे हि–'येऽध्यापनार्थतयोपनीतास्त्रैवर्णिका अध्यापनोपयोगिव्यापारमपेक्षन्ते तेऽर्थज्ञानार्थमधीयीरन्' इत्यसम्बद्ध एव वाक्यार्थः स्यात्–यतोऽध्यापनार्थतयोपनीता अध्यापनोपयोगिव्यापारापेक्षिणो नार्थज्ञानार्थमध्येष्यन्ते किं त्वध्यापनसिद्ध्यर्थमेव। अध्यापनसिद्धिस्तु नोपनीतमात्राध्ययनेनैव भवति किं तु शूद्रकर्तृकाध्ययनेनापि सम्भवतीत्याह–ततश्चेति, ततश्चोपनीतैरसम्बध्यमानोऽध्ययनविधिश्चतुर्णामपि वर्णानां स्यादिति विहितवेदाध्ययने शूद्रस्याप्यधिकारः प्रसक्त इति भावः। नैतद् युक्तमित्याह–तस्मादिति। प्रयोजनापेक्षिणाम्=अस्माभिरुपनीतैः किं कर्तव्यमित्युपनयनप्रयोजनापेक्षिणाम्। अर्थज्ञानभावनायां चाध्ययनमेव करणम्–उपनीतस्त्रैवर्णिकोऽध्ययनेनार्थज्ञानं सम्पादयेदिति। उपसंहरति–इत्यध्य-

भावना विधीयते इत्यध्ययनाङ्गमेवोपनयनम्, स्वविधि-
प्रयुक्तं चाध्ययनम् । प्रपञ्चेनायं पक्षो न्यायरत्नमाला-

---

यनाङ्गमिति । उपनयनस्याध्ययनाङ्गत्वे उपनीतैरेवाध्ययनं कर्तव्यमिति लाभात् नाध्ययने शूद्राधिकारप्रसङ्गः शूद्रस्योपनयनाभावादिति भावः । उपनयनस्याध्यापनाङ्गत्वाभावान्नोपनयनद्वाराध्यापनविधिप्रयुक्तमध्ययनमित्याह—स्वविधिप्रयुक्तमिति । अध्ययनं स्वविधिप्रयुक्तमित्यर्थज्ञानार्थमेव, न चाध्यापनसिद्ध्यर्थमध्यापनविधिप्रयुक्तत्वाभावादिति भावः । उक्तपक्षस्य स्वनिर्मितन्यायरत्नमालायां विस्तरेण पराकृतत्वं सूचयति—प्रपञ्चेनेति । अयं पक्षः=अध्ययनस्याध्यापनविधिप्रयुक्तत्वपक्षः । तदुक्तं तत्र—

"अत्राभिधीयते—नायं विचार उपपद्यते ।
अध्यापनप्रयुक्ते हि स्वाध्यायाध्ययने सति- ॥
विचारो युज्यते कर्तुम्, न तत्तेन प्रयुज्यते ।
स्वकीयेनैव विधिना प्रयोक्तुं शक्यते यतः ॥
नियोज्याभावतो यत्तु प्रयोक्तृत्वनिवारणम् ।
(अध्यापनविधिवाक्येपि) अध्यापनेपि तत्तुल्यं न हि तत्राप्यसौ श्रुतः ॥ (असौ नियोज्यः)
अथाचार्यककामस्य नियोज्यत्वं प्रकल्प्यते ।
(नियोज्यत्वमिति शेषः) ज्ञानकामस्य किं नैवमन्यत्रापि प्रकल्प्यते ॥ (अन्यत्रअध्ययनवाक्ये)
अथाऽनियोगजन्यत्वान्नियोज्यस्य विशेषणम् ।
न युक्तमर्थविज्ञानम् ? तुल्यमाचार्यकेपि तत् ॥ (तत्-अध्यापनविधावाचार्यत्वस्यापि नियोज्यविशेषणत्वं न स्यात्)
अप्रयोजकता तुल्या नियोज्याभावतो द्वयोः । (द्वयोरध्ययनाध्यापनवाक्ययोः)
अधिकारात् प्रयोक्तृत्वं समानमुभयोरपि ॥
विचारस्य प्रयुक्तिश्च नाचार्यकविधानतः ।
स्वेनैव त्वधिकारेण तद्वदध्ययनस्य सा ॥
तद्वदध्ययनस्यापि तत एव प्रयुक्तितः ।
नाध्यापनविधानेन प्रयुक्तिरुपपद्यते ॥" इत्यादि ।

अन्यत्राप्युक्तम्—"नियोज्याभावादध्ययनविधेरध्ययनाप्रयोजकत्वमिति यत् तदध्यापनविधावपि तुल्यं तथा हि—"अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत"
"उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः ।

**यामेव निरस्त इत्युपरम्यते । तस्मात् पूर्वोक्त एव विचारः–किमदृष्टार्थमध्ययनम्, उताऽक्षरग्रहणादिपरम्परयाऽर्थज्ञानार्थमिति ।**

**अथ वा नात्र किं चिद्विचार्यते नावमिकन्यायेनैवाध्ययनस्याक्षरसंस्कारादिपरम्परयाऽर्थज्ञानार्थत्वसिद्धेः । नवमे हि–साम्नामृगक्षराभिव्यक्तिद्वारेण स्तुत्युपयोगि-**

---

सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥"

इत्यत्र न कं चिन्नियोज्यं शृणुमः, न चाध्यापनाध्ययनविध्योरविशिष्टे नियोज्याश्रवणे कस्य चिदेव प्रयोजकत्वं नेतरस्य (अध्ययनविधेः) इत्यत्र नियामकमस्ति ? । न चाध्यापनविधावाचार्यत्वकामो नियोज्यः कल्प्यते नाध्ययनविधावर्थज्ञानकाम इति विनिगमकं पश्यामः ।" इत्यादिकम् ।

यश्च पूर्वपक्षिणा–"किमाचार्यकसिद्धिरेवाध्ययनस्य प्रयोजनमुतार्थज्ञानम्" इत्येवं संशयपक्षः प्रतिपादितस्तस्याप्यनङ्गीकारमाह–तस्मादिति, प्रभाकरपक्षस्य सर्वात्मना पराहतत्वात्, अध्ययनस्य स्वविधिप्रयुक्तत्वाच्च 'अध्ययनं किमदृष्टार्थं किं वार्थज्ञानार्थम्' इत्येवमेव संशय्य विचारः कर्तव्यो न प्रभाकरकल्पितप्रकारेणेत्यर्थः । उक्तमेव संशयपक्षं स्मारयति–किमदृष्टार्थमिति ।

किं च नवमाध्याये साम्नां दृष्टप्रयोजनार्थत्वं प्रतिपादितं तेनैव न्यायेनाध्ययनस्याप्यर्थज्ञानलक्षणदृष्टप्रयोजनार्थत्वं प्राप्तमेवास्ति तेन न्यायेन दृष्टे फले संभवत्यऽदृष्टफलकल्पनायाः प्रत्याख्यानादिति नात्राध्ययनफलविचारापेक्षास्ति किं तु शास्त्रारम्भप्रयोजनप्रदर्शनाय नावमिकसिद्ध एवार्थोऽत्रानूद्यते, यतः–यद्यध्ययनं दृष्टफलं न स्यात्तदा विचारशास्त्रारम्भस्य बाध एव स्यात्, यदा ह्यध्ययनमऽर्थज्ञानलक्षणदृष्टफलं तदा तु कोशव्याकरणादिव्युत्पत्त्याऽऽपातिकार्थप्रतीतौ सत्यामपि संशयनिरासस्याऽसंभवात् तदर्थं वेदवाक्यार्थविचारः कर्तव्यः स च विचारशास्त्रारम्भं विना न संभवतीति शास्त्रारम्भावश्यंभावप्रदर्शनायात्राध्ययनफलविचारोनूदितस्तस्य नावमिकेनैवसिद्धत्वान्नात्रापेक्षास्तीत्यभिप्रायेणाह–अथ वेति । नवमे=नवमाध्यायद्वितीयपादद्वितीयाधिकरणे । नावमिकन्यायाभिप्रायं सूचयति–साम्नामित्यादिना । साम्नामदृष्टार्थत्वं वा स्तुतिलक्षणदृष्टार्थत्वं वेति "कर्म वा विधिलक्षणम्" इति सूत्रे

स्वदर्शनात् तादर्थ्यमेव नाऽदृष्टार्थत्वमिति वक्ष्यते । तेनैव न्यायेनाध्ययनस्यार्थज्ञानार्थत्वसिद्धेरध्ययनानन्तरं धर्मजिज्ञासा कर्तव्येति सिद्धमेवैतत्प्रयोजनविवक्षया सूत्रकारेणोच्यते । यदाहुः—

---

संदिग्ध "सम्भवति दृष्टफलकत्वेऽदृष्टकल्पनाया अन्याय्यत्वात्" इति न्यायेन स्तुतिलक्षणदृष्टफलकत्वमेव व्यवस्थापितम् । स्तुतिश्च साम्ना स्वरूपेण न सम्भवति साम्नां स्वरसंस्थानविशेषरूपत्वादिति सामाधारभूतऋग्द्वारा तु स्तुतिः सम्भवतीत्युक्तम्—"ऋगक्षराभिव्यक्तिद्वारेण" इति । तादर्थ्यम्=स्तुत्यर्थत्वम् । स्वयमपि वक्ष्यति नवमे—

"अक्षराणामभिव्यक्तिः साम्नां दृष्टं प्रयोजनम् ।
अक्षरैश्चाप्यभिव्यक्तैः स्तुतिः क्रत्वङ्गचोदिता ॥
एवं दृष्टे फले लब्धे नाऽदृष्टपरिकल्पना ॥" इत्यादि ।

माधवेनाप्युक्तम्—

"सामर्चं प्रति मुख्यं स्याद् गुणो वा, बाह्यपाठतः ।
मुख्यम ऽभ्यसितुं पाठो गुणो गीताक्षरैः स्तुतेः ॥

गानेन संस्कृतैर्ऋगक्षरैः स्तुतिसंभवात्, "आज्यैः स्तुवते पृष्ठैः स्तुवते" इति स्तुतिविधानात्, तस्मात्—ऋगक्षराणां स्वरविशिष्टत्वाकाराभिव्यक्तिर्दृष्टं प्रयोजनमित्यदृष्टस्याऽकल्पनीयत्वाद् गानं संस्कारकर्म" इति । तथा च यथा गानसंस्कृतानामृगक्षराणां दृष्टं फलं स्तुतिरेव तथा ऽध्ययनसंस्कृतानां वेदानां दृष्टं फलमर्थज्ञानमेव । किं वा यथा साम्नामृगक्षराभिव्यक्तिद्वारा स्तुत्यर्थत्वं तथाऽध्ययनस्याक्षरग्रहणद्वाराऽर्थज्ञानार्थत्वमिति युक्त्या वक्ष्यमाणेन नावमिकन्यायेनैव दृष्टार्थत्वनिर्णय इति नात्र तद्विचारकर्तव्यत्वापेक्षा । अर्थज्ञानं च धर्मजिज्ञासा=धर्मविचार एव सा च वेदाक्षरग्रहणानन्तरं संभवतीत्याह—अध्ययनानन्तरमिति । सिद्धमेवेति—अध्ययनमर्थज्ञानफलकमिति यद्यपि नावमिकन्यायेन सिद्धं तथापि एतत्प्रयोजनविवक्षया=शास्त्रारम्भप्रयोजनविवक्षया—शास्त्रारम्भस्यार्थज्ञानं प्रयोजनमिति विवक्षया, सूत्रकारेणोच्यते="अथातो धर्मजिज्ञासा" इति सूत्रं सूत्रकृतोच्यते । अथ शब्दो वेदाध्ययनानन्तर्यं ब्रूते, अतः शब्दो वेदाध्ययनस्य दृष्टार्थत्वं ब्रूते, यतोऽर्थज्ञानरूपदृष्टार्थकं वेदाध्ययनमतो वेदार्थलक्ष-

"धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम् " इति । न त्वत्र कस्य चिद्वेदवाक्यस्यार्थो विचार्यते तदप्याहुः—

"न चात्र चोदनाव्याख्या गौरवं तत्र चोदितम् " इति । तत् सिद्धमध्ययनानन्तरं धर्मजिज्ञासा कर्तव्येति । सा चतुर्विधा–धर्मस्वरूपप्रमाणसाधनफलैः ।

---

णधर्मस्य जिज्ञासा विचारः कर्तव्यस्तदर्थं शास्त्रारम्भश्चकर्तव्य इत्यर्थः । तथा च-

आनन्तर्यमथेत्युक्तमतो वृत्तस्य हेतुता ।
वेदाक्षरगृहीत्यन्ते स्मृता धर्मविचारणा ॥ इति प्रघट्टकार्थः ।

अध्ययनानन्तरं धर्मजिज्ञासा कर्तव्येत्यत्र प्रमाणमाह–"धर्माख्यम्" इति धर्माख्यविषयप्रतिपादनमेव मीमांसाशास्त्रप्रयोजनमस्ति तथा च यदि धर्मो न विचार्येत तदा मीमांसाशास्त्रं निष्फलं स्यादित्यर्थः । अस्य पद्यस्य "अथाऽतो धर्मजिज्ञासा सूत्रमाद्यमिदं कृतम्" इति पूर्वार्धम् । अस्य सूत्रस्य शास्त्रारम्भप्रयोजनप्रदर्शकत्वमाहुर्वार्तिककारा इत्यभिप्रायेणोक्तम्–यदाहुरिति, अत्र पूर्वपक्षोत्थान शङ्का न कर्तव्येत्यपि ध्येयम् । नत्वत्रेति–अत्र प्रथमसूत्रे वक्ष्यमाणसूत्रेष्विव कस्यचिद्वेदवाक्यस्य विचारो न क्रियते किं तु धर्मजिज्ञासा न कर्तव्या कर्तव्या वेति विचारः क्रियते, सामान्यतो धर्मजिज्ञासायाः कर्तव्यत्वे सिद्धे तदनन्तरमेव धर्मप्रतिपादकवेदवाक्यानां विशेषतो विचारस्य सङ्गतत्वात् सामान्यसिद्धिं विना विशेषसिद्धेरसम्भवात् । अत्रापि श्लोकवार्तिकं प्रमाणयति–तदप्याहुरित्यादिना । नचात्रेति–अत्र=प्रथमसूत्रे । चोदना=वेदवाक्यं न विचारणीयम् । किंवा चोदनाया व्याख्या न कर्तव्या । चोदनाव्याख्याने हि चोदनापि विचारणीया स्यादथ च मीमांसारम्भलक्षणधर्मजिज्ञासाकर्तव्यतापि प्रतिपादनीयेत्युभयव्याख्याने गौरवं स्यादित्यर्थः । उपसंहरति–तत् सिद्धमिति । सा=धर्मजिज्ञासा चतुर्विधा–धर्मस्वरूपजिज्ञासा, धर्मप्रमाणजिज्ञासा, धर्मसाधनजिज्ञासा, धर्मफलजिज्ञासा चेत्यर्थः । अस्य धर्मस्य स्वरूपं किम्, अत्र धर्मे प्रमाणं किम्, अस्य धर्मस्य साधनं किम्, अस्य धर्मस्य फलं किम्, इत्येवंरूपं चातुर्विध्यं विज्ञेयम् ।

**नन्वऽध्ययनविधिना वेदवाक्यार्थविचारमात्राक्षेपा-द्धर्मस्वरूपप्रमाणजिज्ञासयोः कः प्रसङ्गः ? । उच्यते— उपोद्घातत्वात्प्रसङ्गः, यदि हि वेदवाक्यार्थो धर्मः स्याद् वेदश्च प्रमाणं ततोऽसौ विचारः कर्तव्यो भवति। इतरथा काकदन्तपरीक्षावत् स्यात्, तदध्ययनविधिरेव प्रमाणादिविचारमाक्षिपति । धर्मग्रहणं चोपलक्ष-**

---

नन्वध्ययनविधिना हि वेदाक्षरग्रहणादनन्तरं वेदवाक्यानामर्थो विचारणीय इत्येतावन्मात्रमाक्षिप्यते न तु धर्मस्वरूपप्रमाणविषयकविचारकर्तव्यताप्याक्षिप्यते इति धर्मस्वरूपप्रमाणविचारस्यात्र शास्त्रे कः प्रसङ्गः ? तस्माद् धर्मस्वरूपप्रमाणविचारो न कर्तव्योऽप्रसक्तत्वादित्याशङ्कते—नन्विति, उत्तरमारभते—उच्यते इत्यादिना।अयं भावः—प्रकृतसिद्ध्यर्था चिन्तोपोद्घातस्तदुक्तम्—"चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते" इति, तथा च वेदवाक्यानामर्थस्य विचारस्तदैव सङ्गतो भविष्यति यदि वेदवाक्यानां योर्थः स धर्मः स्यात् तस्मिंश्च वेदवाक्यार्थस्वरूपे धर्मे वेदःप्रमाणं स्यात्, अन्यथा वेदवाक्यार्थविचारोनिष्प्रयोजनः सन् काकदन्तपरीक्षातुल्यः स्यात्, धर्मस्यैव विचारणीयत्वात् । तथा च वेदवाक्यार्थस्य विचारो वेदवाक्यार्थस्य धर्मस्वरूपताधीनः, धर्मस्वरूपज्ञानं विना च वेदवाक्यार्थस्य धर्मस्वरूपत्वं न ज्ञातुं शक्यते, धर्मस्वरूपज्ञानं च धर्मस्वरूपविचाराधीनमिति धर्मस्वरूपविचारः प्रकृतस्य वेदवाक्यार्थविचारस्य सिद्ध्यर्थः। एवं वेदवाक्यानामेवार्थस्य विचारः कर्तव्यो न लौकिकवाक्यानामित्यत्रायमेव हेतुर्यद्वेदवाक्यार्थे धर्मे वेद एव प्रमाणम्, एतच्च धर्मप्रमाणविचारं विना न सम्भवतीति वेदवाक्यार्थविचारो धर्मप्रमाणविचाराधीन इति—उपोद्घातत्वात् धर्मस्वरूपप्रमाणयोर्विचारस्य प्रसङ्गः । एतदेव व्याचष्टे—यदि हीति। इदमुपलक्षणम्—वेदवाक्यार्थस्वरूपधर्मस्य निष्फलत्वे निस्साधनत्वे च पुनरपि वेदवाक्यार्थविचारः काकदन्तपरीक्षावन्निष्फलः स्यान्निष्फलनिस्साधनपदार्थविचारे प्रवृत्त्यसम्भवादिति धर्मफलसाधनयोरपि विचारः कर्तव्य एव ।उपसंहरति—तदिति, तत्=तस्मात् नाम वेदवाक्यार्थविचारस्य धर्मस्वरूपप्रमाणसाधनफलविचाराधीनत्वादध्ययनविधिरेव स्वप्रतिपाद्यवेदवाक्यार्थविचारसिद्ध्यर्थं प्रमाणादिविचारम्=धर्मस्वरूपसाधनफलप्रमाणानां विचारमाक्षिपति । हानायाधर्मस्या-

णार्थम्-अधर्मस्यापि हानाय जिज्ञास्यत्वात् । अकार-प्रश्लेषेण वा सूत्रमऽधर्मजिज्ञासायामपि व्याख्येयमिति निरवद्यम् ॥

---

पि जिज्ञास्यत्वादाह-धर्मग्रहणं चेति । अकारप्रश्लेषेण='अथातोऽधर्मजिज्ञासा' इत्येवम् । अत्र च पक्षे धर्मज्ञानादनन्तरमधर्मस्य जिज्ञासा ( विचारः ) कर्तव्येति सूत्रार्थः सङ्गतो भाति किं वाऽध्ययनानन्तरं धर्माऽधर्मयोर्जिज्ञासा=विचारः कर्तव्य इत्यर्थः ॥ १ ॥



(द्वितीयं धर्मलक्षणाधिकरणम्)

## सू— चोदनालक्षणोऽर्थो धर्मः॥२॥

**प्रथमं तावत्को धर्मः? कथंलक्षणकः? इत्येतद्द्वयमनेन सूत्रेण श्रुत्यर्थाभ्यां निरूप्यते—यो धर्मः स चोदनालक्षणः चोदनैव तस्य लक्षणं प्रमाणं चोदना च तस्य लक्ष-**

---

अध्ययनानन्तरं धर्मविचारे सिद्धे सामान्यतो धर्मस्वरूपज्ञानार्थं द्वितीयसूत्रमुपन्यस्यति—"चोदनालक्षणोऽर्थो धर्मः" इति। अत्र सूत्रे विचार्यं विषयं संक्षेपेणाह—प्रमथमित्यादिना। कथंलक्षणकः=किंप्रमाणक इत्यर्थः। द्वयम्=धर्मस्वरूपं धर्मप्रमाणं चेति द्वयम्। ननु एकेन सूत्रेण कथं धर्मस्य स्वरूपप्रमाणे निरूपिते स्याताम्? "शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात्" इति नियमादित्याशङ्क्याह—श्रुत्यर्थाभ्यामिति, श्रुत्या=सूत्राक्षरैः, अर्थेन=अर्थापत्त्या। स्वरूपप्रमाणयोर्मध्येऽन्यतरस्मिन् सूत्राक्षरैः प्रतिपादितेऽन्यतरदर्थापत्त्या प्रतिपादितं भवति—यदा हि सूत्रभूतश्रुत्या धर्मप्रमाणं प्रतिपाद्यते तदार्थादेव धर्मस्वरूपं प्रतिपादितं भवति प्रमेयं विना प्रमाणानुपपत्तेः, यदा च सूत्रभूतश्रुत्या धर्मस्वरूपं प्रतिपाद्यते तदार्थादेव धर्मप्रमाणं प्रतिपादितं भवति प्रमाणं विना प्रमेयाऽनुपपत्तेरिति भावः।

तत्र प्रथमं सूत्रभूतश्रुत्या प्रमाणमर्थापत्त्या च स्वरूपं साधयति—यो धर्म इत्यादिना। अत्र च "यो धर्मः स चोदनालक्षणः" इति सूत्राक्षरेभ्य उपलब्धं तत्र चोदनापदप्रयोगान्ययोगव्यवच्छेदाभ्यां व्याचष्टे—चोदनैवेत्यादिना। चोदनैवेत्यऽन्ययोगव्यवच्छेदस्तस्मिन् धर्मे चोदनाभिन्नप्रमाणस्य व्यवच्छेदो निषेधः (असम्बन्धः) चोदनामात्रगम्यो धर्म इत्यर्थः। अयोगव्यवच्छेदमाह—चोदनाचेति, चोदना धर्मे लक्षणम्=प्रमाणमेवेति चोदनायां धर्मनिरूपितप्रमाणत्वायोगस्य (असम्बन्धस्य) व्यवच्छेदो निषेधश्चोदनाया धर्मनिरूपितप्रामाण्यमस्त्येवेत्यर्थः। इतिश्रुत्या="चोदना च तस्य लक्षणमेव" इतिश्रुत्या=वाक्येन, किं वा "चोदनालक्षणोऽर्थो धर्मः" इतिश्रुत्या=उक्तसूत्रभूतवाक्येन, प्रमाणविधौ=प्रमाणे विहिते सति, अर्थात्—उक्तसूत्रेण धर्मे चोदनैव प्रमाणमिति धर्माय चोदानाऽभिन्ने प्रमाणे विहिते सति यश्चोदनयैव गम्योऽग्नि

**णमेवेति श्रुत्या प्रमाणविधावऽर्थाच्चोदनागम्य एवा-ग्निहोत्रादिर्धर्मो नाऽतल्लक्षणश्चैत्यवन्दनादिरिति स्व-रूपमपि सिध्यति । तथा यश्चोदनालक्षणः स धर्म इति स्वरूपविधावऽर्थात् प्रमाणसिद्धिर्वेदितव्या ।**

---

होत्रादिः स एव धर्म इति धर्मस्वरूपमर्थादेव लभ्यते, यस्मिन् यत् प्रमाणं तत् तेनैव प्रमाणेन गम्यो भवति यथा गन्धो घ्राणजप्रत्यक्षगम्यो भवति तत्कस्य हेतोः ? गन्धे घ्राणस्यैव प्रमाणत्वादिति धर्मे चोदनैव प्रमाणमिति चोदनागम्य एव धर्म इत्याह—चोदनागम्येति । यत्र चैत्यवन्दनादौ चोदना प्रमाणं नास्ति न स धर्म इत्याह—नातल्लक्षण इति । अतल्लक्षणः=चोदनाऽलक्षणः, चोदनाप्रमाणविधुरः । इत्येवंरीत्या धर्मस्य स्वरूपम्=लक्षणमप्यर्थात् सिद्धमित्याह—स्वरूपमपीति ।

सम्प्रति श्रुत्या स्वरूपमर्थापत्त्या च प्रमाणं साधयति—तथेति । यथोक्तरीत्या श्रुत्या प्रमाणमर्थापत्त्या च स्वरूपं सिद्धं तथा "यश्चोदनालक्षणः स धर्मः" इति स्वरूपविधौ=स्वरूपसिद्धौ जातायामर्थादेव 'चोदनैव धर्मे प्रमाणम्' इति चोदनारूपस्य धर्मविषयकप्रमाणस्यापि सिद्धिर्जातेत्यर्थः । यदा हि धर्मश्चोदनाप्रमाणक एव तदा चोदनैव तत्र प्रमाणमित्यर्थात् सिद्धमिति भावः । "लक्षणप्रमाणाभ्यां वस्तुसिद्धिः" इतिन्यायाद् धर्मसिद्ध्यर्थं धर्मलक्षणं धर्मप्रमाणं चानेन सूत्रेणोक्तमिति वेदितव्यम् । उक्तं च वार्तिककारमिश्रैः—

"धर्मे सामान्यतः सिद्धे प्रमाणं चोदनोच्यते ।
स्वरूपादेस्ततः सिद्धिः स्वरूपं चेह सूत्र्यते ॥
द्वयमेकेन सूत्रेण श्रुत्यर्थाभ्यां निरूप्यते ।
स्वरूपेपि हि तस्योक्ते प्रमाणं कथ्यतेऽर्थतः ॥
किमाद्यपेक्षितैः पूर्णः समर्थः प्रत्ययो विधौ ।
तेन प्रवर्तकं वाक्यं शास्त्रेस्मिन् चोदनोच्यते ॥
चोदनैव प्रमाणं चेत्येतद् धर्मेऽवधारितम् ।
साकाङ्क्षमिति मन्वानो युक्तिलेशं द्वयेऽस्पृशत् ॥
चोदनाजनिताबुद्धिः प्रमाणं दोषवर्जितैः ।
कारणैर्जन्यमानत्वाल्लिङ्गाप्तोक्त्यऽक्षबुद्धिवत् ॥ "इत्यादि ।

कश्चित्त्वाह–कार्यरूपो वेदार्थो न सिद्धरूप इत्येतद-नेन सूत्रेणोच्यते, चोदनालक्षणशब्देन कार्यमुच्यते, धर्मशब्देन वेदार्थ इति । तदयुक्तम्–यानि तावद्विधि-वाक्यानि तेषां विधावेव प्रामाण्यं वस्तुस्वरूपे चाप्रा-माण्यं विस्पष्टमेवेति न तत्र किंचिद्वक्तव्यम् । क्षेपि-ष्ठादिवाक्यानामपि विध्येकवाक्यतया तत्रैव प्रामाण्य-म् । मन्त्राणामपि प्रकरणेन प्रधानविधिशेषत्वं द्विती-यपादे वक्ष्यत इति न तत्रापि वक्तव्यमस्ति । तेन कस्या-त्र सिद्धार्थतां निरस्य कार्यार्थतोच्यते ? । "अविनाशी

---

ननूक्तसूत्रे धर्मशब्दो वेदार्थपरः, चोदनालक्षणशब्दश्च कार्यपरोऽस्तीति का-र्यरूप एव वेदार्थो न सिद्धरूप इत्यनेन सूत्रेणोच्यते तथा च "यजेत स्वर्गकामः" इत्यादिवाक्यानमेव कार्यबोधकानां प्रामाण्यमस्ति न तु सिद्धार्थबोधकानां "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादीनामिति प्रभाकरमतमुपस्थापयति–क-श्चित्त्वाहेति । परिहरति तदयुक्तमित्यादिना । यानीति– ननु "यजेत स्वर्ग-कामः" इत्यादिविधिवाक्यानां तु विधौ=कार्ये एव प्रामाण्यमस्ति न तु वस्तुस्वरूपे=यागादिस्वरूपे इति विधिवाक्यानां वस्तुस्वरूपेऽप्रामाण्यं स्पष्टमे-वेति तत्र=विधिवाक्यानां वस्तुस्वरूपनिरूपिताऽप्रामाण्ये न किंचिद्वक्तव्यम-स्ति । तथा "वायुर्वै क्षेपिष्ठा देवता" इत्याद्यर्थवादवाक्यानामपि विधिवा-क्येनैकवाक्यतया तत्रैव=विधावेव प्रामाण्यमस्ति न वस्तुस्वरूप इत्याह–क्षेपि-ष्ठेति । द्वितीयपादे वक्ष्यमाणरीत्या मन्त्राणामपि प्रधानविधिशेषत्वाद् विधावेव प्रामाण्यमस्ति न वस्तुस्वरूपे इति न तत्रापि=मन्त्रेष्वपि वक्तव्यमस्तीत्याह–मन्त्राणामपीति । एवं नामधेयवाक्यानामपि विध्येकवाक्यतया विधावेव प्रामा-ण्यम् । तथा च–विधिमन्त्रनामधेयनिषेधार्थवादभेदैः पञ्चप्रकारस्य वेदस्य स्वयमे-व विधौ प्रामाण्यं प्राप्तमिति कस्यात्र सिद्धार्थता निराक्रियते कार्यार्थता चोच्य-ते ? इति यानीत्यादिनोपपाद्या ऽऽशङ्कते–तेनेति । कस्येतिजातावेकवचनं केषां वाक्यानामित्यर्थः ।

ननु "अविनाशी वा अरे अयमात्मा" "सत्यंज्ञानमनन्तं ब्रह्म" इत्यादीनामुप-निषद्वाक्यानां ब्रह्मबोधकत्वेन परैः स्वीकृतानां सिद्धब्रह्मबोधकतां निरस्यात्र का-

**वा अरे अयमात्मा" इत्यादीनामुपनिषद्वाक्यानामिति चेत् ? न, तेषामपि यदि विध्येकवाक्यत्वमस्ति ततोऽर्थवादाधिकरणेन गतम्, अथ नास्ति ? कथं तेषां कार्यार्थता स्यात् ?।**

---

र्यार्थतोच्यते तथा च तेषामपि दर्शनादिकार्यविधिपरत्वमेव न तु सिद्धब्रह्मस्वरूपमात्रबोधकत्वमित्याशङ्कते-अविनाशीति, उक्तं च प्राभाकरैः-"कृत्स्न एव वेदोऽवबोधे(ध्ये)ऽपूर्वे कार्यात्मनि प्रमाणम्, अत एव को वेदार्थ इति जिज्ञासमानेभ्यश्चोदनासूत्रे कार्यात्मा वेदार्थ इत्युक्तम्। ननु सिद्धोपि ब्रह्मात्मको वेदान्तानामर्थः प्रतीयते ? उच्यते-व्युत्पत्त्यपेक्षः शब्दोर्थमवबोधयति, व्युत्पत्तिश्च वृद्धव्यवहारे, व्यवहारश्च कार्यप्रतीतिनिबन्धनः, कार्यप्रतिपादकतयैव शब्दव्युत्पत्तिः, तत्रापि कश्चिच्छब्दः साक्षादेव कार्यप्रतिपादकतया व्युत्पद्यते कश्चिच्च कार्यान्वितस्वार्थपरतया ? न हि कार्यावगमं विना व्यवहारोवकल्पते इत्युक्तं वाक्यार्थमातृकायाम्, ।एवं लोके यः सिद्धार्थपरतया पदानां प्रयोगः स लाक्षणिको भविष्यति, कार्यान्वयो हि परस्परपदार्थान्वयव्यभिचारीत्यविवक्षित्वा कार्यान्वयं परस्परपदार्थान्वयविवक्षयापि लोकाः शब्दं प्रयुञ्जते विवक्षावलेन च लक्षणया तत्परतापि तत्र निर्वहति, वेदे तु लक्षणानिबन्धनं किं चिन्नास्तीति स्वाभाविकं कार्यपरत्वं नापहर्तुं शक्यते, एवं सिद्धपरेपि वाक्ये या व्युत्पत्तिः सापि कार्यपरतां न विहन्ति, सर्वपदानामेव हि स्वाभाविकी वृद्धव्यवहारसिद्धा कार्यपरता, लाक्षणिकी च सिद्धपरता, सर्वव्यवहारेषु कार्यान्वयाव्यभिचारात् तदन्विताभिधायिता न शक्यते हातुमिति न सामान्येनाऽर्थान्तरमात्रान्विताभिधानं शक्याश्रयणम्, अतश्च वेदान्तानामपि "आत्मा ज्ञातव्यः" इत्यपुनरावृत्तये समाम्नातेन विधिनैकवाक्यतामाश्रित्य कार्यपरत्वमेव वर्णनीयम् । " इत्यादि ।

परिहरति-इति चेन्नेति । तेषामपि="अविनाशी वा" इत्यादिवाक्यानामपि "आत्मा वा अरे द्रष्टव्यः" इत्यादिविधिना सह यद्येकवाक्यत्वमस्ति तदाऽर्थवादाधिकरणेनैव तेषां कार्यपरत्वं प्राप्तमिति कृतमत्र तेषां कार्यपरत्वप्रसाधनप्रयासेन । अर्थवादाधिकरणं च द्वितीयपादे द्रष्टव्यम् । यदि च "अविनाशी वा" इत्यादिवाक्यानां विध्येकवाक्यत्वं नास्ति तदा कथं तेषां कार्यार्थता स्यात् ? स्वरूपेण चापि कार्यपरत्वाप्रतीतेः । स्वरूपेणापि कार्यपरत्वं नास्ति

**अथ तेषां विध्यश्रवणाद्विध्यन्तरेणैकवाक्यत्वाभावाच्च कार्यार्थत्वानुपपत्तेर्व्युत्पत्तिविरहाच्च सिद्धार्थे प्रामाण्याऽयोगादऽप्रामाण्यमेवाभिमतम् ? । किमिदानीमात्मादिवाक्यानामप्रामाण्यप्रतिपादनपरमिदं सूत्रम् ?, सुव्याहृतं तर्हि शास्त्रारम्भे प्रथमं तावत्सूत्रकारोऽप्रामाण्यमेव वेदवाक्यानां प्रतिपादयतीति ।**

**कथं च कार्ये एव प्रामाण्यम् ? । तत्रैव व्युत्पत्तेः–प्रवृ-**

---

विधिना चैकवाक्यत्वं नास्तीति तेषां कार्यपरत्वसिद्धेरशक्यत्वाद् व्यर्थः कार्यपरत्वप्रतिपादनप्रयास इत्याह–अथ नास्तीति ।

ननु "अविनाशी वा" इत्यादिवाक्यानां मा भवतु कार्यार्थता किं त्वप्रामाण्यमेवास्ति तथा हि–"अविनाशी वा" इत्यादि वाक्येषु विध्यश्रवणात्=विधायकप्रयोगाभावात् न कार्यपरता संभवति, विधायकेन वाक्यान्तरेणाप्यन्वयात् कार्यपरता भवति यथार्थवादवाक्यानां तदप्यत्र नास्ति विधिवाक्यान्तरेणैकवाक्यत्वाभावात् । तस्मात् "अविनाशी वा" इत्यादिवाक्यानां कार्यपरता न संभवति, कार्यपरत्वाभावाच्च व्युत्पत्तिः=शक्तिग्रहोपि न संभवति, घटमानयेत्यादिवाक्यैः कार्यपरैः कार्यान्वितेष्वेव घटादिषु घटादिपदानां शक्तिग्रहात् । सिद्धार्थे च शक्तेरग्रहात् वाक्यस्य प्रमाण्यं न संभवतीति "अविनाशी वा" इत्यादिवाक्यानामप्रामाण्यमेवास्ति, कार्यपरत्वाभावात् सिद्धार्थे च प्रामाण्यायोगादित्याह–अथ तेषामिति । तेषाम्="अविनाशी वा" इत्यादिवेदान्तवाक्यानाम् । आक्षेपेण परिहरति–किमिदानीमित्यादिना । इदानीम्=त्वत्पक्षे । आत्मादिवाक्यानाम्="अविनाशी वा" इत्यादिवाक्यानाम् । स्पष्टमन्यत् ।

सिद्धान्ती पृच्छति–कथं चेति, वाक्यस्येति शेषः, वाक्यस्य कार्ये एव प्रामाण्यं न सिद्धार्थे इति कथं भवतोच्यते ? इत्यर्थः । पूर्वपक्ष्युत्तरमाह–तत्रैवेति, तत्रैव=कार्ये एव व्युत्पत्तेः=शक्तिग्रहात् । यस्मिन्नर्थे शक्तिग्रहो भवति तत्रैव वाक्यप्रामाण्यात् तस्यैवार्थस्य वाक्येन प्रमातुं योग्यत्वात् । एतदेव व्युत्पादयति–प्रवृत्त्यधीनेति, घटमानयेत्युक्ते घटकर्मकानयनं दृष्ट्वा पार्श्वस्थो बाल आनयनान्वित एव घटे घटपदस्य शक्तिं गृह्णाति–आनयनविशिष्टः कम्बुग्रीवादिमान् पदार्थो घटपदवाच्य इति । व्युत्पत्तिः=शक्तिग्रहः । सा=प्रवृत्तिः । व्युत्पत्तिः

त्त्यधीना हि व्युत्पत्तिः, सा च कार्यावगमधीनेति व्यु-
त्पत्तिरपि तत्रैव भवतीति चेत् ?, नावश्यं प्रवृत्त्यधीनै-
व व्युत्पत्तिः-काष्ठैः स्थाल्यामोदनं पचतीत्यादिव-
र्तमानापदेशेष्वपि प्रसिद्धतृतीयार्थानामऽप्रसिद्धकाष्ठ-
प्रातिपदिकार्थानां च पुरुषाणां काष्ठार्थे व्युत्पत्तिद-
र्शनात् ।

अथ प्रथमव्युत्पत्तिः कार्यविषयैव- न हि तदा श-

---

प्रवृत्त्यधीना प्रवृत्तिश्च सा कार्यावगमधीना यतो घटमानयेत्युक्ते भृत्यादिः प्र-
वर्तते राम आसीदित्युक्ते तु न प्रवर्तते तत्कस्य हेतोः ? कर्तव्योपदेशाभावात् ।
घटमानयेत्युक्ते तु घटमानयतीति प्रवृत्तिः कार्यज्ञानाधीनास्तीति व्युत्पत्तिरपि
तत्रैव=कार्ये एव=कार्यान्वितपदार्थे एव भवतीति वाक्येन कार्यान्वितस्यैव वा-
क्यार्थस्य बोधात् वाक्यार्थबोधं प्रति शक्तिज्ञानस्य कारणत्वाच्च वाक्यस्य कार्ये
एव प्रामाण्यमित्याशङ्क्याह-इति चेदिति ।

परिहरति-नावश्यमित्यादिना, यद्यपि कार्यान्विते शक्तिग्रहो भवति त-
थापि कार्यान्विते एव शक्तिग्रहो भवतीति नियमो नास्ति सिद्धेपि श-
क्तिग्रहस्य दर्शनात्, एतदेव व्युत्पादयति-काष्ठैरित्यादिना । वर्त-
मानापदेशेषु=पचतीत्यादिवर्तमानकालिकक्रियाबोधकपदयुक्तवाक्येषु । तेषां
विधायकपदयुक्तत्वाभावात् कार्यपरत्वं न सम्भवतीति भावः । इदमैदंपर्य-
म्-येन पुरुषेण 'काष्ठैः स्थाल्यामोदनं पचति देवदत्तः' इति श्रुतं स्थाल्या
दिपदार्थाश्च सर्वे विदिताः, काष्ठैरिति तृतीयार्थः करणत्वमपि ज्ञातमस्ति किं
तु काष्ठपदार्थो न ज्ञातोस्ति, तस्य पुरुषस्य पाककरणत्वं काष्ठेष्वेव सम्भवती-
ति योग्यतावशात् सिद्धेपि काष्ठपदार्थे काष्ठशब्दस्य शक्तिग्रहो भवतीति द-
र्शनात् नावश्यं प्रवृत्त्यधीनैव व्युत्पत्तिर्येन कार्ये एव शब्दस्य व्युत्पत्तिः स्वी-
क्रियेत 'काष्ठैः स्थाल्याम्' इत्यादौ विधायकपदाभावेन प्रवृत्त्यभावेपि श-
क्तिग्रहदर्शनात् ।

ननु बोधस्तु सिद्धविषयकोपि भवति स च व्युत्पत्त्यनन्तरभावी, प्राथ-
मिकी व्युत्पत्तिरेव शक्तिग्रहः सा च प्रथमा व्युत्पत्तिः प्रवृत्त्यधीना सती का-
र्यविषयैव=कार्यान्वितपदार्थविषयैव भवतीति शङ्कते-अथेति । एतदेव प्रतिपा-

ब्दान्तरवशेन शब्दान्तरस्यार्थे व्युत्पत्तिः संभवति स-
र्वस्य धर्मस्याप्रसिद्धत्वादिति चेत् ?। अस्त्वेवम्, तथा-
पि पश्चाद्बहुशः सिद्धार्थे शब्दप्रयोगदर्शनात् 'कोयं रा-
जा ?' 'पाञ्चालः' इत्यादिषु प्रश्नप्रतिवचनादिषु का-
र्यस्य व्यभिचारादऽव्यभिचार्यऽर्थमात्रं वाच्यमिति सु-

---

दयति– न हीत्यादिना। तदा=प्रथमशक्तिग्रहकाले शब्दान्तरस्य शब्दान्तरव-
शेन तदर्थे न व्युत्पत्तिः सम्भवति, यथात्र स्थाल्यादिशब्दान्तरवशेन शब्दा-
न्तरस्य काष्ठशब्दस्य तदर्थे बोधो जायते नैवं प्रथमव्युत्पत्तिकाले सम्भवतीत्य-
र्थः। अत्र हेतुमाह–सर्वस्येति। इदानीं तु सर्वस्य धर्मस्य स्थाल्यादिपदार्थस्य
प्रसिद्धत्वात् सम्भवत्यप्रसिद्धेपि काष्ठपदार्थे काष्ठशब्दस्य व्युत्पत्तिः, प्रथम-
व्युत्पत्तिकाले तु वाक्यघटकसकलपदानामर्थस्या ऽज्ञातत्वान्न शब्दान्तरस्य श-
ब्दान्तरवशेन तदर्थे व्युत्पत्तिः सम्भवति येन सिद्धेपि व्युत्पत्तिः स्यात्।
किं तु प्रवृत्त्यधीना व्युत्पत्तिः कार्यान्वित एव प्रथमं सम्भवति। सर्वस्य धर्म-
स्येत्यस्य करणत्वादिधर्मस्येति वार्थो ज्ञेयः।

किं चित्स्वीकृत्याह–अस्त्वेवमिति। परिहरति–तथापीत्यादिना। यद्यपि
प्रथमा व्युत्पत्तिः प्रवृत्त्यधीना सती कार्यविषयैव तथापि तदनन्तरं सिद्धेष्वपि
कार्यान्वयरहितेष्वर्थेषु शब्दप्रयोगस्य दर्शनात् तेन तेन प्रयुक्तेन शब्देनार्थबोधदर्श
नाच्च प्रश्नोत्तरादिवाक्येषु च कार्यस्य व्यभिचारदर्शनादव्यभिचारि अर्थमात्र-
मेव शब्दस्य वाच्यमित्येव युक्तम्। अयं भावः–कस्य चित् प्रश्नः 'कोयं राजा'
इति, उत्तरं चास्य दत्तम् 'पाञ्चालः' इति तत्रोक्तवाक्ययोः कार्यपरत्वं नास्ती-
ति स्पष्टमेव, भवति चोक्तवाक्याभ्यामपि बोध इति 'यो बोधः स कार्यविषयक
एव' इति व्याप्तेरभावादर्थमात्रमेव शब्दस्य वाक्यस्य वा वाच्यम्' स चार्थो
विधायकपदघटितवाक्येन कार्यान्वितोपि बुध्यते विधायकपदाघटितवाक्येन
च सिद्धोपि बुध्यते यथा–'नीलो घटः' 'पाञ्चालः इत्यादौ, कार्यान्वितपदार्थ-
बोधस्य च सिद्धार्थबोधकवाक्यस्थले व्यभिचारः। सिद्धार्थबोधस्य च कार्यबो-
धकवाक्यस्थले व्यभिचारः अर्थमात्रं तु न व्यभिचारि सर्वत्रैव बुध्यमानत्वादि
त्यर्थमात्रनियता व्युत्पत्तिः क्वचित् सिद्धार्थविषयापि भवतीत्येव युक्तमिति।

**ज्ञानम् । यथैव हि कस्यां चिद् व्यक्तौ प्रथमं गोशब्दस्य प्रयोगदर्शनात् सैव वाच्येत्यवगमे सत्यपि पश्चाद् व्यक्त्यन्तरे प्रयोगं दृष्ट्वा पूर्वव्यक्तिव्यभिचाराद्व्यभिचारि सामान्यमेवार्थ इत्यध्यवसीयते तथा कार्यपरतामवगतामपि पश्चात्सिद्धार्थप्रयोगदर्शनेन बाधित्वाऽर्थमात्रमेवाऽव्यभिचाराद् वाच्यमिति युक्तम् ।**

**किं च प्रथमव्युत्पत्तौ कतिपयानामेव शब्दानां कार्यार्थत्वमवगतं न सर्वशब्दानाम्, अतः पश्चाद् व्युत्पाद्य-**

---

अत्रोदाहरणमाह—यथैवेत्यादिना । यथा हि जातिशक्तिवादे पिङ्गाक्ष्यां गोव्यक्तौ गोशब्दस्य प्रयोगदर्शनात् सैव पिङ्गाक्षी गोव्यक्तिर्गोशब्दस्य वाच्येति बालेन प्रथमं प्रतिपद्यते तदनन्तरं च कृष्णाक्ष्यामपि गोव्यक्तौ गोशब्दस्य प्रयोगं श्रुत्वा गोशब्दस्य गोत्वमेव वाच्यमस्तीत्यध्यवसीयते तत्कस्य हेतोः ? व्यक्तीनां परस्परं व्यभिचारात्=पिङ्गाक्षीगोव्यक्तिविषयकबोधोत्पत्त्यर्थप्रयुक्तगोशब्दजन्यबोधनिष्ठविषयितानिरूपितविषयतायाः कृष्णाक्ष्यां गोव्यक्तावऽभावात्, कृष्णाक्षीगोव्यक्तिविषयकबोधोत्पत्त्यर्थप्रयुक्तगोशब्दजन्यबोधनिष्ठविषयितानिरूपितविषयतायाः पिङ्गाक्ष्यां गोव्यक्तावऽभावात्, गोत्वे च सर्वत्राव्यभिचारेण बोधविषयतास्तीति गोत्वमेव गोशब्दवाच्यमिति स्थितम् । तथा प्रथमव्युत्पत्तिकाले गामानयेत्यादिवाक्यैः कार्यान्वितस्यैव बोधात् कार्ये एव शक्तिः शब्दानामिति निश्चितेपि तदनन्तरं सिद्धार्थे गौरस्तीत्यादिप्रयोगस्यततः सिद्धार्थप्रत्ययोत्पत्तेश्चावश्यं दर्शनादवगतामपि शब्दस्य कार्यपरतां त्यक्त्वाऽर्थमात्रस्याव्यभिचारात्=सर्वत्र बुध्यमानत्वादर्थमात्रमेव शब्दस्य वाच्यमित्येव युक्तमुत्पश्यामः । कार्यपरताम्=कार्यामात्रबोधकताम् । बाधित्वा=त्यक्त्वा । कार्यमात्रपरतां बाधित्वेत्यन्वयः ।

प्रथमव्युत्पत्तिकालेपि केषां चिच्छब्दानां सिद्धेप्यर्थे शक्तिग्रहो भवतीति संप्रति प्रतिपादयति—किं चेत्यादिना । कतिपयानामेव शब्दानाम्='गामानय घटं नय' इत्यादिशब्दानामेव विधायकपदसहितानां कार्यान्वितपदार्थबोधकत्वमवगम्यते, नतु सर्वेषां शब्दानाम् । तथा हि—'पुत्रस्ते जातः' 'कन्या ते गर्भिणी' इत्यादिवाक्यैस्तु सिद्धार्थस्यैव बोधो भवति न कार्यान्वितस्य, तत्र पुत्रादिश-

**मानस्य काष्ठादेः सिद्धार्थे व्युत्पत्तिः केन वार्यते । न च व्युत्पत्तौ शब्दानां पौर्वापर्यनियमोऽस्ति, अतः सर्वे शब्दाः पश्चाद् व्युत्पाद्यमानाः कैश्चित्सिद्धार्था भवन्ति । सर्वेषां तु कार्यार्थत्वे सिद्धार्थपरेषु लौकिकवा-**

---

ब्दानामर्थमजानानो दृष्टपुत्राद्युत्पत्तिश्च दूतेन सहागतः स पुरुषः पुत्रस्ते जात इति वाक्यश्रवणेन पितुर्हर्षं दृष्ट्वा पुत्रोत्पत्तिरेवानेन वाक्येन दूतेनोक्तेत्यनुमाय कार्यानन्विते एव सिद्धे पुत्रपदार्थे पुत्रशब्दस्य शक्तिमवधारयति प्रथममिति न सर्वशब्दानां प्रथममपि कार्ये एव शक्तिग्रहो भवति। अत इति—यतः प्रथमव्युत्पत्तावपि कार्ये एव शक्तिग्रहस्य नियमो नास्ति अतः, पश्चाद्=शक्तिग्रहानन्तरं व्युत्पाद्यमानस्य काष्ठादेः=काष्ठादिशब्दस्य सिद्धार्थे=कार्यानन्विते काष्ठादिपदार्थे=काष्ठादिपदार्थविषया व्युत्पत्तिः केन वार्येत, न केनापीत्यर्थः। काष्ठैः स्थाल्यामोदनं पचतीत्यादौ काष्ठादिशब्दैः सिद्धस्याप्यर्थस्यावश्यं बोधो भवत्येवेत्यर्थः। किं वा प्रथमव्युत्पत्तिकालेपि 'गामानय' इत्यादिवाक्यादावाऽऽनयेत्यादिशब्दानामेव विध्यर्थबोधकानां कार्यबोधकत्वमवगम्यते न गवादिशब्दानामिति काष्ठादिशब्दानां सिद्धार्थे व्युत्पत्तिः केन वार्येत, इत्यर्थः।

ननु प्रथमं तावद् व्युत्पत्तिर्नियमेन कार्यविषयैव भवति न सिद्धविषयेत्याशङ्क्याह—न चेति। व्युत्पत्ताविति विषयत्वं सप्तम्यर्थः, प्रथमं तावच्छब्दानां व्युत्पत्तिः कार्यविषयैव भवति कार्ये व्युत्पत्तिग्रहणानन्तरमेव सिद्धे व्युत्पत्तिग्रहो भवतीति पौर्वापर्यनियमः शब्दव्युत्पत्तिविषयको नास्तीत्यर्थः । शब्दानां व्युत्पत्तावित्यन्वयः। उपसंहरति—अत इति। सर्वे शब्दा व्युत्पाद्यमानाः=व्युत्पत्तिविषयाः ग्रहीतशक्तिकाः कैश्चित्=कैश्चिदुक्तैः प्रमाणैः सिद्धार्थाः=सिद्धार्थबोधका अपि भवन्त्येव। यदि प्रथमं कार्ये एव व्युत्पत्तिर्भवति तथापि व्युत्पत्तिग्रहणानन्तरं शब्दैः सिद्धार्थस्यापि बोधो भवत्येवेत्यभ्युपगम्योक्तम्—पश्चादिति। किं च सर्वेषां शब्दानां कार्यमात्रबोधकत्वे सिद्धार्थबोधकलौकिकवाक्यघटितशब्दानां सिद्धार्थे लक्षणैव वक्तव्या तथा च सर्वेषां शब्दानां लाक्षणिकत्वमेव प्राप्तमित्यऽन्विताभिधायित्वं कस्यापि न स्यात्, नहि यस्मिन्नर्थे यः शब्दो लाक्षणिकस्तस्मिन्नेवार्थे स एव शब्दोऽभिधायको भवतीत्यन्विताभिधानवादस्य विलय एव प्राप्तः इत्याह—सर्वेषामिति।

**क्येषु सर्वशब्दानां लाक्षणिकत्वान्नकश्चिदन्विताभिधायी स्यात्। तत्रान्वितप्रतीतिः कथं सिध्येत्?। वक्तृज्ञानानुमानादिति चेत्? न, यद्विषयं हि वाक्यं तद्विषयमे-**

---

अयं भावः—अन्विताभिधानमितिपदेनाऽन्विते शक्तिरित्युक्तं भवति अन्वितं च तव मते कार्यान्वितमेव तत्र कार्येऽन्वितत्वं सिद्धस्यैव वक्तव्यं न तु कार्यस्य, तव मते च शब्दानां कार्यमात्रवाचकत्वेन सिद्धार्थलक्षकत्वात् सिद्धार्थे शक्तिरेव नास्तीति प्राप्तमिति शब्दानामन्विताभिधायित्वमपि नैव स्यात् किं त्वन्वितलक्षकत्वमेव स्यात् तस्मादवश्यं सिद्धार्थेऽपि शब्दानां शक्तिरभ्युपेया। अन्यथा तत्र=एवं स्थिते नाम—अन्विते शब्दमात्रस्य शक्त्यभावेप्राप्ते किं वा तत्र=सिद्धार्थबोधकलौकिकवाक्येष्वऽन्वितप्रतीतिः कथं स्यात्? न स्यादेवेत्यर्थः, शक्त्या प्रतीतिस्तु शक्त्यभावेनैव निरस्ता लक्षणयापि प्रतीतिर्न संभवति त्वया लाक्षणिकशब्दानामननुभावकत्वस्वीकारात् लक्ष्यार्थस्य च शाब्दबोधे प्रवेशानङ्गीकारात्, किं च गङ्गायां घोष इत्यत्र गङ्गापदेन प्रवाह उपस्थिते सति तस्य बाधाल्लक्षणया तीरबोधो भवति प्रवाहोपस्थितिश्च प्रवाहे शक्तिग्रहाधीनैव न च तव मते सिद्धार्थे शक्तिरस्ति येन सिद्धार्थोपस्थितौ जातायां सिद्धार्थबाधेन कार्यान्वितस्य लक्षणया प्रतीतिः स्यादित्याह—तत्रेति।

ननु सिद्धार्थबोधकवाक्येष्वप्यन्वितप्रतीतिर्वक्तृज्ञानानुमानाद् भविष्यति, तथा हि—गौरस्तीत्यादिवाक्यवक्तुरपि शक्तिग्रहः कार्यान्वित एव जातोस्तीति वक्तुर्ज्ञानं कार्यान्वितविषयकमेवास्ति तथा च वक्ता गौरास्ति तां पश्येति कार्यान्वितपदार्थप्रत्यायनार्थमेव गौरस्तीत्युक्तं, नहि घटशब्दस्य कम्बुग्रीवादिमत्पदार्थे शक्तिं गृहीत्वा घटशब्दं भृङ्गसास्नादिमत्पदार्थप्रत्यायनाय कोपि प्रयुङ्क्ते, तथा च कार्यान्वितपदार्थप्रत्यायनाय प्रयुक्तेन वाक्येन कार्यान्वितपदार्थ एव प्रत्याय्यते इति वक्तृज्ञानादनुमीयते। वक्तृज्ञानानुमानादिति—वक्तृज्ञानस्यान्वितविषयकत्वानुमानाद् वाक्यस्यान्वितार्थप्रत्यायकत्वमनुमीयते इत्यर्थः, तथा च वक्तृज्ञानमऽन्वितविषयकं वक्तृज्ञानत्वाद् गामानयेतिवाक्यवक्तृज्ञानवदिति वक्तृज्ञानस्यान्वितविषयकत्वे सिद्धे अन्वितविषयकज्ञानवदुच्चारितवाक्यस्याप्यन्वितपदार्थप्रत्यायकत्वं सिद्धमेव, अन्वितार्थप्रत्यायनाभिप्राये-

**व वक्तृज्ञानमनुमातव्यम् । न चान्वितप्रतिपादकं वाक्यमुच्चारितमिति कथमन्वितज्ञानानुमानम् ? ।**

**अथार्थस्वरूपस्मारकैः पदैरन्वितज्ञानमऽनुमीयते ?, ततः कार्यवाचकेऽप्यसिद्धेरन्विताभिधानं न स्यात् ।**

---

णोच्चारितत्वात् । गौरस्तीति वाक्यमन्वितार्थप्रत्यायकमऽन्वितार्थप्रत्यायनाभिप्रायेणोच्चारितत्वात्, इत्यभिप्रायेणाह–वक्तृज्ञानानुमानादिति । परिहरति–इति चेन्नेति, परिहारहेतुमाह–यद्विषयमिति, वाक्यस्योच्चारितस्य यो विषयः स एव वक्तृज्ञानस्यापि विषयोऽनुमातव्यो न हि वाक्यस्य घटविषयकत्वे वक्तृज्ञानं पटविषयकमनुमीयते भवति वा ? तथा च गौरस्तीति वाक्यस्य सिद्धविषयकत्वेन वक्तृज्ञानमपि सिद्धविषयकमेवानुमातव्यं भवति च । गामानयेत्याद्यन्वितपदार्थबोधकवाक्यस्थले हि वक्तृज्ञानमन्वितविषयकं भवति तत्रैव चान्वितज्ञानानुमानं युक्तं न च सिद्धार्थबोधकवाक्यस्थलेऽपीत्याह–न चेति ।

ननु पदैरेवार्थस्वरूपस्मारकैर्वक्तृज्ञानमन्वितविषयकमनुमीयते यथा–वक्तृज्ञानं अन्वितविषयकं पदैः स्मर्यमाणपदार्थस्वरूपविषयकत्वाद् गामानयेतिवक्तृज्ञानवत् इत्याशङ्कते–अथेति, पदानामेव हेतुत्वे तु पदजन्यस्मृतिविषयपदार्थस्वरूपविषयकत्वसम्बन्धेन वक्तृज्ञानस्य पदवत्त्वमपि वा बोध्यम् । परिहरति–तत इति । यदि पदैरेवान्वितविषयकत्वमनुमीयते तदा कार्यवाचके घटः कार्य इत्यादिवाक्येप्यन्विताभिधानं = अन्विताभिधायित्वं न स्यात् = न सिद्ध्येतेत्यर्थः । यथा सिद्धार्थबोधकवाक्यस्थले पदैरेव ज्ञानस्यान्वितत्वमनुमीयते तथा कार्यवाचकपदघटितकार्यबोधकवाक्यस्थलेपि पदैर्ज्ञानस्यान्वितत्वम्=अन्वितविषयकत्वमनुमीयेतैवेति कार्यवाचकस्याप्यन्विताभिधायित्वासिद्धेः कार्यवाचकस्थलेप्यन्विताभिधानं न स्यात् तथा च सिद्धार्थबोधकवाक्यजन्यज्ञानस्यान्वितविषयकत्वं साधयता कार्यबोधकवाक्यानामप्यन्विताभिधायित्वं भ्रंशितमिति भावः । असिद्धेः=अन्विताभिधायित्वाऽसिद्धेः । अत्र च "ततः कार्यवाचिष्वपि सिद्धेः" इत्यपि पाठान्तरम्' तथा च–कार्यवाचिष्वपि वाक्येषु ततः=उक्तानुमानादेव सिद्धेः=ज्ञानस्यान्वितविषयकत्वसिद्धेः अन्विताभिधायित्वं न स्यादित्यर्थः ।

किं च सिद्धार्थबोधकवाक्यवक्तृज्ञानमप्यन्वितविषयकमेव भवतीत्यवधारणाभावात् पदैःस्मर्यमाणपदार्थस्वरूपविषयकत्वं हेतुः संदिग्धव्यभिचारी

**किं च प्रथममेव कार्यव्यभिचारः शक्योऽवगन्तुम्-यदा हि पुत्रस्तेजात इत्युक्तस्य कस्य चिन्मुखविकासं पार्श्वस्थः पश्यति तदा हर्षहेतुरनेनशब्देन प्रतिपादित इति हर्षहेतुभूतसिद्धार्थप्रतिपादने शब्दस्य सामर्थ्यं कल्पयति। यद्यपि च तदानीमर्थविशेषो न ज्ञायते हर्षहेतूनां बहूनां संभवात् तथापि सिद्धार्थता तावदव-**

---

साध्याभावसंदेहवति वृत्तित्वात्। उक्तानुमाने कार्यबोधकपदघटितवाक्यजन्यत्वमुपाधिरप्यस्ति। प्रकारान्तरेण साक्षात् पदैरेवान्वितत्वानुमानेऽभिप्रेते तु पदाधिकरणे गगने एव किं चित् सिद्धं स्यान्नत्वात्मसमवेते ज्ञानेपीति दोषः। वर्णात्मकपदानां विभुत्वस्वीकारे तु सर्वत्र व्यापकानां न किं चिदनुमापकत्वं स्यादित्यनुसंधेयम्।

यदि च यथा—"वायुर्हि स्पर्शशब्दधृतिकम्पैरनुमीयते" इत्यत्र तृतीयान्तस्पर्शादीनां पक्षत्वमाश्रित्य दिनकरेणानुमानप्रयोगः कृतः—"योयं रूपवद्द्रव्याऽसमवेतस्पर्शः स क्वचिदाश्रितः स्पर्शत्वात् पृथिवीसमवेतस्पर्शवत्" इति तथात्रापि तृतीयान्तपदस्य पक्षत्वमाश्रित्य 'पदान्यऽन्वितविषयकज्ञानजनकानि पदत्वाद् गामानयेतिवत्' इत्येवं प्रयोगो विरच्यते तत्रापि "ततः कार्यवाचकेपि" इत्याद्युक्तो दोषस्तदवस्थ एव विज्ञेयः स च व्याख्यात एव।

अपि च न प्रथममन्विते शक्तिं गृहीत्वा तदनन्तरमेव सिद्धार्थस्य शब्देन बोधो भवतीति नियमः किं तु 'पुत्रस्ते जातः' इत्यादौ प्रथममेव सिद्धार्थविषयक एव बोधो भवतीति प्रतिपादयति—किं चेत्यादिना। कार्यव्यभिचारः=कार्यबोधकत्वव्यभिचारः। पुत्रस्ते जात इत्यादिवाक्यानां कदापि कार्यबोधकत्वाभावात्। एतदेव विशदयति—यदा हीति। इत्युक्तस्य="पुत्रस्तेजातः" इति वाक्यं दूतेन यं प्रत्युक्तं तस्य। प्रतिपादित इत्यत्रानुमायेति शेषः। सामर्थ्यमिति—श्रोतुर्हर्षो जातः क्रिया च तेन कापि न कृताऽतः पार्श्वस्थः 'पुत्रस्ते जातः' इति वाक्यस्य हर्षहेतुभूते सिद्धेर्थे शक्तिं गृह्णाति। उक्तवाक्यस्य कार्यप्रतिपादकत्वे श्रोत्रा क्रिया कापि कृता स्यात् नैवमस्ति। तस्मादर्थविशेषस्य ज्ञानाभावेपि वाक्यस्य सिद्धार्थबोधकता त्ववगता भवत्येवेत्याह—तथापीति। अर्थविशेषस्य ज्ञानाभावेपि पुत्रस्ते जात इति वाक्यस्य कार्यबोधकत्वं नास्त्येवेति कार्यबोध-

**गता, तावतापि कार्ये व्यभिचारः सिद्धः । किं च बहुशः पुत्रजनने सति एवंशब्दप्रयोगादऽन्येषु हर्षहेतुष्वप्रयोगात् पुत्रजननरूपार्थविशेषोपि सुज्ञान एव ।**

**किं च प्रवृत्त्यधीनापि व्युत्पत्तिर्नावश्यं कार्यविषयैव भवति, तथा हि—यदा कश्चित् प्रवृत्तावऽत्यन्तासमर्थं वृद्धमाऽऽतुरं वा प्रति विनोदार्थं वाक्यं प्रयुङ्क्ते 'नद्यास्तीरे पञ्च फलानि सन्ति' इति तत्रान्यो दैवसङ्गतः**

---

कता व्यभिचारस्तु सिद्ध एव । पुत्रस्ते जात इत्यनेनार्थविशेषस्यापि ज्ञानं संभवत्येवेत्याह—किं चेति । पुत्रजनने सत्येव 'पुत्रस्तेजातः' इति वाक्यस्य प्रयोगो भवति न तु धनप्राप्त्यादिष्विति 'पुत्रस्ते जातः' इत्यनेन पुत्रोत्पत्तिलक्षणार्थविशेषस्यापि बोधो भवत्येवेत्यर्थः । बहुश इत्यस्यैवंशब्दप्रयोगादित्यनेनान्वयो ज्ञेयः । इत्यनेन विशेषतोऽर्थप्रतिपत्तिः प्रतिपादिता ।

ननु व्युत्पत्तिर्हि प्रवृत्त्या भवति प्रवृत्तिश्च कार्यत्वबोधं विना न भवतीति ध्रुवं व्युत्पत्तिरपि कार्यविषयैव भवतीत्याशङ्क्याह—किं चेति, यदा हि 'गामानय' इति वाक्यं श्रुत्वा मध्यमवृद्धस्य गवानयनादिषु प्रवृत्तिं दृष्ट्वा पार्श्वस्थो गवादिशब्दानां गवादिपदार्थेषु शक्तिं गृह्णाति सा व्युत्पत्तिः प्रवृत्त्यधीनेत्युच्यते, एवं यद्यपि सर्वापि व्युत्पत्तिः प्रवृत्त्यधीनैव तथापि न सर्वा कार्यविषयैव भवति किं तु 'गामानय' 'घटं नय' इत्यादिवाक्यश्रवणानन्तरं मध्यमवृद्धप्रवृत्त्या या व्युत्पत्तिर्भवति सैव कार्यविषया भवति मध्यमवृद्धप्रवर्तकवाक्यस्य 'गामानय' इत्यादेः कार्यबोधकानयादिपदपरिकलितत्वात् । यदा हि 'नद्यास्तीरे फलानि सन्ति' इत्यादिवाक्यं श्रुत्वा कोपि प्रवर्तते लभते च फलानि तत्र पार्श्वस्थस्य फलादिशब्दानां या फलादिपदार्थेषु व्युत्पत्तिर्भवति न सा कार्यविषया भवति कार्यबोधकपदस्याश्रवणात् किं तु सिद्धविषयैव तस्मात् प्रवृत्त्यधीनापि व्युत्पत्तिः क्वचित् सिद्धविषयापि भवत्येव, एतदेव विशदयति—तथा हीत्यादिना । प्रवृत्तौ=गमनेऽसमर्थम् । यदि गमनसमर्थं प्रति वाक्यमुक्तं स्यात्तदा कदाचित् स एव श्रोता नदीतीरं गच्छेत् तथा च वाक्यस्य विनोदार्थता न स्यादिति—"प्रवृत्तावत्यन्तासमर्थम्" इत्याद्युक्तम् । एवं विनोदार्थमुक्तेनापि वाक्येन परस्य प्रवृत्तिः संभवत्यऽपरस्य च बालस्य

**कश्चिदर्थी तद्वाक्यमर्थाच्छ्रुत्वा नदीतीरं गत्वा फलान्याहरति, एतत्सर्वं पश्यन्नन्यो व्युत्पित्सुः फलसद्भावप्रतिपादने शब्दस्य सामर्थ्यं व्युत्पद्यते, तस्मान्नैकान्ततः कार्यार्थता शब्दानाम् ।**

**का चास्य सूत्रस्य वचनव्यक्तिः ? यदि तावद् 'यत्कार्यं तद्वेदार्थ एव' इति कार्यमुद्दिश्य वेदार्थता विधीयते, तथा सति-उद्देश्यस्योपादेयेन स्वरसनियमात्स-**

---

व्युत्पत्तिग्रहोपि भवतीति का कथा पुन र्यत्र प्रवृत्त्यर्थमेव कार्यबोधकपदाघटितमपि वाक्यमुक्तं तत्र व्युत्पत्तिग्रहस्य ? इत्यभिप्रायो विशेषणानाम् ।

किं वा प्रवृत्तावत्यन्तासमर्थं प्रति 'फलान्याहर' इत्यादिकार्यबोधकवाक्यप्रयोगस्य संभावनैव नास्ति प्रवृत्तौ समर्थं प्रत्येव कार्यबोधकवाक्यप्रयोगस्योपयुक्तत्वादिति प्रवृत्तावत्यन्तासमर्थं प्रत्युक्तस्य वाक्यस्य कार्यबोधकत्वमेव न संभवति येनात्र प्रवृत्त्यधीनाया अपि पार्श्वस्थव्युत्पत्तेः कार्यविषयत्वं संभाव्येतेत्यभिप्रायो विशेषणानाम् । अर्थाच्छ्रुत्वा=तद्वाक्यार्थं बुद्ध्वा । यतस्तस्य नदीतीरात् फलान्याहर्तुं प्रवृत्तस्य पुरुषस्य फलादिशब्दानां शक्तिग्रहः प्रथमं जातोस्तीत्युक्तम् "अर्थाच्छ्रुत्वा" इति । अन्यः=पार्श्वस्थः शब्दस्य सामर्थ्यं व्युत्पद्यते=फलादिशब्दानां शक्तिं गृह्णाति, न च तत्र व्युत्पत्तिः कार्यविषयेत्युपसंहरति-तस्मादिति । एकान्ततः=नियमेन सर्वत्र ।

पूर्वम् "कश्चित्त्वाह-कार्यरूपो वेदार्थो न सिद्धरूपः" इत्यारभ्य कार्ये एव शब्दस्य प्रामाण्यमिति मतं निरस्य शब्दस्य सिद्धेर्थेपि शक्तिं संस्थाप्य संप्रति तस्य मतेन तमेव द्वितीयसूत्रस्य वाक्यार्थं पृच्छति-का चास्येति, अस्य="चोदनालक्षणोर्थो धर्मः" इति सूत्रस्य, का=किंस्वरूपा। वचनव्यक्तिः=वाक्यार्थः । निरूपयति-यदीत्यादिना, पूर्वपक्षिणा तु पूर्वमेवोक्तम्-"चोदनालक्षणशब्देन कार्यमुच्यते धर्मशब्देन वेदार्थः" इति एतदेवेदानीमप्याह-"यत्कार्यं तद्वेदार्थ एव" इति । तथा च चोदनालक्षणशब्दवाच्यं कार्यमुद्दिश्य धर्मशब्दवाच्यं वेदार्थत्वं विधीयते सूत्रेणेति यद् यत् कार्यं तत्तद्वेदार्थ इति सूत्रस्य वाक्यार्थो जातः । अत्र दोषमाह-तथा सतीति । तथा च उद्देश्यस्य उपादेयेन=विधेयेन सह स्वरसनियमात्=नैसर्गिकनियमात् यो धूमवान् स वह्निमानितिवत् कार्य-

**र्वस्य लौकिकस्यापि गवानयनादिकार्यस्य वेदार्थता स्यात्। किं चोपादेयस्य वेदार्थस्योद्देश्येन कार्यरूपेणाग्नेरिव धूमेनाव्याप्तेरऽकार्येपि वेदस्य प्रामाण्यमनिरस्तं स्यात्।**

**अथ 'यो वेदार्थः स कार्यरूप एव' इति, ततो यो धर्मः स चोदनालक्षण इति वचनव्यक्तिः स्यात्, तत्रार्थशब्दोऽभ्युदयवाची कस्य विशेषणम्?, यद्युपादेयस्य चो-**

---

मात्रस्य वेदार्थता स्यादिति लौकिकस्य गवानयनादिकार्यस्यापि वेदार्थता स्यात्, न चैतद् युक्तम्—लौकिकगवानयनादिकार्यस्य वेदार्थत्वासंभवात्।

उक्तव्याप्त्यापि स्वेष्टं साध्नोति—किं चेति, यथा यो धूमवान् स वह्निमानिति व्याप्तिसत्त्वेपि यो वह्निमान् स धूमवानिति व्याप्तिर्न भवत्यऽयोगोलके व्यभिचारात्, तथा यत्कार्यं तद्वेदार्थ एवेति नियमे कृतेपि यत्कार्यं न न तद्वेदार्थः किं वा यो वेदार्थः स कार्यमेवेति नियमस्तु न सिद्ध्यति, तथा च कार्यस्य वेदार्थत्वे सिद्धेपि वेदार्थस्य त्वकार्यतापि सिद्ध्यत्येवेति सिद्धार्थेपि वेदानां प्रामाण्यं सिद्धम्। यथा वह्नेर्धूमेन व्याप्तिर्नास्ति धूमस्यैव वह्निना व्याप्तत्वात् तथा उपादेयस्य=विधेयस्य वेदार्थस्य=वेदार्थतायाः उद्देश्येन कार्यरूपेणाव्याप्तेः=व्याप्तेरभावात् तव मतेन कार्यत्वस्यैव वेदार्थत्वेन व्याप्तत्वादित्यऽकार्येपि= सिद्धार्थेपि वेदस्य प्रामाण्यं अनिरस्तम्=उक्तव्याप्त्या न निरस्तं किं तु सिद्धमेवेत्यर्थः।

ननु नैवं नियम्यते—यत्कार्यं तद्वेदार्थ इति येनोक्तदोषः स्यात्, किं तु वेदार्थमुद्दिश्य कार्यत्वं विधीयते—यो वेदार्थः स कार्यरूप इति तथा च न लौकिकस्य गवानयनादिकार्यस्य वेदार्थताप्राप्तिरित्याह—अथेति। अत्राह—तत इति, यो वेदार्थः स कार्यरूप इत्येवमुद्देश्यविधेयभावोक्तौ यो धर्मः स चोदनालक्षण इत्येवं सूत्रस्य वाक्यार्थो जातस्त्वया "चोदनालक्षणशब्देन कार्यमुच्यते धर्मशब्देन वेदार्थः" इति व्याख्यातत्वात्। अत्र च सूत्रे त्रयः शब्दाः सन्ति—चोदनालक्षणः १ अर्थः २ धर्मः ३ इति, तत्र धर्मशब्द उद्देश्यवाचकश्चोदनालक्षणशब्दश्च विधेयवाचकः, तृतीयोऽर्थशब्दः कस्य विशेषणम्? केन सहान्वेतीति शङ्कते—तत्रेति, यदि—उपादेयस्य=विधेयस्य चोदनालक्षणपदार्थ-

दनालक्षणपदार्थस्य ? ततः सर्वस्य वेदार्थस्य कार्यत्वम-र्थत्वं च विधीयते इति श्येनादिनियोगानामप्यर्थत्वं स्यात् ।

अथोद्देश्यवेदार्थविशेषणम् ?, ततोऽयमर्थो भवति-योऽर्थात्मकः=अभ्युदयात्मको वेदार्थः स कार्यरूपः, ततश्च श्येनादिनियोगानां निषिद्धफलत्वेनाऽनभ्युद-यरूपाणां कार्यता न स्यात् ।

---

स्य = कर्यत्वस्यार्थशब्दो विशेषणं ततो वेदार्थमुद्दिश्यार्थत्वविशिष्टं कार्यत्वं वि-हितं स्यादिति सर्वस्यैव वेदार्थस्य श्रेयस्साधनत्वरूपमर्थत्वं कार्यत्वं च प्राप्तमि-ति तव मते श्येनादिनियोगानामपि श्रेयस्साधनत्वरूपमर्थत्वं स्यात्, न चैवं युक्तमित्याह–यदीति ।

ननु नार्थशब्दश्चोदनालक्षणपदार्थस्य कार्यत्वस्य विशेषणं येन श्येना-दिनियोगानां कार्यत्वेन सहार्थत्वमपि प्राप्नुयात्, किं तूद्देश्यस्य वेदार्थस्यार्थ-शब्दो विशेषणमित्याह–अथोद्देश्येति । अत्र दोषमाह–तत इति । अर्थात्मक-त्वं स्वयं व्याचष्टेऽभ्युदयात्मक इति । अभ्युदय एवार्थः श्रेयस्साधनमिति यावत् । एवं हि योर्थस्वरूपो वेदार्थस्तस्यैव कार्यरूपता प्राप्ता नान्यस्य तथा च श्येनादिनियोगानां कार्यत्वं न स्यात् तेषां निषिद्धफलत्वेन श्रेयस्साधन-त्वाभावादित्याह– ततश्चेति । श्येनादिनियोगानामनभ्युदयरूपत्वे हेतुमाह–निषिद्धफलत्वेनेति । उक्तं च भाष्यकारेण–"कोऽनर्थः ? यः प्रत्यवायाय श्येनो वज्र इषुरित्येवमादिः, तत्रानर्थो धर्म उक्तो मा भूदिति अर्थग्रहणम्, कथं पुनरसावऽनर्थः ? हिंसा हि सा हिंसा च प्रतिषिद्धा" इति । श्रूयते च–"मा हिंस्यात्सर्वा भूतानि" इति ।

ननु ज्योतिष्टोमादिष्वपि हिंसायाः सत्त्वादनर्थत्वं स्यात्तेषामिति चेत् ? न, "अग्नीषोमीयं पशुमालभेत" इत्यादिवाक्यानां पिष्टपशुविषयत्वात्" । ननु पिष्टपशोरालम्भनं न संभवति जडत्वादिति चेत् ? चेतनस्यात्मनोऽपि न सं-भवति तस्य नित्यत्वात् । शरीरस्य च तत्रापि जडत्वात् । ननु प्राणवियोजनं ह्यालम्भनशब्दवाच्या हिंसा सा च जीवत्पशुवत् पिष्टपशोर्न संभवतीति चेत् ? आलम्भनादिशब्दानामाकारविघट्टने लक्षणां वक्ष्यामः किं बहुना साक्षाद्धन्तेर-

**मा भूदिति चेत् ? न, तेषामपि लिङा कार्यता-ऽवगमात् । श्येनयागस्य कार्यता निवारयितुं शक्यते न नियोगस्य तस्य कार्यैकस्वभावत्वात् । असति च कार्यत्वे श्येनवाक्यस्य कार्यार्थत्वाऽभावात् सिद्धार्थ-तैव वक्तव्या स्यात्, न च तथा संभवति विधिप्रत्य-ययोगात् । सिद्धे चार्थे व्युत्पत्तिविरहादप्रामाण्यमेव श्येनादिवाक्यानां स्यात् ।**

---

प्याकारविघटनेष्वऽपकारेषु च प्रयोगो भवति यथा हतो मया घटो हतो मया देवदत्त इति तत्र घटस्याकारविघटनं कृतं देवदत्तस्य चापकारमात्रं कृतं न तु प्राणवियोजनम्, एवमत्राप्याकारविघटने लक्षणा । आकारविघटनं च पिष्ट-कृतपशोरपि संभवत्येव । लक्षणाश्रयणमेव दोष इति चेत् ? न, मा हिंस्यादिति श्रुतिविरोधसंपादनापेक्षया वरं लक्षणाश्रयणम् । को हि विद्वान् वाक्यस्य गतौ सत्यामनर्थस्वरूपां हिंसामाचरेदिति परमवैष्णवसिद्धान्तः । निर्दयानां पुनर्मीमांसकानां तु मते फलभूतैव हिंसाऽनर्थरूपा न तु साधनकोटिप्रविष्टेति ज्योतिष्टोमादीनां फलं न हिंसेति न तेषामनर्थत्वम् । श्येनादीनां तु हिंसैव फलमिति तेषामनर्थत्वम् । अलमधिकेन प्रकृतमनुसरामः ।

ननु मा भूच्छ्येनादीनां कार्यत्वमित्याशङ्कते—मा भूदिति । परिहरति—नेति तेषामपि=श्येनादीनामपि । कार्यताबोधको लिङेव स च "श्येनेनाभिचरन् यजेत" इत्यत्रापि श्रूयते इत्यर्थः । नियोगस्य कार्यैकरूपत्वात् श्येनादिनियोगात् कथं का-र्यता निवर्तेतेत्याह—श्येनयागस्येति । विपक्षे बाधकमाह—असतीत्यादिना । "श्ये-नेनाभिचरन् यजेत" इति श्रुतिवाक्यस्य किं चित्पदार्थबोधकत्वमवश्यं वक्तव्यं श्येननियोगस्य यदि कार्यत्वं नास्ति तदा सिद्धत्वमेव वक्तव्यं गत्यन्तराभावात्, श्येननियोगस्य सिद्धत्वे श्येनवाक्यस्यैव सिद्धार्थबोधकत्वं स्यात् न चैवं युक्तं यजेतेत्यत्र विधिप्रत्ययस्य लिङः श्रवणादित्याह—न चेति । किं च यदि श्ये-नादीनां सिद्धत्वमेव तदा तव मते सिद्धार्थे शब्दस्य शक्तिग्रह एव न भवतीति शक्तिग्रहाभावेन बोधकत्वाभावादप्रामाण्यमेव श्येनादिवाक्यानां स्यादित्याह—सिद्धे चार्थ इति ।

अथ पूर्वसूत्राद्वेदार्थपरं धर्मपदमनुषज्य 'चोदनालक्षणो वेदार्थः' इत्येकं वाक्यम् 'अर्थो धर्मः' इत्यपरं वाक्यम् । तदिदं स्वप्रज्ञाविलसितमात्रम्, अनुषङ्गवाक्यभेदयोर्विना फलमाश्रयणात् । अप्रतिज्ञातस्य च धर्मस्य लक्षणमसङ्गतम् ।

अथ प्रतिज्ञातस्यैव वेदार्थस्य कार्यत्वसिद्धये धर्मत्वमुच्यते ? । किं कार्य एव धर्मरूपो वेदार्थः स एव जिज्ञास्यो नान्यः ?, तथा चेत् ? य एव जिज्ञास्यो धर्मस्तस्यैव सूत्राक्षराविनाशेन जिज्ञासा प्रतिज्ञातव्येति वेदार्थप्रतिज्ञावचनमनर्थकम् ।

---

ननु प्रथमसूत्राद् धर्मशब्दस्यानुवृत्तिं कृत्वा वाक्यभेदेनैतत्सूत्रं व्याख्यास्यामो यथा–'चोदनालक्षणो वेदार्थः, इत्येकं वाक्यम् 'अर्थो धर्मः' इति द्वितीयं वाक्यमिति, तथा च श्येनादीनामपि वेदार्थानां चोदनारूपत्वात् प्रथमवाक्येन कार्यत्वं प्राप्तम्, हिंसाफलत्वेनाऽनर्थत्वात् द्वितीयवाक्येन धर्मत्वव्युदासोपि जात इति नोक्तदोषः । ज्योतिष्टोमादीनां च वेदार्थानां चोदनारूपत्वात् कार्यत्वं प्राप्तमर्थत्वाच्च धर्मत्वमपि प्राप्तमित्याशङ्कते–अथेति । अनुषज्य= अनुवृत्तिं कृत्वा । परिहरति–तदिदमिति । हेतुमाह–अनुषङ्गेति । अनुषङ्गोऽनुवृत्तिः । अनुवृत्तेर्वाक्यभेदस्य च फलं विनैवाश्रयणान्नायं पक्षः समीचीनः । दोषान्तरमाह–अप्रतिज्ञातस्येति । प्रथमसूत्रे धर्मशब्दस्य वेदार्थपरत्वे वेदार्थ एव निरूपणाय प्रतिज्ञातो भवति न तु धर्मस्तथा चानेन द्वितीयेन सूत्रेण निरूपणाय प्रतिज्ञातस्य वेदार्थस्यैव लक्षणवचनमुचितं न तु धर्मस्य लक्षणमिति निरूपणाया ऽप्रतिज्ञातस्य धर्मस्य लक्षणवचनमसङ्गतमित्यर्थः ।

ननु प्रथमसूत्रे निरूपणाय वेदार्थ एव प्रतिज्ञातो वेदार्थं निरूपयिष्याम इति धर्मशब्दस्य वेदार्थपरत्वात्, तस्यैव वेदार्थस्यानेन सूत्रेण कार्यत्वसिद्धये धर्मत्वमुच्यते, धर्मस्य कार्यरूपत्वाद् धर्मत्वे उक्ते कार्यत्वं सुतरां वेदार्थस्य प्राप्स्यतीत्याह–अथेति । अत्र परिहारमारभते–किमित्यादिना । एवं हि यो वै धर्मरूपत्वात्कार्यरूपो वेदार्थः स एव जिज्ञास्यः स्यात् न तु सर्व एवार्थवादादिसहितो वेदार्थः, तथा चेत् ?=यदि न सर्वो वेदो जिज्ञास्यस्तदा तस्यैव जि-

अथ त्वर्थशब्दमनादृत्य यो वेदार्थः स कार्यरूप इत्युच्यते ?, ततोर्थपदमनर्थकं वस्तुमात्रपर्यायमनुवादकं स्यात् । अनर्थव्युदासार्थता चास्य भाष्यकारेणोक्ता, तस्माद्विशेषणमेवैतत् । विशेषणत्वे चाभ्युदयरूपस्य

---

ज्ञास्यस्य कार्यरूपस्य वेदार्थस्य प्रथमसूत्राक्षरानुसारेण जिज्ञासायाः प्रतिज्ञोचिता न तु सामान्यतः सर्वस्यैव कार्याकार्यरूपस्य वेदार्थस्य जिज्ञासायाः प्रतिज्ञोचिता प्रथमसूत्रेण । उक्तं च त्वया प्रथमसूत्रे धर्मशब्दस्य वेदार्थपरत्वेन सामान्यतः सर्वस्यैव वेदार्थस्य निरूपणाय प्रतिज्ञा कृतेति पूर्वापरविरोध इत्यर्थः । वेदार्थप्रतिज्ञावचनमित्यत्र वेदार्थशब्दः सामान्यतो सर्ववेदार्थपरो ज्ञेयः । "नान्यः" इत्यत्र "न सर्वः" इत्यपि पाठान्तरम् ।

नन्वर्थशब्दो न वेदार्थस्योद्देश्यस्य विशेषणं न वा विधेयस्य कार्यत्वस्य विशेषणमित्यर्थशब्दमनादृत्यैव "यो वेदार्थः स कार्यरूपः" इत्येतावन्मात्रं सूत्रेणोच्यते=वेदार्थमुद्दिश्य कार्यत्वं विधीयते, तथा च नोक्तदोषाः इत्याह—अथेति । परिहरति—तत इति । एवं ह्यर्थपादाऽनादरे तस्यानर्थकत्वं स्यात् न च सूत्रपदैरनर्थकैर्भवितव्यम् । तथा च व्याख्येयानि सूत्राणि यथा न सूत्रपदान्यऽनर्थकानि स्युः । अर्थपदस्य विशेषणत्वाभावादानर्थक्यं तथा चार्थपदं वस्तुमात्रवाचकत्वाद्वस्तुशब्दस्य पर्यायं स्यात् चोदनालक्षणः पदार्थोपि वस्त्वेव तस्य च वस्तुत्वं लोकत एव प्राप्तमस्तीति वस्तुत्वानुवादकं स्यादर्थपदमित्यर्थः । वस्तुमात्रपरमिति वा पाठः । अत्र बाधकमाह—अनर्थेति । अस्य=अर्थशब्दस्य । अनर्थानां श्येनादीनां धर्मत्वं न स्यादित्यर्थशब्दप्रयोजनम् । चोदनालक्षणवेदार्थस्य च विशेषणम् । अनर्थस्य श्येनादेर्व्युदासः धर्मत्वाप्राप्तिः । अर्थशब्दाऽनादरे च भाष्यविरोधः स्यादिति भावः । उपसंहरति—तस्मादिति । एतत्=अर्थपदम् ।

विशेषणत्वे चाभ्युदयवाच्यऽयमर्थशब्दो वेदार्थस्यैव विशेषणं स्यादिति त्वया 'योऽभ्युदयरूपो वेदार्थो यथा ज्योतिष्टोमादिः स एव कार्यरूपः' इत्येव वक्तव्यं तथा चानभ्युदयरूपस्य श्येनादेः कार्यत्वं न प्राप्तं अस्ति च वेदवाक्यानां श्येनादिबोधकत्वमन्यथा श्येनादिवाक्यानामाऽऽनर्थक्यं प्रसज्येत तथा चाऽकार्यरूपश्येनादिप्रतिपादनादकार्यरूपेप्यर्थे वेद-

वेदार्थस्य कार्यत्वाभिधानादऽनभ्युदयरूपस्य वेदार्थस्य कार्यत्वं न स्यादिति सर्वस्य वेदस्य कार्ये एव प्रामाण्यमिति नियमो न स्यात्। ततश्च "अविनाशी वा अरे अयमात्मा" इत्यादीनामात्मस्वरूपपरत्वं न निराकर्तव्यमित्यास्तां तावत्। तस्माद्धर्मस्वरूपप्रमाण प्रतिपादनार्थमेवेदं सूत्रम्।

तदिह धर्मं विषयीकृत्य चिन्त्यते—किमस्य न किंचित् प्रमाणमस्ति? किं वा प्रत्यक्षादिकमेव प्रमाणम्? उत चोदनैव? अथ वा विकल्पः? अथ वा समुच्चयः? इति। तत्र शब्दस्य प्रमाणान्तरप्राप्तप्रापकत्वेन स्वय-

---

स्य प्रामाण्यं प्राप्तमेवेति सर्वस्य वेदस्य कार्ये एव प्रामाण्यमिति तव नियमो पराहत इत्याह—विशेषणत्वे चेति। उपसंहरति—ततश्चेति। यथा उक्तरीत्या तव मतेनाऽकार्यरूपेपि श्येनादौ वेदस्य प्रामाण्यं प्राप्तं तथा सिद्धेष्वात्मादिपदार्थेष्वपि "अविनाशी वा" इत्यादिवेदवाक्यानां प्रामाण्यं प्राप्तमेवेति सिद्धम्। यदुक्तम्—"किमिदानीमात्मादिवाक्यानामप्रामाण्यप्रतिपादनपरमिदं सूत्रम्?" तत्स्मारयति—न निराकर्तव्यमिति। यदुक्तम्—"कश्चित्वाह—कार्यरूपो वेदार्थो न सिद्धरूप इत्येतदनेन सूत्रेणोच्यते" इति तत्परिहरन्नुपसंहरति—तस्मादिति। सिद्धरूपो न वेदार्थ इति प्रतिपादनपरमिदं सूत्रं नास्ति, किं तु धर्मस्वरूपस्य धर्मप्रमाणस्य च प्रतिपादनार्थमेवेदं सूत्रमित्यर्थः।

पूर्वपक्षनिराकरणादनन्तरं स्वमतमुपस्थापयति—तदिहेति। इह=द्वितीयसूत्रे। प्रमाणं विना प्रमेयसिद्धिर्न भवतीत्युक्तम्—"मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणात्" इति। प्रमेये प्रकृते धर्मे किमपि प्रमाणमस्ति न वेत्याशङ्क्य पञ्चधा विकल्पयति—किमस्येति। प्रमाणाभावे प्रथमः पक्षः, अपरे खलु चत्वारः पक्षाः प्रमाणसत्तापरा एव। विकल्प इति—धर्मे प्रत्यक्षमपि प्रमाणमस्ति चोदनापि, तत्र योगिनां धर्मे प्रत्यक्षमपि प्रक्रमते चर्मचक्षुषां तु धर्मे प्रत्यक्षं न प्रक्रमते किं तु चोदनैव प्रमाणमिति व्यवस्थितविभाषारूपो विकल्प इत्यर्थः। समुच्चय इति—धर्मे प्रत्यक्षमर्थापत्तिश्चोदना चेति बहूनि प्रमाणानि सन्तीति प्रमाणसमुच्चयः। स्पष्टाश्चान्ये पक्षाः। प्रथमं प्रमाणाभावपक्ष-

मप्रमाणत्वात् प्रत्यक्षादीनां चाऽसामर्थ्यादप्रमाणको धर्म इत्येकः पक्षः, प्रत्यक्षादिगम्य एवेत्येकः पक्षः, योगिनां प्रत्यक्षगम्यः, अर्वाचीनानां तु चोदनागम्य इत्यपरः, जगद्वैचित्र्यार्थापत्त्या किमप्यदृष्टमस्तीति सामान्येन प्रसिद्धो धर्मश्चोदनयाऽग्निहोत्रादिविशेषरूपेण गम्यते तस्मात्समुच्चय इति पक्षान्तरम्, चोदनैव सा च प्रमाणमेवेति सिद्धान्तः । तदिह चोदनैव प्रमाणं सा च प्रमाणमेवेत्यवधारणद्वयं प्रतिज्ञायते ।

निमित्तसूत्रे तु प्रथमद्वितीयसूत्रमात्रालोचनया

---

मुपपादयति—तत्रेति, प्रत्यक्षादिना प्रमाणान्तरेण ज्ञातस्यैव शब्देन ज्ञानं भवति तस्मान्न शब्दः स्वयं प्रमाणमऽज्ञातार्थज्ञापकस्यैव प्रमाणत्वादिति शब्दस्य धर्मबोधकत्वेपि प्रमाण्याभावान्न धर्मे शब्दोपि प्रमाणम् । धर्मस्येन्द्रियगोचरत्वायोग्यत्वान्न तत्र प्रत्यक्षमपि प्रमाणम् । अनुमानादीनां च प्रत्यक्षमूलकत्वाद् धर्मस्य चाप्रत्यक्षत्वान्न तत्रानुमानादीन्यपि प्रमाणानीति न धर्मे किमपि प्रमाणमस्तीत्यर्थः । द्वितीयपक्षमाह—प्रत्यक्षादिगम्येति, यागादिरेव धर्मः स च क्रियारूपत्वात्प्रत्यक्ष एवेत्यर्थः । चतुर्थपक्षमाह—योगिनामिति, अतीन्द्रियविषयकमपि योगिनां प्रत्यक्षं भवतीति धर्मोपि तेषां प्रत्यक्षगम्य एव, अर्वाचीनानाम्=अयोगिनां तु यजेतेत्यादिचोदनागम्य एवेत्यर्थः । पञ्चमपक्षमुपपादयति—जगदिति । यत्कार्यं तत्सकारणकमिति व्याप्त्या जगति कोपि राजा कोपि भिक्षुक इत्यादिवैचित्र्यस्याऽस्ति किमपि कारणं तच्चादृष्टमेवेत्यऽर्थापत्त्या समान्यतो ज्ञातोपि धर्मश्चोदनया विशेषतोऽग्निहोत्रादिरूपेण ज्ञायतेऽग्निहोत्रादिरेव धर्म इति प्रमाणसमुच्चय इत्यर्थः । तृतीयपक्षस्य सिद्धान्तरूपत्वात्तमिदानीमाह—चोदनैवेति, अन्ययोगव्यवच्छेदेनाह—चोदनैवेति, प्रमाणमिति शेषः । अयोगव्यवच्छेदेनाह—सा चेति । सा=चोदना । उपसंहरति—तदिहेति । इह=द्वितीयसूत्रे । अवधारणद्वयम्=अन्ययोगव्यवच्छेदोऽयोगव्यवच्छेदश्च ।

संप्रति वक्ष्यमाणानां केषां चित्सूत्राणामत्र संक्षेपेणाभिप्रायं वक्तुमारभते—निमित्तसूत्रे इत्यादिना । निमित्तसूत्रे=तृतीयसूत्रे । प्रथमद्वितीयसूत्रयोस्तु धर्ममीमांसा कापि नारब्धेति तत्सूत्रालोचनेनाऽऽलोचकानां "वेदो धर्ममूलम्"

वेदो धर्ममूलमित्यादिवदुपदेशशास्त्रताशङ्का मा भू-
दिति परीक्षाशास्त्रमेवेदमिति ज्ञापयितुं परीक्षाप्र-
तिज्ञानम् । यद्यपि चोपरितनव्यापारादेव परीक्षाशा-
स्त्रत्वं गम्यते तथापि वक्ष्यमाणमेव श्रोतृबुद्धिसमाधा-
नाय कीर्तितम् ।

प्रत्यक्षसूत्रे तु प्रत्यक्षस्य विद्यमानोपलम्भनत्वाद्
भविष्यति धर्मे प्रामाण्याऽसंभवात् तत्पूर्वकत्वेनेतरे-
षामप्यऽप्रामाण्यात् प्रमाणान्तर–नियम–विकल्प–स-
मुच्चयनिराकरणाच्चोदनैवेत्ययमर्थः सिद्ध्यति ।

औत्पत्तिकसूत्रे तु स्वतःप्रामाण्यमऽर्थान्यथात्व–का-
रणदोषज्ञानाभ्यामऽप्रामाण्यमित्याश्रित्याग्निहोत्रादि-

---

इत्यादिवाक्यवदऽस्मिन् शास्त्रेप्युपदेशशास्त्रमिदं न विचारशास्त्रमित्याशङ्का मा भवतु किं तु परीक्षाशास्त्रम्=विचारशास्त्रमेवेदमिति बोधयितुं "तस्य निमित्तपरीष्टिः" इति परीक्षायाः विचारस्य प्रतिज्ञा कृता । यद्यपि चोपरितनव्यापारात्=परीक्षाव्यापारादग्रिमसूत्रैः क्रियमाणाद् वैष्णववेषेण वैष्णव इव परीक्षाशास्त्रमिदमित्यवगन्तुं शक्यते एव–येन शास्त्रेण यत्प्रतिपाद्यते तच्छास्त्रं तद्विषयकमेवेति नियमात् । तथापि वक्ष्यमाणमेव धर्मपरीक्षणं श्रोतॄणां बुद्धेः समाधानाय नामेदानीमाचार्यो धर्मपरीक्षामारप्स्यते इति बोधनाय वक्ष्यमाणं धर्मपरीक्षणं कीर्तितम् । यथा करिष्यमाणामेव नाट्यकथां कीर्तयन्ति नटा इत्यर्थः ।

चतुर्थसूत्रस्याभिप्रायमाह–प्रत्यक्षसूत्र इति । प्रत्यक्षं तु प्रमाणं विद्यमानस्यैव विषयस्योपलम्भनं ग्राहकं भवति धर्मस्तु भविष्यतीति न विद्यमान इति न प्रत्यक्षं धर्मग्राहकं भवतीति न धर्मे प्रत्यक्षस्य प्रामाण्यं संभवति, अनुमानादयश्च प्रत्यक्षपूर्वका एवेति प्रत्यक्षस्य धर्मे प्रक्रमाभावादनुमानादीनामपि न धर्मे प्रामाण्यं तस्मात् प्रमाणान्तराणां चोदनाभिन्नप्रत्यक्षादीनां धर्मे नियमो विकल्पः समुच्चयश्च न संभवतीति तेषां निराकरणाच्चोदनैव धर्मे प्रमाणमित्यर्थश्चतुर्थसूत्रेण सिद्ध्यतीत्यर्थः ।

पञ्चमसूत्रस्याभिप्रायमाह–औत्पत्तिकेति । प्रमाणत्वेनाभिमतस्य यदऽप्रामाण्यं भवति तदऽर्थान्यथात्वज्ञानेन भवति यथा शुक्तिरजतज्ञानस्थलेऽर्थस्य ज्ञा-

चोदनाभ्योऽसंदिग्धज्ञानोत्पत्तेः स्वतःप्रामाण्यं प्राप्तम्। न चापवादकमर्थान्यथात्वज्ञानं साक्षादस्ति, नापि कारणदोषज्ञानम्, पुरुषाश्रयत्वाच्छब्ददोषाणाम्। पदपदार्थसंबन्धस्याऽकृत्रिमत्वात् तद्द्वारेण पुरुषानुप्रवेशाभावाच्चोदनानामिति स्थिते—

'शब्दस्यैवानित्यत्वात् कुतः सम्बन्धनित्यता' इत्या-

---

यमानस्य रजतस्याऽन्यथात्वज्ञानेन=शुक्तित्वज्ञानेनाऽभावज्ञानेन वा शुक्तिरजतज्ञानस्याप्रामाण्यं भवति, कारणदोषज्ञानादपि ज्ञानस्याऽप्रामाण्यं भवति यथेन्द्रियेषु दुष्टत्वज्ञानात् यथा च वक्तर्यऽनाप्तत्वज्ञानात्, वाक्यकारणीभूते वक्तर्यनाप्तत्वं दोष एव। अग्निहोत्रादिचोदनासु त्वऽर्थान्यथात्वज्ञानं कारणदोषज्ञानं च द्वयमेव न संभवति विसंवादाभावादऽपौरुषेयत्वाच्च, ज्ञानं चासंदिग्धं ताभ्यो जायते इति स्वतःप्रामाण्यम्। इत्यादिकं पञ्चमसूत्रेण प्रतिपाद्यते इति भावः। उक्तमेव समाधत्ते— न चेति—वैदिकवाक्यजन्यज्ञानस्यापवादकम्=विपरीतं अर्थान्यथात्वज्ञानं साक्षादपि न संभवति, नहि "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति वाक्यजन्यज्ञाने जाते ज्योतिष्टोमेन स्वर्गो न भवतीति कस्य चित्प्रत्यक्षं भवति। कारणदोषज्ञानमपि न भवति येनाप्रामाण्यं भवेदित्याह—नापीति। हेतुमाह—पुरुषेति, शब्दे तु साक्षाद् दोषो न भवति किंतु तद्वक्तरि पुरुषे एव ये भ्रमप्रमादादयो दोषा भवन्ति ते शब्दे उपचर्यन्ते, वेदवाक्यानां चापौरुषेयत्वात् कथं तत्र कारणदोषः स्यादित्यर्थः।

ननु वेदस्यापौरुषेयत्वेपि पदपदार्थयोर्यो वै सम्बन्धस्तस्य कृत्रिमत्वात्तत्कर्ताऽवश्यं स्वीकर्तव्य इति पदपदार्थसम्बन्धद्वारेणैव वेदे पुरुषस्य प्रवेशः प्राप्तस्तथाच पदपदार्थसंबन्धकर्तृपुरुषस्याप्तत्वगुणेनैव वेदस्य प्रामाण्यं स्यादिति परतः प्रामाण्यं स्यान्न तु स्वतः प्रामाण्यमित्याशङ्क्याह—पदपदार्थेति। पदपदार्थयोरकृत्रिमोऽनादिरेव संबन्धोस्तीति न तद्द्वारेण=पदपदार्थसंबन्धद्वारेण पुरुषप्रवेश इति न स्वतः प्रामाण्यभङ्गः। चोदनानामित्यस्य पूर्वोक्तेन स्वतःप्रामाण्यमित्यनेनान्वयः।

ननु नहि घटस्यानित्यत्वे घटभूतलसंबन्धो नित्यो भवितुमर्हति, एवं शब्द एवानित्य इति कथं तस्य पदार्थेन सह संबन्धो नित्य स्यादित्याह—शब्दस्यै-

**क्षिप्य शब्दस्य नित्यतया शब्दाधिकरणे सम्बन्धनित्यत्वे समाहिते, मा भूत् पदपार्थसंबन्धद्वारेण पुरुषानुप्रवेशः, वाक्यवाक्यार्थयोस्तु लोके संबन्धादर्शनान्निर्मूलोऽग्निहोत्रादिवाक्यार्थप्रत्यय इत्यतो व्यामोहः सामयिको वा अतो न वाक्यार्थे वेदस्य प्रामाण्यमित्याशङ्क्य, पदार्थानां संबन्धग्रहणं समयं चानपेक्षमाणानामेव वाक्यार्थे प्रामाण्यं संभवतीति तद्भूताधिकरणेन प्रतिपादिते–**

---

वेति । इत्येवं प्रतिक्षिप्य, शब्दनित्यतां साधयित्वा पदपदार्थसंबन्धस्तस्य नित्यता च साधिता । पुनरपि तत्र यदाक्षिप्तं तदाह–मा भूदिति । पदपदार्थसंबन्धस्य नित्यत्वेन तद्द्वारा पुरुषस्य प्रवेशो वेदे मा भवतु वाक्यवाक्यार्थयोस्तु संबन्धो लोके न दृश्यते इति कृत्रिम एव वक्तव्यः, अत एवाभिनवकविविरचितवाक्यस्य क चिद्बोधो न भवति नित्यत्वे तु स्यादेव बोध इति वाक्यवाक्यार्थयोः सम्बन्धद्वारेणैव वेदे पुरुषप्रवेशोऽस्तीति प्राप्तं तथा च स्वतः प्रामाण्यभङ्गः । वेदस्यापौरुषेयत्वे च वैदिकवाक्यवाक्यार्थयोः सम्बन्धस्य कर्ता न स्यादिति निर्मूलत्वादग्निहोत्रादिवाक्यजन्यं ज्ञानमपि निर्मूलं स्यादिति अग्निहोत्रादिवाक्येभ्यो व्यामोहो भ्रम एवोत्पन्नः स्यान्न तु प्रमात्मकं ज्ञानम्, तथा च वेदवाक्यानां प्रामाण्यं न स्यात् । किं वा सामयिकः=साङ्केतिक एव वेदवाक्येभ्यो प्रत्ययः स्यादिति साङ्केतिकप्रत्ययजनकचेष्टादिवद् वेदवाक्यानामपि प्रामाण्यं न स्यात् । साङ्केतिकप्रत्ययजनकस्य प्रामाण्याभावात् । इत्येवमाशङ्क्य यत्समाधानं कृतं तदाह–पदार्थानामिति । वाक्यवाक्यार्थयोर्यः सम्बन्धस्तस्य ग्रहणं समयम्=ईश्वरसङ्केतं चानपेक्षमाणानामेव पदार्थानां वाक्यार्थे प्रामाण्यं सम्भवतीति नोक्त दोष इत्येवं तद्भूताधिकरणेन=पञ्चविंशतितमेन सूत्रेण प्रतिपादितम् ।

मीमांसकमते पदैः स्मृतानां पदार्थानामेव वाक्यार्थबोधे कारणत्वमस्ति तदभिप्रायेणोक्तं पदार्थानामिति । उक्तञ्च–"पदैरभिहिताः पदार्था एव वाक्यार्थं प्रतिपादयन्तीत्याचार्याः । किं च दीर्घतमेषु वाक्येष्वऽशक्यमेवानुसन्धानम्, असत्यपि च तस्मिन् पदार्थानुसन्धानमात्रेण वाक्यार्थः प्रतीयत इति

**पुनर्वेदानां वाक्यात्मकत्वात् काठकादिसमाख्यानाच्च पौरुषेयत्वात् तद्द्वारेण दोषसंस्पर्शमाशङ्क्य–स्मर्तव्यत्वे सत्यऽस्मरणाद् योग्यानुपलब्धिनिरस्तस्य कर्तुरनुमानासंभवात् समाख्यायाश्च प्रवचननिमित्तत्वादऽपौरुषेया वेदाः इति तदेकदेशानां चोदनानां सिद्धं प्रामाण्यमित्येवं समस्तः प्रथमः पादश्चोदनासूत्रप्रतिज्ञाता-**

---

सार्वजनीनमेतत्, तेन दृष्टानुगुण्यादपि पदार्थनिमित्तक एव वाक्यार्थो न पदनिमित्तो दृष्टबाधप्रसङ्गात् । तदाह–

"पदार्थानां च सामर्थ्यं गम्यमानमपह्नुतम् ।
आनन्तर्याद्धि वाक्यार्थस्तद्धेतुत्वं न मुञ्चति ॥"
पदार्थानां हि वाक्यार्थे स्पष्टोक्तात्र निमित्तता ॥
तस्मान्न वाक्यं न पदानि साक्षाद्वाक्यार्थबुद्धिं जनयन्ति, किं तु– ।
पदस्वरूपाभिहितैः पदार्थैः संलक्ष्यतेऽसाविति सिद्धमेतत् ॥" इति ।

पुनरपि प्रतिपक्षिणा तार्किकेण यदाशङ्कितं तदाह–पुनर्वेदानामिति । वाक्यात्मकत्वादिति–यद् यद्वाक्यं तत् पौरुपेयमेव दृष्टमिति वेदानामपि वाक्यात्मकत्वात् पौरुषेयत्वं प्राप्तम्, किं च 'इयं कठशाखा' इत्यादि नामश्रवणाच्च वेदानां पौरुषेयत्वं प्राप्तं कठेन प्रोक्तैव शाखा कठशाखेत्युच्येत एतत्समाख्यानेऽन्यकारणस्याभावात् तथा च वेदे पुरुषसम्बन्धः प्राप्त इति तद्द्वारेण=पुरुषद्वारेण वेदे दोषः संक्रामत्येवेत्याशङ्क्य "आख्या प्रवचनात् ३०" इति सूत्रे यत्समाहितं तदाह–स्मर्तव्येति । वेदा अपौरुषेया एव, काठकादिसमाख्यानां तु प्रवचनमेव कारणम्– यस्यां शाखायां यस्यर्षेरभिनिवेशो विशेषतोऽभूत्सा शाखा तस्यैवर्षेर्नाम्ना प्रसिद्धिं गता–यथा कठशाखेति । यदि वेदस्य कोपि प्रणेता भवेत्तदा तस्यावश्यं स्मरणं स्याद् यथा ऽमुकेन कृतेयं शाखेति यथा भारतसमाप्तौ स्मर्यते वेदव्यासेन कृतमित्यादि न चैवं वेदे कर्तृस्मरणमुपलभ्यते तस्मात्कर्तुर्योग्यानुपलब्धेर्नास्त्येव वेदस्य कर्ता । अनुपलब्ध्या च वेदकर्तुरभावे निश्चिते 'वेदः सकर्तृकः वाक्यत्वाद् भारतवत्' इत्याद्यनुमानेनापि तस्य सिद्धिर्न सम्भवति बाधितत्वात् । तस्माद्वेदानां तदेकदेशभूतचोदनानां च सिद्धं प्रामाण्यमिति शावरभाष्ये प्रथमपादान्त्याधिकरणे

र्थोपपादनेन तस्यैव परिकरः । सोऽयं भाष्यकारानुसारेण पादार्थोऽनुक्रान्तः । वृत्तिकारमतं तु पश्चादनुक्रमिष्यामः । प्रकृतमनुसरामः– प्रतिज्ञातं तावच्चोदनैव प्रमाणं सा च प्रमाणमेवेति ।

ननु प्रत्यक्षादेरन्यानपेक्षं प्रामाण्यं संभवतीति तस्यैव धर्मे प्रामाण्यम्, शब्दस्य तु सर्वदैव प्रमाणान्तरप्रमितविषयत्वान्न तदनपेक्षं प्रामाण्यं संभवतीति, उच्यते–प्रत्यक्षं तावत्संयुक्तविषयत्वेन विद्यमानोपलम्भनत्वाद्भविष्यति धर्मे न समर्थम् ।

---

निरूपितमित्यर्थः । तथा च द्वितीयसूत्रेण यो वै प्रतिज्ञातोऽर्थस्तस्यैव वेदप्रामाण्यादिनिरूपणेनोपपादनं भवतीति तस्यैव=चोदनासूत्रस्यैव समस्तः प्रथमः पादः परिकरः=उपजीवकः । इत्येवं "निमित्तसूत्रे तु" इत्यत आरभ्य सङ्क्षेपेण प्रथमपादस्याभिप्रायः प्रदर्शितः । विस्तरेण तु तत् तत्सूत्रस्थाने वक्ष्यते । उपसंहरति–सोयमिति । अनुक्रान्तः=सङ्क्षेपेण प्रदर्शितः । एनामप्रकृतचिन्तां परित्यजति–प्रकृतमिति । पूर्वं सिद्धान्तितमर्थं स्मारयति–प्रतिज्ञातमिति ।

ननु सर्वेषु प्रमाणेषु ज्येष्ठत्वं स्वतन्त्रत्वं च प्रत्यक्षस्यैवाऽन्येषां तु सर्वेषामेव प्रमाणानां येन केनापि प्रकारेण प्रत्यक्षपरतन्त्रतैवास्तीति न वास्तवं तेषां स्वतः प्रमाण्यं संभवति तथा चान्यानपेक्षस्य प्रत्यक्षस्यैव धर्मे प्रामाण्यं युक्तं यागक्रियैव धर्मः सा च प्रत्यक्षेणोपलभ्यत एव । शब्दस्तु प्रामाणान्तरेण प्रमितमेव विषयं बोधयतीति तस्य तदनपेक्षम्=प्रत्यक्षानपेक्षं प्रामाण्यं नास्तीति न शब्दस्य स्वतः प्रामाण्यं सम्भवति, प्रमाणान्तरानपेक्षस्यैव प्रमाणस्य स्वतः प्रामाण्यसंभवादित्याशङ्कते– नन्विति । प्रत्यक्षादेरित्यादिशब्दः प्रत्यक्षस्यानेकविधत्वाभिप्रायः किं वादिशब्देनानुमानस्य ग्रहणम् । अत्राह–उच्यत इति । प्रतिपादयति–प्रत्यक्षमित्यादिना । प्रत्यक्षं हीन्द्रियसंनिकृष्टमात्रस्य ग्राहकं भवति धर्मस्तु न संप्रति सिद्धः किं त्वग्रे भविष्यति, स्वसत्ताकालेपि नेन्द्रियसंनिकर्षयोग्यो भवतीति न प्रत्यक्षं धर्मं विषयीकर्तुं समर्थम् । संयुक्तविषयत्वेन=इन्द्रियसंयुक्तविषयकत्वेन । विद्यमानोपलम्भनत्वात्=वर्तमानविषयग्राहकत्वात् ।

यद्यपि गोदोहनादिद्रव्यम्, यागादिक्रिया, नीचैस्स्वादिगुणश्च, फलसाधनत्वाद् धर्मशब्देनोच्यते नाऽपूर्वादय इति श्रेयस्करभाष्ये वक्ष्यते, तथापि तेषां फलसाधनरूपेण धर्मत्वात् फलस्य च जन्मान्तरादिभावित्वाद् धर्मस्वरूपेण प्रत्यक्षविषयत्वं न सम्भवति, तत्पूर्वकत्वाच्चानुमानादिकमपि न प्रमाणम् ।

भावनाबलजं तु योगिप्रत्यक्षं भविष्यत्यपि धर्मसमर्थमिति मनोरथमात्रम्। भावना ह्यनुभूतगोचरनियतानुभूतेष्वेव निश्चयरूपां स्मृतिं जनयेत्। न च सात्र प्रमाणं

---

यद्यपीति, "गोदोहनेन पशुकामस्य" इत्युक्तं गोदोहनं पात्रविशेषः। नीचैस्त्वं स्वरधर्मः। यद्यपि गोदोहनादय एव फलसाधनत्वाद् धर्मशब्दव्यपदेश्या भवन्ति न यागादिजन्यमऽपूर्वमिति श्रेयस्करभाष्ये=अर्थशब्दव्याख्यानपरे शावरभाष्ये वक्ष्यते। तथापि तेषाम्=यागादीनां फलसाधनत्वेनैव रूपेण धर्मत्वं वक्तव्यमन्यथा लौकिकघटादीनामपि धर्मत्वं स्यात् फलं च प्रायेण जन्मान्तर एव भवतीति संप्रति फलस्या ऽप्रत्यक्षत्वाद् यागादौ फलसाधनत्वमपि न प्रत्यक्षं तथा च यागादीनां स्वरूपेण प्रत्यक्षविषयत्वेपि न धर्मत्वरूपेण प्रत्यक्षविषयत्वं यागादौ धर्मस्वरूपतासंपादकस्य फलस्या ऽप्रत्यक्षत्वात्। यथा दण्डस्य स्वरूपेण प्रत्यक्षविषयत्वेपि घटस्याप्रत्यक्षे दण्डस्य घटकारणतारूपेण प्रत्यक्षं न संभवति तथा। प्रत्यक्षस्य धर्मे सामर्थ्याभावात् प्रत्यक्षापेक्षिणामनुमानादीनामपि धर्मे न सामर्थ्यमित्याह—तत्पूर्वकत्वाच्चेति।

भावनेति । भावना नामानुभूतपदार्थस्य पुनः पुनरनुसन्धानं योगिनां प्रत्यक्षं च भावनालक्षणबलजन्यमपि भवति तस्य च भविष्यत्यपि पदार्थे सामर्थ्यं भवतीति योगिप्रत्यक्षविषयो धर्म इति बौद्धमतमाशङ्क्याह—मनोरथमात्रमिति, इदमपि मनोरथमात्रम्, न युक्तमित्यर्थः । हेतुमाह—भावनेति । अनुभूतगोचरनियता=अनुभूतविषयनियता=नियमेनानुभूतपदार्थविषयैव भावना भवतीत्यनुभूतेष्वेव पदार्थेषु निश्चयरूपाम्=दृढां स्मृतिमुत्पादयिष्यति न च धर्मं विषयीकरिष्यति । अनुभूतगोचरनियतेति पृथक्पदं भावनाविशेषणम्। अनुभूतेष्विति विषयत्वं सप्तम्यर्थः। धर्मस्य भा-

**स्मृतित्वादेव, नतरां प्रत्यक्षमनिन्द्रियजत्वात् ।**

**नेन्द्रियजत्वं प्रत्यक्षलक्षणम्, अपि तु कल्पनापोढत्वमि तिचेत्? सुतरां धर्मस्याऽप्रत्यक्षत्वं फलसाधनरूपस्यावि-कल्पग्रहणासंभवात् । तस्मादनिमित्तं प्रत्यक्षम् । तत्पू-र्वकत्वाच्चानुमानाद्यपि**

---

वनाविषयत्वमभ्युपगम्याप्याह–न चेति, सा=भावना प्रमाणमेव नास्ति स्मृ-तिरूपत्वादिति कथं तस्या धर्मे प्रामाण्यं स्यात् ? । न च सा भावना प्रत्य-क्षम्=प्रत्यक्षस्वरूपा इन्द्रियजत्वाभावात् प्रत्यक्षं चेन्द्रियजमेव भवतीत्याह–न तरामिति । धर्मस्य भावनाविषयत्वेपि भावनायाः प्रत्यक्षादिप्रमाणत्वाभावा-न्न धर्मे प्रामण्यमित्यर्थः । अन्यत्राप्युक्तम्–"यच्च योगिज्ञानं प्रत्यक्षमुक्तं तदसत्, प्रमाणविशेषो हि प्रत्यक्षं न च भूतार्थभावनाप्रकर्षपर्यन्तजस्य यो-गिज्ञानस्य प्रमाणतैव सम्भवति स्मृतिरूपत्वात्–प्रमाणेन हि भूतार्थं परि-च्छिद्य या भावना सा स्मृतिसन्ततिरेव तत्प्रकर्षजमपि ज्ञानं स्मृतिविशेष एवे-ति न प्रमाणं न च प्रत्यक्षम् ।" इति ।

ननु यदीन्द्रियजत्वं प्रत्यक्षलक्षणं स्यात्तदा धर्मस्येन्द्रियगोचरत्वाभवात् प्रत्यक्षविषयत्वं नापि स्यात्, नैवमस्ति, किं तु कल्पनापोढत्वमेव प्रत्यक्षलक्ष-णं कल्पना नाम जात्यादियोजना कल्पनापोढत्वं नाम कल्पनाशून्यत्वं तच्च विशेष्यविशेषणभावानवगाहित्वं निर्विकल्पकत्वमिति यावत् । अस्मन्मते नि-र्विकल्पकमेव वास्तवं प्रत्यक्षं सविकल्पकं ज्ञानं तु प्रत्यक्षभूतनिर्विकल्पकज्ञा-नस्य कार्यमस्तीति न तत् प्रत्यक्षम्, विषयेन्द्रियसम्बन्धानन्तरं प्रथमं निर्वि-कल्पकमेव ज्ञानं जायते इति प्राथमिकत्वात् कल्पनापोढत्वाच्च तदेव प्रत्यक्षं तथा च निर्विकल्पकज्ञानविषयत्वादेव धर्मस्य प्रत्यक्षविषयत्वं प्राप्स्यतीति क-थं धर्मस्य प्रत्यक्षाऽविषयत्वमुच्यते ? इत्येवं बौद्धमतेनाशङ्कते–नेन्द्रियजत्वमि-ति । परिहरति–सुतरामिति । धर्मत्वं नामेष्टफलसाधनत्वं तथा च यागादीनां यदा फलसाधनत्वेन प्रत्यक्षं स्यात्तदैव धर्मप्रत्यक्षं वक्तव्यं फलसाधनत्वं च विशेष्यविशेषणभावसंपन्नत्वात् सविकल्पकज्ञानस्यैव विषयो भवति न नि-र्विकल्पकज्ञानविषय इत्यविकल्पेन=निर्विकल्पकेन ज्ञानेन धर्मस्य ग्रहणासम्भ-वात्सुतरामऽप्रत्यक्षत्वम् । उपसंहरति–तस्मादिति । अनिमित्तम्=अग्राहकम् ।

काश्यपीयाः पुनः प्रातिभज्ञानमृषीणां धर्मे प्रवर्तत इत्याहुः, तत्तु लिङ्गाद्याभासजत्वात् प्रमाणमेव न भवति किं पुनर्धर्मे, । शब्दस्य तु बुद्धिजनकत्वादसत्यऽपवादे युक्तं प्रामाण्यम् ।

ननु न बुद्धिजननमात्रात् प्रामाण्यं युक्तम्, अयथार्थेष्वपि वाक्येषु बुद्धिजननाविशेषात् । सत्यम्, तत्र तु कारणदोषबाधकप्रत्ययाभ्यां युक्तमप्रामाण्यं वेदे तु तदभावात् स्वतः प्राप्तं प्रामाण्यमऽनपोदितं भवति ।

---

धर्मस्येति शेषः । अनुमानाद्यपीति—धर्मेऽनिमित्तमितिशेषः ।

काश्यपीया इति, वैशेषिका वदन्ति ऋषीणां यत् प्रातिभं ज्ञानं तद् धर्मं विषयी करोति, प्रातिभं नाम प्रतिभाजन्यं यथा यदा केनाप्युक्तमृषिणा श्वस्ते भ्राताऽऽगमिष्यतीति आगतश्च तस्य भ्राता श्वस्तत्र यद्दषेः पूर्वमेव तद्भ्रात्रागमनज्ञानं जातं तत् प्रातिभं नाम ज्ञानमुच्यते तस्य विषयो धर्म इत्यर्थः । पराचष्टे—तत्त्विति, प्रातिभं ज्ञानं हि लिङ्गाद्याभासजन्यं भवतीति प्रमाणमेव न तद्भवति । सिद्धान्तमाह—शब्दस्येति, शब्देन तु धर्मविषया बुद्धिरुत्पद्यत एवेति धर्मविषयकबोधजनकस्य शब्दस्य=वाक्यस्य असत्यपवादे=यद्यर्थान्यथात्वकारणदोषज्ञानाभ्यामपवादो न भवति तदा युक्तं तस्य धर्मे प्रामाण्यम् । तथा च वेदवाक्यान्येव धर्मे प्रमाणं न प्रत्यक्षादिकम् ।

ननु यदि शब्दस्य यत्किञ्चित्पदार्थविषयकज्ञानजनकत्वमात्रादेव प्रामाण्यं तदाऽनाप्तवाक्यानामपि प्रामाण्यं स्यात्तथा 'रजतमिदम्' इत्यादिभ्रान्तवाक्यस्यापि प्रामाण्यं स्याद् ज्ञानजनकत्वात्तस्मान्न ज्ञानजननमात्राद्वाक्यस्य प्रामाण्यमित्याशङ्कते— नन्विति । उत्तरमाह—सत्यमिति, युक्तमुक्तमित्यर्थः । भ्रान्तानाप्तादिवाक्यानां तु कारणदोषज्ञानेन बाधकज्ञानेन चाप्रामाण्यं युक्तमेव, यथाऽनाप्तवाक्येषु वाक्यकारणे तदुच्चारयितरि पुरुषेऽनाप्तत्वं दोषस्तेन भ्रान्तवाक्येषु च रजतमिदमित्यादिषु 'नेदं रजतम्' इत्यादिबाधज्ञानेनाऽप्रामाण्यं भवत्येव । वेदे=वेदवाक्येषु च कारणदोषोपि नास्ति वेदानामपौरुषेयत्वेन तेषां कर्तुरभावात् वेदवाक्यबोधितविषयस्य बाधोपि न भवतीति वेदानां स्वतःप्राप्तं प्रामाण्यं किं वा प्राप्तं स्वतःप्रामाण्यमनपोदितम्=अबाधितं भवतीत्यर्थः ।

कथं पुनः प्रामाण्यस्य स्वतः प्राप्तिः ? । तदर्थमिदं सर्वज्ञानान्यऽधिकृत्य चिन्त्यते—किं प्रामाण्यमप्रामाण्यं चोभयं स्वत एवावगम्यते ?, अथ वाऽन्यतरदपि स्वभावेनाऽनिरूपितं कारणगुणदोषप्रत्ययाभ्यामवगम्यते ?, आहोस्विदप्रामाण्यं स्वतोऽवगम्यते प्रामाण्यं तु कारणगुणज्ञानात् संवादज्ञानादर्थक्रियाज्ञानाद्वाऽवधार्यते ?, उत प्रामाण्यं स्वतः प्राप्तं सदऽर्थान्यथात्वकारणदोषज्ञानाभ्यामवगम्यमानेनाऽप्रामाण्येनाऽपोद्यते ? इति ।

तत्र सर्वकारणानां स्वकार्यशक्तेः स्वाभाविकत्वादुभयमपि ज्ञानस्य स्वरसादेवावगम्यत इति केचित्,

---

ननु प्रामाण्यस्य स्वतस्त्वं केन प्रकारेणास्तीति पृच्छति—कथमिति । प्रामाण्यस्वतस्त्वविचारमुपक्रमते—तदर्थमित्यादिना । चत्वारोत्र पक्षाः सन्ति—प्रामाण्यं चाप्रामाण्यं चोभयमपि स्वत एव १, उभयमपि परत एव २, अप्रामाण्यं स्वतः प्रामाण्यं च परतः ३, प्रामाण्यं स्वतोऽप्रामाण्यं च परतः ४ इति । तत्र ज्ञानस्य प्रामाण्यमप्रामाण्यं चोभयमपि स्वत एव भवतीति सप्तभङ्गीमतेनाह—किमिति । उभयमपि परत एवेति तर्कमतेनाह—अथ वेति, तदुक्तम्—"दोषोऽप्रमाया जनकः प्रमायास्तु गुणोभवेत्" इति अन्यतरत्=प्रामाण्यमप्रामाण्यं चोभयमपि स्वभावेनानिरूपितम्=ज्ञानस्वभावकारणकं नास्तीति ज्ञानकारणस्य गुणज्ञानेन प्रामाण्यं दोषज्ञानेन चाऽप्रामाण्यमवगम्यत इत्यर्थः । ज्ञानस्याऽप्रामाण्यमेव स्वतः प्रामाण्यं तु परत एवेति बौद्धमतेनाह—आहोस्विदिति । प्रामाण्यमेव स्वतोऽप्रामाण्यं तु परत इति सिद्धान्तपक्षमाह—उतेति । अपोद्यते=बाध्यते ।

उक्तान् पक्षान्निरूपयितुं निराकर्तुं चारभते तत्रेत्यादिना । तत्र=चतुर्षु पक्षेषु मध्ये, कारणमात्रस्य स्वकार्यसम्पादनशक्तिः स्वाभाविकी भवतीति यथा माषैः पित्तं कफश्च परस्परविरुद्धमपि द्वयमुत्पाद्यते तथा ज्ञानेनापि स्वस्य प्रामाण्यम ऽप्रामाण्यं चोभयमपि स्वरसात्=स्वभावादेवाऽवबोध्यते उभयस्यापि ज्ञानकार्यत्वात् कार्ये च स्वकारणभिन्नकारणान्तरान्वेषणस्यायुक्तत्वात्तस्माज्ज्ञानस्य प्रामाण्यमप्रामाण्यं च स्वत एव स्तः । परिहरति—तदयुक्तमि-

तदयुक्तम्—न हि ज्ञानं स्वविषयस्य तथात्वमतथात्वं च युगपच्छक्नोति वेदयितुं विरोधात् ।

अथ कापि ज्ञानव्यक्तिः स्वप्रामाण्यं स्वतो बोधयति काप्यऽप्रामाण्यमित्युच्यते, तथापि न युक्तम्—कारणान्तरनिरपेक्षस्य ज्ञानस्यैवोपलम्भहेतुत्वे किं क्व ज्ञाने भवतीति न शक्यं विवेक्तुम् । अतो द्वयमपि स्वस्व-

---

ति, उभयस्य स्वतस्त्वमयुक्तमित्यर्थः, तदाह—नहीति । ज्ञानस्य प्रामाण्यं हि ज्ञानविषयस्य तथात्वे सति=यद्रूपेण ज्ञातं तद्रूपत्वे सति वक्तव्यम्, अप्रामाण्यं च अतथात्वे सति वक्तव्यं विषयस्य तथात्वमतथात्वं च परस्परविरुद्धं तस्माज्ज्ञानं स्वविषयस्य तथात्वमतथात्वं चोभयं न युगपद् बोधयितुं शक्नोति तस्मान्न ज्ञानस्य प्रामाण्यमप्रामाण्यं चोभयमपि स्वतः ।

ननु—एकैव ज्ञानव्यक्तिः स्वविषयस्य तथात्वमतथात्वं च बोधयन्ती स्वस्य प्रामाण्यमप्रामाण्यं च स्वतो बोधयतीति नोच्यते किं तु कापि ज्ञानव्यक्तिः स्वस्य प्रामाण्यं बोधयति यथा घटोयमिति, कापि च ज्ञानव्यक्तिः स्वस्याप्रामाण्यं बोधयति यथा रजतमिदमिति, तथा च नोक्तदोषावसर इत्याशङ्कते—अथेति । कापि ज्ञानव्यक्तिः=किमप्येकं ज्ञानम् । पराचष्टे—तथापि न युक्तमिति । कारणान्तरनिरपेक्षं ज्ञानमेवोपलम्भस्य हेतुरस्तीति प्रामाण्याप्रामाण्यलक्षणविषयोपलम्भस्यापि हेतुर्ज्ञानमेवेति वक्तव्यं तथा च प्रामाण्याप्रामाण्यनिवेदकज्ञानान्तरेपि ज्ञानान्तरेणैव प्रामाण्यमप्रामाण्यं वा ज्ञातं स्यादित्यनवस्था स्यात्, तेनैव ज्ञानेन च स्वत एव प्रामाण्यस्य वाऽप्रामाण्यस्य वा बोधने विनिगमनाविरहात् किं क्व ज्ञाने स्यात्? अर्थाद् घटज्ञाने यदि त्वया प्रामाण्यमुच्यते तदा तत्राप्रामाण्यमेव किं न स्यादप्रामाण्यस्यापि स्वतस्त्वाद् यद्यप्रामाण्यमुच्यते तदा प्रामाण्यमेव किं न स्यादिति विनिगमनाविरहात् प्रामाण्यं वाऽप्रामाण्यं वास्तीति न विवेक्तुं शक्यं स्यात् । अतो द्वयमपि=प्रामाण्यमप्रमाण्यं चोभयमपि स्वस्वभावेनानिरूपितम्=स्वाभाविकं नास्ति, ज्ञानं स्वयमेव न बोधयतीति यावत्, किं तु ज्ञानकारणगुणज्ञानेन प्रामाण्यमवगम्यते ज्ञानकारणदोषज्ञानेन चाप्रामाण्यमवगम्यत इति द्वयमपि परत एव न स्वत इति तर्कमतमुपस्थापयति—अतो द्वयमपीति । उक्तं च "दोषोऽप्रमाया जनकः

भावेनानिरूपितं कारणगुणदोषज्ञानाभ्यामवगम्यत इत्यपरे । तदप्यपेशलम्-एवं हि गुणदोषावधारणात् प्रागन्यतरेणाप्याकारेणार्थमनवगमयद्विज्ञानं निस्स्वभावं स्यात् । तस्मादप्रामाण्यं स्वतः, प्रामाण्यं तु संवादज्ञानादिभिरित्येतदेव युक्तम् ।

तथा हि- न ज्ञानमुत्पन्नमित्येतावताऽर्थतथात्वावधारणं युक्तं व्यभिचारादनिश्चयाच्च, अप्रामाण्यमेव त-

---

प्रमायास्तु गुणो भवेत्" इति ।

पराचष्टे-तदप्यपेशलमिति । दोषमाह-एवं हीति । एवं=प्रामाण्यस्यापि परतः सिद्धावप्रामाण्यस्यापि च परत एव सिद्धौ ज्ञानकारणगतगुणदोषयोरवधारणात्पूर्वं ज्ञानं न प्रमाणं स्यान्नवाऽप्रमाणं स्यात् तज्ज्ञानप्रामाण्याप्रामाण्ययोस्तज्ज्ञानकारणगुणदोषावधारणाधीनत्वात् तथा च न प्रामाण्यस्वरूपेण न वाऽप्रामाण्यस्वरूपेण पदार्थं बोधयेदिति ज्ञानं निस्स्वभावम्=स्वरूपरहितमेव स्यात्-यतोयमेव स्वभावो ज्ञानस्य यत्स्वोत्पत्तिकाले एव विषयं निवेदयति वस्तुगत्या विषयं निवेदयन्नेवोत्पद्यते तस्माद्विषयानिवेदने ज्ञानं निस्स्वभावमेव स्यात् । विषयस्य निवेदने च यदि प्रामाण्याकारेण निवेदितस्तदा प्रामाण्यस्य स्वतस्त्वं वक्तव्यं यद्यप्रामाण्याकारेण निवेदितस्तदाऽप्रामाण्यस्य स्वतस्त्वं वक्तव्यमऽन्यस्य च परतस्त्वं न चोभयस्यैव परतस्त्वं युक्तं तत्रापि वक्ष्यमाणयुक्त्याऽप्रामाण्यमेव स्वतः प्रामाण्यं तु परत इति बौद्धपक्षमुपस्थापयति-तस्मादिति । ज्ञानं यदुत्पद्यते तदऽप्रमाणभूतमेवोत्पद्यते तेन ज्ञानेन विषयमुपलभ्य प्रवर्तमानो नरो यदि तं विषयं तथोपलभते तदा तेन संवादज्ञानेन विषयनिवेदकज्ञानस्य प्रामाण्यं निश्चिनोतीति परत एव प्रामाण्यं युक्तमिति भावः ।

एतदेवोपपादयति-तथा हीति । व्यभिचारात्=रजतमिदमित्यत्र रजतज्ञानमुत्पन्नं तथापि न रजतमुपलभ्यते इति व्यभिचारः, अनिश्चयात्=स्थाणुर्वा पुरुषो वेत्यादौ निश्चयोपि न भवति, यद्युत्पन्नं ज्ञानं प्रमाणभूतमेवोत्पद्येत तदोक्तौ व्यभिचारानिश्चयौ न स्यातां तस्माज्ज्ञानमुत्पन्नमित्येतावतैव विषयस्य तथात्वावधारणं न युक्तं किं तु संवादज्ञानादिनैव विषयतथात्वावधारणं युक्तं तस्मादुत्पत्तिवेलायां ज्ञानमप्रमाणभूतमेवोत्पद्यत इत्याह-अप्रामाण्यमेवेति । तस्यां

स्यां वेलायां प्राप्तम्, पश्चात् कारणगुणज्ञानात्संवाद-ज्ञानादर्थक्रियाज्ञानाद्वा प्रामाण्यावगमादपोद्यते। शब्दे चाप्तप्रणीतत्वं गुणः, न च वेदे तदस्त्यपौरुषेयत्वाभ्युपगमात्। "वनस्पतयः सत्रमासत" "शृणोत ग्रावाणः" इत्येवमादीनामुन्मत्तप्रलपितकल्पत्वात्, अप्रत्ययितत्तरप्रणीतत्वादप्रामाण्यमेव वेदानामिति प्राप्ते

अभिधीयते—

परापेक्षं प्रमाणत्वं नात्मानं लभते क्वचित्।
मूलोच्छेदकरं पक्षं को हि नामाध्यवस्यति॥

---

वेलायाम्=ज्ञानोत्पत्तिवेलायाम्। पश्चात्=ज्ञानोत्पत्यनन्तरं कारणे गुणज्ञानेन वा संवादज्ञानेन वाऽर्थक्रियाज्ञानेन वा तस्मिन् ज्ञाने प्रामाण्यावगमात् तेन प्रामाण्येन प्रथमतः प्राप्तमप्रामाण्यमपोद्यते=बाध्यते। संवादः=प्रवृत्तिसाफल्यम्। अर्थक्रियाज्ञानं यथा रजते उपलब्धे तेन भूषणनिर्वृत्तिज्ञानं जलेन च तृट्शान्तिज्ञानमिति। वेदोक्तयागादीनां फलं स्वर्गादिकं नेहोपलभ्यत इति तत्र संवादज्ञानादिना प्रामाण्यवचनं नोपपद्यते किं तु कारणगुणज्ञानात् प्रामाण्यं वक्तव्यमित्याह—शब्दे चेति। आप्तप्रणीतत्वमेव लोके शब्दे गुण उपलभ्यते न च वेदे तत्संभवति वेदानां त्वयाऽपौरुषेयत्वाभ्युपगमात्। प्रत्युत वेदेत्वनाप्तप्रणीतत्वं दोषोप्यस्ति—"वनस्पतयः सत्रमासत" इत्यादिवाक्यानामुन्मत्तप्रलपिततुल्यत्वात् वनस्पतिकर्तृकसत्रस्यासंभवात्, एवमग्रेपि, तस्माद्वेदानामप्रामाण्यमेव प्राप्तमित्याह—वनस्पतय इत्यादिना। उत्तरमारभते—इति प्राप्ते इत्यादिना।

परापेक्षमिति—यदि ज्ञानस्य प्रमाणत्वं=प्रामाण्यं परापेक्षं=ज्ञानान्तरापेक्षं=ज्ञानान्तराधीनं स्यात्तदा तस्य ज्ञानान्तरस्यापि गुणादिनिवेदकस्य प्रामाण्यं ज्ञानान्तराधीनमेव वक्तव्यमिति प्रामाण्यं क्वचिदपि ज्ञाने आत्मानम्=स्वसत्तां न लभते=न लभेत, कस्य चिदपि ज्ञानस्य प्रमात्वं न स्यादनवस्थादोषात्, तस्मान्मूलोच्छेदकरं पक्षम्=येन पक्षेण क्वचिदपि ज्ञाने प्रामाण्यं न सिध्यतीत्येवंभूतं पक्षं किं वैवंभूतपक्षप्रतिपादनायापि ज्ञानान्तरधारास्वीकारेण मूलपक्षस्यैवोच्छेदः स्यात् सिद्धिर्नस्यादिति मूलोच्छेदकरं पक्षं कः=बुद्धिमान् अध्यवस्यति=स्वीकरोति निश्चिनोति वेत्यर्थः।

**यदि हि सर्वमेव ज्ञानं स्वविषयतथात्वावधारणे स्वयमसमर्थं विज्ञानान्तरमपेक्षेत ततः कारणगुणसंवादाऽर्थक्रियाज्ञानान्यपि स्वविषयभूतगुणाद्यवधारणेऽपरमपेक्षेरन्, अपरमपि तथेति न कश्चिदर्थो जन्मसहस्रेणाप्यध्यवसीयेतेति प्रामाण्यमेवोत्सीदेत्।**

**अथ—अर्थक्रियाज्ञानं स्वतः प्रमाणमिति चेत् ? को विशेषः ?, अव्यभिचार इति चेत् ? न, स्वप्नावस्थायामसत्यप्युदकाहरणेऽर्थक्रियाविज्ञानदर्शनात्।**

---

उक्तं मूलपद्यं स्वयं व्याचष्टे—यदीत्यादिना । यदि सर्वमेव ज्ञानं स्वविषयस्य तथात्वावधारणे=येन रूपेण दृष्टं तद्रूपावधारणे। ज्ञानस्य प्रामाण्यं हि तद्विषयस्य तथात्वाधीनमेवास्तीति ज्ञानप्रामाण्यकारणीभूततद्विषयतथात्वावधारणे एव ज्ञानान्तरापेक्षोक्ता वस्तुतस्तु 'सर्वमेव ज्ञानं यदि स्वप्रामाण्यावधारणे' इत्येवं वक्तव्यम्। कारणगुणज्ञानं संवादज्ञानमर्थक्रियाज्ञानं चापि ज्ञानमेवेति कारणगुणज्ञानं कारणगुणतथात्वावधारणे संवादज्ञानं च संवादतथात्वावधारणे अर्थक्रियाज्ञानं चार्थक्रियातथात्वावधारणे ज्ञानान्तरमपेक्षेत ज्ञानत्वात्तथा चानवस्था स्यादित्याह—स्वविषयभूतेति । अत्रापि 'स्वप्रामाण्यावधारणे' इत्येव वक्तव्यमासीत्। अपरमपि=कारणगुणादितथात्वावधारकमपि ज्ञानं तथा=ज्ञानान्तरमपेक्षेतेति न कश्चिदर्थः=विषयो जन्मसहस्रेणाप्यध्यवसीयेत, अर्थाध्यवसायाधीनमेव प्रामाण्यमिति प्रामाण्यं नैव सिद्ध्येत, किं तूत्सीदेदेव प्रामाण्यमित्यर्थः ।

ननु नास्त्यनवस्थादोषोऽर्थक्रियाज्ञानस्य स्वतः प्रामाण्यस्वीकारेण ज्ञानान्तरानपेक्षणादिति शङ्कते—अथेति। मीमांसकः पृच्छति—को विशेष इति, अर्थक्रियाज्ञानस्यैव स्वतः प्रामाण्यं न प्रथमज्ञानस्य सर्वस्य ज्ञानस्य वेत्यत्र को विशेष इत्यर्थः। उत्तरमाह—अव्यभिचार इति, अव्यभिचार एवार्थक्रियाज्ञाने विशेषः। प्रथमज्ञाने तु व्यभिचारोऽपि भवति यथा शुक्तिरजतज्ञाने, अर्थक्रियाज्ञाने तु व्यभिचारो न भवत्यर्थक्रियायाः फलरूपत्वात् तस्यां जातायां तज्ज्ञानेऽप्रामाण्यशङ्कानवकाशात् । परिहरति—नेति। अर्थक्रियाज्ञानेऽपि व्यभिचारमुदाहरति—स्वप्नेति । असत्यप्युदकाहरणे स्वप्नावस्थायामुदकाहरण-

अथ सुखज्ञानमेवार्थक्रिया तच्चाव्यभिचार्येव न हि क्व चिदप्यसति सुखे सुखज्ञानमस्ति । सत्यमेतत्, नतु तेन पूर्वज्ञानस्य प्रामाण्याध्यवसानं संभवति—अप्रमाणेनापि प्रियासङ्गमविज्ञानेन स्वप्नावस्थायां सुखदर्शनात् । तस्मात् स्वतः प्रामाण्यं प्राप्तमऽर्थान्यथात्वकारणदोषज्ञानाभ्यामपोद्यत इत्यवश्यमङ्गीकरणीयम् । एवं च शब्देऽनाप्तपुरुषसंस्पर्शकृतत्वाद् दोषाणामऽपौरुषेयेवेदे तद्भावात् साक्षाच्चार्थान्यथात्वज्ञानाभावादन-

---

लक्षणाऽर्थक्रियाज्ञानस्य किं वोदकपानलक्षणार्थक्रियाज्ञानस्य जायमानत्वादर्थक्रियाज्ञानेपि व्यभिचारः स्पष्ट एव यतोयमेव ज्ञानव्यभिचारो यदसत्यपि तस्मिन्नर्थे तज्ज्ञानोत्पत्तिः स्याद् यथा शुक्तिरजतज्ञाने ।

ननु नोदकाहरणपानादिज्ञानमर्थक्रियाज्ञानं किं तु सुखज्ञानमेवार्थक्रियाज्ञानं तच्च=सुखज्ञानमव्यभिचार्येव सत्येव सुखे सुखज्ञानदर्शनादिति शङ्कते—अथेति । अर्धस्वीकारेणाह—सत्यमिति । सत्यं यद्यपि सुखज्ञानं सुखं विना न भवति सुखस्य मानसिकपदार्थत्वात्तत्र भ्रान्त्यनवकाशात् तथापि तेन=सुखज्ञानेन पूर्वज्ञानस्य=सुखजनकज्ञानस्य प्रामाण्याध्यवसानं न सम्भवति यतः स्वप्नावस्थायां प्रियासङ्गमविज्ञानेन सुखं भवति तस्य सुखस्य ज्ञानमपि भवति न तु तेन सुखज्ञानेन प्रियासङ्गमज्ञानस्य प्रामाण्यमध्यवसीयते स्वप्ने प्रियासङ्गमस्य मिथ्यात्वेन तज्ज्ञानस्याप्रमाणत्वादित्यर्थः । उपसंहरति—तस्मादिति । ज्ञानस्य स्वतः प्राप्तं प्रामाण्यमर्थान्यथात्वज्ञानेन कारणदोषज्ञानेन वाऽपोद्यते= बाध्यते इत्यवश्यमङ्गीकरणीयमन्यथा प्रामाण्यस्य परतस्त्वस्वीकारेऽनवस्थादोषात् क्वचिदपि प्रामाण्यं न स्यात् ।

सिद्धान्तमाह—एवमिति । एवम्=प्रामाण्यस्य स्वतस्त्वे सिद्धे, स्वतः प्राप्तस्य प्रामाण्यस्य क्वचित् कारणदोषादिज्ञानेनाऽपहारे च सिद्धे, शब्देऽनाप्तपुरुषप्रणीतत्वमेव दोषो भवति वेदानामपौरुषेयत्वात्तत्रानाप्तपुरुषप्रणीतत्वलक्षणदोषस्यासम्भवात् अर्थान्यथात्वज्ञानासम्भवाच्च वेदानामनपोदितं प्रामाण्यं भवति=सिद्धम् । पुरुषसंस्पर्शः शब्दे पुरुषप्रणीतत्वमेव । वैदिकपदार्थानामन्यथात्वज्ञानं तु तदा भवेद् यदि कोपि प्रत्यक्षेण जानीयान्नभवति यागेन स्वर्ग

पोदितं प्रामाण्यं भवति । पौरुषेयवचनानि तु पुरुष-
बुद्धिप्रभवत्वाद् भ्रान्त्या विप्रलिप्सया वा प्रयुक्तानि
मूलदोषेण दुष्टत्वादयथार्थानि भवन्तीति वैषम्यम् ।
केचित्त्वाहुः- न लोकेपि शब्दस्याऽयथार्थत्वमस्ति

---

इति नचैवं ज्ञातुं कोपि शक्नोति तस्माद्वेदवाक्यजन्यज्ञानेऽर्थान्यथात्वज्ञानमपि न सम्भवति कारणदोषोप्य ऽनाप्तप्रणीतत्वं नास्तीति सिद्धं वेदानामबाधितं स्वतः प्रामाण्यम् । नन्वेवं लौकिकवाक्यानामप्यबाधितमेव स्वतः प्रामाण्यं स्याद्वा-क्यत्वादेवेत्याशङ्क्याह—पौरुषेयेति । पुरुषबुद्धौ भ्रान्तिविप्रलिप्सयोः सम्भवाद् भ्रान्तियुक्तया वा विप्रलिप्सायुक्तया वा बुद्ध्या पुरुषेण प्रयुक्तानि वचनानि मूलदोषेण=पुरुषबुद्धिदोषेण दुष्टत्वादयथार्थान्यपि भवन्तीति पुरुषवाक्यानां वेदवाक्यानां च परस्परं वैषम्यम् । तस्मान्न लौकिकवाक्यानां स्वतः प्राप्त-मपि प्रामाण्यं सर्वत्राबाधितमेव भवति किं तु बाधितमपि भवत्येव, बाधे च कारणदोषज्ञानमर्थान्यथात्वज्ञानं च हेतुरित्यर्थः ।

वैशेषिकमतमुपस्थापयति—केचिदिति । वैशेषिकमते द्वे एव प्रमाणे प्र-त्यक्षं चानुमानं च शब्दादीनां तु प्रामाण्यमेव नास्ति अनुमानेन्तर्भावत् तथा च वैशेषिकसूत्रम्—"एतेन शाब्दं व्याख्यातम्" अस्य व्याख्या यथा—"एतेन लैङ्गिकज्ञानकथनेन शाब्दं शब्दज्ञानजन्यं ज्ञानमपि व्याख्यातं कथितमित्य-र्थः" । उक्तं च शङ्करमिश्रेण—"प्रमाणं द्विविधं प्रत्यक्षं लैङ्गिकं च" तथा— "शाब्दं शब्दकरणकं ज्ञानमिदमिति यन्नैयायिकादीनामभिमतं तदप्येतेन लै-ङ्गिकत्वेन लिङ्गप्रभवत्वेनैव व्याख्यातं यथा व्याप्तिपक्षधर्मताप्रतिसन्धानापेक्षं लैङ्गिकं तथा शाब्दमपि, तथा हि—एते पदार्थाः मिथः संसर्गवन्तः आकाङ्क्षा-दिमद्भिः स्मारितत्वाद् गामभ्याजेति पदार्थसार्थवत्" इति । विवृतिकारेणा-प्युक्तम्—"नैयायिकप्रभृतिभिरन्वयबोधनामकं प्रत्यक्षानुमितिभिन्नमनुभवरूपं ज्ञानं मन्यते वैशेषिकमते तु न तदङ्गीकारः, पदज्ञानस्थले पदार्थसंसर्गस्यानु-मितिरेव भवति तथा हि—गौरस्तीति वाक्यश्रवणानन्तरं गौरस्तितावान् स्व-धर्मिकास्तित्वान्वयबोधानुकूलाकाङ्क्षाश्रयपदस्मारितत्वात् घटवत्, अस्ति पद-समभिव्याहृतगौः पदस्मारितत्वाद्वा चक्षुर्वदित्यनुमानमेव न तु शब्दजन्यो वि-लक्षणो बोधः, पदानामेकवाक्यतापन्नत्वरूपसमभिव्याहृतत्वनिश्चयं विना न्या-

**तदभावात्, न हि लोके शाब्दं प्रमाणमस्ति वक्त्रभिप्रा-**

---

यनयेऽप्यन्वयबोधस्यानुपपत्त्या पूर्वं तस्यावश्यकत्वात्" इति।

किं वा प्रभाकरमतमुपस्थापयति—केचिदिति। वैदिकवाक्यानां विधायकत्वाद् बाधाद्यभावाच्च प्रामाण्यमस्तीति नाऽयथार्थत्वं लौकिकवाक्यानां चाभिप्रायानुमापकत्वात् प्रामाण्यमेव नास्तीति नाऽयथार्थत्वं प्रमाणत्वेनाभिमतस्यैव याथार्थ्याऽयाथार्थ्यसम्भवात्। उक्तं च प्राभाकरैः—"नन्वशास्त्रमपि शाब्दमस्ति लौकिकम्, तत् किमिति न लक्षितम्?। उच्यते— न शास्त्रव्यतिरिक्तं शाब्दमस्ति शब्दाद्धि यद्विज्ञानमसंनिकृष्टे तच्छास्त्रं स्यात् न च वेदव्यतिरेकेण तत्संभवति, लौकिकं हि वाक्यं नाऽर्थे स्वयं निश्चयमापादयति लौकिकवचसामनृतभूयिष्ठत्वादऽर्थव्यभिचारस्य शङ्कितत्वात्। तदेवं लौकिकाद्वचसो लिङ्गभूताद्वक्तृज्ञानमनुमीयते ततोऽर्थं निश्चित्य व्यवहारः प्रवर्तते, एवं च निश्चितेऽन्वये निवृत्ताऽनन्वयाशङ्काद्वाक्यादप्यर्थनिश्चयो जायते किं तु तस्यां दशायामनुवादकतैव, अत एव लौकिके वचने न शाब्दं प्रमाणम्।" इत्यादि।

न लोकेपीति—यदि लोकेपि शब्दः प्रमाणं स्यात्तदा तस्याऽयथार्थत्वम्=अप्रामाण्यं स्यादपि नैवमस्ति तदभावात्=लोके शब्दस्य प्रमाणत्वाभावात्। यथार्थत्वं वाऽयथार्थत्वं वा प्रमाणत्वेनाभिमतस्यैव संभवति यथा प्रत्यक्षस्य शब्दस्तु न स्वतन्त्रं प्रमाणमनुमान एवान्तर्भावात्। यथा तव मते वेदवाक्यानां कारणदोषज्ञानबाधज्ञानयोरभावादप्रामाण्यं नास्ति तथा मन्मते शब्दमात्रस्याप्रामाण्यं नास्ति शब्दस्य प्रमाणत्वेनाऽनभिमतत्वात्। प्रभाकरमते तु लौकिकवाक्यानामेव प्रामाण्याभावो न वेदवाक्यानामपि तेषां प्रामाण्यस्वीकारादिति वैशेषिकप्राभाकरयोर्विशेषः, पदानां पदार्थस्मारकत्वेपि पदार्थसंसर्गबोधस्त्वनुमानविधयैव भवति पदार्थसंसर्गबोधस्यैव च प्रमाणफलत्वादनुमाने एवान्तर्भावो न शाब्दं पृथक् प्रमाणम्। एवं च लाघवमपि स्यादित्यर्थः। तदाह— नहीति।

ननु यदि शब्दः प्रमाणमेव नास्ति तदा 'घटमानय' इत्यादि वाक्यमनर्थकं स्यादित्याशङ्क्याह—वक्त्रभिप्रायेति। पुरुषवचनानां वक्त्रभिप्रायानुमापकत्वादेव सार्थक्यम्। यथा— देवदत्तो गोकर्मकानयनानुकूलकृतिविषयकाभिप्रायवान् गामानयेतिवाक्यवक्तृत्वाद् यज्ञदत्तवत्, इत्येवं झटिति वक्त्रभिप्रायानुमानं भवतीति ज्ञेयम्। वक्तुरभिप्रायस्य पदार्थसंसर्गविषयकत्वादेव। सिद्धान्तमाह—

**यानुमापकत्वात् पुरुषवचसाम्, तेनानुमानस्यैवायं व्यभिचारो न शाब्दस्य । न वा तस्यापि विवेकाग्रहणादलिङ्गे लिङ्गव्यवहारप्रवृत्तिः । यदि तु शब्दस्यैवायं व्यभिचारोऽभ्युपेयते स्वाभाविकमेवाऽप्रामाण्यं स्यात्, न हि पुरुषदोषेण शब्दस्य दोषो भवति यथावस्थितशब्दाभिव्यक्तिमात्रे पुरुषस्य व्यापारात् ।**

---

तेनेति । शब्दस्य स्वयं प्रामाण्याभावाद् यो वै व्यभिचारः=अप्रामाण्यमुच्यते सोऽनुमानस्यैव व्यभिचारो न शाब्दस्य=शब्दज्ञानस्य तस्य प्रामाण्यानभ्युपगमात् । वस्तुतोऽनुमानेपि व्यभिचारो नास्तीत्याह- न वेति । तस्यापि=अनुमानस्यापि ।

अयं भावः यदि वस्तुतः सद्धेतुग्रहणे जाते व्यभिचारः स्यात्तदानुमानस्य व्यभिचारः स्यादपि सद्धेतुग्रहणस्थले एवानुमानत्वव्यवहारात्, न च सद्धेतुग्रहणे व्यभिचारो भवति, यत्र चासद्धेतुग्रहणे व्यभिचारो भवति न तत्रानुमानत्वव्यवहारः । अनुमानस्य व्यभिचाराभावे हेतुमाह—विवेकाग्रहणादिति । यथा धूलिपटले धूमत्वभ्रमेण धूमधूलीपटलयोर्विवेकस्य भेदस्याऽग्रहणादलिङ्गे=वन्ह्यलिङ्गे धूलीपटले लिङ्गव्यवहारस्य प्रवृत्तिस्तथा शाब्दस्थलेपि तत्तदभिप्रायाऽलिङ्गभूतेपि वाक्ये तत्तदभिप्रायलिङ्गत्वव्यवहारस्य प्रवृत्तिरिति नानुमानस्यापि व्यभिचारः । अत्र च "विवेकाग्रहादलिङ्गव्यवहारप्रवृत्तिः" इत्यपि पाठान्तरम्, एवं हि विवेकाग्रहादलिङ्गेनापि व्यवहारस्य प्रवृत्तिः किं वानुमानत्वव्यवहारो वन्ह्यानयनादौ प्रवृत्तिश्च भवतीत्यर्थः । विपक्षे बाधकमाह—यदीति । यदि शब्दस्य प्रामाण्यमभ्युपेत्य तस्य व्यभिचारः स्वीक्रियते तदा शब्दस्य स्वाभाविकमप्रामाण्यमेव स्यात् सर्वत्र, तथा च वेदस्याप्यप्रामाण्यं स्यात् । अप्रामाण्यस्य स्वाभाविकत्वे हेतुमाह- नहीति । यदि पुरुषदोषेण शब्दे दोषः स्यात्तदा दोषस्य सहेतुकत्वान्न स्यात्स्वाभाविकमप्रामाण्यं नैवमस्ति पुरुषदोषेणाऽनाप्तत्वरूपेण शब्दे दोषासंभवात् पुरुषस्य यथावस्थितशब्दाभिव्यक्तिमात्रे व्यापारात् । तस्मान्न पुरुषदोषेण शब्दे दोषो येन शाब्दस्य व्यभिचारोपगमेपि शाब्दाऽप्रामाण्यं स्वाभाविकं न स्यात् । तस्मान्न शाब्दस्य व्यभिचारः शाब्दस्य प्रमाणत्वाभावेनानुमाने एवान्तर्भावादित्यर्थः ।

तदिदमसारम्—यदि लोके शाब्दं नास्ति तदा वेदेपि कथं तत्स्यात्?। 'न ह्यभिप्रायानुमानक्षीणस्य शब्दस्यार्थं प्रति वाचकत्वे प्रमाणमस्ति' इत्युक्तं न्यायरत्नमालायाम्।

---

उक्तं च प्राभाकरैः—

"ततोर्थे निश्चिते पश्चात्सोऽर्थो वाक्येन गम्यते।
तस्यां दशायां वाक्यस्य तस्य स्यादनुवादता॥
पूर्वं च लिङ्गभूतत्वं वक्तुर्ज्ञानावधारणे।
पौरुषेयमतो वाक्यं न शास्त्रमभिधीयते॥
एवं च सति लिङ्गस्य व्यभिचारोयमीक्ष्यते।
न शास्त्रस्येति तस्य स्यादर्थासंस्पर्शिता कुतः॥
लिङ्गस्यापि न चैवायं व्यभिचारोस्ति, किं तु यः—।
लिङ्गालिङ्गे न शक्नोति विवेक्तुं मूढचेतनः॥
तस्याऽलिङ्गे लिङ्गरूपसाधारण्यनिबन्धनः।
लिङ्गसंव्यवहारोयं विपरीतः प्रवर्तते॥
श्रुतिलिङ्गाधिकरणे विस्तरेणैवमीरितम्।
तेन न व्यभिचारोस्ति द्वयोर्लैङ्गिकशास्त्रयोः॥" इत्यादि।

परिहरति—तदिदमसारमिति। प्रथममुपालभते—यदीति। यदि लोके शब्दस्य प्रामाण्यं नास्त्येव तदा वेदस्यापि शब्दसमूहस्य प्रामाण्यं न स्यान्न चैतत्तवापीष्टं त्वयापि वेदप्रामाण्यस्य स्वीकारादित्यर्थः। ननु वेदप्रामाण्यस्य किं बाधकमित्याशङ्क्य, अनुमितार्थबोधकत्वाच्छब्दस्य प्रामाण्यं न संभवतीति न्यायरत्नमालायामुक्तं शब्दाऽप्रामाण्यहेतुं स्मारयति—न हीति। "शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात्" इति न्यायेन अभिप्रायानुमानेन क्षीणशक्तिकस्य क्षीणव्यापारस्य शब्दस्यार्थनिरूपितवाचकत्वे प्रमाणाभावात्तव मतेन पदानां वाचकत्वमेव लुप्येत तथा च पदार्थोपस्थितिरेव न स्यात् नतरां पदार्थानां संसर्गविशेषबोधानुमानमिति जगदान्ध्यप्रसङ्गः। शब्दस्याभिप्रायानुमापकत्वे पदार्थवाचकत्वं वैयर्थ्यादेव न स्यादिति भावः।

न्यायरत्नमालायामेवमुक्तम्—"किं च स्वरूपमात्रमपि नाभिधेयम्(स्यात्)

**यच्च व्यभिचाराभ्युपगमे स्वाभाविकमप्रामाण्यं भवति पुरुषदोषस्य शब्देऽनवतारादिति, स्यादेतदेवं यदि यदीयं यद्वाक्यं तत्स पुरुषोऽभिव्यञ्ज्यात्, तत्तु तेनैव**

---

पदविशेषस्यैव वाचकत्ववद् विशिष्टार्थविषयेणैव विज्ञानेन व्याप्तिग्रहणसंभवात्, यथा हि वाचकत्वं प्रतिपदमऽर्थविशेषं प्रतिगृह्यते—गोपदं सास्नादिमतो वाचकम्, अश्वपदं वाजिवाचकमिति तथा तदन्वितार्थविषयविज्ञानव्याप्तिस्तस्य तस्य ग्रहीतुं शक्यते, आप्तस्य गोपदरचना आकाङ्क्षितसंनिहितयोग्यार्थान्तरान्वितसास्नादिमद्विज्ञानपूर्विकेति वा। ततश्च पदानाम्—

अर्थस्वरूपवाचित्वमपि नैव प्रसिध्यति।
प्रागेवान्वितवाचित्वमतो वेदाऽप्रमाणता॥

नन्वनुमितमप्यर्थं पश्चादनुवदद्वाक्यं वाचकम्=शक्तं स्यात्?, तन्न, अनुवादकत्वे प्रमाणाभावात्। नह्यनुवादकत्वमन्तरेण किंचिदनुपपन्नं यतस्तत् कल्प्येत। शक्तत्वादनुवादकत्वमिति चेत्? तदितरेतराश्रयम्—शक्तेरनुवादस्ततश्च शक्तिरिति। तस्मान्न वाचकत्वं सिद्ध्यति। यदि परम्—अर्थविशेषविज्ञानानुमानसिद्ध्यर्थं पुनर्वाचकत्वमवस्थाप्येत? तच्चान्तरेणापि वाचकत्वं शब्दविशेषस्य ज्ञानविशेषेणैव व्याप्तिग्रहणसम्भवादनुपपन्नम् ( वाचकत्वव्यवस्थापनम् ) तस्माल्लोकवचसामनुमानत्वेन प्रामाण्याङ्गीकरणे पदानां वाचकत्वाऽयोगादऽप्रतिपादकत्वेनाप्रामाण्यं वेदस्य स्यादिति तत्प्रामाण्यसिद्ध्यर्थं लोकेपि शब्दानां शब्दतयैव प्रामाण्यमभ्युपगन्तव्यम्।" इत्यादि।

यदुक्तम्—"यदि तु शाब्दस्यैवायम्" इत्यादि तन्निराकरणाय स्मारयति—यच्चेति। अस्याभिप्रायः पूर्वमेव वर्णितो यदीत्यादिना। निराकरोति—स्यादेतदेवमिति। शब्दस्य प्रामाण्यस्वीकारे पुरुषदोषद्वारा क्वचिदप्रामाण्यस्वीकारे च भवेत्तदा शब्दस्य स्वाभाविकमप्रामाण्यं यदि यदीयं यद्वाक्यं स पुरुषोऽभिव्यञ्ज्यात् यथा 'गामानय' इत्युक्तं देवदत्तेन यद्वाक्यं तस्य देवदत्तेनाभिव्यक्तिमात्रं कृतं स्यात्। अभिव्यक्तिमात्रकरणे हि पुरुषदोषस्य शब्दे संक्रान्त्यभावे यद्यप्रामाण्यं स्यात्तदा स्वाभाविकमेव स्यादप्रामाण्यस्य पुरुषदोषकृतत्वाभावात्। नैवमस्ति किं तु तद्वाक्यमुच्चारयित्रा क्रियत एव नाभिव्यज्यते, वाक्यकरणपक्षे च पुरुषदोषस्य शब्दे संक्रान्तिसम्भवाद् यत्र पुरुषदोषस्तत्रैवाप्रामाण्यं न

क्रियते—वर्णा नित्याः पदानि च. वाक्यानि तु पुरुषैरेव क्रियन्ते पौरुषेयत्वादेव । यथाऽवस्थितानि व्यज्यमानानि वेदवाक्यवदपौरुषेयाण्येव स्युः । ततश्चवक्तृभिप्रायानुमापकत्वमपि न स्यात्, तद्यथाऽध्येतृभिरभिव्यज्यमानानि वेदवाक्यानि नाध्येतॄणामभिप्रायं सूचयन्ति तथा पुरुषवाक्यान्यपि न सूचयेयुः । यदि हि व्यभिचाराऽऽशङ्कया लोके शब्दस्य प्रामाण्यं न सम्भवतीत्युच्यते ?, तर्हि तद् वक्त्रभिप्रायानुमानेपि तुल्यम्,

---

सर्वत्रेति ना ऽप्रामाण्यस्य स्वाभाविकत्वमसक्तिरित्याह—तत्त्विति । तत्तु=वाक्यम् । तेनैव=उच्चारयित्रैव ।

ननु तव मते वर्णानां नित्यत्वात्कथं वाक्यकृतिः स्यादित्याशङ्क्याह— वर्णा इति, वर्णा नित्या वर्णात्मकानि पदान्यपि नित्यानि न तु वाक्यानि नित्यानि, तेन वाक्यं पुरुषेण क्रियते एव । वाक्यं हि पदसमूहविन्यासविशेष एव विन्यासस्य च कृतकत्वाल्लौकिकं वाक्यं क्रियते एव पुरुषेण । विपक्षे बाधकमाह—यथावस्थितानीति, लौकिकवाक्यानां यथावस्थितशब्दाभिव्यक्तिपक्षे हि यथा वेदवाक्यानि न क्रियन्ते किं त्वभिव्यज्यन्त एवेत्यपौरुषेयाणि सन्ति तथा लौकिकवाक्यान्यप्यपौरुषेयाणि स्युः, न चैवमिष्टमित्यर्थः । ननु भवन्तु लौकिकवाक्यान्यप्यपौरुषेयाणि को दोष इत्याशङ्क्याह—ततश्चेति, ततश्च=अपौरुषेयत्वे लौकिकवाक्यानां वक्त्रभिप्रायानुमापकत्वं न स्यात् । एतदेव दृष्टान्तेन प्रतिपादयति—तद्यथेति । यथा वेदवाक्यान्यध्येतृभिर्न क्रियन्ते किं त्वभिव्यज्यन्तेऽपौरुषेयत्वात् तस्मान्ना ऽध्येतॄणामभिप्रायं सूचयन्ति यं चार्थं सूचयन्ति न तत्राध्येतॄणामभिप्रायस्तथा लौकिकवाक्यान्यपि न वक्त्रभिप्रायं सूचयेयुरभिव्यज्यमानत्वेनापौरुषेयत्वापातात् ।

ननु लोके शब्दस्य व्यभिचारो दृश्यते यथा 'नद्यास्तीरे फलानिसन्ति' इति वाक्यं श्रुत्वा नदीतीरं गत्वापि फलानामदर्शनादिति व्यभिचारशङ्कया लोके शब्दस्य प्रामाण्यं न सम्भवतीत्युच्यत इति प्राभाकराभिप्रायमाश्रित्याऽऽह—यदि हीति । प्रतिबन्द्या परिहरति—तर्हीति । व्यभिचाराशङ्कया यदि लौकिकशब्दमात्रस्या ऽप्रमाण्यं तदाऽप्रमाणीभूतस्य वाक्यस्य वक्त्रभिप्राया[illegible]-

अन्यथासंविदानस्याप्यऽन्यथावाक्यरचनादर्शनात् ।

किं च शब्दस्य चक्षुरादेरिव स्वसामर्थ्येन बोधकत्वाद् व्यभिचारेपि न बोधकत्वहानिः । लिङ्गस्याव्यभिचारिण एव गमकत्वमिति व्यभिचारिणो लिङ्गत्वमनुपपन्नम् ।

---

पकत्वमपि कथं स्यात् ? प्रमाणभूतस्यैव हेतोरनुमापकत्वस्वीकारादित्यर्थः । किं वा वक्त्रभिप्रायानुमानस्यापि प्रामाण्यं न स्याच्छब्दवल्लोकेऽनुमानस्यापि क्वचिद् व्यभिचारदर्शनात् । ननु भवतु धूलीपटलादिभिर्वन्ह्याद्यनुमाने व्यभिचारः शब्देन वक्त्रभिप्रायानुमाने तु न व्यभिचारो दृश्यते गामानयेत्यादिवाक्यवक्तुर्गोकर्मकानयनानुकूलस्यैवाभिप्रायस्य दर्शनादित्याशङ्क्याह—अन्यथेति । अन्यथासंविदानस्येत्येकं पदं तथा—अन्यथावाक्यरचनादर्शनादित्येकं पदम् । अन्यथासंविदानस्य=अन्यथाजानानस्य—पदार्थमन्यथा जानाति वाक्यं चान्यथा वक्ति यथा पुरःस्थितं पदार्थं शुक्तिं जानन्नपि रजतमिदमिति परप्रतारणाय वदति तत्र रजतमिदमिति वाक्यस्य शुक्तिविषयकाभिप्रायानुमापकत्वं कथं स्यादिति वक्त्रभिप्रायानुमानेपि शब्दस्य व्यभिचारस्तुल्य एव रजतविषयकाभिप्रायाभावेपि रजतमिदमिति प्रयोगदर्शनात्, किंवा तत्र रजतमिदमिति वाक्यस्य सत्त्वेपि तदनुमेयस्य रजतविषयकाभिप्रायस्याऽसत्त्वाद् व्यभिचार इत्यर्थः।

किं चेति, यथा प्रत्यक्षस्य शुक्तिरजतादिविषयकत्वेन व्यभिचारेपि न चक्षुरादीनां बोधकत्वहानिस्तथा नद्यास्तीरे पञ्च फलानिसन्तीति वाक्यजन्यज्ञानस्य व्यभिचारेपि न शब्दस्य बोधकत्वहानिः किं त्वस्त्येव बोधकत्वं शब्दजन्यं च ज्ञानं व्यभिचारि[1] वा भवत्वऽव्यभिचारि वेत्यन्यदेतत् तस्मादस्ति शब्दस्य प्रामाण्यम्, शब्दजन्यज्ञानस्य व्यभिचारे ( भ्रमात्मकत्वे ) चाऽप्रामाण्यमपि । ननु शब्दस्य स्वसामर्थ्येन बोधकत्वेपि वक्त्रभिप्रायानुमाने लिङ्गत्वमेव किं न स्यादित्याशङ्क्याह—लिङ्गस्येति, अव्यभिचारिण एव लिङ्गस्य गमकत्वं भवतीति व्यभिचारिणः शब्दस्य लिङ्गत्वाभावाद् वक्त्रभिप्रायानुमापकत्वमेव न सम्भवति तस्मात् पृथगेव प्रमाणं शब्दः ।

---

१ व्यभिचारि=भ्रमात्मकम् । अव्यभिचारि=प्रमात्मकम् ।

अथ वक्तुराप्तत्वाद् व्यभिचारशङ्कां निवर्त्यानुमानम् ? तथा सति शाब्दमेवार्थे प्रमाणमस्तु प्रतिबन्धिकायाः शङ्काया निरस्तत्वात् । अवश्यं हि बुद्धिविशेषमनुमित्सता प्रथमं पदार्थास्तेषां चाऽन्वययोग्यताऽऽलोचयितव्या, ते चालोच्यमाना द्रागेव वाक्यार्थं बोधयन्तीति नानुमानं प्रतीक्षन्ते ।

किं चानुमिते बुद्धिविशेषे पश्चादनुवादभूतं वाक्यं वाक्यार्थमवबोधयतीति वः सिद्धान्तः, ततश्च यो ना-

---

ननु वक्तुराप्तत्वेन व्यभिचारशङ्कां निवर्त्य शब्देन वक्त्रभिप्रायानुमानं भविष्यतीति नोक्तदोष इत्याशङ्कते—अथेति । परिहरति—तथा सतीति । अयं भावः—त्वया हि व्यभिचारशङ्कावशेनैव शब्दस्य पृथक्प्रामाण्यं पराकृतमऽनुमानविधया च बोधकत्वमुक्तं सम्प्रति वक्तुराप्तत्वेन व्यभिचारशङ्कानिरासे जाते शाब्दमेव ज्ञानमर्थे प्रमाणं भवतु=शब्दस्यैवार्थबोधकत्वं तेन च पृथक् प्रामाण्यं भवतु कृतमनुमानविधया बोधकत्वस्वीकारेण । व्यभिचारशङ्काया अनिरासे चोक्तप्रकारेणानुमापकत्वमपि न स्यादित्यर्थः । उपपादयति—अवश्यं हीति । बुद्धिविशेषम्=अभिप्रायविशेषमनुमित्सता त्वयाऽवश्यं हि प्रथमम्=अभिप्रायानुमानात्पूर्वं पदार्था आलोचयितव्याः=एते पदार्थाः सन्तो वाऽसन्तो वेत्यादि, अन्यथा शशशृङ्गादिशब्दानामप्यनुमापकत्वं स्यात्, तेषां पदार्थानामन्वययोग्यता चाऽऽलोचयितव्या=एते पदार्थाः परस्परमन्वययोग्या वा न वेति, अन्यथा वह्निना सिञ्चेत्सादिवाक्यानामप्यनुमापकत्वं स्यात्, एवमन्वययोग्यतायाः पदार्थानां चालोचने प्रसक्ते ते=पदार्था आलोच्यमाना द्रागेव=झटिति=वक्त्रभिप्रायानुमानात्पूर्वमेव परस्परसंसर्गतारूपं वाक्यार्थं बोधयन्तीति वाक्यार्थबोधनाय नानुमानं प्रतीक्षन्ते । तस्मात् शब्दस्य पृथगेव प्रामाण्यं स्वसामर्थ्येन बोधकत्वं चेत्यर्थः ।

प्रभाकरवैशेषिकयोर्मतेनोक्तरीत्या वेदस्याप्यप्रामाण्यं स्यादित्युपपादयति— किं चेति । अयं भावः— बुद्धिविशेषे=अभिप्रायविशेषे शब्देनानुमिते सति तदनन्तरं तद्वाक्यमनुमितस्यैवार्थस्यानुवादकं सत्तद्वाक्यार्थमवबोधयतीति प्रभकारवैशेषिकयोर्मतम्, एवं सति यो नाम देवदत्तोऽनाप्तोऽप्याप्तत्वेन

माऽनाप्त एवाप्तबुद्ध्या गृहीतस्तद्वाक्यादयथार्थमेव ज्ञान-
मुत्पन्नमित्यभ्युपगन्तव्यं ततश्च दोषाधीनत्वादप्रामा-
ण्यस्य वक्तृदोषाणां च शब्दे संक्रान्त्यऽनभ्युपगमात्
स्वारसिकमेव शब्दे दुष्टत्वमापन्नमिति बलादप्रामाण्यं
वेदस्य प्रसज्यत इत्यास्तां तावत् । तस्मादनाप्तवचसां
सत्येवाप्रामाण्ये वक्तृदोषाधीनत्वाद् वेदे च तदभावा-

---

गृहीतः=ज्ञातस्तस्य देवदत्तस्य वाक्याद् यज्ज्ञानमुत्पन्नं तदऽयथार्थमेवोत्पन्नमि-
त्यवश्यमभ्युपगन्तव्यं वक्तुराप्तत्वानुमानाभावेन व्यभिचारशङ्कानिरासाभा-
वात् प्रत्युत वक्तुरनाप्तत्वेन व्यभिचारशङ्काया एव सत्त्वाद् वाक्यस्याप्रामाण्यं
वक्तव्यं तच्चाप्रामाण्यं दोषाधीनमित्येव प्राप्तमित्याह–ततश्चदोषाधीनत्वादिति ।
वक्तृदोषाणां च तव मते शब्दे संक्रान्त्यभावादप्रामाण्यसम्पादकस्य दोषस्य
चावश्यमभ्युपगन्तव्यत्वाच्छब्दे दोषप्राप्तेः प्रकारान्तरस्य चासम्भवात् स्वा-
भाविकमेव शब्दे दुष्टत्वम्=दोषवत्त्वं त्वयाभ्युपगन्तव्यं तथा च वेदस्यापि श-
ब्दरूपत्वात्स्वाभाविकं दुष्टत्वं दुष्टत्वाच्चाप्रामाण्यं प्रसक्तमित्यास्तां तावत्=न
तव मतं शोभनं येन वेदस्याप्यप्रामाण्यं प्रसज्यत इत्यर्थः । उपसंहरति–तस्मा-
दिति । अनाप्तपुरुषवाक्यानां वक्तृदोषाधीनत्वादेवाप्रामाण्ये सिद्धे सति वेदे
च तदभावात्=वक्तृदोषस्याभावादप्रामाण्यं न संभवतीति प्रमाण्यमेव वेदस्येति
वक्तव्यमित्यन्वयः । वेदस्यापौरुषेयत्वात्तत्र वक्तृदोषो न संभवति वक्तृदो
षकृतमेव च शब्दस्याप्रामाण्यमिति न वेदस्याप्रामाण्यमिति भावः । अत्र प्रा-
भाकरैरप्युक्तम्–

" एवं च सति लिङ्गस्य व्यभिचारोयमीक्ष्यते ।
न शास्त्रस्येति तस्य स्यादर्थासंस्पर्शिता कुतः ? ॥
लिङ्गस्यापि न चैवायं व्यभिचारोस्ति किं तु यः ।
लिङ्गाऽलिङ्गे न शक्नोति विवेक्तुं मूढचेतनः ॥
तस्याऽलिङ्गे लिङ्गरूपसाधारण्यनिबन्धनः ।
लिङ्गसंव्यवहारोयं विपरीतः प्रवर्तते ॥
श्रुतिलिङ्गाधिकरणे विस्तरेणैवमीरितम् ।
तेन न व्यभिचारोस्ति द्वयोर्लैङ्गिकशास्त्रयोः ॥" इत्यादि ।

**त् प्रामाण्यमेव वक्तव्यम् । तस्माच्चोदनालक्षण एव धर्मः श्रेयस्कर इत्यर्थः । यदेव श्रेयस्साधनरूपं यागहोमादि तदेव धर्म इत्युच्यते लोके, नाऽपूर्वमऽन्तःकरणवृत्त्यादि वा लोकप्रसिद्धिविरहात् ।**

---

सूत्रार्थमुपसंहरति—तस्माच्चोदनेति, यश्चोदनालक्षणः सन् श्रेयस्करः स धर्म इत्यन्वयः । श्रेयस्कर इत्यर्थपदव्याख्या । परिनिष्पन्नं धर्मस्वरूपमाह—यदेवेति । प्रभाकरेणापूर्वस्यैव धर्मत्वमुच्यते तन्निराकरोति—नापूर्वमिति । सांख्यैरन्तःकरणवृत्तिविशेषस्य धर्मत्वमुच्यते तन्निराकरोति—अन्तःकरणेति । अत्र हेतुमाह—लोकेति, लोके ह्यपूर्वे वाऽन्तःकरणवृत्त्यादौ वा धर्मत्वव्यवहारो नास्ति किं तु यागादावेवेति यागादिरेव धर्म इत्यर्थः । उक्तं च भाट्टचिन्तामणौ— "अपूर्वनिष्ठैव सुखकारणतावच्छेदिका धर्मत्वं जातिरिति नैयायिकाः, अपूर्वमजानतामपि यागादिकर्तरि धार्मिक इति प्रयोगाद् वेदबोधितेष्टसाधनत्वरूपो यागापूर्वोभयनिष्ठोपाधिरेव धर्मत्वमिति केचित्, वस्तुतस्त्वलौकिकश्रेयस्साधनत्वेन विहितक्रियात्वं विहितत्वं वा धर्मत्वम्, अतः सिद्धं क्रियादीनां धर्मत्वम् ।" इति ।

न्यायरत्नाकरे ग्रन्थकृताप्युक्तम्—" सांख्या ह्यन्तःकरणस्य मनसो वृत्तिविशेषं यागाद्यनुष्ठानजन्यं धर्ममाहुः, शाक्यास्तु चेतसो ज्ञानस्य ज्ञानान्तरजन्यां वासनाम्, आर्हतास्तु कायारम्भकान् परमाणून् पुद्गलाख्यान्, वैशेषिकास्त्वात्मनो विशेषगुणम्, एकदेशिनस्त्वपूर्वम्, सर्वेषु च तेषु लोके धर्मशब्दप्रयोगो न दृष्ट इति न तेषां धर्मत्वम् । किं च श्रेयः साधनवचनो धर्मशब्दो लोके प्रसिद्धो न चान्तःकरणवृत्त्यादीनां तत्साधनत्वं चोदनादिभिरवगम्यते ऽतो न तेषां धर्मत्वम्" इति । सांख्यकौमुद्यामप्युक्तम्—"धर्मोऽभ्युदयनिश्रेयसहेतुस्तत्र यागदानाद्यनुष्ठानजनितो धर्मोऽभ्युदयहेतुः, अष्टाङ्गयोगानुष्ठानजनितश्च निश्रेयसहेतुः ।" इति । इत्यनेन सांख्यानां यागादेर्धर्मत्वं नाभिमतं किं तु यागादिजन्यस्यैव तस्य चात्मनि पुष्करपलाशवन्निर्लेपे वृत्त्यऽसम्भवादन्तःकरणवृत्तित्वमेव प्राप्तमित्यनुसन्धेयम् । वार्तिकेप्युक्तम्—

' तस्मात्तेष्वेव धर्मत्वं धर्माणीति च दर्शनात् । (यज्ञेन यज्ञमयजन्तेत्यत्र)
लिङ्गसंख्याविनिर्मुक्तो धर्मशब्दो निदर्शनम् ॥

**नन्वऽपूर्वमेव श्रेयस्साधनम् ?, न, अवान्तरव्यापार-मात्रत्वात् । तस्माद् यागादिरेव श्रेयस्साधनरूपेण ध-र्मः, तद्रूपाभावाच्च न शूद्रकृतस्य धर्मतापत्तिः । चोद-**

---

(साख्यमतम्) अन्तःकरणवृत्त्यादौ वासनायां च चेतसः । (बौद्धमतम्)
(जैनमतम्) पुद्गलेषु च पुण्येषु नृगुणेऽपूर्वजन्मनि (नृगुण इति वैशेषिकमतम्, अपूर्वेति प्रभाकरमतम्)
प्रयोगो धर्मशब्दस्य न दृष्टो न च साधनम्— ।
पुरुषार्थस्य ते ज्ञातुं शक्यन्ते चोदनादिभिः ॥ " इति ।

ननु कार्योत्पत्त्यऽव्यवहितपूर्वकाले कारणेन भवितव्यं तत्र स्वर्गादिफलस्य कारणं धर्म एव तथा च यस्यैव स्वर्गाद्युत्पत्त्यव्यवहितपूर्वकालभावित्वमर्हति तस्यैव धर्मत्वं युक्तं न चैतद् यागादौ क्षणविनाशिनि संभवति यागाद्युत्पन्नमपूर्वं तु स्वर्गाद्युत्पत्तिपर्यन्तं तद्भोगपर्यन्तमपि वा स्थातुमर्हतीति तस्यैव धर्मत्वं युक्तमिति प्रभाकरः शङ्कते—नन्विति । उक्तं च प्राभाकरैः—"क्रिया क्षणविनाशिनी न कालान्तरभाविनः स्वर्गादेः साधनायोपपद्यत इति कालान्तरावस्थायि क्रियातो भिन्नं कार्यमऽपूर्वं लिङादयो बोधयन्तीति स्थितम् ।"
तथा—" क्रिया हि क्षणिकत्वेन न कालान्तरभाविनः ।
स्वर्गादेः साध्यमानस्य समर्था जननं प्रति ॥
इष्टस्याजनिका सा च नियोज्येन फलार्थिना ।
कार्यत्वेन न संबन्धमर्हति क्षणभङ्गिनी ॥
तस्मान्नियोज्यसंबन्धसमर्थं विधिवाचिभिः ।
कार्यं कालान्तरस्थायि क्रियातो भिन्नमुच्यते ॥ " इत्यादि ।

परिहरति—नेति । हेतुमाह—अवान्तरेति । यागादिभिः स्वर्गादौ जननीये यागादीनामपूर्वं व्यापाररूपमस्ति व्यापारवत एव कारणस्य साधनत्वात्करणत्वादिति नापूर्वं धर्मः किं तु यागादिरेव धर्मस्तदेवाह—तस्मादिति । यागादीनामपि यद् धर्मत्वं तत् श्रेयस्साधनरूपत्वेनैवास्ति । अत एव शूद्रकृतस्य यागादेः श्रेयस्साधनत्वाभावाद् धर्मत्वं न भवतीत्याह—तद्रूपेति । तद्रूपाभावात्=श्रेयसाधनरूपत्वाभावात् । श्रेयस्साधनस्यैव धर्मत्वस्वीकारात्, चोदनालक्षणमात्रस्य=ज्योतिष्टोमादेरिव हिंसातदभावादेरपि धर्मत्वं न प्रसज्येतेति द्वितीयसूत्रे सूत्रकारेणार्थशब्दो धर्मस्य विशेषणत्वेनोपन्यस्तः—"चोदनालक्षणोऽर्थो धर्मः"

**नालक्षणमात्रस्य धर्मत्वं माभूदित्यर्थशब्देन विशेष्यते ।**
**चोदनाशब्देन च प्रवर्तकं निवर्तकं च वाक्यमुच्यते ततश्च निषेधवाक्यैः " न हिंस्यात् " इत्यादिभिरनर्थत्वेन लक्ष्यमाणानां हिंसादीनामपि धर्मत्वं स्यात् तद्व्यावृत्त्यर्थं य एवार्थरूपेण प्रवर्तकवाक्यैर्लक्ष्यते तस्यैव धर्मत्वं वक्तुमर्थग्रहणम् ।**

---

इति, एतदाह–चोदनालक्षणेति ।

चोदनापदार्थमाह–चोदनाशब्देति, चोदनाशब्देन प्रवर्तकं निवर्तकं च वाक्यमुच्यते तत्र यथा प्रवर्तकवाक्यं प्रमाणं यस्मिन् स धर्मो यथा यागादिस्तथा निवर्तकं वाक्यं प्रमाणं यस्मिन् स धर्मो यथाऽहिंसादिरित्येवमऽहिंसादीनामप्यर्थपदा ऽभावे धर्मत्वं स्यात्, अत्यल्पमिदमुच्यते–"मा हिंस्यात्" इत्यादिप्रतिषेधवाक्यैरनर्थत्वेन लक्ष्यमाणानां हिंसादीनामपि धर्मत्वं स्यादित्याह– ततश्चेति । अर्थपदसत्त्वे तु स्वर्गादिश्रेयस्साधनत्वेन यागादीनामऽकरणप्रत्यवायपरिहाररूपश्रेयस्साधनत्वेन नित्यानां कृतपापप्रक्षालनादिरूपश्रेयस्साधनत्वेन प्रायश्चित्तादिनैमित्तिकानां च धर्मत्वं भवति न हिंसातदभावादीनां श्येनादेश्चेत्यर्थः, तदाह– य एवेति। न च हिंसाभावस्यापि हिंसानिवृत्तिरूपत्वेन श्रेयःसाधनत्वाद्धर्मत्वं स्यादिति वाच्यम्, अभावस्य कथमपि श्रेयस्साधनत्वाभावात् निवृत्तेः किंचित्साधनत्वासंभवाच्च द्रव्यगुणकर्मणामेव साधनत्वनियमात्, ग्रन्थकृत्स्वयमेवाधिकरणान्ते "इदं चापरमेकदेशिनः प्रष्टव्याः" इत्यारभ्य "यो हि हिंसायामुद्युक्तः प्रतिषेधवशान्निवर्तते न तं धार्मिक इत्याचक्षते किं त्वऽधर्मान्निवृत्त इत्येतावत्" इत्यन्तेन हिंसाऽभावादीनां धर्माभावत्वं वक्ष्यतीत्यनुसन्धेयम् । अर्थरूपेण=श्रेयस्साधनरूपेण । प्रवर्तकवाक्यैरिति प्रवर्तकवाक्यावयवभूतपदोपस्थापितैः पदार्थैरित्यर्थो मीमांसकमते पदार्थानामेव वाक्यार्थलक्षकत्वस्वीकारात्, तदुक्तं ग्रन्थकृता स्वन्यायरत्नमालायाम् —

" तस्मान्न वाक्यं न पदानि साक्षाद्वाक्यार्थबुद्धिं जनयन्ति, किं तु- ।
पदस्वरूपाभिहितैः पदार्थैः संलक्ष्यते ऽसाविति सिद्धमेतत्" ॥ इति ।

असौ–वाक्यार्थः । यद्यपि चोदनाशब्देन प्रवर्तकं निवर्तकं चोभयविधमेव वाक्यमुच्यते तथाप्यर्थपदसांनिध्यादेव "यः प्रवर्तकवाक्यैर्लक्ष्यते" इति लब्धम्,

भाष्ये च श्येनादिग्रहणं तत्साध्यहिंसादिलक्षणार्थम्। उपरिष्टात्—"हिंसा हि सा सा च प्रतिषिद्धा" इति विवरणात्।

केचित्तु— लक्षणां परिहरन्तः श्येनादिस्वरूपमेवार्थपदस्य व्यावर्त्यं मन्यन्ते, तेषामेव "नैव श्येनादयः कर्तव्या विज्ञायन्ते" इति विधेयत्वनिराकरणेन प्रतिषेधविषयत्वसमर्थनात्। कथं पुनस्तेषां विधेयत्वं निराक्रियते? तत्राहुः—यस्य हि विधिः स्वसिद्ध्यन्यथानु-

---

निवर्तकवाक्यरूपचोदनाप्रमाणकानां हिंसातदभावादीनामर्थत्वाभावात्। प्रवर्तकवाक्यरूपचोदनाप्रमाणकस्यापि श्येनादेश्चानर्थत्वान्न धर्मत्वमिति सिद्धान्तः।

भाष्ये चेति। "कोऽनर्थः? यः प्रत्यवायाय श्येनो वज्र इषुरित्येवमादिः" इति भाष्ये श्येनादिग्रहणं श्येनादिसाध्यहिंसादिलक्षणार्थमस्ति श्येनादीनां स्वरूपेणानर्थत्वाभावात् स्वसाध्यहिंसादिफलकत्वेन वा स्वसाध्यहिंसादिद्वारा वाऽनर्थत्वात्। श्येनादीनां श्येनादिसाध्यहिंसाद्युपलक्षकत्वे भाष्यमेव प्रमाणयति—उपरिष्टादिति। "कथं पुनरसावनर्थः" इति भाष्येण श्येनादेरनर्थत्वकारणं पृष्ट्वा "हिंसा हि सा" इति समाहितं, न च श्येनादीनां हिंसारूपत्वं तस्माज्ज्ञायते श्येनादिग्रहणं तत्साध्यहिंसाद्युपलक्षणकमित्यर्थः।

प्राभाकरास्तु श्येनादिग्रहणस्य तत्साध्यहिंसाद्युपलक्षणार्थत्वे लक्षणावृत्त्याश्रयणाद् गौरवं स्यादिति साक्षाच्छ्येनादीनामेवार्थपदव्यावर्त्यत्वं वदन्ति हिंसाद्युपायानां श्येनादीनां व्यावृत्त्या तत्साध्यहिंसादीनामर्थादेव व्यावृत्तिलाभाल्लक्षणाश्रयणस्यान्याय्यत्वादित्याह—केचित्त्विति। तेषामेव=श्येनादीनामेव नैवेत्यादि भाष्येण प्रतिषिद्धत्वसमर्थनादित्यन्वयः। ननु श्येनादीनामेव साक्षात्प्रतिषिद्धत्वे विधेयत्वं न स्यात् प्रतीयते च यजेतेति लिङा विधेयत्वं तत्केन प्रकारेण श्येनादीनां विधेयत्वं निराक्रियत इति पृच्छति भाट्टः—कथमिति। उत्तरमारभते—तत्राहुरित्यादिना। एतदेवोपपादयति—यस्येत्यादिना। यस्य हि कर्मणो विधिरन्यथा=रागादिना नोपपद्यते किं तु स्वयमेव स्वानुष्ठानमाक्षिपति यथा नित्याग्निहोत्रविधिः तत्र रागादिना प्रवृत्त्यभा-

पपत्त्याऽनुष्ठानमाक्षिपति तद्विधेयमित्युच्यते, काम्येषु च कर्मसु कामनावशादेव प्रवृत्तिसिद्धेस्तत एव विधिः सिध्यन्नऽन्यथानुपपत्त्यभावान्नस्वयमनुष्ठानमाक्षिपति।

ननु कर्तव्यताबोधनमेव प्रवर्तनं कर्तव्यता च वेदे यागस्य लिङैव बोधितेति कथमविधेयत्वम्?। सत्यम्, न तु यागस्य कर्तव्यता लिङाऽभिधीयते, स्वार्थस्य कर्त-

---

वात् तत्=नित्याग्निहोत्रादिकं विधेयमित्युच्यते। नैवं श्येनादावस्ति तत्र रागेणैव प्रवृत्तिसम्भवात्तदाह—काम्येष्विति। काम्येषु कर्मसु=श्येनादिषु कामनावशादेव=रागेणैव प्रवृत्तिसिद्धेस्तत एव=रागत एव सिद्ध्यन् विधिर्न स्वयमनुष्ठानमाक्षिपति किंत्वन्यथानुपपत्त्यभावात्=रागादिना प्रवृत्त्युपपत्तिसम्भवाद् रागादिना श्येनादौ प्रवृत्तिर्नोपपद्यत इति वक्तुमशक्यत्वाद्राग एव श्येनाद्यनुष्ठानमाक्षिपतीति न श्येनादीनां विधेयत्वमित्यर्थः। फलहीनानां नित्यनैमित्तिकानामेव कर्मणां विधेयत्वमस्ति तत्र वेदाज्ञावशादेव प्रवृत्तेः। सफलानां कर्मणां विधेयत्वं नास्ति तत्र रागतः प्रवृत्तिसंभवादिति न श्येनादीनां विधेयत्वमिति भावः। उक्तं च प्राभाकरैः—"यद्यपि जीवनमन्तरङ्गं नित्यं च तथापि तस्मिन्नियोज्यविशेषणे समाश्रीयमाणे विधेरपरमनुष्ठानाक्षेपकत्वं कल्पनीयं काम्ये त्वधिकारिविशेषणे तदर्थितयैव प्रधाने प्रवृत्तेर्विधेरनुष्ठानाक्षेपकत्वकल्पना न कर्तव्या।" इति।

ननु तवानेन कथनेन—यस्य विधिः प्रवर्तकस्तस्य विधेयत्वमिति सिद्धं तत्र प्रवर्तनं नाम कर्तव्यताबोधनमेव कर्तव्यता च वेदे यागस्य लिङैव बोधितेति कथं श्येनादीनामविधेयत्वं प्राप्तमिति भाट्टः शङ्कते—नन्विति। उत्तरमाह—सत्यमिति। सत्यं कर्तव्यताबोधनमेव प्रवर्तनं कर्तव्यता च लिङैव बोध्यते तथापि न यागस्य कर्तव्यता लिङा बोध्यते, किं तु स्वार्थस्य=अपूर्वस्यैव कर्तव्यता लिङा बोध्यतेऽपूर्वस्यैवालौकिकस्य सम्पादनीयत्वात्। यागस्तु तस्य=अपूर्वस्य विषयः करणं च तत्रापूर्वनिष्पादकत्वेन कृतिव्याप्यत्वाद् यागस्य करणत्वं कृत्यभिनिर्वर्त्यापूर्वावच्छेदकत्वेन च विषयत्वं सोयं कर्तव्यतात्मा=कर्तव्यतैवात्मा स्वरूपं यस्य सः, कर्तव्यतां त्यक्त्वाऽपूर्वस्य निरूपयितुमशक्यत्वात् कर्तव्यतात्मा, नियोगार्थः=नियोगलक्षणोर्थः=पदार्थः

व्यतां लिङ्ऽभिधत्ते यागश्च तस्य विषयः करणं च सोयं कर्तव्यतात्मा नियोगार्थोऽन्यथानुपपत्त्या स्वविषयस्य कर्तव्यतां बोधयन्नऽनुष्ठापक इत्युच्यते। श्येनादीनां तु रागादेवानुष्ठानसिद्धेर्न नियोगस्तेषामनुष्ठानमाक्षिपतीति न तेषां विधेयत्वम्। असति च विधेयत्वे तेषां निषेधविषयत्वादनर्थत्वमिति तद्व्यावृत्त्यर्थमऽर्थपदमिति।

---

नियोगापरपर्यायमऽपूर्वम्, अन्यथानुपपत्या=यागं विनाऽपूर्वस्योपपत्त्यभावादिति स्वविषयस्य=यागस्य कर्तव्यतां बोधयन्नियोग एवानुष्ठापक इत्युच्यते। शत्रुमरणादिफलकत्वाच्छ्येनादीनां तु रागादेवानुष्ठानं भवतीति न नियोगस्तेषाम्=श्येनादीनामनुष्ठानमाक्षिपपीति न तेषाम्=श्येनादीनां विधेयत्वम्। यदा च श्येनादीनां विधेयत्वं नास्तीति सिद्धं तदा हिंसादिफलकत्वात् निषेधविषयत्वमायातमित्यनर्थत्वं प्राप्तमिति तद्व्यावृत्त्यर्थम्=अनर्थभूतश्येनादिव्यावृत्त्यर्थमऽर्थपदमुपन्यस्तमित्यर्थः।

अयंभावः-"मा हिंस्यात्सर्वा भूतानि" इति वाक्येन मीमांसकमते फलीभूतहिंसाया निषिद्धत्वाच्छ्येनस्य च शत्रुमरणमेव फलमिति हिंसाफलकत्वाच्छ्येनादीनामपि निषेधविषयत्वं प्राप्तं तेन चानर्थत्वमिति श्येनादिव्यावृत्त्यर्थमर्थपदम्। यथा च प्राभाकरैर्यागस्य विषयत्वं करणत्वं च प्रतिपादितं तत्सङ्क्षेपेणात्र व्युत्पत्त्यै प्रदर्श्यते, तथा ह्युक्तम्-"क्रिया क्षणविनाशिनी न कालान्तरभाविनः स्वर्गादेः साधनायोपपद्यते इति कालान्तरस्थायि क्रियातो भिन्नं कार्यमपूर्वं लिङादयो बोधयन्तीति स्थितं, कार्यं च कृतीप्सितमुच्यत इति, कृतिरात्मव्यापारः पुरुषप्रयत्न इत्यनर्थान्तरम्, चेतनश्चात्मा कार्ये बोध्यतयाऽन्वयमुपैति, न चान्यव्यापाराभिनिर्वर्त्यमऽन्यः स्वसम्बन्धितया कार्यत्वेन संवेदयितुमलमित्यात्मनो मानसप्रत्यक्षसमधिगमनीयः प्रयत्नः स्वव्यापारः, अतस्तन्निर्वर्त्यमेवापूर्वं कार्यमाऽऽत्मा मन्यते, प्रयत्न एव भावितव्येऽपूर्वे प्रयोजकभूतस्य भावयितुरात्मनो व्यापार इति भावनाशब्देनोच्यते। तस्य तथाविधस्य कार्यस्य नूनं केन चिद्भावार्थेनावच्छेदो न हि प्रयत्नो भावार्थमन्तरेणास्ति सर्वो हि पुरुषप्रयत्नः कंचिद्भावार्थमवश्यमाश्रयति तेन विना तद्-

तत्रेदं वक्तव्यम्—कस्मिन्नंशे तेषां व्यावृत्तिरिति । धर्मत्वे ? इति चेत् ?, न, तत्स्वरूपानभिधानात् । इदं हि सूत्रं वेदार्थस्य कार्यत्वप्रतिपादनार्थं न कर्मस्वरूपलक्ष-

---

भावात् तेन प्रयत्नाविनाभावी भावार्थः ( यागः ) प्रयत्नाभिनिर्वर्त्यमपूर्वम-वच्छिनत्ति, अवच्छेदकतयैव विषयभावम् ( विषयत्वम् ) यत्रैव हि यो भवति नान्यत्र स तस्य विषय इति विषयविदः, अनन्यत्र विषयार्थः, अत एव भाव्य एवार्थो विषयो भाव्यस्यैव पुरुषप्रयत्नगोचरत्वात् । स च विषयीभूतभावार्थावच्छिन्नो विध्यर्थः कार्यात्मा प्रतीतः करणमितिकर्तव्यतां चापेक्षते, अन्यत्रापि साध्ये दर्शनात्, तत्र स एव भावार्थो विषयीभूतः करणमित्यवसीयते कृतिव्याप्यत्वाद् यो हि यया कृत्याऽन्यार्थप्रवृत्तया विषयी क्रियते स एव तत्र करणं यथा परशुरुद्यमननिपातनाभ्यां काष्ठगतद्वैधीभवनलक्षणकार्ये प्रवृत्ताभ्यां व्याप्यमानस्तयोरेव द्विधाभवनलक्षणफलावच्छेदलब्धद्वैधीकरणव्यपदेश्ययोश्छिदिधातुवाच्ययोः करणं तथेहाप्यऽपूर्वार्थप्रवृत्तपुरुषप्रयत्नव्याप्यमानो भावार्थस्तस्मिन्नेव प्रयत्नेऽपूर्वभावनारूपे करणम् । यदि विषयीभूतस्य करणता हन्त तर्हि दर्शपूर्णमासाभ्यामित्यत्र तन्त्राभिहितानां तन्त्रेणैव प्रतिपत्त्यनुबन्धत्वाद्विषयभावस्यैकत्वादेकमेव करणं स्यात् ततश्च भेदेनेतिकर्तव्यतासम्बन्धो न स्यात्, उच्यते— न सम्यगवधृतमायुष्मता श्रुतिशालिनां वचः; यदेव विषयीभूतं तदेव करणं नान्यदिति तस्यार्थः ।" इत्यादि । विस्तरस्त्वाकरेषु द्रष्टव्य इत्युपरम्यते ।

प्रभाकारमतं पराकर्तुमुपक्रमते—तत्रेदमित्यादिना । यदुक्तम् "तद्व्यावृत्त्यर्थमर्थपदम्" तत्रेदं वक्तव्यम् ? कस्मिन्नंशे तेषां=श्येनादीनां व्यावृत्तिरिति किं श्येनादीनां धर्मत्वव्यावृत्त्यर्थमर्थपदं किं वा कार्यत्वव्यावृत्त्यर्थमर्थपदमित्यर्थः। उत्तरमाह—धर्मत्वेति, श्येनादीनां धर्मत्वव्यावृत्त्यर्थमर्थपदम् । परिहृति—नेति । अर्थपदं धर्मत्वव्यावृत्त्यर्थमपि न सम्भवति तत्स्वरूपानभिधानात्=धर्मस्वरूपस्याकथनात् । यदि जैमिनिना पूर्वं धर्मस्वरूपमुक्तं स्यात्तदा श्येनादीनां धर्मत्वव्यावृत्तिः सिद्ध्येतापि नैवमस्ति, निषेधस्य प्रतियोगिज्ञानाधीनत्वात् धर्मस्वरूपे चाऽज्ञाते धर्मत्वव्यावृत्तिरपि कथं सिद्ध्येतेत्यर्थः। उक्तोपपत्तये प्रभाकरमतेन द्वितीयसूत्रस्याभिप्रायं प्रकटयति—इदमिति । "चोदनालक्षणोऽर्थो धर्मः" इदं

णार्थं यतः श्येनादीनां धर्मत्वं मा प्रसाङ्क्षीदित्यर्थप-
देन व्यावृत्तिः क्रियेत ।

यदि परं कार्यत्वव्यावृत्तिः स्यात्सा चायुक्तेत्युक्तं
प्राक् । भवतु वा वाक्यभेदाङ्गीकारेण धर्मलक्षणार्थ-
मपि सूत्रं तथापि चोदनालक्षणपदेन कार्यात्मकमपू-
र्वमुद्दिश्य तस्य धर्मत्वमुच्यत इति वो मतम्, तत्र

---

हि सूत्रं तव मते वेदार्थस्य कार्यत्वप्रतिपादनार्थं न धर्मस्वरूपप्रतिपादनार्थं यतः=
येन श्येनादीनां धर्मत्वं मा प्रसज्येतेत्यर्थपदेन श्येनादीनां व्यावृत्तिःक्रियेत ।
यदि सूत्रस्य धर्मस्वरूपप्रतिपादकत्वं स्यात्तदार्थपदेन श्येनादीनां व्यावृत्तिः
स्यादपि नैवं तव मतेस्तीति भावः । प्रभाकरमतं पूर्वमेवोक्तम्-"चोदनालक्ष-
णशब्देन कार्यमुच्यते धर्मशब्देन वेदार्थः" इति (४७पृ) तदेवात्राप्यनुसन्धेयम् ।

ननु नार्थपदेन श्येनादीनां धर्मत्वव्यावृत्तिरुच्यते येनोक्तदोषः स्यात् किं
तु कार्यत्वव्यावृत्तिरुच्यते यथा-योर्थात्मको वेदार्थः स कार्य रूप इति सूत्र-
स्वारस्याद् वेदार्थस्य श्येनादेरर्थात्मकत्वाभावान्न कार्यत्वमिति प्राप्तमिति द्विती
यपक्षं शङ्कते-यदीति । परिहरति-सा चेति । सा=कार्यत्वव्यावृत्तिरयुक्ता
इत्युक्तं प्रागिति-"अथोद्देश्यवेदार्थविशेषणम्(अर्थपदम्) ? ततोयमार्थो भवति-
योऽर्थात्मकोऽभ्युदयात्मको वेदार्थः स कार्यरूपस्ततश्च श्येनादिनियोगानां
निषिद्धफलत्वेनानभ्युदयरूपाणां कार्यता न स्यात्, मा भूदिति चेन्न तेषामपि
लिङा कार्यतावगमात्" इत्यादि(६०।६१ पृष्ठयोः)पूर्वमेवोक्तम् ।

ननु "पूर्वसूत्राद् वेदाथपरं धर्मपदमनुषज्य-चोदनालक्षणो वेदार्थ इ-
त्येकं वाक्यम्, अर्थो धर्म इत्यपरं वाक्यम्" इत्येवं यन्मया (६२पृ)पूर्वमुक्तं तदनु-
सारेण वाक्यभेदमङ्गीकृत्य सूत्रं धर्मलक्षणार्थमपीति व्याख्यास्यामस्तथा च
यथा तव मतेप्यनेनैव सूत्रेण धर्मस्वरूपं ज्ञात्वाऽर्थपदेन हिंसादीना व्यावृत्तिः
क्रियते तथा मन्मतेप्यनेनैव सूत्रेणार्थात्मकस्य धर्मत्वं ज्ञात्वार्थपदेन श्येनादीनां
व्यावृत्तिः क्रियते इत्याशङ्क्याह-भवतु वेति । निराकुर्वन्नाह-तथापीति । चो-
दनालक्षणपदेन कार्यात्मकमपूर्वमुद्दिश्य तस्य=अपूर्वस्य सूत्रेणानेन धर्मत्वमु-
च्यते इति हि वः=युष्माकं प्राभाकराणां मतमस्ति, यदा ह्यपूर्वस्यैव धर्मत्वं
तदा श्येनयागजन्यापूर्वस्यैवार्थपदेन धर्मत्वव्यावृत्तिर्युक्ता न तु श्येनादेः, नि-

श्येनादियागस्य कः प्रसङ्गो यद्व्यावृत्त्यर्थमर्थपदं स्यात् ? न हि ज्योतिष्टोमादियागस्यापि धर्मत्वमस्ति, अपूर्वस्य धर्मत्वाभ्युपगमात् ।

अथ श्येनाद्यपूर्वस्यैव धर्मत्वमर्थपदेन व्यावर्त्यते ? ततो भाष्ये श्येनादिशब्देन कर्मनामधेयेन तत्साध्यमऽपूर्वं लक्ष्यते इत्यऽविशिष्टा लक्षणा स्यात् । यदि चाऽपूर्वमेव प्रत्युदाहरणम् ततो–"हिंसा हि सा सा च प्रतिषिद्धा" इति भाष्यमसङ्गतं स्यात् । श्येनयागो वा तत्फलं वा हिंसा न त्वऽपूर्वं कथं चिदपि हिंसापदास्पदम् । अस्मिंश्च कल्पे–" कथं पुनरसावनर्थः कर्तव्यत-

---

षेधस्य प्राप्तिपूर्वकत्वनियमात् तव मते यागस्य धर्मत्वाभावाच्छ्येनादेर्धर्मत्वप्राप्तिरेव नास्ति येन धर्मत्वव्यावृत्तिः स्यादित्यर्थः । तत्रेति–यदा हि तव मतेऽनेन सूत्रेणाऽपूर्वस्यैव धर्मत्वमुच्यते तदा कस्य चिदपूर्वविशेषस्य प्राप्तं धर्मत्वमर्थपदेन व्यावर्त्यते इत्येव वक्तुं युक्तं तत्र=एवं स्थिते सूत्रेऽस्मिन्नपूर्वस्यैव प्रसङ्गोऽस्ति न यागस्येति श्येनादियागस्यापि कः प्रसङ्गः प्राप्तः यत्=यस्य श्येनादीनां धर्मत्वस्य व्यावृत्त्यर्थमर्थपदं स्यात् । उपसंहरति–नहीति । तव मते इति शेषः ।

ननु मन्यते श्येनाद्यपूर्वस्यैवार्थपदेन धर्मत्वं व्यावर्त्यते न श्येनादियागस्येति नोक्तोऽसङ्गतिदोष इत्याशङ्कते–अथेति । परिहरति–तत इति, एवं हि " नैव श्येनादयः कर्तव्या विज्ञायन्ते " इति भाष्ये कर्मनामधेयेन श्येनादिशब्देन श्येनादिसाध्यमपूर्वं लक्ष्येतेति यथा मन्मते श्येनादिशब्देन भाष्ये तत्साध्यं हिंसादि लक्ष्यते तथा तव मते श्येनादिशब्देन श्येनाद्यपूर्वं लक्ष्यते इति मदुक्तलक्षणां परिहरता त्वयापि लक्षणाऽऽश्रितैवेति समानो दोष इत्याह–अविशिष्टेति, तुल्येत्यर्थः । दोषान्तरमाह–यदि चेति, यद्यपूर्वमेव प्रत्युदाहरणम्=श्येनाद्यपूर्वस्यैव यद्यर्थशब्देन धर्मत्वं व्यावर्त्यते ततो " हिंसा हि सा" इत्यादिभाष्यमसङ्गतं स्यात् । " हिंसा हि सा " इत्यादिभाष्येण च यदर्थपदव्यावर्त्यं तस्य हिंसात्वमुच्यते हिंसात्वं च श्येनादेर्वा श्येनादिफलस्य वा संभवति न तु कदाचिदप्यऽपूर्वस्येत्याह–श्येनयागो वेति । दोषान्तरमाह–अ-

योपदिश्यते" इति चोद्यम् "नैव श्येनादयः कर्तव्या विज्ञायन्ते" इति चोत्तरमऽपूर्वविषयं स्यात्। न च तस्य कर्तव्यत्वं शक्यते वारयितुं कार्यस्वभावत्वात्।

एवं च यागकर्तव्यतानिषेधार्थमिदं भाष्यमङ्गीकृत्य यत् तत्समाधानाय प्रयत्यते-'कर्तव्यताविषयो हि नियोगो न पुनस्तस्य कर्तव्यतामाह' इति तदपार्थकम्।

काम्येष्वपि विधिरेव प्रवर्तको न फलं तस्य वि-

---

स्मिन्निति। अर्थपदेन श्येनाद्यपूर्वस्य व्यावृत्तिपक्षे हि-"कथं पुनरसौ" "नैव श्येनादयः" इति पूर्वपक्षोत्तरपक्षरूपं भाष्यद्वयं अपूर्वविषयकं स्यात्। "नैव श्येनादयः" इति भाष्येण च श्येनापूर्वस्यैव कर्तव्यतापरिहारः कृतः स्यात्, न चापूर्वस्य कर्तव्यतापरिहारः संभवत्यपूर्वस्य कर्तव्यतामात्रस्वरूपत्वादित्याह-न चेति। तस्य=अपूर्वस्य।

सिद्धान्तान्तरं पराकर्तुमाह-एवं चेत्यादिना "नैव श्येनादयः कर्तव्या विज्ञायन्ते" इति भाष्येण न हि हिंसादिफलकस्य श्येनादिमात्रस्यैव कर्तव्यता पराक्रियते किं तु यागमात्रस्य तथा चापूर्वस्यैव कर्तव्यता प्राप्ता इत्येवमभिप्रायकमिदं भाष्यमित्यङ्गीकृत्य, उक्ताभिप्रायसमाधानाय यत् प्रयत्यते-"कर्तव्यताविषयो हि नियोगः" इत्यादि तदऽपार्थकमित्यन्वयः। कर्तव्यतेति-कर्तव्यताया विषयो नियोगोऽपूर्वमेवास्ति तथापि न तस्य=नियोगस्य कर्तव्यतामाह भाष्यकारः किं तु "कोर्थः? यो निश्रेयसाय ज्योतिष्टोमादिः" इत्यनेन यागस्यैव कर्तव्यतोक्ता तत्र यथा सुखसंपादकसामग्रीनिष्ठस्य सुखसंपादकत्वस्य सुखसामग्रीसंपादके तत्कारणे धने उपचारस्तथा यागज्यन्यापूर्वनिष्ठायाः कर्तव्यताया अपूर्वसंपादके तत्कारणे यागे उपचार इति प्राभाकराभिप्रायस्तदपार्थकम्=पूर्वोक्तेनैवेदं पराहतमित्यर्थः। उक्तं च (९७पृ) "यदि चापूर्वमेव" इत्यादिना।

यदुक्तम्-"काम्येषु च कर्मसु कामनावशादेव प्रवृत्तिसिद्धेः"(९३पृ)इत्यादि तत्पराचष्टे-काम्येष्वपीति, काम्येष्वपि कर्मसु विधिरेव प्रवर्तको न तु फलं तस्य=फलस्य उत्पत्तेर्विध्यधीनत्वेन यागापेक्षाभावात् "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति विधिसत्त्व एव स्वर्गोत्पत्तिः सम्भवति विध्यभावे च ज्यो-

ध्यधीनोत्पत्तिकत्वेन यागापेक्षाभावात् । विधिस्तु यागाधीननिष्पत्तित्वाद् यागमनुष्ठापयतीति युक्तम् ।

यदि च विधिरप्रवर्तकः काम्येषु स्याद् इतिकर्तव्यताप्यविधेया स्यात् तस्यामपि फलत एव प्रवृत्तिसिद्धेः साङ्गप्रधानसाध्यत्वात् फलस्य । वक्ष्यति हि—"तद्‌युक्ते तु फलश्रुतिस्तस्मात्सर्वचिकीर्षा" इति । ततश्चाग्नीषोमीयहिंसाया अपि विध्यभावेन निषेधविषयत्वात् तद्‌युक्तस्य ज्योतिष्टोमस्याप्यनर्थत्वापत्तेः "कोर्थः ? यो निश्रेयसाय ज्योतिष्टोमादिः" इतिभाष्यानुपपत्तिः ।

---

तिष्टोमेनापि कथं स्वर्गोत्पत्तिः सम्भाव्येत ? अन्यथा श्येनेनापि स्वर्गः स्यात् यदि काम्येषु कर्मसु फलमेव प्रवर्तकं स्यात्तदा फलस्य स्वविषयकरागद्वारैव प्रवर्तकत्वसम्भवात् प्रवर्तकत्वं रागस्यैव स्यान्न तु विधेः न चैवमस्ति फलस्याऽप्रवर्तकत्वादिति भावः । किं वा फलशब्दस्य तस्येतिशब्दस्य च फलविषयकरागपरत्वं ज्ञेयं पूर्वपक्षिणा काम्येषु रागस्यैव प्रवर्तकत्वस्वीकारात् । विधिसत्त्वे एव रागो भवति रागस्य यागापेक्षा नास्तीत्यर्थः तस्माद्विधिरेव प्रवर्तकः । विधिं परित्यज्य तज्जन्ये रागे प्रवर्तकत्वाश्रयणस्यान्याय्यत्वात् । यागस्वरूपनिष्पत्तिं विनापि रागस्वरूपनिष्पत्तिः सम्भवति विधिस्वरूपनिष्पत्तिस्तु यागस्वरूपनिष्पत्तिं विना न सम्भवतीति विधिरेव स्वस्वरूपनिष्पत्तये प्रवर्तक इत्याह—विधिस्त्विति ।

विपक्षे बाधकमाह—यदीति, यदि विधिर्न प्रवर्तकः फलं राग एव वा प्रवर्तकस्तदा साङ्गस्यैव प्रधानस्य फलप्रदत्वनियमाद् विधेरप्रवर्तकत्वेन प्रधानयागस्याविधेयत्वमिवाङ्गभूतेतिकर्तव्यताया अपि विधेयत्वं न स्यात्तत्रापि रागत एव प्रवृत्तिसम्भवात् । ततश्च=इतिकर्तव्यतासहितसाङ्गयागे रागादेव प्रवृत्तेः अग्नीषोमीयहिंसाया अपि अविधेयत्वेन निषेधविषयत्वं प्राप्तं तेन चानर्थत्वं प्राप्तं ततश्चानर्थभूताग्नीषोमीयहिंसासहितस्य ज्योतिष्टोमस्याप्यनर्थत्वं प्राप्नुयात् ततश्च "कोर्थो यो निश्रेयसाय" इत्यादिभाष्येण यज्ज्योतिष्टोमादेरर्थत्वम्=निश्रेयसार्थत्वमुक्तं तदनुपपन्नं स्यात् । उक्तरीत्या तव मतेन ज्योतिष्टोमादेरप्यनर्थत्वप्राप्तेः । अनर्थभूताङ्गसहितस्य

ननु "न हिंस्यात्" इति निषेधोऽनारभ्याधीतत्वात् पुरुषार्थः, तेनानेन पुरुषार्था एव हिंसाः प्रतिषेद्धव्याः' क्रत्वर्थनिषेधे हि सोपि क्रत्वर्थः स्यात् । अविशेषे त्वेकस्य प्रतिषेधविधेः क्रत्वर्थत्वपुरुषार्थत्वापत्त्या वैरूप्यं स्यात् । तस्मात्पुरुषार्थानामेव हिंसानामिह प्रतिषेधो न क्रत्वर्थानामिति ।

---

प्रधानस्य चानर्थत्वं मद्यविन्दुयुक्तस्य जाह्नवींजलकलशस्येव ज्ञेयम् । ननु ज्योतिष्टोमेऽग्नीषोमीयहिंसां न करिष्याम इत्याशङ्क्योक्तम्—वक्ष्यतीति । तद्-युक्तेति, तृतीयाध्यायसप्तमपादस्य नवमं सूत्रमिदम् । या फलश्रुतिः=यत्फलं श्रूयते तत् तदुयुक्ते=साङ्गप्रधानविषयकं श्रूयते तस्मात् सर्वचिकीर्षा=सर्वं साङ्गमेव प्रधानमनुष्ठेयमित्यर्थः । मन्मते तु काम्येष्वपि विधेरेव प्रवर्तकत्वेनाग्नीषोमीयहिंसादौ मा हिंस्यादित्यस्याप्रवृत्तेर्नानर्थत्वं तथा च न यागस्याप्यनर्थत्वं किं तु निश्रेयसार्थत्वमेव तथा च न "कोर्थः" इत्यादिभाष्यस्यानुपपत्तिरिति भावः ।

ननु "न हिंस्यात् सर्वा भूतानि" इति वाक्यमनारभ्याधीतं तस्मादयं हिंसानिषेधः पुरुषार्थ इति पुरुषार्थेनानेन निषेधेन पुरुषार्थाया एव=भोजनाद्यर्थायाः श्येनादिफलीभूतायाश्च हिंसायाः प्रतिषेधः कर्तव्यः, अग्नीषोमीयहिंसा तु न पुरुषार्था किं तु क्रत्वर्था तस्मान्न तत्रास्य निषेधस्य प्रवृत्तिस्तथा च नाग्नीषोमीयहिंसाया अनर्थत्वं नतरामऽग्नीषोमीयहिंसायुक्तस्य यागस्यानर्थत्वमिति नोक्तभाष्यानुपपत्तिरिति शङ्कते— नन्विति । विपक्षे बाधकमाह—क्रत्वर्थनिषेधेति, यदि माहिंस्यादिति निषेधः क्रत्वर्थः स्यात्तदाऽस्याग्नीषोमीयहिंसायां प्रवृत्तिः स्यात्तदा च तस्या अनर्थत्वं स्यात् नैवमस्ति । किं च मा हिंस्यादिति निषेधस्य क्रत्वर्थत्वे क्रत्वर्थास्वेवाग्नीषोमीयादिहिंसास्वऽस्य प्रवृत्तिः स्यादिति पुरुषार्थानां हिंसानां निषेधालाभादनर्थत्वं न स्यादिति भावस्तथा च नाग्नीषोमीयहिंसाया अनर्थत्वम् । सोऽपि=मा हिंस्यादिति निषेधोपि । यदि मा हिंस्यादितिनिषेधे पुरुषार्थत्वविशेषो नास्ति किं त्वविशेषेणायं निषेधो हिंसामात्रे प्रवर्तते इत्युच्यते तदास्य निषेधस्याविशेषे सति निषेधविधेः क्रत्वर्थत्वमपि स्यात्पुरुषार्थत्वमपि स्यादिति वै-

तदिदं बालसंमोहनम्, नह्यविशेषेणापि प्रतिषेधे वैरूप्यम्। यदि हि क्रत्वर्थत्वपुरुषार्थत्वरूपं विशेषेणोद्दिश्य प्रतिषेधः क्रियेत ततः स्यादपि वैरूप्यं प्रतिषेध्योपस्थापितक्रतुपुरुषगोचरत्वात् प्रतिषेधस्य। यदा तु हिंसामात्रमुद्दिश्य प्रतिषेधः क्रियते तदास्य किं वैरूप्यम्?। तद् यथा— या भोजनार्थं मांसोत्पादने हिंसा या च वैरनिर्यातनार्थतया साक्षात् पुरुषार्था तस्यामुभय्यामविशेषेण प्रतिषिध्यमानायामपि नास्ति वैरूप्यम्, एवमिहापि। इतरथा तत्रापि भोजनाङ्गता पुरुषा-

---

रूप्यं स्यादेकस्य च विधेः क्रतुपुरुषार्थोभयार्थत्वस्यान्याय्यत्वादित्याह—अविशेषेत्विति। उपसंहरति—तस्मादिति। पुरुषार्थानामेव हिंसानामिह=माहिंस्यादिति वाक्ये प्रतिषेध इति नास्य क्रत्वर्थहिंसायां प्रप्राप्तिरिति नाग्नीषोमीयहिंसायाः प्रतिषेधविषयत्वं तथा च न तद्युक्तस्य यागस्यानर्थत्वमिति भावः।

परिहरति—तदिदमित्यादिना। नहीति—अविशेषेण=सामान्यतः प्रतिषेधस्य प्राप्तस्य पुरुषार्थक्रत्वर्थोभयहिंसायां प्रवेशे वैरूप्याऽसंभवात्। अवैरूप्यसमाधानाय वैरूप्यस्वरूपमाह—यदि हीति। "यदि हि क्रत्वर्थपुरुषार्थविशेषानुद्दिश्य" इति पाठान्तरम्। हिंसायाश्च क्रत्वर्थत्वात् पुरुषार्थत्वाच्च क्रतुपुरुषोपस्थापकत्वं विज्ञेयम्। तत्र यदि क्रत्वर्थत्वं पुरुषार्थत्वं चोभयं विशेषतस्तत्तद्रूपत्वेनोद्दिश्य प्रतिषेधः क्रियेत तदा प्रतिषेधस्य प्रतिषेध्यया हिंसयोपस्थापितौ यौ क्रतुपुरुषावुभौ तद्गोचरत्वात्स्यादपि वैरूप्यं, नैवमस्ति, किं तु सामान्यतो हिंसामात्रमुद्दिश्य प्रतिषेधः क्रियते "मा हिंस्यात्सर्वा भूतानि" इति, तस्मान्नास्ति वैरूप्यं ततश्चाग्नीषोमीयहिंसायामपि प्रतिषेधस्य प्रवेशेन तस्याः प्राप्तमनर्थत्वमित्याह—यदेति। वैरूप्याभावे दृष्टान्तमाह—तद्यथेति। लोकेपि द्विप्रकारा हिंसा भवति—एका भोजनार्थं मांसोत्पादनविषया द्वितीया च वैरनिर्यातनाय साक्षात्पुरुषार्था=फलभूता=शत्रुमारणरूपा तयोरुभयोरपि प्रवेशे यथा न प्रतिषेधस्य वैरूप्यं तथाऽग्नीषोमीयादिक्रत्वर्थहिंसायामपि प्रतिषेधस्य प्रवेशेपि न वैरूप्यमित्याह—एवमिति। इहापि= क्रत्वर्थपुरुषार्थोभयहिंसायामपि प्रतिषिध्यमानायां न वैरूप्यम्। विपक्षे बाधकमाह—इतरथेति, यदि

**र्थता च प्रतिषेधस्य स्यादिति वैरूप्यं स्यात् । तस्माद् यैव का चिद् येन केनापि प्रकारेण प्रसक्ता हिंसा सा सर्वा सामान्येन प्रतिषिध्यते । पुरुषार्थश्च प्रतिषेधोऽनारभ्याधीतत्वात् । तस्मादग्नीषोमीयहिंसाप्यऽसति विधेयत्वे प्रतिषेधगोचरः स्यात् । विधेयत्वे तु विधेर्विशेषविषयत्वात् सामान्यविषयो निषेधस्तद्विरोधाद् हिंसान्तराण्यवलम्बते ।**

---

क्रत्वर्थपुरुषार्थोभयहिंसायां प्रवेशेन प्रतिषेधस्य वैरूप्यं स्यात्तदा लौकिकहिंसामात्रविषयत्वस्वीकारेपि प्रतिषेधस्य भोजनाङ्गता=भोजनाङ्गहिंसाविषयता स्यात् पुरुषार्थता=पुरुषार्थभूतशत्रुहिंसाविषयता च स्यादित्युभयविधहिंसाविषयकत्वेनापि वैरूप्यं स्यादेव ।

अवैरूप्यसंपादनाय यथा लौकिकहिंसामात्रस्य त्वया संग्रह उच्यते तथा मयापि हिंसामात्रस्य संग्रह उच्यते इति मास्तमऽग्नीषोमीयादिहिंसानामपि प्रतिषेधविषयत्वेनानर्थत्वमित्युपसंहरति—तस्मादिति । या का चिद् येन केनापि प्रकारेण प्रसक्ता हिंसा सा सर्वैव सामान्यतः प्रतिषिध्यते, सामान्यतो हिंसामात्रं प्रतिषिध्यते न तु तेन तेन विशेषेण रूपेण येन वैरूप्यं स्यादित्यर्थः । प्रतिषेधस्य च यदि पुरुषार्थमात्रहिंसाप्रतिषेधकत्वादेव पुरुषार्थत्वं स्यात्तदा क्रत्वर्थहिंसायां प्रवेशो न स्यात् किं तु पुरुषार्थमात्रहिंसायामेव प्रवेशः स्यान्नैवमस्ति प्रतिषेधस्याऽनारभ्याधीतत्वेन पुरुषार्थत्वात्, अनारभ्याधीतश्च प्रतिषेधः शक्नोति सर्वत्र प्रवेष्टुमित्याशयेनाह—पुरुषार्थश्चेति । उपसंहारमाह—तस्मादिति, हिंसाप्रतिषेधस्या ऽनारभ्याधीतत्वादग्नीषोमीयहिंसायामपि प्रवेशसंभवादग्नीषोमीयहिंसापि प्रतिषेधविषयः स्यात् यतस्तव मते रागादेव साङ्गयागादौ प्रवृत्तेरग्नीषोमीयादिहिंसाया विधेयत्वं नास्तीत्याह—असति विधेयत्वे इति ।

स्वपक्षे साधकमाह—विधेयत्वे इति । अस्मन्मते तु विधेरेव प्रवर्तकत्वेन यथा "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति विधिनैव प्रधानयागे पुरुषस्य प्रवृत्तिस्तथाङ्गभूताग्नीषोमीयादिहिंसायामपि "अग्नीषोमीयं पशुमालभेत" इत्यादिविधिनैव प्रवृत्तिरित्यग्नीषोमीयादिहिंसानां विधेयत्वं प्राप्तं

ननु सत्यपि विधेयत्वे विधेः क्रत्वर्थत्वात् प्रतिषेधस्य च पुरुषार्थत्वाद्विषयभेदेनाविरोधान्न बाधः । नहीदं विरुद्धं क्रतोर्हिंसया भवितव्यं पुरुषस्य तु तद्वर्जने-

---

विधायको विधिश्च "अग्नीषोमीयम्" इत्याद्यग्नीषोमीयादिहिंसाविशेषविषयः "मा हिंस्यात्" इत्यादिप्रतिषेधश्च सामान्यविषय इति, सामान्यविशेषभावेन च विरोधे प्राप्ते सामान्यविधेरेव संकोचो भवतीति "मा हिंस्यात्" इतिप्रतिषेधस्य यागाङ्गभूताग्नीषोमीयादिहिंसाभिन्नैव हिंसा पुरुषार्थरूपा विषयस्तथा चाग्नीषोमीयादिहिंसायामुक्तप्रतिषेधस्य प्रवेशाभावान्नाग्नीषोमीयादिहिंसानामनर्थत्वं न तरां तद्युक्तस्य यागस्येति न "कोर्थो यो निश्रेयसाय ज्योतिष्टोमादिः" इति भाष्यस्यानुपपत्तिरिति भावः । निषेधः="मा हिंस्यात्" इतिनिषेधः । तद्विरोधात्=अग्नीषोमीयादिहिंसाविधिविरोधात् । हिंसान्तराणि=अग्नीषोमीयादिहिंसाभिन्नानि हिंसान्तराणि । अवलम्बते=विषयी करोति ।

ननु यथा हि मद्यस्य रोगविशेषनिवृत्त्यर्थं वैद्यशास्त्रे पानमप्युक्तं धर्मशास्त्रे च पानप्रतिषेधोऽप्युक्तस्तत्र न परस्परं विरोधः पानोक्ते रोगनिवृत्त्यर्थत्वात् प्रतिषेधस्य च पुरुषार्थत्वात् विरोधाभावाच्च न पानोक्त्या पानप्रतिषेधबाधः किं तु पीते हि मद्ये रोगनिवृत्तिरपि भविष्यति पानकृतो दोषोपि भविष्यति, तथा–"अग्नीषोमीयम्" इति हिंसाविधिः क्रत्वर्थः "मा हिंस्यात्" इति हिंसाप्रतिषेधः पुरुषार्थ इति क्रतुपुरुषार्थरूपविषयभेदात् न परस्परं विरोधः, विरोधो हि विषयैक्ये सति भवति, विरोधाभावाच्च न "मा हिंस्यात्" इत्यस्य बाधः इत्याह–नन्विति । अविरुद्धत्वमेवाह–नहीति । इदम्=हिंसया क्रतुर्भवति पुरुषार्थश्च हिंसापरित्यागेन भवतीति न परस्परं विरुद्धमित्यर्थः । किं वा क्रतूपकारकत्वमनर्थहेतुत्वं च न परस्परं विरुद्धमित्यर्थः, तथा चाग्नीषोमीयहिंसाविधिना "मा हिंस्यात्" इति पुरुषार्थप्रतिषेधस्य बाधाभावादग्नीषोमीयहिंसायामप्यऽयं प्रतिषेधः प्रविशति, तथा चाग्नीषोमीयहिंसां कुर्वतो यागसिद्धिरपि भविष्यति पापमपि भविष्यति, यागजन्यं सुखमपि भविष्यति हिंसाजन्यपापजन्यं दुःखमपि भविष्यति । तदुक्तम्–"मृष्यन्ते हि पुण्यसम्भारोपनीतस्वर्गसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखव-

नेति। सत्यम्-अङ्गविधिमात्राऽऽलोचनायां नास्ति विरोधः, ज्योतिष्टोमविधिस्तु साङ्गं प्रधानं पुरुषस्य विदधत् पुरुषार्थहिंसानिषेधमग्नीषोमीयहिंसायामवत-

---

ह्रिक्रणिकाम्" इति, तथा-"न हिंस्यादिति निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते न त्वऽक्रत्वर्थत्वमपि "अग्नीषोमीयं पशुमालभेत" इत्यनेन तु पशुहिंसायाः क्रत्वर्थत्वमुच्यते नानर्थहेतुत्वाभावस्तथा सति वाक्यभेदप्रसङ्गात् न चानर्थहेतुत्वक्रतूपकारकत्वयोः कश्चिद्विरोधो हिंसा हि पुरुषस्य दोषमावक्ष्यति क्रतोश्चोपकरिष्यतीति" इति। युक्तश्चायं पक्षः, अत एव वैष्णवधौरेयैः पिष्टपशुयाग आश्रितः। इत्येवं साङ्ख्यवादी सम्प्रति प्रत्यवतिष्ठते-नन्वित्यादिना। तद्वर्जनेन=हिंसापरित्यागेन पुरुषार्थभूतेन भवितव्यम्।

परिहरन्नाह-सत्यमिति। क्रत्वर्थत्वानर्थहेतुत्वयोः परस्परं न विरोध इति सत्यम्, किं वा हिंसया क्रतुर्भवति हिंसापरित्यागेन च पुरुषार्थो भवतीत्येतन्न परस्परं विरुद्धमिति सत्यम्, किं वा हिंसाविधेः क्रत्वर्थत्वात् हिंसाप्रतिषेधस्य च पुरुषार्थत्वाद्विषयभेदान्नास्ति विरोध इति सत्यं तथापि योयं विरोधाभावः प्रतीयते सोऽङ्गविधिमात्राऽऽलोचनायां प्रतीयते न साङ्गप्रधानविध्यालोचनायाम्। अयम्भावः-"अग्नीषोमीयं पशुमालभेत" इत्यङ्गविधिरेव यदा दृष्टस्तदाऽग्नीषोमीयहिंसया यागो भवतीत्येतावन्मात्रं ज्ञातं भवति न त्वग्नीषोमीयहिंसाया अर्थत्वं वेष्टजनकत्वं वा प्रतीयते यागप्रकरणप्रविष्टाग्नीषोमीयहिंसाविधिनाऽग्नीषोमीयहिंसाया यागसम्पादकत्वमात्रबोधनात्, यागसम्पादकत्वस्याऽनर्थत्वस्य च नास्ति विरोधः सुरापानेन रोगविशेषनिवृत्त्यनर्थसम्पत्त्योरिव, विरोधाभावाच्च नाग्नीषोमीयहिंसाविधिना मा हिंस्यादित्यस्य प्रतिषेधस्य बाधः शक्यते कर्तुं तथा च यागकर्तुर्हिंसाजन्यपापजन्यं दुःखमपि भवतीत्यादि शक्यते वक्तुम्। यदा हि साङ्गः प्रधानविधिरालोच्यते तदा त्वेवं विज्ञायते-विध्युक्तेनानेन यागेन स्वर्गं भावयेदिति, स्वर्गश्च पुण्येन भवतीति साङ्गस्य यागस्य पुण्यसम्पादकत्वं प्राप्तं पापसम्पादकत्वे हि यागेन नरक एव भवेत्। तत्र साङ्गयागस्य पुण्यसम्पादकत्वे सिद्धे यागाङ्गानामग्नीषोमीयादिहिंसादीनामपि पुण्यसम्पादकत्वं प्राप्तं तथा च प्रधानयागविधिना सहालोच्यमानाग्नीषोमीयहिंसाविधिना त्वग्नीषोमीयहिंसायाः पुण्यजनकत्वमपि बोधितं मा

रन्तं निरुणद्धि । न ह्यग्नीषोमीयहिंसां वर्जयता ज्योतिष्टोमः शक्यतेऽनुष्ठातुम् । तस्मादस्ति विरोध इति सामान्यस्य बाधः । विधौ त्वऽप्रवर्तके सत्यऽग्नीषोमीयहिंसापि प्रतिषिद्ध्येत ।

किमर्थं च श्येनस्य विधेयत्वं निराक्रियते ?, प्रतिषे-

---

हिं स्यादितिप्रतिषेधेन च हिंसामात्रस्य पापजनकत्वं बोधितं पुण्यजनकत्व-पापजनकत्वयोश्च परस्परं विरोधात् "अग्नीषोमीयम्" इति हिंसाविधेः "मा हिं स्यात्" इति हिंसाप्रतिषेधस्य च परस्परं विरोधः प्राप्तस्तत्र मा हिंस्यादित्यस्य लौकिकहिंसायां सावकाशत्वात् "अग्नीषोमीयम्" इत्यस्य च निरवकाशत्वादग्नीषोमीयहिंसाविधिना मा हिं स्यादिति प्रतिषेधस्य बाधः क्रियते इत्यभिप्रायेणाह—ज्योतिष्टोमेति । पुरुषस्य=पुरुषसम्बन्धितया पुरुषकर्तृक स्वर्गसम्पादनाय, साङ्गम्=अग्नीषोमीयादिहिंसासहितं, प्रधानम्=यागं विदधानो ज्योतिष्टोमविधिरग्नीषोमीयादिहिंसायामवतरन्तम्=प्रविशन्तं मा हिंस्यादिति पुरुषार्थहिंसाप्रतिषेधं निरुणद्धि=बाधते, यतोऽग्नीषोमीयहिंसां विना यागो न सम्पद्यते । यद्यग्नीषोमीयादिहिंसापि प्रतिषिद्धा स्यात्तदा तस्या अनर्थजनकत्वात् तत्संयुक्तस्य यागस्याप्यनर्थजनकत्वं स्याद् यागे एवाग्नीषोमीयादिहिंसायाः सत्त्वाद् यागस्य च तां विना सिद्ध्यभावादित्याह—न हीति । उपसंहरति—तस्मादिति । विरोध इति—विरोधस्य सत्त्वात् सामान्यस्य=मा हिंस्यादिति प्रतिषेधस्याग्नीषोमीयहिंसाविधिना बाधः । सिंहावलोकितन्यायेन प्रभाकरमतं पुनः परिहरन्नाह—विधाविति । प्रभाकरमतेन विधेरप्रवर्तकत्वेन कामनावशादेव काम्येषु प्रवृत्तिस्वीकारे ह्यग्नीषोमीयहिंसापि प्रतिषिद्धा स्यात्तथा च तद्युक्तयागस्यानर्थजनकत्वमेव प्राप्नुयान्न चैवमिष्टम्, तस्मात्काम्येष्वपि कर्मसु विधेरेव प्रवर्तकत्वं स्वीकार्यम्, विधेः प्रवर्तकत्वे तूक्तप्रकारेण नाग्नीषोमीयहिंसा प्रतिषिद्धा भवतीत्यर्थः ।

पुनरपि सिद्धान्ती भाट्टः प्राभाकरं पृच्छति—किमर्थमिति । यत् त्वयोच्यते "नैव श्येनादयः कर्तव्या विज्ञायन्ते" इतिभाष्येण श्येनादीनां विधेयत्वं निराक्रियते न तु श्येनादिफलस्य हिंसादेरिति, तत्र श्येनादेर्विधेयत्वनिराकरणस्य फलं किमस्तीति वद । ननु यदि श्येनादीनां विधेयत्वं न निराक्रियेत तदा श्ये-

धसिद्ध्यर्थमिति चेत् ?, कः प्रतिषेधः ?, "न हिंस्यात्सर्वा-भूतानि" इति। नायं निषेधः श्येने प्रवर्तते हिंसाविषयत्वात्। श्येनफलं च हिंसा न श्येनः। तथा चोक्तम्-"यो हि हिंसितुमिच्छेत्तस्यायमभ्युपाय इति हि तेषामुपदेशः" इति।

कश्चित्त्वाह-श्येनस्य कर्तव्यत्वे सति बलात्तत्फलमपि हिंसा कर्तव्या भवतीति न निषेद्धुं शक्येत, अतः फलकर्तव्यतानिरासार्थं श्येनकर्तव्यता बलान्निरस्यते इति। तदिदमसम्बद्धम्-यथैव हि श्येनापूर्वस्य कर्तव्य-

---

नादीनां विधेयत्वेन प्रतिषेधविषयत्वं न स्यादिति प्रतिषेधसिद्ध्यर्थं विधेयत्वं निराक्रियते इत्याशङ्क्याह-प्रतिषेधेति। ननु श्येनादीनां प्रतिषेधसिद्ध्यर्थं विधेयत्वं येन निराक्रियते स कः प्रतिषेध इति पुनः पृच्छति सिद्धान्ती-कः प्रतिषेध इत्यनेन। उत्तरमाह प्राभाकरः-न हिंस्यादिति। "न हिंस्यात्सर्वा भूतानि" इत्ययं प्रतिषेध इत्यस्य सिद्ध्यर्थं श्येनादीनां विधेयत्वं निराक्रियते इत्यर्थः। सिद्धान्ती परिहरति-नायमिति। न हिंस्यादिति निषेधः श्येने न प्रवर्तते हिंसाविषयत्वात् श्येनस्य च फलं हिंसा न श्येन एव हिंसारूपस्तस्मान्नायं निषेधः श्येनादिविषयकः अत एव न श्येनादौ प्रवर्तते। अत्र प्रमाणमाह-तथाचोक्तमिति, भाष्यकारेणेतिशेषः। श्येनो हि हिंसाया उपायो न तु स्वरूपेण हिंसारूप इति भाष्यार्थः। यथा हि तन्त्रशास्त्रे निषिद्धानामपि मारणोच्चाटनादीनामुपाय उच्यते तथा वेदेपि श्येनादिरिति भावः।

ननु यदि श्येनस्य विधेयत्वं न निराक्रियेत तदा श्येनफलस्य हिंसाया अपि विहितत्वं बलात्प्राप्नुयात्-यतः श्येनस्य विधेयत्वेनेष्टजनकत्वं प्राप्नुयात् श्येनजन्या च हिंसैवेति तस्या अपीष्टत्वं स्यादेव, न च हिंसाया इष्टत्वमिष्टमस्ति, हिंसाया इष्टत्वनिरासश्च हिंसाविधेयत्वनिरासाधीनोस्ति हिंसाविधेयत्वनिरासश्च श्येनविधेयत्वनिरासाधीन एवेति विवशं श्येनस्य कर्तव्यता=विधेयत्वं निरस्यते, अन्यथा श्येनफलीभूतहिंसाया अपि प्रतिषेधो न सिद्ध्येतेति कस्य चित्प्राभाकरविशेषस्य मतमाह-कश्चिदिति। परिहरति-तदिदमसम्बद्धमित्यादिना। यथैवेति-यथा प्रभाकरमते कस्य चिदप्यपूर्वस्य कर्तव्यता न

तायां सत्यामपि तत्साध्यफलस्य कर्तव्यता न प्रसज्यते तथा यागस्य कर्तव्यत्वे सत्यपि रागप्राप्तस्य फलस्य नास्ति कर्तव्यतापत्तिः। तस्मादनर्थकं श्येनकर्तव्यतानिराकरणम्। तस्माद्धिंसैवात्र प्रत्युदाहरणम्।

इदं चापरमेकदेशिनः प्रष्टव्याः—अर्थशब्देन किमुच्यते इति, यदि श्रेयस्साधनम्?, नित्यानां धर्मत्वं न स्यात्। अथ यन्निषिद्धफलं न भवति तदर्थशब्देनोच्यते?, तथा सति नञर्थविषयस्यापूर्वस्य धर्मत्वप्रसङ्गः,

---

प्रत्याख्यातुं शक्यते इति श्येनापूर्वस्यापि कर्तव्यतायां सत्यामपि श्येनसाध्यफलस्य हिंसायाः कर्तव्यता न प्राप्नोति अपूर्वस्यैव कर्तव्यतास्वरूपत्वात्, तथाऽस्मन्मते श्येनयागस्य कर्तव्यत्वे सत्यपि रागप्राप्तस्य=रागविषयस्य फलस्य हिंसादेर्न कर्तव्यता प्राप्नोति। तस्मात् श्येनस्य विधेयत्वनिराकरणं तवानर्थकम्=व्यर्थमित्याह—तस्मादिति। किं तु "नैव श्येनादयः" इत्यनेन भाष्येण श्येनादिफलस्य हिंसाया एव विधेयत्वं निराक्रियते इत्यर्थशब्दस्य प्रत्युदाहरणं हिंसैव न श्येनादियाग इत्याह—तस्माद्धिंसैवेति।

प्रकारान्तरेण सिद्धान्ती प्राभाकरं प्रतिक्षिपति—इदमित्यादिना। इदम्=वक्ष्यमाणम्। एकदेशिनः=प्राभाकराः। इदमिति विषयत्वं विभक्त्यर्थस्तथा च वक्ष्यमाणविषये प्रष्टव्या इत्यर्थः। प्रष्टव्यमाह—अर्थेति। "चोदनालक्षणोऽर्थो धर्मः" इतिसूत्रेऽर्थशब्दस्य त्वन्मते कोऽर्थ इत्यर्थः। यच्छ्रेयस्साधनं तदर्थशब्दवाच्यमिति तु न सम्भवति नित्यानाम्=सन्ध्योपसनादिकर्मणां श्रेयस्साधनत्वाभावाद् धर्मत्वं न स्यादस्मिन् पक्षे श्रेयस्साधनस्यैव धर्मत्वादित्याह—यदीति। ननु न श्रेयस्साधनत्वमर्थशब्दार्थः किं तु यन्निषिद्धफलं न भवति तदर्थशब्दवाच्यमस्ति तथा च नित्यनां नैमित्तिकानां काम्यानां च कर्मणां निषिद्धफलत्वाभावान्न तेषु धर्मत्वाव्याप्तिः। श्येनादीनां च निषिद्धफलत्वान्न तत्र धर्मत्वस्यातिव्याप्तिरित्याशङ्कते—अथेति। परिहरति—तथा सतीति। एवं हि सुरापानादिनिवृत्तिजन्यं यन्निष्फलमपूर्वं तस्यापि धर्मत्वं स्यात् सुरापानादिनिवृत्तिजन्यस्यापूर्वस्य फलमेव नास्तीति सुतरां निषिद्धफलत्वाभावः। नञर्थविषयस्य="न सुरां पिबेत्" "न कलञ्जं भक्षयेत्" इत्यादौ नञ्-

**चोदनालक्षणत्वान्निषिद्धफलत्वाभावाच्च । भवत्विति चेत् ?, न, लोकविरोधात् । यो हि हिंसायामुद्युक्तः प्रतिषेधवशान्निवर्तते न तं धार्मिक इत्याचक्षते किं त्वधर्मान्निवृत्त इत्येतावत् । तदाहुः-" लोकसिद्धस्य लक्षणं परीक्षकैर्वक्तव्यं न वृद्ध्यादिवत् परिभाषणम् " इत्यास्तां तावत् । इति चोदनासूत्रम् ॥ २ ॥**

---

पदबोधजन्यनिवृत्तिविषयस्य=निवृत्तिजन्यस्य पण्डाऽपूर्वस्येत्यर्थः । उक्तपक्षे पण्डापूर्वस्य धर्मत्वप्राप्तौ हेतुमाह-चोदनेति । तस्याप्यपूर्वस्य चोदनालक्षणत्वात्="न सुरां पिबेत्" इत्यादिचोदनाप्रमाणकत्वात् निषिद्धफलत्वाभावाच्च ।

ननु भवतु सुरापानादिनिवृत्तिजन्यस्याप्यपूर्वस्य धर्मत्वं को दोष इत्याशङ्कते-भवत्विति । परिहरति-नेति । हेतुमाह-लोकेति । यो हि पुरुषो हिंसायां वा सुरापानादौ वा प्रवर्तमानः "मा हिंस्यात्" "न सुरां पिबेत्" इत्यादिप्रतिषेधवशान्निवर्तते तं जना धार्मिक इति नाऽऽचक्षते=वदन्ति किं त्वधर्मान्निवृत्तोयमित्येतावद्वदन्ति । निवृत्तिजन्यापूर्वस्य धर्मत्वे तु सुरापानादिभ्यो निवर्तमानोपि पुरुषः सोमयाजीव धार्मिक उच्येत नैवमस्ति तस्मान्न निवृत्तिजन्यापूर्वस्य धर्मत्वं तथाच "अथ यन्निषिद्धफलं न भवति" इति पक्षोपि न युक्तः । ननु धर्मे कोधिकारोस्ति लोकस्य येन लोकानुरोधात् निवृत्तिजन्यापूर्वस्य धर्मत्वं नोच्येतेत्याशङ्क्याह-तदाहुरिति । लोकेति, परीक्षकैर्विद्वद्भिर्लोकसिद्धस्य पदार्थस्य लक्षणमेव वक्तव्यं न तु यथा भगवता पाणिनिना "वृद्धिरादैच्" इत्यादिपरिभाषा कृता तथा परिभाषणं कर्तव्यम् । तस्माद् यस्य सुरापानादिभ्यो निवृत्तस्य पुरुषस्य लोकैर्धार्मिकत्वं नोच्यते न तस्य धार्मिकत्वमत्र परिभाषणीयम् । किं तु तथैव सूत्रव्याख्या कर्तव्या यथा तस्या धार्मिकत्वं न प्रसज्येत तस्मादत्रार्थशब्देन हिंसादीनामेव व्यावृत्तिः क्रियते ॥ इति चोदनासूत्रं समाप्तम् ॥ २ ॥



( तृतीयं धर्मप्रामाणपरीक्ष्यताधिकरणम् )

## सू– तस्य निमित्तपरीष्टिः॥३॥

**अनेन सूत्रेण चोदनाख्यस्य निमित्तस्य परीक्षणमस्मिन् पादे वक्ष्यमाणम् "अथातः शेषलक्षणम्" "अथ विशेषलक्षणम्" इतिवत्सुखग्रहणार्थमनुकीर्त्यते ॥३॥**

---

"तस्य निमित्तपरीष्टिः"—तस्य=धर्मस्य यन्निमित्तं तस्य परीष्टिः=परीक्षा=प्रतिपादनमिदानीमारभ्यत इत्यर्थः। निमित्तशब्दश्चात्र लक्षणपरः "निमित्तं हेतुलक्ष्मणोः" इत्यमरात् लक्षणं चात्र प्रमाणमेव। एतदेव व्याचष्टे—अनेनेति, अनेन तृतीयसूत्रेण चतुर्थसूत्रादारभ्य वक्ष्यमाणं धर्मप्रमाणपरीक्षणमनुकीर्त्यते येन वक्ष्यमाणप्रमाणपरीक्षणावधारणाय शिष्याः सावधानाः स्युः। सुखग्रहणार्थम्=अनेन वक्ष्यमाणप्रमाणप्रतिपादनसूचनेन शिष्या अग्रिमग्रन्थः प्रमाणपरीक्षापर इति सुखेन=अनायासेन वक्ष्यमाणसूत्रार्थमनालोच्यापि जानीयुरित्यर्थः। अत्र दृष्टान्तमाह–"अथातः" इत्यादिना। यथा वक्ष्यमाणं शेषलक्षणमवधारणाय "अथातः" इत्यनेन सूच्यते, यथा च विशेषलक्षणं वक्ष्यमाणम् "अथ वशेष" इत्यादिना सूच्यते तथात्रापि विज्ञेयम् ॥ इति तृतीयसूत्रं समाप्तम् ॥ ३ ॥

( चतुर्थे धर्मे प्रत्यक्षस्याऽप्रामाण्याधिकरणम् )

चोदनैवेत्यस्याऽर्थस्य साधनाय प्रत्यक्षादीनामनिमित्तत्वमुच्येते—

## सू-सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ॥४॥

प्रत्यक्षं तावदिन्द्रियार्थसंप्रयोगजन्यत्वेन विद्यमा-

---

चतुर्थसूत्रावतरणमाह—चोदनैवेति । धर्मे चोदनैव प्रमाणमित्यन्ययोगव्यवच्छेदस्तदा सिद्ध्येत यदि चोदनाभिन्नस्य कस्य चिदपि प्रमाणस्य विषयो न स्याद्धर्म इति, तथा च धर्मे चोदनैव प्रमणमित्यन्ययोगव्यवच्छेदसाधनाय प्रत्यक्षादीनां धर्मं प्रमातुं सामर्थ्यं नास्तीति "सत्सम्प्रयोग" इत्यादिसूत्रेणोच्यत इत्यर्थः । सूत्रं प्रदर्शयति—सत्सम्प्रयोगेति । पुरुषेन्द्रियाणां सता सम्प्रयोगे सति यद् बुद्धिजन्म तत्प्रत्यक्षमित्युच्यते तच्च प्रत्यक्षमनिमित्तं धर्मे न प्रमाणं तस्य विद्यमानोपलम्भनत्वादित्यन्वयः । सता=विद्यमानेन पदार्थेनेन्द्रियाणां संयोगे सति या बुद्धिरुत्पद्यते तत्प्रत्यक्षं, यथा घटचक्षुस्संयोगे सति यद् घटज्ञानं जायते तत्प्रत्यक्षमित्युच्यते । शुक्तिरजतादिप्रत्यक्षस्थले ज्ञायमानरजतादीनां विद्यमानता न भवतीति भ्रान्तिव्यवच्छेदः, अनुमानादौ च विषयेण सहेन्द्रियसंयोग एव न भवतीत्यनुमानादिव्यवच्छेदः । प्रत्यक्षं हीन्द्रियसम्बद्धमेव विषयं ग्रहीतुं शक्नोति नासम्बद्धमपि धर्मश्च भावित्वान्न विद्यमानोऽथ चातीन्द्रियोपि तस्मान्न प्रत्यक्षविषयो धर्म इत्युक्तं विद्यमानेति । प्रत्यक्षस्य विद्यमानोपलम्भनत्वात्=विद्यमानमात्रार्थग्राहकत्वात् । एतदेव व्याचष्टे—प्रत्यक्षमित्यादिना । विद्यमानोपलम्भनत्वे इन्द्रियार्थसंयोगजन्यत्वं हेतुः । भविष्यति=भाविनि धर्मे । न निमित्तम्=न प्रमाणम् । धर्मस्य विद्यमानतादशायामप्यतीन्द्रियत्वात् प्रत्यक्षाविषयत्वं ज्ञेयम् ।

नोपलम्भनत्वाद् भविष्यति धर्मे न निमित्तम् । सत्सं-प्रयोगजन्यत्वमाभासेपि तुल्यत्वादलक्षणमिति नैया-यिका दूषयन्ति, तत्तु लक्षणानभिधानादऽदूषणम् । न-हीदं लक्षणं प्रत्यक्षस्य किं त्वनिमित्तत्वकथनमात्रम् । तत्र हेतुः विद्यमानोपलम्भनत्वं तत्साधनं च सत्संप्र-योगजत्वम् । न हि सत्संप्रयोगजमऽविद्यमानोपलम्भनं संभवति ।

इन्द्रियार्थसंयोगजत्वं सुखादिज्ञानेष्वव्याप्तेरहेतुरि-

---

ननु नेदं प्रत्यक्षलक्षणं प्रत्यक्षाभासेप्यतिव्याप्तेर्यथा—शुक्तिरजतज्ञानस्थलेपि सता शुक्तिपदार्थेनेन्द्रियसंयोगोस्त्येवेत्याशङ्क्ते—सत्संप्रयोगजन्यत्वमिति । आभासे=प्रत्यक्षाभासे भ्रमे । परिहरति—तत्त्विति । उक्तं दूषणमऽदूषणमेव लक्षणानभिधानात्=सूत्रकृता प्रत्यक्षलक्षणस्या ऽकथनात् । एतदेव विशदयति—न हीति । यदीदं प्रत्यक्षलक्षणं नास्ति तदानेन सूत्रेण किमुच्यत इत्याशङ्क्याह—किं त्विति । अनेन सूत्रेण हि धर्मे प्रत्यक्षं प्रमाणं न सम्भवति=प्रत्यक्षविषयता धर्मस्य न सम्भवतीत्येतावन्मात्रमुच्यते इत्यर्थः । ननु कथं धर्मे प्रत्यक्षविषयता न सम्भवतीत्याशङ्क्याह—तत्रेति । धर्मस्य प्रत्यक्षाविषयत्वे प्रत्यक्षनिष्ठं विद्यमानोपलम्भनत्वं हेतुरस्ति, यतः प्रत्यक्षं विद्यमानमात्रग्राहकमतो धर्मस्य प्रत्यक्षविषयता न सम्भवति । तत्साधनम्=विद्यमानोपलम्भनत्वस्य च हेतुः सत्संप्रयोगजत्वं यतः प्रत्यक्षं सता विद्यमानपदार्थेन सहेन्द्रियसंयोगजन्यमतो विद्यमानमात्रोपलम्भनमतश्च न धर्मग्राहकम् । विपक्षे बाधकमाह—न हीति । यत्प्रमाणं सत्संप्रयोगजं भवति तदऽविद्यमानोपलम्भनं न भवति तथा च प्रत्यक्षमिन्द्रियार्थसंयोगजन्यं भवतीत्यविद्यमानस्य ग्राहकं न भवति, अविद्यमानपदार्थेन सहेन्द्रियसंयोगासम्भवात्,धर्मश्चा ऽविद्यमान इति न प्रत्यक्षेण ग्रहीतुं शक्यते ।

ननु यदीन्द्रियार्थसंयोगजत्वं विद्यमानोपलम्भनत्वस्य साधनं तदास्य साधनस्य विद्यमानोपलम्भनभूते सुखादिप्रत्यक्षेऽव्याप्तिः सुखादिना ज्ञायमानेन चक्षुरादीन्द्रियस्य संयोगाभावात् तस्मादिन्द्रियार्थसंयोगः प्रत्यक्षस्याहेतुः=न कारणम् । तथा च यथा सुखादीनामतीन्द्रियत्वेपि प्रत्यक्षविषयत्वं

ति चेत् ?, न, तेषामपि मनस्संज्ञकेन्द्रियसंप्रयोगजत्वात् । मनस्सद्भावे च सुखादिज्ञानमेव प्रमाणम्, अपरोक्षावभासज्ञानस्येन्द्रियाधीनतया रूपादिज्ञानेषु व्याप्तिदर्शनात् सुखादिविषयमऽपरोक्षज्ञानमिन्द्रियमनुमापयति । तत्र चक्षुरादीनामसंभवात् तेभ्योऽन्यदवतिष्ठते ।

अत्र कश्चित्–नित्यद्रव्यगतविशेषगुणत्वात्सुखादीनां द्रव्यान्तरसंयोगजत्वम्, पार्थिवपरमाणुगतरूपादीनामग्निसंयोगजत्वदर्शनात्, यच्च द्रव्यान्तरं तन्मन इ-

---

तथा धर्मस्यापि प्रत्यक्षविषयत्वं किं न स्यादित्याशङ्कते–इन्द्रियार्थेति । परिहरति–नेति । हेतुमाह–तेषामिति । तेषाम्=सुखादिप्रत्यक्षाणामपि मनस्संज्ञकेन्द्रियसंयोगजन्यत्वात् । सुखादिना मनस्संयोगेन सुखादिप्रत्यक्षस्य जायमानत्वात् मनसश्चेन्द्रियत्वस्वीकारात् सत्संप्रयोगजन्यत्वस्य प्रत्यक्षसाधनस्य न सुखादिप्रत्यक्षेष्वऽव्याप्तिः । ननु मनोऽपि किमपि वस्त्वस्तीसत्र किं मानमित्याशङ्क्याह–मनस्सद्भावेति । यदपरोक्षं ज्ञानं तदिन्द्रियजन्यं भवति अपरोक्षत्वाद्रूपादिप्रत्यक्षवदितिव्याप्तेः सुखादिविषयकमपि यदपरोक्षं ज्ञानं तदिन्द्रियजन्यं भवितुमर्हत्यपरोक्षत्वाद्रूपादिप्रत्यक्षवदिति सुखादिविषयकमपि प्रत्यक्षमिन्द्रियजन्यमिति स्थिते तत्र=सुखादौ चक्षुरादीनामसम्भवात्=चक्षुरादिभिरान्तरस्य सुखादेर्ग्रहणासम्भवात्सुखादिग्राहकमाऽऽन्तरं किमपीन्द्रियमस्तीति प्राप्तं तच्च मन एव तथा च सुखादिज्ञानमेव मनस्सद्भावे प्रमाणमित्यर्थः । अत्र च "कामः सङ्कल्पो विचिकित्सा एतत्सर्वं मन एव" इति श्रुतिरपि सुखादिग्राहकेन्द्रियस्य मन इति नामकरणे प्रमाणम् । तेभ्यः=चक्षुरादिभ्यः । अवतिष्ठते=सिद्ध्यति ।

मनस्सिद्धौ प्राभाकरनैयायिकयोर्मतमाह–अत्रेति । नित्यद्रव्यगतविशेषगुणानां द्रव्यान्तरसंयोगजत्वं नियतमस्ति, यथा पार्थिवपरमाणुगतरूपादीनां विशेषगुणानामग्निसंयोगजत्वं दृश्यते तथात्मगतविशेषगुणानां सुखादीनां द्रव्यान्तरसंयोगजत्वमुचितं यच्च द्रव्यान्तरं तदेव मन इत्युच्यते । तत्रात्मनो नित्यद्रव्यत्वादात्मना सह यदा हि मनस्संयोगो भवति तदैव सुखादिज्ञानद-

त्याह ।

तन्न युक्तम्-शरीरं हि भोगायतनम्, किं च

---

र्शनात् सुखादय आत्ममनस्संयोगजन्या इत्येवं मनस्सत्ताऽनुमीयत इत्यर्थः । अत्र=मनसिद्धौ । तदुक्तं प्राभाकरैः-"या द्रव्यजातिगुणेष्विन्द्रियसंयोगोत्था सा प्रत्यक्षा प्रतीतिः, कानि पुनरिन्द्रियाणि ?, घ्राणनयनरसनत्वक्श्रवणानि बाह्यानि, आन्तरं च मनः । किं पुनस्तेषामस्तित्वे भेदे च प्रमाणम् ? । उच्यते-विषयावबोधस्तावत् कादाचित्को दृश्यते तस्य चात्मा समवायिकारणम्, असमवायिकारणेन च विना कार्यं न जायते इति । तच्च समवायिकारणप्रत्यासन्नं भवति, प्रत्यासत्तिश्च द्विधा दृष्टा-तत्समवायस्तत्कारणसमवायश्च । तत्र तावदात्मनो नित्यत्वात् तत्कारणसमवेतमऽसमवायिकारणं न भवतीत्यात्मसमवेतमेव गुणान्तरमऽसमवायिकारणमाश्रयणीयम्, तत्र च नित्यद्रव्यसमवायिनो वैशेषिकगुणस्य द्रव्यान्तरसंयोग एवाऽसमवायिकारणत्वेनावधारितः । तस्य च द्रव्यस्याश्रयभूतद्रव्यान्तरसद्भावे प्रमाणाभावादऽद्रव्यद्रव्यत्वं निश्चीयते, द्विविधं चाऽद्रव्यद्रव्यम्-परममहदाऽऽकाशादिकं परमाणुरूपं च, तत्रास्य द्रव्यान्तरस्य परममहत्वोपगमे संयोग एवानुपपन्नः संयोगकारणाभावात्, यो हि संयोगः साक्षात् प्रतीयते सोऽन्यतरकर्मजो वोभयकर्मजो वा संयोगजो वा तेन नियतकारणत्वेन संयोगस्यावगतत्वात् तदभावे संयोग एव नास्तीति निश्चीयते, न च परममहतोः साक्षात्संयोगो भवति न चाप्यनुमातुं शक्यते इति पारिशेष्यादणुत्वमेव तस्य द्रव्यान्तरस्या ऽऽश्रीयते । अणुत्वे तत्कर्मवशादेव संयोगोदयोऽनुपपन्नो न भवति, तत्कर्मोत्पत्तौ प्रयत्नवदात्मसंयोग एव कारणम् । सुखदुःखेच्छाद्वेषप्रयत्नानुभवे च तद् द्रव्यं मनःशब्दाभिधेयं निरपेक्षं कारणम् । सर्वार्थस्मृतौ च पूर्वजनितसंस्कारोद्बोधसहकार्यऽनुगृहीतमिति वेदितव्यम् ।" तथा-"तेनाभ्यन्तराणां सुखादीनां ग्रहणे संनिकर्षद्वयं कारणम्-आत्ममनस्संनिकर्षः संयोगारब्धः, सुखादिमनस्संनिकर्षश्च संयुक्तसमवायलक्षणः । बाह्यरूपादिग्रहणे च संनिकर्षचतुष्टयं कारणम्-आत्ममनस्संनिकर्षो मनइन्द्रियसंनिकर्षो द्रव्येन्द्रियसंनिकर्षो रूपादीन्द्रियसंनिकर्षश्च ।" इत्यादि ।

परिहरति-तन्नेति । उपपादयति-शरीरमिति, शरीरं भोगायतन-

तस्य भोगायतनत्वमऽन्यत् तत्संयोगापेक्षसुखाद्युत्पत्तेः ?, अशितपीताद्याधारत्वाच्च न बहिः शरीरात्सुखाद्युत्पत्तिः। अतः शरीरसंयोगादेव सिद्धेर्न द्रव्यान्तरानुमानम्। किं च पार्थिवगुणानामेव द्रव्यान्तरसंयोगापेक्षा दृष्टा न द्रव्यमात्रगुणानाम्। तेजस्संयोग एव च कारणतया दृष्टो न द्रव्यमात्रसंयोगस्तस्मान्नैवं मनस्सिद्धिरिति सुखाद्यऽपरोक्षज्ञानमेव मनसो लिङ्गम्।

---

मिति त्वयापि स्वीकृतं तस्य=शरीरस्य तत्संयोगापेक्षसुखाद्युत्पत्तेरन्यत् किं भोगायतनत्वमित्यन्वयः। उत्पत्तेरिति पञ्चम्यन्तम्। अर्थात्-शरीरस्येदमेव भोगायतनत्वं यत् शरीरसंयोगेन सुखादय उत्पद्यन्ते, नान्यद्रूपं तस्य भोगायतनत्वं वक्तुं शक्यते। तस्माच्छरीरसंयोगादेव सुखाद्युत्पत्तेः सिद्धेर्न सुखाद्युत्पत्त्यर्थं द्रव्यान्तरस्य मनसोऽनुमानं संभवति तस्मात्सुखादिज्ञानमेव मनसो लिङ्गं न तु सुखाद्युत्पत्तिरित्याह-अत इति।१। नन्वेवमात्मना सह शरीरसंयोगस्यैव सुखाद्युत्पत्तिकारणत्वे शरीराभ्यन्तरं शरीरात्मसंयोगवच्छरीराद्बहिरपि घटाद्यवच्छेदेन शरीरात्मसंयोगोस्त्येवात्मनो विभुत्वेन घटावच्छिन्नस्याप्यात्मनः शरीरसंयोगसत्त्वादिति शरीराद्बहिरप्यात्मनि सुखाद्युत्पत्तिः स्यादित्याशङ्क्योक्तम्-न बहिरिति। हेतुरुक्तः-अशितेति। शरीरसंयोगस्य सुखाद्युत्पत्तिं प्रत्यसमवायि कारणत्वेपि सहकारिकारणत्वं तु खानपानादीनामेवास्ति यत्र च सहकारिसमवधानं भवति तत्रैव कार्योत्पत्तिदर्शनात् खानपानादिसहकारिसमवधानस्य च शरीरावच्छेदेनैव संभवाच्छरीराभ्यन्तर एव शरीरात्मसंयोगेन सुखाद्युत्पत्तिः संभवति न शरीराद्बहिरपीति भावः।२। दोषान्तरमाह- किं चेति। पार्थिवगुणानामेवोत्पत्तौ द्रव्यान्तरसंयोगापेक्षा दृष्टा न द्रव्यमात्रगुणानामिति नात्मगुणानां सुखादीनामुत्पत्तौ द्रव्यान्तरसंयोगापेक्षा, अन्यथा जलपरमाणुगतस्य रसस्य नित्यत्वं न स्यात्। किं च पार्थिवगुणोत्पत्तावपि तेजस्संयोग एव कारणत्वेन दृष्टो न द्रव्यमात्रसंयोग इति न सुखाद्युत्पत्तौ मनस्संयोगापेक्षेति न त्वदुक्तप्रकारेण मनःसिद्धिः संभवति सुखाद्यपरोक्षज्ञानं तु मनो विना न संभवतीति सुखाद्यपरोक्षज्ञानमेव मनसो लिङ्गमित्याह-तस्मादिति।

किं पुनरिन्द्रियलक्षणं चक्षुरादिषु मनसि चानुस्यूतम् ? । उच्यते—यत् संप्रयुक्तेऽर्थे विशदावभासं विज्ञानं जनयति तदिन्द्रियमित्युच्यते, तच्च द्विविधम्—बाह्यमाभ्यन्तरं च, बाह्यं पञ्चविधम्—घ्राणरसनचक्षुस्त्वक्श्रोत्रात्मकम् । आन्तरं त्वेकं मनः । तत्राऽऽद्यानि चत्वारि च—पृथिव्यप्तेजोवायुप्रकृतीनीत्यऽक्षपाददर्शनवदभ्युपगम्यन्ते । श्रोत्रं त्वाकाशात्मकं तैरभ्युपगतं वयं तु—“ दिशः श्रोत्रम् ” इति दर्शनाद् दिग्भागमेव कर्णशष्कुल्यवच्छिन्नं श्रोत्रमाचक्ष्महे । मनस्तु पृथिव्यादीनामेवान्यतमात्मकं तेभ्योऽन्यद्वा सर्वथा तावदस्ति मनः । तच्चात्मतद्गुणेष्वेव स्वतन्त्रं प्रवर्तते न बाह्येषु रूपादिष्वित्याऽऽन्तरमित्युच्यते । रूपादिज्ञानेष्वपि तच्चक्षुरादिसहायं प्रवर्तते, एवमनुमानादिष्वपि लिङ्गादि-

---

ननु यदि मनोपीन्द्रियं तदा चक्षुरादिषु मनसि चानुस्यूतम्=व्याप्तमिन्द्रियलक्षणं वक्तव्यमिति शङ्कते—किमिति । लक्षणाभिधानं स्वीकरोति—उच्यते इति । यदिति, स्वसंयुक्ते विषये विशदावभासम्=अतिरस्कृतप्रकाशम्=अपरोक्षं ज्ञानं यज्जनयति तदिन्द्रियमित्युच्यते तथा चापरोक्षज्ञानजनकत्वमिन्द्रियत्वं यथा चक्षुरादीनां रूपादिविषयकापरोक्षज्ञानजनकत्वादिन्द्रियत्वं तथा मनसोपि सुखादिविषयकापरोक्षज्ञानजनकत्वादिन्द्रियत्वमिति सिद्धम् । अर्थे इति विषयत्वं सप्तम्यर्थः । पृथिव्येति—घ्राणं पार्थिवमित्यादि यथासंख्यं ज्ञेयम् । अक्षपाददर्शनवत्=न्यायशास्त्रवत् । आकाशात्मकम्=कर्णशष्कुल्यवच्छिन्नमाऽऽकाशं श्रोत्रमित्यर्थः । “दिशः श्रोत्रम्” इति श्रुतिः । दिश इति पञ्चमी, उत्पन्नमिति शेषः । मनः किमात्मकस्तीत्याशङ्क्याह—मनस्त्विति । मनस आन्तरत्वे हेतुमाह—तच्चेति । तच्च=मनश्च । यत आत्मन आत्मगुणानां च ग्रहणे स्वतन्त्रं परापेक्षाभावात्, बाह्यरूपादिग्रहणे च चक्षुरादिकमपेक्षते इति न स्वतन्त्रमतो मन आन्तरमिन्द्रियमित्युच्यते । एतदेवाह—रूपादीति । तत्=मनः । चक्षुरादिसहायम्=चक्षुरादिः सहायो यस्य तत् चक्षुरादिसहायम् । ननु रूपादिग्रहणे चक्षुरादीनामेव कारणत्वमस्तु कृतं तत्र मनसः कारणत्वकल्पनेने-

सहायम् । अन्यमनस्कस्य संयुक्तेष्वपि रूपादिषु ज्ञानानुत्पत्तेः । स्मृतावपि संस्कारपरतन्त्रं प्रवर्तते न स्वतन्त्रम् ।

नन्वनुमानादीनां मनोजन्यत्वात् तेषां च भूतभविष्यतोरपि प्रवृत्तेरिन्द्रियजन्यत्वं विद्यमानोपलम्भनत्वेनाऽनैकान्तिकं स्यात् । न स्यात्—नहीन्द्रियजन्यत्वं हेतुः किं त्विन्द्रियसंप्रयोगजत्वम् । न चानुमानेऽतीताया भविष्यन्त्या वा वृष्टेरनुमीयमानाया मनसा संप्रयोगोस्तीत्यव्यभिचारः । तदेवं प्रत्यक्षं तावदऽनिमित्तं

---

त्याशङ्क्याह—अन्येति । यदा हि पुरुषोऽन्यमनस्को भवति=मनोऽन्यत्र प्रवृत्तं भवति तदा संयुक्तेष्वपि रूपादिषु=रूपादिना चक्षुरादिसंयोगे सत्यपि रूपादिविषयकं ज्ञानं न जायते तन्मनस्कस्य च जायते इत्यन्वयव्यतिरेकाभ्यां रूपादिग्रहणेप्यस्ति मनसः कारणत्वम् । स्मर्यमाणविषयस्मरणे च मनः संस्कारपरतन्त्रमेव न तत्रापि स्वतन्त्रमित्याह— स्मृतावपीति ।

इन्द्रियसंप्रयोगजत्वविद्यमानोपलम्भनत्वयोः समव्याप्तिरस्ति तां दूषयितुमुपक्रमते पूर्वपक्षी—नन्विति । नन्वनुमानादौ लिङ्गादिसहायं मनः प्रवर्तत इत्यनुमानादीनां मनोजन्यत्वं प्राप्तम्, तेषाम्=अनुमानादीनां भूतभविष्यतोरपि विषययोः प्रवृत्तेः=अनुमानादीनां भूतभविष्यद्विषयग्राहकत्वमप्यस्ति तत्र भूतभविष्यद्विषयविषयकानुमाने विद्यमानोपलम्भनत्वं नास्त्यस्ति चेन्द्रियजन्यत्वं मनसः इन्द्रियत्वादिति विद्यमानोपलम्भनत्वाभाववत्यप्यनुमाने इन्द्रियजन्यत्वस्य सत्त्वादिन्द्रियजन्यत्वमनैकान्तिकम्=व्यभिचारि । परिहरति—न स्यादिति—नास्ति व्यभिचारीत्यर्थः । हेतुमाह—नहीति । इन्द्रियजन्यत्वविद्यमानोपलम्भनत्वयोर्न मया व्याप्तिरुच्यते किं त्विन्द्रियसंप्रयोगजत्वविद्यमानोपलम्भनत्वयोरेव तथाचानुमाने विद्यमानोपलम्भनत्वं नास्तीतीन्द्रियसंप्रयोगजत्वमपि नास्त्येवेति न व्यभिचार इत्याह—न चेति । भूतभविष्यद्विषयविषयकानुमाने भूतभविष्यद्विषयेण सह मनस्संयोगाभावादित्यर्थः । नदीपूरेणातीतवृष्ट्यनुमानं पिपीलिकाण्डसंचारेण च भविष्यद्वृष्ट्यनुमानं भवति । उपसंहरति—तदेवमिति । तदेवम्=उक्तरीत्या विद्यमानमात्रोपलम्भनत्वात्प्रत्यक्षं

तत्पूर्वकत्वाच्चानुमानाद्यपि । न ह्यऽगृहीते धर्मे तेन सह कस्य चित्सम्बन्धग्रहणं संभवति । सादृश्यविषयकत्वाच्चोपमानं दूरभ्रष्टम् । अर्थापत्तिरपि धर्मेण विनाऽनुपपद्यमानस्य कस्य चिद्ऽदर्शनाद्समर्था ।

ननु जगद्वैचित्र्यमनुपपन्नम् ? । न, स्वाभाविकत्वे-

---

धर्मेऽनिमित्तम्=न प्रमाणम् । तत्पूर्वकत्वात्=प्रत्यक्षपूर्वकत्वात् । यदा हि वन्हिधूमयोर्व्याप्तिर्गृह्यते पुनश्च पर्वते धूमो निरीक्ष्यते तदा तत्र वन्ह्यनुमानं भवति, धर्मेण च सह कस्य चिदपि पदार्थस्य व्याप्तिरेव न गृहीता न चापि धर्मः प्रत्यक्षयोग्य इति धर्मे नानुमानाद्यपि प्रमाणं संभवति । अनुमानादिनापि धर्मज्ञानं न संभवतीति प्रघट्टकार्थः । एतदेवाह—नहीति । उपमानेन तूपमानप्रतियोगिकं उपमेयानुयोगिकं च सादृश्यमात्रमेव गृह्यते इति न तस्य धर्मे प्रामाण्यं संभवतीत्याह—सादृश्येति । एतेन नैयायिकोक्तमुपमानस्य शक्तिग्राहकत्वं परास्तम् । उक्तं च भट्टपादैः—

"एकस्मिन्नपि दृष्टेऽर्थे द्वितीयं पश्यतो वने ।
सादृश्येन सहैवास्मिंस्तदैवोत्पद्यते मतिः ॥"
"तस्माद् यत्स्मर्यते तत्स्यात्सादृश्येन विशेषितम् ।
प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम् ॥" इति ।

विस्तरस्तु मदीयाद्वैतचन्द्रिकायां द्रष्टव्यः । अर्थापत्त्यापि धर्मज्ञानं न सम्भवति—अर्थापत्त्याहि यथा—पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र दिवा भोजनस्य निषिद्धत्वात् पीनत्वस्य च भोजनं विनाऽनुपपद्यमानत्वाद्रात्रिभोजनं कल्प्यते, नैवं धर्मेण विना किं चिदनुपपद्यमानमवलोक्यते यद्वशाद्धर्मज्ञानं सम्भवेदित्याह—अर्थापत्तिरपीति । असमर्था=धर्मस्वरूपावधारणसामर्थ्यहीना ।

ननु धर्मेण विना जगद्वैचित्र्यं नोपपद्यत इति जगद्वैचित्र्यानुपपत्त्या धर्मः कल्प्येतेति शङ्कते—नन्विति । जगद्वैचित्र्यं नाम कोपि नृपः कोपि भिक्षुक इत्यादि । परिहरति—नेति । हेतुमाह—स्वेति । जगद्वैचित्र्यस्य स्वाभाविकत्वेनैवोपपत्तेः । स्वभाव एवायं जगतो यद्विचित्रमेव सदा भवतीति । ननु न स्वभावेन किं चिदुपपद्यते स्वभावेनोपपत्तौ हि स्वभावविनाशाभावाद् भिक्षुकः सदा भिक्षुक एव स्यात् नृपश्च सदा नृप एव स्यात् नैवमस्ति कदा

**नोपपत्तेः । यद्यपि तदनुपपत्त्या किं चिददृष्टं कल्प्येत तथापि को धर्मः को वाऽधर्म इति विवेकाभावादवश्यं चोदनैवार्थनीया । सा चेदङ्गीकृता कृतमर्थापत्त्या, सामान्यतोदृष्टेन वा ।**

**ननु विकल्पनिमित्तं संबन्धग्रहणं तत्कथं प्रत्यक्षपू-**

---

चिद्भिक्षुकोपि धनवान् भवतीति दर्शनात् भवितव्यं च कार्यस्य कारणेन न च स्वभावस्य कारणत्वं सम्भवतीति जगद्वैचित्र्यानुपपत्त्या धर्मः कल्प्यते इत्याशङ्क्याह–यद्यपीति, यद्यपि तदनुपपत्त्या=जगद्वैचित्र्यानुपपत्त्या किं चिददृष्टं कल्प्यते तदेव धर्म इत्यपि शक्यते वक्तुं तथापि धर्मस्वरूपावधारणं त्वर्थापत्त्या नैव सम्भवतीत्याह–तथापीति । अर्थापत्त्या को धर्मः को वाऽधर्म इति विवेकाभावात्=इत्येवं विवेकासम्भवात् एतद्विवेकसम्पादनार्थं चोदनैवार्थनीया=अभ्यर्थनीया=आश्रयणीयास्ति, चोदनैव धर्मे प्रमाणमस्ति । धर्मे प्रमाणत्वेन यदा चोदनाऽऽश्रिता तदा कृतमर्थापत्त्यनुमानाभ्यामित्याह–सा चेदिति । सामान्यतो दृष्टानुमानप्रयोगो यथा–जगद्वैचित्र्यं सकारणकं कार्यत्वाद् घटवदिति सामान्यतो जगद्वैचित्र्यस्य किमप्यस्ति कारणमिति सिद्धे तच्च धर्माधर्मस्वरूपमेव भवितुमर्हतीति प्राप्तेपि धर्माधर्मस्वरूपस्य विशेषतो विज्ञाने चोदनैव प्रमाणमिति सिद्धम् ।

यदुक्तम्–"तत्पूर्वकत्वाच्चानुमानाद्यपि"(११७पृ)इति तत्र बौद्धः प्रत्यवतिष्ठते नन्वित्यादिना । अयं भावः–प्रत्यक्षं द्विविधमस्ति निर्विकल्पकं सविकल्पकं च तत्र विशेषणविशेष्यभावानवगाहि प्रत्यक्षं प्रथमं यथा घटघटत्वे इति तदेवेन्द्रियार्थसंयोगानन्तरं प्रथमं सम्भवति, विशेष्यविशेषणभावावगाहि च प्रत्यक्षं सविकल्पकं यथा–घटोयमिति तत्र घटत्वप्रकारकघटविशेष्यकबोधस्य जायमानत्वात् । विशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नं प्रति च विशेषणविशेष्ययोर्ज्ञानस्य कारणत्वात्सविकल्पकप्रत्यक्षात्पूर्वं निर्विकल्पकं प्रत्यक्षं भवत्येव । तत्र बौद्धो निर्विकल्पकस्यैव प्रत्यक्षत्वं स्वीकरोति न सविकल्पकस्यापि तस्य निर्विकल्पकात्प्रत्यक्षादनन्तरं जायमानत्वेन प्रत्यक्षकार्यत्वात् किं च प्रत्यक्षेण ह्यनधिगतार्थविषयकेण भवितव्यं न च तत्सविकल्पकस्य सम्भवति तस्य निर्विकल्पकाधिगतार्थविषयकत्वात् । अनुमानं च साध्यसा-

वेकत्वम्? । सविकल्पकमप्यनुपरतेन्द्रियव्यापारस्य जायमानमऽपरोक्षावभासत्वात् प्रत्यक्षमेवेत्यदोषः ।

विकल्पश्चापरोक्षावभासश्चेति चित्रम्, अपरोक्षमिति हि स्वलक्षणमुच्यते तद्विषयोऽवभासोऽपरोक्षावभासः । विकल्पस्त्वभिलापसंसर्गयोग्यप्रतिभास-

---

धनयोः कार्यकारणभावादिसम्बन्धग्रहणपूर्वकं भवति सम्बन्धादिग्रहणं च सविकल्पकेनैव सम्भवति न निर्विकल्पकेन तस्य स्वरूपमात्रग्राहकत्वात्, प्रत्यक्षं च स्वरूपमात्रग्राहकं निर्विकल्पकमेव, यस्मात्सविकल्पकादनन्तरमनुमानं भवति सविकल्पकं च न प्रत्यक्षमित्यनुमानादीनां प्रत्यक्षपूर्वकत्वं कथमुक्तमिति शङ्कते—नन्विति । विकल्पनिमित्तम्=सविकल्पकं ज्ञानं निमित्तं कारणं यस्य तत् । उक्तं च बौद्धानां प्रसन्नपदायाम्—"कल्पनापोढस्यैव ज्ञानस्य प्रत्यक्षत्वाभ्युपगमात् ।" इति । उत्तरमाह—सविकल्पकेति । सविकल्पकमपि ज्ञानमनुपरतेन्द्रियव्यापारस्य पुरुषस्य जायते=इन्द्रियार्थसंयोगे सत्येव जायते, अथ चापरोक्षप्रकाशरूपं भवतीति प्रत्यक्षमेवास्ति, तस्मात्सविकल्पकस्यापि प्रत्यक्षत्वात्प्रत्यक्षपूर्वकत्वमनुमानादीनां यदुक्तं तद् युक्तमेवेति न कोपि दोषः ।

पुनः शङ्कते बौद्धः—विकल्पश्चेति । सविकल्पकश्चापरोक्षावभासश्चेति चित्रम्=विरुद्धम्, सविकल्पकत्वापरोक्षावभासत्वयोर्वैयधिकरण्यात् । अपरोक्षावभासस्य पदकृत्यमाह—अपरोक्षमिति, अपरोक्षपदं हि स्वलक्षणस्य=स्वरूपमात्रस्य वाचकमस्ति स्वरूपमात्रविषयको योऽवभासः=प्रकाशो भवति सोऽपरोक्षावभास इत्युच्यते । स्वरूपमात्रविषयकत्वं च निर्विकल्पकस्यैवास्ति न सविकल्पकस्यापि तस्य विशेष्यविशेषणभावावगाहित्वात् । तद्विषयः=स्वलक्षणविषयः । सविकल्पकस्य स्वरूपमात्रापरामर्शकत्वं तत्र हेतुं चाह—विकल्पस्त्विति । विकल्पः=सविकल्पकं ज्ञानम् । अभिलापे=शाब्दबोधे भासमानो यः संसर्गस्तद्योग्यश्चासौ प्रतिभासश्चेत्यभिलापसंसर्गयोग्यप्रतिभासस्तस्य भावस्तत्त्वं तस्मात्, शब्देन प्रतिपादनयोग्यविषयविषयकप्रतिभासत्वाद्वा । अभिलापसमानविषयकत्वादिति यावत् । यथाऽभिलापेन संसर्ग एव विषयी क्रियते न स्वरूपमात्रं तथा सविकल्पकेनापि स्वलक्षणम्=स्वरूपमात्रं न विषयी क्रियते इति भावः । स्वलक्षणलक्षणं च बौद्धानां प्रसन्न-

त्वान्न स्वलक्षणं स्पृशति, न ह्यभिलापः स्वलक्षणं स्पृशति, यदि स्पृशेदभिलापमात्रेणापि विनाऽक्षव्यापारमऽपरोक्षावभासः स्यात्, न चा ऽसावस्ति, तदुक्तम्—

"अन्यथैवाग्निसंयोगाद् दाहं दग्धो हि मन्यते ।
अन्यथा दाहशब्देन दाहार्थः संप्रकाशते ॥" इति ।

तस्मादभिलापास्तावन्न विशदाकारमवभासयन्ति तत्समानविषया विकल्पा अपि ।

---

पदायामुक्तम्–"इह भावानामन्यासाधारणमात्मीयं यत्स्वरूपं तत्स्वलक्षणं तद्यथा–पृथिव्याः काठिन्यं वेदनाया विषयानुभवो विज्ञानस्य विषयप्रतिविज्ञप्तिः ।" इति । अन्यत्राप्युक्तम्–"एषा च मनीषा न स्वलक्षणं विषयी करोति तस्य ( स्वलक्षणस्य ) विशदावभासित्वात्, अस्याश्चाभिलापसंसर्गयोग्यार्थप्रतिभासत्वात्, अभिलापानां च विशदाकारमवभासितुमशक्तेः, अभिलापमात्रेण तथाविधप्रतिपत्त्यभावात्, तेनैषा न स्वच्छाकारावभासिनी" इति । उक्ते हेतुमाह–न हीति । अभिलापः=शाब्दबोधो न स्वलक्षणं स्पृशति=बोधयति । यदा ह्यभिलाप एव स्वलक्षणं न बोधयति तदाऽभिलापसंसर्गयोग्यः सविकल्पकस्तु कथं स्वलक्षणं बोधयेदिति भावस्तस्मात् सविकल्पकं न प्रत्यक्षम् ।

विपक्षे बाधकमाह–यदीति । यदि शब्देनापि स्वरूपमात्रबोधः स्यात्तदेन्द्रियव्यापारम्=इन्द्रियार्थसंयोगं विनापि शब्दमात्रेणाप्यपरोक्षावभासः स्यात् नैवमस्ति । यदि स्पृशेदिति–यद्यभिलापः स्वलक्षणं स्पृशेत्=बोधयेत् । न चासावस्तीति–न चाक्षव्यापारं विनासावऽपरोक्षावभासो भवति । अक्षव्यापारे सत्येवापरोक्षावभासे प्रमाणमाह–अन्यथेति–दग्धस्य यो नामाग्निसंयोगाद्दाहे जाते दाहः प्रकाशते स अन्यथैव प्रकाशते अपरोक्षत्वेन प्रकाशते दाहशब्देन च दाहपदार्थोऽन्यथैव प्रकाशते यतः पदानां पदार्थस्मारकत्वमेवास्ति वाक्येन च स्मृतानां पदार्थानां संसर्गबोधो जायते तस्माद् दाहशब्देन दाहस्य स्मरणमात्रं भवति न प्रत्यक्षमित्यर्थस्तदाह–तस्मादिति । विशदाकारम्=अपरोक्षत्वेन रूपेण । तत्समानविषयाः=अभिलापसमानविषया विकल्पाः=सविकल्पकानि ज्ञानान्यपि न स्वलक्षणमवभासयन्ति । शाब्दस्य यो

**यस्त्वयं विस्फारिताक्षस्य—"गौरयम्" इति विकल्पो विशदावभासः स समानकालविशदावभासनिर्विकल्पकसंसर्गकृतः, तदभावेऽभिलापमात्रेऽनुमाने च विकल्पाकारप्रतिभासे वैशद्याभावात् । तस्मान्निर्विकल्पकमेव प्रत्यक्षम् । तत्रैव हि विशदस्य स्वलक्षणस्यावभासः ।**

---

वै विषयः संसर्गः स संसर्ग एव सविकल्पकस्यापि विषय इत्यभिलापसमानविषयत्वं सविकल्पकस्य प्राप्तं तत्र सविकल्पकस्य विशदावभासकत्वे स्वलक्षणावभासकत्वे वाभिलापस्यापि विशदावभासकत्वं स्यान्नैवमस्तीति भावः ।

ननु सविकल्पकेपि गौरयमित्याकारको विशदावभासो भवत्येवेत्याशङ्क्याह—यस्त्वयमिति । विस्फारिताक्षस्य=उन्मीलितनेत्रस्य पुरुषस्य गौरयमित्ययं यो विकल्पो विशदावभासः स समानकालः=अव्यवहितपूर्वकालिको यो विशदावभासो निर्विकल्पकः प्रत्ययस्तत्संसर्गकृतोस्ति, यथाऽचेतनापि बुद्धिरात्मसम्बन्धाच्चेतनवदवभासते तथाऽविशदावभासोपि सविकल्पकः प्रत्ययः स्वपूर्वोत्पन्नस्वकारणीभूतनिर्विकल्पकप्रत्ययस्य सम्बन्धेन विशदावभासो वा विशदावभास इव वा भवतीत्यर्थः । विपक्षे बाधकमाह—तदभावेति । यदि सविकल्पकस्य वैशद्यं निर्विकल्पकसंसर्गकृतं न स्यात्तदा निर्विकल्पकसंसर्गाभाववत्यभिलापमात्रे=शाब्दज्ञानेऽनुमाने चापि वैशद्यं स्यात्, विकल्पाकारप्रतिभासेति सविकल्पकसमाने इत्यर्थः । यदाकारज्ञानत्वं सविकल्पकस्यास्ति तदाकारज्ञानत्वमेव शाब्दबोधानुमानयोरप्यस्ति विशिष्टवैशिष्ट्यावगाहित्वात्स्वलक्षणानवगाहित्वाच्चेति यदि निर्विकल्पकसंसर्गाभावेपि वैशद्यं स्यात्तदानुमानशाब्दबोधयोरपि स्यात् न चैवमस्ति, तस्माद् यत्सविकल्पकस्य वैशद्यं तन्निर्विकल्पकसम्बन्धकृतमेवेत्यर्थः । उपसंहरति—तस्मादिति । हेतुमाह—तत्रैवेति । तत्रैव=निर्विकल्पक एव विशदस्य स्वरूपस्य प्रकाशो भवतीति निर्विकल्पकमेव प्रत्यक्षं न सविकल्पकमपीत्यर्थः । उक्तं च—

" कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम् ।
विकल्पो वस्तुनिर्भासादसंभवादादुपप्लवः ॥ " इति ।

**नैवम्–उन्मीलितनेत्रस्य विकल्पोपि गौरयमित्यप-रोक्षावभास एव प्रतीयते न चासावन्यसंसर्गकृतः प्र-माणाभावात् । अभिलापसंसर्गयोग्यस्यापि सामा-न्याकारस्याभिलापलिङ्गादिभिरवैशद्यमिन्द्रियैश्च वैश-द्यमुपपद्यत एव । न ह्ययं परोक्षापरोक्षविभागो वि-षयकृतः, यदि हि तथा स्यात्–सर्वदैव सामान्यं प-रोक्षं स्यात् स्वलक्षणं चापरोक्षं स्यात्, न चैवमस्ति, सामान्याकारस्यापि परोक्षापरोक्षविभागदर्शनात् ।**

---

परिहरति–नैवमित्यादिना । उन्मीलितनेत्रस्य पुरुषस्य गौरयमित्ययं यः सविकल्पकः प्रत्ययः सोप्यपरोक्षावभास एव सविकल्पकेपि स्वाभाविकस्य वैशद्यस्य ( विशदावभासस्य ) सत्त्वात् । यदुक्तम्–सविकल्पकस्य वैशद्यं निर्विकल्पकसंसर्गकृतमिति तत्परिहरन्नाह–न चेति । असौ=सविकल्पकस्य विशदावभासताऽन्यसंसर्गकृता नास्ति अन्यसंसर्गकृतत्वे प्रमाणाभावात् । नहि पङ्काज्जायमानस्य पङ्कजस्य सौरभ्यं पङ्कसंसर्गकृतं भवति । यथा च जिज्ञा-सानन्तरं जायमानस्य निर्विकल्पकस्य वैशद्यं न जिज्ञासासंसर्गकृतं किं तु स्व-रूपकृतमित्युच्यते तथा सविकल्पकस्यापि वैशद्यं स्वरूपकृतमेव न निर्विकल्प-कसंसर्गकृतम् । वैशद्यावैशद्यविभागमाह–अभिलापेति । अभिलापसंसर्गयोग्यस्य =शाब्दबोधीयसंसर्गयोग्यस्य सामान्याकारस्य=सामान्यरूपस्य गोत्वादिजा-त्यादेरभिलापेन=शाब्देन लिङ्गादिना चावैशद्यं=अविशदाकारोऽवभासो भवति तस्यैव चेन्द्रियैर्वैशद्यं=विशदाकारोप्यवभासो भवतीति न वैशद्यं निर्विकल्पक-नियतं किं त्विन्द्रियजज्ञाननियतं तस्मात्सविकल्पकोपि स्वभावेनैव विशदावभा-सः । वैशद्यावैशद्यं च विषयकृतं वा वक्तव्यं ज्ञानकरणकृतं वा वक्तव्यं तत्र ज्ञा-नकरणकृतमित्येव युक्तमेकस्यैव वन्हेरनुमानादिना वैशद्याभावादिन्द्रियेण च वैशद्यस्य संभवादिति न वैशद्यावैशद्यं विषयकृतमित्याह–नहीति । विपक्षे॰बा-धकमाह–यदीति । यदि पारोक्ष्यापारोक्ष्यं विषयकृतं स्यात्तदा विषयस्वभा-वस्याऽव्यभिचारात्सामान्यं सदा परोक्षमेव स्यात् स्वलक्षणम्(व्यक्तिः) च सदाऽपरोक्षमेव स्यात् । न चैवमस्ति सामान्यस्यापि पारोक्ष्यापारोक्ष्यदर्शनात् तथा स्वलक्षणस्यापि पारोक्ष्यापारोक्ष्यदर्शनात्, तदाह–सामान्येति ।

तथा हि—दूराच्छ्वेतं स्वलक्षणं पश्यन्ऽनिर्धारितगवाश्वजातिविशेषो हेषाशब्दश्रवणादश्वत्वं तस्मिन्नेव स्वलक्षणे ऽनुमिमानोपि परोक्षं बुध्यते, वदन्ति हि—'अश्वोप्ययं न चक्षुषा तथाऽवभासते' इति । प्रत्यासन्नस्तु वदति—'संप्रत्यश्वत्वमप्यस्य चक्षुषा पश्यामि न पूर्वम्' इति । स्वलक्षणं तु प्रागपि विशदमेवेति सामान्यांशगत एवायं दूरसमीपवर्तिनः परोक्षापरोक्षविभागः, तस्मात्कारणकृतोयं विभागः ।

एकस्मिन्नपि हि विषयेऽक्षैर्जायमानं विज्ञानमापरोक्ष्यं जनयति लिङ्गादिजं तु नेति किं नोपपद्यते ? । ज्ञानजन्यो विषयगतः फलविशेषोयमापरोक्ष्यं नाम स-

---

सामान्यस्य परोक्ष्यापारोक्ष्यमुपपादयति—तथा हीति । दूरात् श्वेतं स्वलक्षणम्=किं चिद् व्यक्तिमात्रं पश्यति गौरयमश्वो वेति च न निर्धारितवान् यः पुरुषः स हेषाशब्दं श्रुत्वा तस्मिन्नेव स्वलक्षणे=व्यक्तिमात्रेऽश्वत्वमनुमिमानोपि परोक्षमश्वत्वं बुध्यते=अश्वत्वज्ञानं परोक्षं भवति नाश्वत्वस्य तदा प्रत्यक्षं भवति । अत्र प्रमाणमाह—वदन्तीति । तथा=अश्वत्वेन रूपेण नावभासते । इत्येवं सामान्यस्य परोक्षं ज्ञानमुपपादितम् । प्रत्यासन्नस्तु=स एव पुरुषः पुनः तत्समीपं गतस्तु वदति संप्रत्यश्वत्वमप्यस्य चक्षुषा पश्यामीति, न पूर्वम्=यावत्कालं दूरमासम् । इत्येवं सामान्यस्याऽपरोक्षं ज्ञानमुपपादितं तस्मात्सामान्यस्यापि पारोक्ष्यापारोक्ष्ये संभवत इति न विषयकृतः पारोक्ष्यापारोक्ष्यविभागः किं तु ज्ञानकरणकृत एव । स्वलक्षणमिति—स्वलक्षणम्=व्यक्तिमात्रं तु, प्रागपि=अश्वत्वानुमानकालेपि दूरादपि, विशदम्=अपरोक्षमेव, दूरसमीपवर्तिनः पुरुषस्य योयं परोक्षापरोक्षविभागः सोत्र सामान्यांशगत एव=अश्वत्वगत एव न व्यक्तिगत इत्यर्थः । व्यक्तेश्च परोक्षत्वमनुमानादौ विज्ञेयम् । उपसंहरति— तस्मादिति ।

काकोपपादयति— एकस्मिन्नपीति । अक्षैः=इन्द्रियैः । इन्द्रियजं ज्ञानमपरोक्षं भवति लिङ्गादिजं तु नाऽपरोक्षं भवतीति किं नोपपद्यते ? उपपद्यत एवेत्यर्थः । अत्र सर्वसंमतिमाह—ज्ञानजन्येति । ज्ञानजन्यः=प्रत्यक्षजन्यो

**र्वस्य संवेद्यः। यद्भावाभावाभ्यां लिङ्गाभ्यामक्षैः पश्यामि न पश्यामीति विस्फारिताक्षाणामेव व्यवहारः प्रवर्तते। अतोऽस्ति विकल्पस्यापि विशदावभासित्वमिति प्रत्यक्षत्वोपपत्तिः।**

**केचित्तु सविकल्पकमेव सर्वं ज्ञानं न निर्विकल्पकं**

---

विषयगतः प्रत्यक्षस्य फलविशेष एवाऽऽपरोक्ष्यं तच्च सर्वसंवेद्यमेवेति न तत्र विशेषयुक्त्यपेक्षा। यदिति-यस्यापरोक्ष्यस्य सत्त्वे विस्फारिताक्षाणां पश्यामीति व्यवहारः प्रवर्तते, यस्यापरोक्ष्यस्याऽसत्त्वे च न पश्यामीति व्यवहारः प्रवर्तते इत्यन्वयः। एवकारो भिन्नक्रमो लिङ्गाभ्यामेवेत्यर्थः। अयं भावः-मीमांसकमते प्रत्यक्षेण विषये ज्ञातताऽपरपर्यायमापरोक्ष्यमुत्पद्यते तेन चापरोक्ष्येण जातं प्रत्यक्षमनुमीयते ज्ञानस्याऽप्रत्यक्षत्वात् यथा-'इयं घटनिष्ठा ज्ञातता घटविषयकप्रत्यक्षजन्या ज्ञाततात्वात् पटनिष्ठज्ञाततावत्' इति। एतदेवोक्तम्-यदिति। यद्भावाभावाभ्यां लिङ्गाभ्याम्=आपरोक्ष्यसत्त्वासत्त्वरूपहेतुभ्याम्। पश्यामीति प्रत्यक्षव्यवहारः। न पश्यामीति पारोक्ष्यव्यवहारः। उपसंहराति- अत इति। यतः सविकल्पकस्यापि विशदप्रकाशकत्वमतः प्रत्यक्षत्वमुपपद्यत एवे त्यर्थः। तथा चानुमानादीनां प्रत्यक्षपूर्वकत्वं यदुक्तं तद् युक्तमेव सम्बन्धग्राहिणः सविकल्पकस्यापि प्रत्यक्षत्वात्।

केपि मन्यन्ते-निर्विकल्पकेन ज्ञानेन कस्यापि व्यवहारस्यासिद्धेरयुक्तो निर्विकल्पकस्वीकारस्तस्मात्सर्वं ज्ञानं सविकल्पकमेवेत्याह-केचित्त्विति। न्यायरत्नाकरावलोकनेन त्विदं मतं वैयाकरणानामिति प्रतीयते, उक्तं च तत्र ग्रन्थकृता- "यत्त्वपिशब्दमसहमानः सर्वमेव ज्ञानं शब्दानुविद्धत्वात् सविकल्पकमेव न किंचिन्निर्विकल्पकमस्तीमि मन्यते तं प्रत्याह-अस्तीति" इति। वैयाकरणादिपुरुषेण भगवता भर्तृहरिणाप्युक्तम्-

"न सोस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिवज्ञानं सर्वं शब्देन भासते॥" इति।

अन्ये पुनर्निर्विकल्पकं परिहरन्त एवमाहुः-"निर्विकल्पकज्ञानानां जात्यादियोजनया हीयमानानामिन्द्रियजानां प्रत्यक्षत्वाऽपाकरणात्। अपि च जातिगुणयोरप्रत्यक्षत्वमिच्छतो न किंचित्प्रत्यक्षमवतिष्ठते न हि रूपशून्या

नाम किं चिदस्तीति मन्यन्ते । तत्तु प्रतीतिविरुद्धम्—प्रतीमो हि वयमक्षसंनिपातानन्तरमऽविविक्तसामान्यविशेषविभागं संमुग्धवस्तुमात्रगोचरमालोचनज्ञानम् । तदभावे तु विकल्प एव न जायेत । विकल्पयता हि पूर्वानुभूतं जातिविशेषं सञ्ज्ञाविशेषं चानुस्मृत्य तेन पुरःस्थितं वस्तु विकल्पयितव्यम् । न चा-

---

का चिदपि रूपिबुद्धिरस्ति जातिगुणावेव च रूपिणां रूपे सर्वा हि प्रतीतिः 'एवम्' इति भवति प्रकारश्चैवं शब्दार्थौ जातिगुणौ चार्थानां प्रकारभूतौ ततश्च ताभ्यां योजयन्त्येव सर्वेन्द्रियप्रतीतिः समुत्पद्यते इति निर्विषयं कल्पनापोढपदम् ” इति । परिहरति—तत्त्वित्यादिना । अक्षसंनिपातानन्तरम्=विषयेन्द्रियसंयोगानन्तरं जायमानम्, अविविक्तसामान्यविशेषविभागमिति—सामान्यं गोत्वादि विशेषश्च खण्डत्वमुण्डत्वादिः, अयं सामान्यभागोऽयं च विशेषभाग इति यत्र न विविक्तमित्यर्थः, विशिष्टवैशिष्ट्यानवगाहीति यावत् । संमुग्धं च वस्तुमात्रगोचरं चेति संमुग्धवस्तुमात्रगोचरम्, गोचरशब्दस्य नित्यपुल्लिङ्गत्वाद् वस्तुमात्रं गोचरो यस्येति बहुव्रीहिः । किं वा संमुग्धं=विशेष्यविशेषणभावरहितं वस्तुमात्रं व्यक्तिमात्रं(स्वलक्षणम्) गोचरो यस्य तत् समुग्धवस्तुमात्रगोचरमित्यर्थः आलोचनज्ञानम्=इन्द्रियजं ज्ञानं वयं प्रतीम एव, एतदेव च निर्विकल्पकमित्युच्यते । तस्मादस्तिनिर्विकल्पकमपि ज्ञानम् ।

विपक्षे बाधकमाह—तदभावेति । तदभावे=निर्विकल्पकाभावे, विकल्पः=सविकल्पकं ज्ञानम् । सविकल्पकं हि ज्ञानं विशिष्टवैशिष्ट्यावगाहि भवति, विशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नं प्रति च विशेष्यविशेषणयोर्ज्ञानस्य कारणत्वमस्ति, तत्र यावत्पर्यन्तं घटघटत्वे इत्याकारकं समूहालम्बनात्मकं ज्ञानं न जायते तावत्पर्यन्तं घटत्वप्रकारकघटविशेष्यकं सविकल्पकं ज्ञानं नसम्भवतीति घटघटत्वविषयकं निर्विकल्पकं ज्ञानमवश्यमभ्युपेयं कारणं विना कार्योत्पत्तेरसम्भवादिति भावः । उक्तमुपपादयति—विकल्पयतेति । विकल्पयता=सविकल्पकज्ञानमुत्पादयता पुरुषेण पूर्वानुभूतम्=निर्विकल्पकेन ज्ञातं जातिविशेषम्=गोत्वाद्यनुस्मृत्य तेन गोत्वादिना पुरःस्थितं वस्तु=व्यक्तिः विकल्पयितव्यम्=गोत्वविशिष्टो गौरिति सविकल्पकज्ञानेन वेद्यमिति, तथा

र्थमदृष्टवतस्तत्स्मरणमाकस्मिकमेवोत्पद्यते ? । तस्मा-
दस्ति निर्विकल्पकमपि ज्ञानम् ।

तच्च सन्मात्रविषयमिति केचित् । भेदस्य विक-
ल्पवेद्यत्वादऽगृहीते च भेदे विशेषाणामग्रहणात् । किं
चेतरेतराभावो भेदो न चासौ प्रत्यक्षेण ग्रहीतुं शक्य-
ते न तरां निर्विकल्पकेन । अतश्च " नेह नानास्ति

---

गौरित्यादिसञ्ज्ञाविशेषमनुस्मृत्य तेन सञ्ज्ञाविशेषेण गोपदवाच्योऽयमिति विकल्पयितव्यम् । उक्तं च न्यायरत्नाकरेपि–"तदभावे हि निर्निमित्तं शब्द-स्मरणं स्यात्, अस्मृतब्दस्य च न शब्दानुविद्धो विकल्पः सम्भवतीति" इ-ति । तथा च सविकल्पकात् पूर्वं जात्यादिविशकलितपदार्थमात्रबोधकं नि-र्विकल्पकमवश्यमभ्युपेयमन्यथाऽज्ञातैर्जात्यादिभिः कथं पुरस्स्थितं वस्तु वि-शेषितं स्यात् ? अज्ञातानां जात्यादीनां स्मरणानुपपत्तेरित्याह–न चेति । अर्थम्=जात्यादिकमदृष्टवतः पुरुषस्य, तत्स्मरणम्=जात्यादिस्मरणम् । आ-कस्मिकम्=अहेतुकम् । स्मरणस्य हेतुरनुभव एवेति जात्याद्यनुभवो निर्वि-कल्पकः स्वीकार्य एवेत्याह–तस्मादिति । "आकस्मिकम्" इति पदं पुस्त-कान्तरे नास्त्येव । "उत्पद्यते" इत्यत्र "उपपद्यते" इत्यपि पाठान्तरम् ।

ननु न निर्विकल्पकस्य घटघटत्वादिविशेषग्राहकत्वं सम्भवति भेदग्रहणं विना विशेषाणां ग्रहणासम्भवाद् भेदग्रहणं च सविकल्पकेनैव भवतीति भे-दग्राहकस्य सविकल्पकस्यैव घटघटत्वादिविशेषग्राहकत्वं वक्तव्यम्, निर्वि-कल्पकं तु सन्मात्रस्य=शुद्धचैतन्यस्यैव ग्राहकमित्येव युक्तम् । किं च शुद्ध-चैतन्यभिन्नस्य पदार्थमात्रस्य किं चिद्धर्मपुरस्कारेणैव ग्रहणात्तत्पदवाच्यत्वस्य तु सर्वत्रैव सम्भवादुक्तं च–"न सोस्ति प्रत्ययो लोके यः शब्दानुगमादृते" इति न शुद्धचैतन्यं विनाऽन्यस्य कस्यापि निर्विकल्पकवेद्यत्वं सम्भवतीत्य-भिप्रायेणाद्वैतमतमुपस्थापयति–तच्चेत्यादिना तत्=निर्विकल्पकम् । ननु नि-र्विकल्पकस्य स्वरूपमात्रग्राहकत्वाद्विशकलितपदार्थग्राहकत्वाद्वा भेदस्वरूपग्रा-हकत्वमप्यस्त्वित्याशङ्क्याह–किं चेति । भेदो हीतरेतराभाव एव न चासौ=इ-तरेतराभावः प्रत्यक्षेण=सविकल्पकेनापि ग्रहीतुं शक्यते, अभावस्यानुपलब्धि-ग्राह्यत्वादिति कथं निर्विकल्पकेन भेदग्रहणं स्यादित्याह–न तरामिति ।

किं चन " इत्यादिनिषेधानां प्रत्यक्षादिविरोधाभावा-त् " एकमेवाद्वितीयम् " इत्यादिश्रुतिभिरद्वितीयं ब्रह्म सिद्धम् ।

तदिदमतिसाहसम्- किं भवतो नीलपीतयोस्तिक्तमधुरयोः शीतोष्णयोः सुखदुःखयोश्चाविलक्षणा बुद्धिः ?, यद्येवं नात्रोत्तरं वक्तव्यम् । न च सत्स्वरूपे

---

उपसंहरति-अतश्चेति । अतः=प्रत्यक्षस्य भेदाऽग्राहकत्वात् । "नेह नानास्ति किं चन" इति श्रुत्या नानापदवाच्यो भेदो प्रतिषिद्धः "एकमेवाद्वितीयं ब्रह्म" इति श्रुत्या चाद्वितीयं ब्रह्मप्रतिपादितमित्यद्वितीयं ब्रह्म सिद्धम् । यदि प्रत्यक्षं भेदग्राहकं स्यात्तदा नेहनानास्तीत्यभेदबोधकश्रुतेः प्रत्यक्षेणविरोधः स्यादपि नैवमस्ति प्रत्यक्षस्य भेदाऽग्राहकत्वादित्याह-इत्यादिनिषेधानां प्रत्यक्षादिविरोधाभावादिति । अनुपलब्धिस्तु शब्दापेक्षया निर्बलेति न तस्या भेदग्राहिकाया अपि श्रुतिबाधकत्वम् । किं च प्रत्यक्षस्य भेदग्राहकत्वेपि व्यावहारिकभेदग्राहकत्वमेव वक्तव्यं व्यावहारिकभेदग्राहिणश्च प्रत्यक्षस्य पारमार्थिकाभेदबोधकश्रुत्या साकं कथं विरोधः स्यात् ? समानविषयत्व एव विरोधसंभवात् । विरोधाभावाच्च न प्रत्यक्षस्याभेदश्रुतिबाधकत्वम् । विस्तरस्तु मदीयाऽद्वैतचन्द्रिकायामपि द्रष्टव्यः । किं च भेदोयं निरूपयितुमपि न शक्यते तदुक्तम्—

"भेदोयं भिन्नधर्मिप्रतिभटविषयज्ञानजज्ञानवेद्यो
धर्म्यादेर्भेदसिद्धिः पुनरपि च तथेत्यापत्तेश्चानवस्था ।
भेदे धर्म्याद्यभेदे वत भवति मृषा भेदबुद्धिर्विभेदे,
प्रादुःष्युः पूर्वदोषा न च गतिरपरा तेन भेदो मृषैव ॥" इति ।

तथा-"अतो भेदस्य दुर्निरूपत्वात् सन्मात्रस्यैव प्रकाशकं प्रत्यक्षम् ।" इति उक्तमद्वैतमतं परिहरति-तदिदमतिसाहसमिति । आक्षिपति-किमिति । भवतः=अद्वैतवादिनः । नीलपीतयोरित्यादि सप्तम्यन्तं ज्ञेयं विषयत्वं च सप्तम्यर्थः । किं भवतः परस्परविरुद्धयोर्नीलपीतयोरविलक्षणा बुद्धिर्भवति ? त्वन्मते प्रत्यक्षस्य भेदाऽग्राहकत्वात्, यद्येवम्=परस्परविरुद्धयोर्नीलपीतयोर्यद्यविलक्षणैव बुद्धिरुदेति तदाऽत्रोत्तरं वक्तव्यमेव नास्ति, किं ब्रूमो यदा

सविकल्पेन विशेषग्रहणमिति वाच्यम्, अविकल्पेन ८९ विकल्पस्यापि विलक्षणस्योत्पत्त्यऽसम्भवात् ।

यच्चावश्यमिदमस्माद्भिन्नमित्येवं विकल्पेनैव भेदो ग्रहीतव्यो नाऽविकल्पेन तस्य ग्रहणं सम्भवतीति, न ब्रूमो भेदस्य ग्रहणं किं तु भिन्नानाम् । तेषामपि न भिन्नतया किं तु स्वरूपेण–यदन्यस्माद्भिन्नं नीलं पीतं

---

त्वया सर्वलोक विरुद्धं स्वीकृतं यतो लोकानां तु नीलपीतयोर्विलक्षणैव बुद्धिर्भवति नीलबुद्धेरन्यस्वरूपत्वात् पीतबुद्धेश्चान्यस्वरूपत्वात् । यदि नीलपीतविषयिका बुद्धिरविलक्षणा नास्ति तदा बुद्धेर्भेदग्राहकत्वं गलेपतितमेव भेदस्यैव वैलक्षण्यसम्पादकत्वादिति भावः । एवमेव तिक्तमधुरयोरिसादिष्वन्वयो बोध्यः । बुद्धिशब्देनात्रप्रत्यक्षमेव ग्राह्यम् ।

ननु निर्विकल्पकेन सन्मात्रे गृहीते तदनन्तरं सविकल्पकेन तत्रैव सत्स्वरूपे विशेषग्रहणं भवति यतो घटादीनां ब्रह्मसत्तानतिरिक्तसत्ताकत्वेन ब्रह्माभिन्नत्वात्सत्स्वरूपत्वेन तेषां ग्रहणं सम्भवतीत्याशङ्क्याह–न चेति । परिहारहेतुमाह–अविकल्पेनेति । सविकल्पकं निर्विकल्पककार्यमेवेति सविकल्पकेन निर्विकल्पकसदृशेन भवितव्यं कार्यकारणयोः समानरूपत्वनियमात् तथा च निर्विकल्पकं यदि सन्मात्रग्राहकं तदा सविकल्पकमपि निर्विकल्पककार्यत्वात् सन्मात्रग्राहकमेव भष्यितीति कथं सविकल्पकेन सत्स्वरूपे विशेषग्रहणं स्यादिति भावः । निर्विकल्पकविलक्षणस्य सविकल्पकस्योत्पत्तेरसम्भवादिति प्रघट्टकार्थः ।

यच्चेति । यदुक्तम्– इदमस्माद्भिन्नम्=घटः पटाद्भिन्न इत्येवं भेदो ऽवश्यं सविकल्पकेनैव ग्रहीतव्यः=गृहीतो भवति, न निर्विकल्पकेन तस्य=भेदस्य ग्रहणं सम्भवति निर्विकल्पकस्य सन्मात्रग्राहकत्वादिति, तदपि न युक्तम् । प्रतिपादयति–न ब्रूम इति । निर्विकल्पकेन भेदस्य ग्रहणं न ब्रूमो येनोक्तोपालम्भः स्यात्, किं तु निर्विकल्पकेन भिन्नानां=भेदविशिष्टानां ग्रहणं भवतीति ब्रूमः । तत्रापि तेषाम्=भिन्नानां न भिन्नतया=भेदविशिष्टतया किं तु स्वरूपेण ग्रहणं भवति यत्=नीलमन्यस्मात् पीताद्भिन्नं पीतं वा नीलाद्भिन्नं तत्=पीतभिन्नं नीलं नीलभिन्नं च पीतं गृह्यत इति ब्रूमः इत्याह–तेषामिति । ननु भेदस्यानुयो-

**वा तद् गृह्यत इति ब्रूमः । नहि नीलं पीतं वा भेदः, तयोर्हि धर्मो भेदः, तदग्रहेपि धर्मिणां ग्रहणं नानुपपन्नम् ।**

**यदि च सन्मात्रं प्रत्यक्षेण गृह्यते न नीलं पीतं वा ततो विकल्पेनापीदमस्माद्भिन्नमिति कथं भेदो गृह्येत ?, नहि सदेव सतो भिन्नमिति सम्भवति । तस्मान्नी-**

---

गिस्वरूपरूपत्वान्नीलग्रहणे पीतभेदोपि गृहीत एव तथा पीतग्रहणे नीलभेदोपि गृहीत एवेति कथमुच्यते 'न भेदस्य ग्रहणम्' इत्याशङ्क्य धर्मभेदवादेन समाधत्ते—नहीति, नीलं वा पीतं वा न भेदः किं तु तयोः=नीलपीतयोर्धर्मो हि भेदस्तथा च धर्माऽग्रहणेपि धर्मिग्रहणमुपपद्यते एवेति न निर्विकल्पकेन धर्मभूतस्य भेदस्य ग्रहणमित्याह—तदग्रहेपीति । तदग्रहे=भेदाग्रहेपि धर्मिणाम्=भेदानुयोगिनां नीलपीतादीनां स्वरूपेण ग्रहणं नानुपपन्नम् ।

विपक्षे बाधकमाह—यदि चेति, यदि सन्मात्रमेव प्रत्यक्षेण=निर्विकल्पकेन गृह्येत न च नीलं वा पीतं वा गृह्येत ततः=तदा कार्यकारणयोः सरूपत्वनियमात् निर्विकल्पककार्येण सविकल्पकेनापि तदेव ग्राह्यं यदेव निर्विकल्पकेन, निर्विकल्पकस्य च सन्मात्रग्राहित्वे सविकल्पकस्यापि सन्मात्रग्राहित्वमेव प्राप्तमिति सविकल्पकेनापीदमस्माद् भिन्नम्=नीलं पीताद्भिन्नमित्यादिबोधे स्वरूपत्वेन धर्मत्वेन वा कथं भेदो गृह्येत ? नैव गृह्येतेति भावः । ननु तद् ग्रहणं तत्स्वरूपग्रहणमेव तथा च सविकल्पकेन निर्विकल्पिकसदृशत्वात् सन्मात्रग्राहकेन सत्स्वरूपमपि गृहीतमेव भेदश्च स्वरूपमेव न धर्म इति स्वरूपं गृह्णता सविकल्पकेन भेदोपि गृह्येतेति नोक्तदोष इत्यशङ्क्याह—न हीति । सन्मात्रं तु सन्मात्राद् भिन्नं न भवति येन सन्मात्रं गृह्णता भेदोपि तत्स्वरूपत्वेन गृह्येत ।

अयं भावः—यदि सविकल्पकस्य सन्मात्रातिरिक्तग्राहकत्वं स्यात्तदा सदतिरिक्तप्रतियोगिको भेदः सन्मात्रस्वरूपत्वेन गृह्येतापि भेदग्रहणस्य प्रतियोगिज्ञानसापेक्षत्वात्, न च सविसल्पकेनापि सदतिरिक्तं गृह्यते इति न सदतिरिक्तप्रतियोगिको भेदो ग्रहीतुं शक्यते, न च सत्प्रतियोगिको भेदो ग्रहीतुं शक्यते सत एव सतो भिन्नत्वाभावात् । तस्मात् सविकल्पकस्य भेद-

लादिगुणानां पृथिव्यादिद्रव्याणां च प्रत्यक्षेण ग्रहणा- त् प्रपञ्चापलापः प्रत्यक्षविरुद्ध एव ।

यदि तु पृथिव्यादिप्रपञ्चं नापन्हुमहे तद्धर्मं तु भेद- मेवेति ब्रूयात् ?, तदप्यशक्यम्- नीलपीतयोरितरेत-

---

ग्राहकत्वसिद्धये निर्विकल्पकस्य सन्मात्रग्राहकत्वनियमं परित्यज्य स्वरूपमात्रग्राहकत्वं वा विशकलितपदार्थग्राहकत्वं वा स्वीकार्यम्, तथा च निर्विकल्पकस्य पदार्थमात्रग्राहकत्वेन सविकल्पकस्यापि पदार्थमात्रग्राहकत्वे प्राप्ते भेदप्रतियोगिग्रहणे सति भेदग्रहणमपि स्यात् । किं च निर्विकल्पकेन स्वरूपतो नीलपीतादिग्रहणे सति सविकल्पकेन नीलपीतादिधर्मस्य भेदस्यापि ग्रहणं संभवति । न च निर्विकल्पकस्य स्वरूपमात्रग्राहकत्वेन तत्कार्यस्य सविकल्पकस्य तव मतेपि कथं स्वरूपातिरिक्तभेदग्राहकत्वं स्यादिति वाच्यम्, कार्यकारणयोः सर्वात्मना साम्यस्याऽस्वीकारात्, तन्तुभिः प्रावरणं न संभवति तत्कार्येण पटेन च यथा संभवति अथ च न कार्यकारणभावविघातस्तथात्रापि द्रष्टव्यम् । निर्विकल्पकस्य सन्मात्रग्राहकत्वे तु न सन्मात्रस्य धर्मो भेदो येन सविकल्पकस्य तव मतेपि भेदग्राहकत्वं स्यात्, यस्य च नीलपीतादेर्धर्मो भेदः स न निर्विकल्पकेन गृहीतः (सन्मात्रग्राहकत्वात्) इति कथं नीलपीतादिधर्मभूतस्य भेदस्य ग्रहणं स्यादित्याद्यनुसंधेयम्, तस्मान्निर्विकल्पकस्य नीलपीतादिस्वरूपग्राहकत्वं स्वीकार्यमेव । उपसंहरति-तस्मादिति । प्रत्यक्षविरुद्ध इति-प्रत्यक्षस्य सकलप्रमाणप्राबल्यात्तद्विरुद्धं श्रुतिरपि न वक्तुं शक्नोति । परमात्मप्रकरणपठितायाः "नेह नानास्ति किं चन" इति श्रुतेस्तु प्रपञ्चकारणीभूतपरमात्मनि नानात्वप्रतिषेधकत्वात् न प्रपञ्चभेदप्रतिषेधकत्वम् । "एकमेवाद्वितीयं ब्रह्म" इति श्रुतिस्तु परमात्मसादृश्यं पराचष्टे श्रूयते च- "न तत्समश्चाभ्यधिकश्च दृश्यते" इत्यादि किं वा परमात्मद्वित्वं पराचष्टे तस्मान्न कस्या अपि श्रुतेर्भेदापलापकत्वं निर्विशेषब्रह्मप्रतिपादकत्वं वा । विस्तरस्त्वाकरेष्वस्माकं विशिष्टाद्वैताधिकरणमालायां च द्रष्टव्यो नेह प्रतन्यते ग्रन्थाभिप्रायमात्रप्रदर्शनस्य प्रतिज्ञातत्वात् ।

ननु न वयं पृथिव्यादिप्रपञ्चस्यापलापं कुर्मः किं तु प्रपञ्चस्य धर्मभूतं भेदमपलपामो भेदः कोपि पदार्थो नास्तीत्याशङ्कते-यदीति । परिहरति-त-

राभावस्य प्रत्यक्षानुपलब्धिसिद्धस्यापह्नवासम्भवात् । प्रत्यक्षाभावोपि हि प्रत्यक्षवदेव प्रमाणान्तरेभ्यो बलीयान्, इतरथा शशे चतुष्पात्त्वाद्विषाणित्वमनुमीयेत, अतो भेदापलापो न सम्भवति ।

यदि त्वितरेतराश्रयतया इतरेतराभावग्रहणस्याऽनवक्लृप्तेरऽविद्यामात्रनिमित्तं तदित्युच्यते?, तदपि—यदि

---

दप्यशक्यमिति । नीलपीतयोरितरेतराभावरूपस्य भेदस्य तर्कादिमतेषु प्रत्यक्षप्रमाणसिद्धस्य तवास्माकं च मतेऽनुपलब्धिप्रमाणसिद्धस्यापलापासंभवादस्त्येव भेदोपि । ननु तव मते न प्रत्यक्षसिद्धो भेदः किं त्वनुपलब्धिगम्य एवानुपलब्धिश्च शब्दापेक्षया निर्बलेति नेह नानेत्यादिश्रुतिप्रतिपादितस्य भेदाभावस्य कथं भेदग्राहिकयाप्यनुपलब्ध्या बाधः स्यात्? इत्याशङ्क्याह—प्रत्यक्षाभावोपीति। प्रत्यक्षाभावः=अनुपलब्धिरपि प्रत्यक्षाभावरूपत्वात् प्रत्यक्षभिन्नेभ्यः प्रमाणान्तरेभ्यो बलवत्येवेति न श्रुतेरनुपलब्धिबाधकत्वं संभवति । वस्तुतस्त्वनुपलब्धिरप्यऽभावविषयकः प्रत्यक्षविशेष एवेति नानुपलब्धिः शब्दापेक्षया निर्बला । विपक्षे बाधकमाह—इतरथेति, यद्यनुपलब्धिः प्रमाणान्तरेभ्यो निर्बला स्यात्तदाऽनुपलब्ध्या शशे विषाणाभावेऽवगतेपि 'शशो विषाणी चतुष्पात्त्वाद् गोवत्' इत्येवं शशस्य विषाणित्वमप्यनुमीयेत, नैवमस्ति, तस्मादनुपलब्धिः प्रमाणान्तरेभ्यो बलवत्येवेति तया गृहीतस्य भेदस्य न श्रुत्याऽपलापः संभवतीत्याह—अत इति ।

ननु नीलात् पीतस्य भेदग्रहणे पीतान्नीलस्य भेदग्रहणापेक्षास्ति पीतान्नीलस्य भेदग्रहणे च नीलात्पीतस्य भेदग्रहणापेक्षास्तीत्यऽन्योन्याश्रयदोषेण इतरेतराभावग्रहणस्य=इतरेतराभावरूपभेदग्रहणस्यानवक्लृप्तेः=असमञ्जसत्वादऽसंभवाद्वा अजायमानत्वाद्वा उपायाभावाद्वा, तत्=भेदग्रहणमविद्यामात्रनिमित्तम्=अविद्यैव तस्य निमित्तमस्ति, आविद्यकत्वाच्च भेदो मिथ्यैवेति सिद्धम् । उक्तं च—"भेदोयं भिन्नधर्मिप्रतिभटविषयज्ञानजज्ञानवेद्यः" इत्यादि । इत्याशङ्कते—यदि त्विति । इतरेतराश्रयतया=अन्योन्याश्रयदोषतया । परिहरति—तदपीति, भेदग्रहणेऽन्योन्याश्रयो दोषस्तदा स्याद् यदि भेदस्य प्रतियोगिनोऽनुयोगिनश्च भिन्नतया=परस्परभेदेन प्रथमं ज्ञाने जाते तदन्-

भिन्नतया प्रतियोगिनमाश्रयं च गृहीत्वा तत इतरेत-राभावो गृह्येत ततः स्यात्, नीलपीतयोस्त्वितरेतरा-भावाऽनादरेण स्वरूपेण गृहीतयोः पश्चादितरेतराभा-वग्रहणे किमितरेतराश्रयत्वम् ?।

यदि तु द्वित्वमपन्हूयते न पृथिव्यादयस्तेषां च मि-थो भेदः?। तदपि प्रत्यक्षविरुद्धम्–सङ्ख्यायाः प्रत्यक्ष-त्वात्। सत्यपि प्रत्यक्षविरोधे तदुपमर्देन प्रवर्तमान-

---

न्तरमितरेतराभावरूपो भेदो गृह्येत, नैवमस्तीत्याह–नीलपतयोरिति, नील-त्पीतं भिन्नमित्यत्र प्रतियोग्यनुयोगिभूतयोर्नीलपतयोरितरेतराभावमगृहीत्वैव स्वरूपमात्रेण गृहीतयोः पश्चात्=स्वरूपमात्रग्रहणादनन्तरमितरेतराभावरूपभे-दग्रहणे तु नास्त्येवान्योन्याश्रय इत्यर्थः। भेदज्ञानाय प्रतियोग्यनुयोगिनोः प-रस्परं भेदग्रहणस्यापेक्षा नास्तीति भावः। किं च धर्मभेदवादे स्यादप्येषो-ऽन्योन्याश्रयः स्वरूपभेदवादे तु भेदस्यानुयोगिस्वरूपरूपत्वान्नायं दोषः। किं च यथा सामान्यस्य सामान्यान्तरापेक्षा नास्ति विशेषस्य च विशेषान्तरापेक्षा नास्ति ज्ञानस्य ज्ञानान्तरापेक्षा नास्ति प्रकाशस्य प्रकाशान्तरापेक्षा नास्ति तथा भेदस्यापि भेदान्तरापेक्षा नास्ति। यद्युच्यते सामान्यादीनामस्वीकृत-त्वात् ज्ञानादीनां च स्वयं प्रकाशत्वाद्विषमोयं दृष्टान्तस्तदा यथा रूपस्य रू-पान्तरापेक्षा नास्ति स्वप्रत्यक्षे तथा भेदस्यापि विज्ञेयमित्याद्यनुसन्धेयम्।

ननु भवतु पृथिव्यादिप्रपञ्चस्तस्य च मिथः=परस्परं भेदोपि, मयातु प्र-पञ्चगतं द्वित्वमपन्हूयते, द्वैतं नास्तीत्युच्यते द्वैतस्याऽभावादऽद्वैतमेव सिद्ध्यति, श्रूयते हि "एकमेवाद्वितीयं ब्रह्म" इति, इत्याशङ्क्ते–यदि तु द्वित्वमिति। भेदो ह्यन्योन्याभावो द्वित्वं च संख्यारूपमित्यऽपुनरुक्तिः। परिहरति–तदपी-ति, द्वित्वापन्हवोपि प्रत्यक्षविरुद्ध एव। हेतुमाह–संख्येति, द्वौ घटपटावि-त्यादौ संख्यारूपस्य द्वित्वस्य प्रत्यक्षप्रमाणसिद्धस्याऽपन्हवासंभवात्, प्रत्यक्ष-विरुद्धार्थप्रतिपादकत्वं श्रुतेरपि न संभवतीति भावः। ननु यद्यपि द्वौ घटपटा-विति प्रत्यक्षेण द्वित्वं प्रतिपाद्यते तथापि "एकमेव" इत्यागमेन तु द्वित्वा-भाव एव प्रतिपाद्यत इत्यस्तिप्रत्यक्षेण विरोध आगमश्च प्रत्यक्षापेक्षया प्रबलोस्ती ति तदुपमर्देन=प्रत्यक्षोपमर्देन प्रवर्तमानस्तद्बाधेनैव=प्रत्यक्षं बाधित्वैवाद्वैतमवगम-

स्तद्बाधेनैवाऽऽगमोऽद्वैतमवगमयतीति चेत् ?, न, प्रवृत्त्यऽसम्भवात्–प्रत्यक्षं हि निरपेक्षं शीघ्रं जायमानं स्वविरुद्धस्यागमिकज्ञानस्य पदपदार्थसन्निध्यपेक्षायोग्यत्वन्यायालोचनसापेक्षतया विलम्बितप्रवृत्तेः प्रवृत्तिमेव निरुणद्धि ।

किं चाशक्यमेव श्रुत्या प्रपञ्चस्याऽसत्त्वं बोद्धुम्, बुध्यमाने हि श्रुतिरपि प्रपञ्चान्तर्गतत्वादसती बोद्ध-

---

यतीति न प्रत्यक्षेण द्वित्वं सिद्ध्यतीत्याशङ्कते–सत्यपीति । परिहरति–नेति । हेतुमाह–प्रवृत्त्यसंभवादिति । यत्र विषये प्रत्यक्षविरोधो भवति तत्र विषये आगमस्य प्रवृत्तिरेव न संभवतीत्यर्थः, प्रत्यक्षस्य सकलप्रमाणप्रबलत्वात् स्वयं निरपेक्षत्वादन्येषां सर्वेषां प्रमाणानां प्रत्यक्षसापेक्षत्वात् ।

एतदेवाह–प्रत्यक्षमिति, प्रत्यक्षं स्वविरुद्धस्यागमिकस्य ज्ञानस्य प्रवृत्तिमेव निरुणद्धि=प्रत्यक्षविरुद्धार्थप्रत्यायने आगमस्य प्रवृत्तिरेव न संभवति । प्रत्यक्षस्य निरोधकत्वे हेतुमाह–निरपेक्षमित्यादि, प्रत्यक्षस्यान्यप्रमाणसापेक्षता नास्ति किं च शीघ्रमेवोत्पद्यते, अनुमाने पक्षहेत्वादिप्रत्यक्षेण विलम्बो भवति शाब्दबोधे च पदप्रत्यक्षादिना विलम्बो भवति नैवं विलम्बः प्रत्यक्षोत्पत्तौ भवतीति प्रत्यक्षं प्रबलं सत्स्वविरुद्धार्थबोधने प्रमाणान्तरप्रवृत्तिं निरुणद्धि । आगमिकज्ञानस्य निरोध्यत्वे हेतुमाह–पदपदार्थेति, आगमिकज्ञानस्य शाब्दत्वात् पदप्रत्यक्षापेक्षा पदार्थोपस्थित्यपेक्षा संनिध्याकाङ्क्षायोग्यतानामपेक्षा पूर्वोत्तरमीमांसोक्तन्यायविचारापेक्षास्तीति तद् बहुसापेक्षत्वादतिविलम्बेन प्रवर्तते=स्वप्रतिपाद्यविषयं बोधयति, तत्र शीघ्रगामिना प्रत्यक्षेण प्रथममेव द्वित्वं बोधितमिति तदनन्तरं द्वित्वाभावबोधनाय प्रवृत्तस्यागमस्य प्रथमजातं प्रबलं च प्रत्यक्षं प्रवृत्तिमेव निरुणद्धि । तथा च प्रत्यक्षविरोधसत्त्वान्न श्रुत्याप्य ऽद्वैतं बोधयितुं शक्यत इत्यर्थः ।

उक्तमेवोपपादयति–किं चेत्यादिना । निगदव्याख्यातप्रायोयं ग्रन्थः । यदि श्रुत्या प्रपञ्चस्य मिथ्यात्वं बोध्येत तदा श्रुतिरपि प्रपञ्चान्तर्गता मिथ्यैव स्यात्तस्याश्च मिथ्यात्वे न प्रपञ्चस्य प्रामाणिकं मिथ्यात्वं स्यात् । किञ्च मिथ्यात्वस्य प्रामाणिकत्वे मिथ्यात्वेनैव द्वैतापत्तिः स्यात् । यदि मिथ्यात्वं

**ण्या स्यात् । कथं च श्रुत्यैव श्रुतेरसत्त्वं बुध्येत ? । अ-सत्त्वेन हि प्रतीयमाना न प्रमाणं स्यात् । प्रमाणत्वे त्वऽवस्थिते-सत्तया प्रतीयमानायाः श्रुतेर्न मिथ्यात्वं शक्यं वक्तुम् । नह्येकस्यैव वस्तुनो युगपदेव सत्त्वमस-त्त्वं च समुच्चित्य बोद्धुं शक्यम् ?, अन्यतरोपमर्देन ह्य-न्यतरद् बुद्धावारोहति । ततश्च श्रुतिरऽस्तीति चेत् ?,**

---

सत्यत्वाभाव एवाभावश्चाधिकरणात्मको भवतीति मिथ्यात्वस्य ब्रह्मस्वरूप-त्वापत्त्या न द्वैतापत्तिरित्युच्यते तदा द्वैतं परिहरता शून्यमेवावस्थापितं यतः-सत्यत्वाभावरूपस्य मिथ्यात्वस्य ब्रह्मस्वरूपत्वे ब्रह्मणो मिथ्यास्वरूपत्व-प्राप्त्या मिथ्यात्वमेव स्यात् । न च प्रपञ्चो मिथ्या दृश्यत्वात् शुक्तिरजतव-दित्यनुमानेन प्रपञ्चे मिथ्यात्वं प्राप्तमिति वाच्यम्, प्रातिभासिकत्वस्य प्रति-भासमात्रशरीरत्वस्य च कार्याऽकारित्वस्य चोपाधित्वात् । शुक्तिरजते का-र्याऽकारित्वमस्तीति साध्यव्यापकत्वं प्रपञ्चे नास्तीति साधनाव्यापकत्वम् । न च शुक्तिरजतरज्जुसर्पादीनां मिथ्यात्वेनाभिमतानामपि हर्षभयादिकार्य-कारित्वात् साध्यव्यापकत्वं नास्तीति वाच्यम्, हर्षभयादीनां ज्ञानकार्यत्वेन शुक्तिरजताद्यऽकार्यत्वादेव, शुक्तिरजतज्ञानेन हर्षो भवति न शुक्तिरजतेन रज्जुसर्पज्ञानेन भयं भवति न रज्जुसर्पेण । वस्तुगत्या सत्यपदार्थानामपि स्व-रूपेण हर्षादिजनकत्वं न सम्भवति का कथा पुनर्मिथ्याभूतस्य, अन्यथा स्वाङ्गणतले सताऽज्ञातेनापि निधिना हर्षः स्यात्, नैव च भवति तस्मादभि-लषितपदार्थानां ज्ञानस्यैव हर्षजनकत्वं द्विष्टपदार्थानां च ज्ञानस्यैव भयादि-जनकत्वं वक्तव्यमिति न शुक्तिरजतादीनां कार्यकारित्वम् । शुक्तिरजतादि-ज्ञानं तु न मिथ्या तस्य जातत्वादेव ।

किं चात्मव्याघातविरोधान्न श्रुतिः स्वस्यासत्त्वं बोद्धुं क्षमेत्याह-कथ-मिति । प्रमाणत्व इति, यदि श्रुतिः प्रमाणं स्यात्तदा सत्यपि स्यात् सत एव प्रमाणत्वनियमात् सत्तया प्रतीयमाना च न मिथ्या स्यात् । या हि श्रुतिर-द्वैतस्य स्वभिन्नस्य सत्त्वं बोधयति सा स्वयं कथमसती स्यात् ? । अन्यतरोपम-र्देन=सत्त्वं बाधित्वाऽसत्त्वं, असत्त्वं च बाधित्वा सत्त्वं बुद्धावाऽऽरोहति परस्परं विरोधेन सामानाधिकरण्याऽभावात् । उपसंहरति-ततश्चेति ।

**न प्रपञ्चस्याऽभावः सम्भवति श्रुतेरपि प्रपञ्चत्वात् । नास्ति चेच्छ्रुतिः ? प्रमाणाभावादेव न प्रपञ्चापलापः सम्भवति ।**

**ननु स्वयं प्रकाशं ब्रह्म किमस्यान्येन प्रमाणेन ? । भवतु ब्रह्म स्वयं प्रकाशं प्रपञ्चाभावस्य किमायातम् ? स हि प्रमाणमपेक्षत एव ।**

---

किं च "परस्परविरोधे हि न प्रकारान्तरस्थितिः" इति न्यायेन प्रपञ्चस्य सत्त्वं वा वक्तव्यम ऽसत्त्वं वा वक्तव्यं न च मिथ्यात्वमुभयविलक्षणस्वरूपम्, भवता सदसद्विलक्षणत्वस्यैव मिथ्यात्वस्य स्वीकारात् । ननु गोत्वमश्वत्वं च परस्परं विरुद्धमेव तथापि गजे न गोत्वमस्ति न वाश्वत्वमपि तथा प्रकृतेपि सत्त्वासत्त्वयोः परस्परं विरोधेपि न ते प्रपञ्चे सम्भवतः किं तु गजे गोत्वाश्वत्वविलक्षणगजत्ववत् प्रपञ्चेपि सत्त्वासत्त्वविलक्षणं मिथ्यात्वं सम्भवतीति चेन्न, विषमोयं दृष्टान्तो मधुसूदनसरस्वतीनाम्, यतः चतुष्पादजात्यन्तर्गता अनेके गवादयः पशवः सन्त्येव तेषां च गोत्वादयो धर्मा अपि सन्ति परस्परं च विरुद्धा अपि सन्ति तेषु कोप्येको धर्मः कस्मिंश्चित्पशौ स्थास्यत्येवेति गोत्वाश्वत्वदीनामभावे गजत्वमेव गजे तिष्ठति गजत्वं च धर्मः सिद्ध एव नानुमानादिना साध्यः । तथा यदि मिथ्यात्वं सिद्धमेव तदा सिद्धसाधनता दोषो यदि न सिद्धं तदा प्रपञ्चमात्रस्य सत्त्वं वाऽसत्त्वं वा धर्मः सिद्धोस्ति तयोश्च परस्परं विरोधे सत्त्वमेव स्थास्यत्यसत्त्वमेव वा स्थास्यति, न चात्र सत्त्वासत्त्वयोरिव कोप्यन्यो धर्मः कत्वं वा खत्वं वा मिथ्यात्वं वा दृष्टान्तपक्षे गजत्वमिव सिद्धोस्ति यद्विरोधेन प्रपञ्चात् सत्त्वासत्त्वे उभे एव निवर्तेताम् ? । इत्यादि स्वयमनुसन्धेयम् । उक्तं च—

> "प्रत्यक्षादिप्रमासिद्धविरुद्धार्थाभिधायिनः ।
> वेदान्ता यदि शास्त्राणि बौद्धैः किमपराध्यते ॥" इति ।

पुनरप्याशङ्कतेऽद्वैती—नन्विति, ब्रह्मणः स्वयंप्रकाशत्वात् तत्र प्रमाणापेक्षैव नास्ति येन श्रुतेर्मिथ्यात्वे कोप्यनिष्टा शङ्का स्यादिति भावः । उत्तरमाह—भवत्विति । प्रपञ्चाभावस्तु न स्वयंप्रकाशपदार्थोस्ति येन तस्य प्रमाणापेक्षा न स्यादिति भावः । सः=प्रपञ्चाभावः । न चाभावस्याधिकरणात्मकत्वेन प्रप-

**कथं चाविद्यमानस्य प्रपञ्चस्य प्रतिभासः ?, । अविद्येति चेत् ?, कस्य पुनरियमविद्या ?, जीवानामिति चेत् ?, न, तेषामभावात् भावे वा द्वैतप्रसङ्गः । ब्रह्मणि तु विशुद्धविज्ञानात्मके निरवकाशैवाऽविद्या ।**

---

ऽभावस्य ब्रह्मस्वरूपत्वेन स्वयंप्रकाशत्वमपि सम्भवतीति वाच्यम्, दत्तोत्तरत्वात्–एवं हि ब्रह्मैव मिथ्या स्यादिति प्रदर्शितम् । अभावस्य ब्रह्मस्वरूपत्वे ब्रह्माप्यभावरूपमेव स्यादिति शून्यवादप्रसङ्गः । किं चाभावस्याधिकरणात्मकत्वमपि न सम्भवति, अन्यथाऽधिकरणस्य चक्षुरादिना ग्रहणे जाते तत्स्वरूपस्याऽभावस्यापि चक्षुरादिनैव ग्रहणसम्भवेऽभावग्रहणायानुपलब्धिप्रमाणस्वीकारस्याऽसङ्गतिः स्यात् । न च चक्षुरादीनामधिकरणग्रहणेनैवोपक्षीणत्वादभावग्रहणायानुपलब्धिप्रमाणस्वीकार इति वाच्यम् । यद्यधिकरणात्मभूतस्याप्यभावस्य ग्रहणाय प्रमाणान्तरमपेक्ष्यते तदा घटप्रत्यक्षस्थले प्रथमप्रत्यक्षस्य घटग्रहणेनैवोपक्षीणत्वाद् घटस्वरूपग्रहणाय प्रत्यक्षान्तरापेक्षा घटरूपग्रहणाय च प्रत्यक्षान्तरापेक्षा स्यात् । यदि घटस्वरूपं घटात्मकमेवेति न प्रत्यक्षान्तरापेक्षा तदा तव मतेऽभावोऽप्यधिकरणात्मक एवेति नानुपलब्ध्यपेक्षा स्यादस्ति चापेक्षेति नाऽभावोऽधिकरणात्मकः (इत्यन्यमतेनाक्षेपः) ।

मीमांसकः शङ्कते–कथं चेति, प्रत्यक्षं प्रति विषयस्य हेतुत्वात् प्रपञ्चाभावे तत्प्रत्यक्षं न सम्भवति, अत एव त्वया प्रातिभासिकरजतस्योत्पत्तिः स्वीक्रियते । न च प्रातिभासिकस्यैव प्रपञ्चस्य सत्यत्वेन प्रतीतिर्भवतीति वाच्यम्, प्रातिभासिकस्य कार्यकारित्वाभावात् प्रपञ्चस्य च कार्यकारित्वादेव न प्रातिभासिकत्वमिति भावः । नन्वविद्ययैव प्रपञ्चप्रतिभासः सम्भवतीत्याशङ्क्याह–कस्येति । इयमविद्या जीवसमवेता वा ईशसमवेता वा शुद्धब्रह्म समवेता वा ?, नाद्यः–अद्वैतमते जीवानामपि मिथ्यात्वात्, भावे=जीवनां सत्यत्वे द्वैतप्रसङ्गः । न द्वितीयः–ईशस्यापि मिथ्यात्वात्, भावे वा द्वैतप्रसङ्गः । न तृतीयः–मध्यंदिनप्रकाशमाने सवितरि तम इव विशुद्धविज्ञानात्मके ब्रह्मण्यविद्यासमवायाऽसंभवादऽन्यथा तस्य ज्ञानस्वरूपत्वं न स्यात्, अविद्यासंबन्धेनाशुद्धत्वादीश इव तस्यापि मिथ्यात्वे शून्यवाद एव प्रसक्तः स्यात् । इत्यभिप्रायेणाह–जीवानामित्यादिना ।

विद्यात्मकमपिब्रह्माऽविद्याशबलमिव भ्रान्त्याऽवगम्यत इति चेत् ?, कस्येयं भ्रान्तिः ?, यदि न कस्य चित्सूक्तम्। जीवानामिति चेत्?, न, तदभावात्। यदि ब्रह्मणः?, नास्य भ्रान्तिः सम्भवतीत्युक्तम्। यदि च विद्यारूपेप्यविद्या स्यात् केनासावुच्छिद्येत ?। ध्यानादिभिरिति चेत् ?, न, तेषामप्यभावात्, भावे तु द्वैतापत्तिः। ब्रह्मणि तु सहाऽवस्थानादविरुद्धा ऽविद्या न तेनोच्छेत्तुं सा शक्या। ततश्चाऽनिर्मोक्षप्रसङ्गः।

---

ननु न शुद्धब्रह्मणि वास्तवोऽविद्यासमवायः किं तु भ्रान्त्याऽविद्याशबलमिव प्रतीयते इत्याह—विद्यात्मकमिति। परिहरति—कस्येति, इयं भ्रान्तिरपि कस्मिन् समवेतेति वक्तव्यम्, यदि न क्वचिदपि तदा सूक्तम्=वदतो व्याघात एव, अस्ति भ्रान्तिर्न च सा क्वचिदपि समवेतेति विरोधस्य हालिकैरपि सुगम्यत्वात्। यदि क्वचित्समवेतास्ति तदा न जीवेषु नेशे न शुद्धब्रह्मणीति पूर्वोक्तवदनुसन्धेयम्, तदाह— जीवानामित्यादिना। अस्य=ब्रह्मणः। यदि विद्यारूपेपि ब्रह्मण्यविद्या स्यात्तदासौ=अविद्या केनोच्छिद्येत=केन नष्टा स्यादिति मीमांसकः शङ्कते—यदि चेति। अद्वैत्याह—ध्यानादीति, अयं भावः—ब्रह्मैवाविद्यावशाच्छुद्धमपि स्वात्मानमशुद्धं जीवरूपं मन्यते तस्येयमविद्या श्रवणमनननिदिध्यासनैर्निवर्तते अविद्यानिवृत्त्यनन्तरं च शुद्धमेव ब्रह्मेति। परिहरति—नेति। तेषाम्=ध्यानादीनां मिथ्यात्वात्, नहि मिथ्याभूतैर्ध्यानादिभिरविद्या निवर्तयितुं शक्यते मिथ्याभूतस्य कार्यकारित्वाभावात् भावे=ध्यानादीनां सत्त्वे तु तैरेव द्वैतं स्यात्। न चाविद्या स्वयमेव निवर्तते जडत्वात् निवृत्तिरूपक्रियायाश्च जडे बाधात्, न च ध्यानादिकं भयसंपादकं सर्पादिरूपं येनानादिकालाद्बद्धासना ऽविद्या ध्यानादिभयात्स्वयं निवर्तेत।

किं च यदि ब्रह्मण्यविद्यास्त्येव तदा सहावस्थानादविद्याब्रह्मणोर्विरोधो नास्तीति प्राप्तं, विरोधाभावे च कथं तेन=ब्रह्मणा सा=अविद्योच्छेत्तुं शक्येत ? नैव शक्येत। किं वा यदि ध्यानादिरूपविद्यासमवायो ब्रह्मण्येवोच्यते तदा ब्रह्मणि ध्यानादिकमप्यस्त्यऽविद्यापि चास्तीति ध्यानादिभिः सहावस्थानादऽविद्यया सह ध्यानादीनामविरोध एव वाच्यो विरोधाभावे च ते-

**तस्माद् ब्रह्मणः प्रशंसार्थैरस्थायित्वेन प्रपञ्चस्यास-**
**त्त्वमुपचरद्भिरौपनिषदैर्वादैस्तदनुसारिभिश्चेतिहासपु-**
**राणैर्भ्रान्तानां वाक्यतात्पर्यमजानानां न्यायाभि-**

---

न=ध्यानादिना साऽविद्या नोच्छेत्तुं शक्येतेत्यर्थः । अविद्योच्छेदाभावे च मोक्षोपि न संभवेदित्याह–ततश्चेति । किं च ब्रह्म व्यापकं ज्ञानस्वरूपं चास्ति ब्रह्मणो व्यापकत्वेन ज्ञानस्यैव व्यापकत्वं प्राप्तं तथा च यत्राऽज्ञानमस्ति तत्र ज्ञानमप्यस्त्येवेति विरोधाभावादज्ञानस्य निवर्त्यत्वं ज्ञानस्य च निवर्तकत्वं न स्यात् । विरोधे च ज्ञानस्य व्यापकत्वात्तद्विरुद्धमज्ञानं क्वचिदपि नैव संभवेत् तथा च प्रपञ्चप्रतीतिरपि न स्यात् । किं च यदि सकले ब्रह्मण्यविद्यासंबन्धस्तदा शुद्धब्रह्माभावः प्राप्तो यदि ब्रह्मणः कस्मिंश्चिद्देशेऽविद्यासंबन्धस्तदा सावयवत्वेनानित्यत्वप्रसङ्गः ।

किं च नेयमविद्या भवद्भिर्ज्ञानाभावस्वरूपाऽभ्युपगम्यते किं तु भावरूपैव, ज्ञानस्य च स्वाभावेनैव विरोधः संभवति न भावरूपयाऽनयाऽविद्यया, अन्यथा गोघटादिभिरपि ज्ञानस्य विरोधः स्यादिति न ज्ञानेनैषा भवतामविद्या निवर्तयितुं शक्यते । ननु न सिंहाभावरूपो मृगस्तथापि यथा सिंहेन मृगो निहन्यते तथा ज्ञानेनाविद्या निहन्यत इति चेन्न सिंहो हि स्वक्षुन्निवृत्त्यर्थं मृगादीन् निहन्ति नैवं ज्ञानस्य क्षुत्संभवति, किं च स्वाभावरूपाऽज्ञाननिवर्तनेनैव तृप्तं ज्ञानं किमर्थं हनिष्यत्यविद्याम् ? । विरोधादेव हनिष्यतीति चेत् ? उक्तरीत्या विरोधस्यैव दुरुपपादत्वात् । किं चानादिकालप्राप्तमज्ञानं ज्ञानं चोभयमेव तत्राद्यावधि न ज्ञानेनाऽज्ञानं निवर्तितमग्रे च निवर्तयिष्यतीत्यत्र किं मानम् ? " भाविनि मानाऽभावात् " इत्याद्यनुसन्धेयम् । तदयमद्वैतवादः सर्वथा लोकवेदविरुद्ध एव ।

उपसंहरति–तस्मादिति । " एकमेवाद्वितीयं ब्रह्म " इत्यादयो ब्रह्मप्राशस्त्यप्रतिपादका वादा न त्वद्वैतप्रतिपादका इत्यर्थः । तथा–" तस्मान्न विज्ञानमृतेस्ति किं चित् क्वचित् कदाचिद् द्विज वस्तुजातम् " इत्यादयः पुराणेतिहासवादाश्च प्रशंसापरा एव नाद्वैतपराः । प्रपञ्चस्यानित्यत्वात्तैरुक्तवादैरसत्त्वमुपचारेणोच्यते न वास्तवम् । एवं भूतैर्वादैर्भ्रान्तानां प्रलापोयमद्वैतवादो यतोऽद्वैतवादिनो वाक्यतात्पर्यं पूर्वोत्तरमीमांसोक्तन्यायतात्पर्यं च न जानन्ति ।

योगशून्यानां प्रलापोयमऽद्वैतवाद इत्युपेक्षणीयः। तत् सिद्धमऽविकल्पस्य प्रत्यक्षस्य विशेषविषयत्वम्।

अपरे तु स्वलक्षणमात्रगोचरं निर्विकल्पकमिच्छन्ति। तदपि प्रतीतिविरुद्धम्—प्रतीयते हि संमुग्धाकारं वस्तु सहसैव, यत् पश्चाज्जातिद्रव्यगुणक्रियानामभिः पञ्चधा सविकल्पकेन विकल्प्यते—गौरयम्, दण्ड्ययम्,

---

किं च भो दूरे न्यायतात्पर्यविज्ञानवार्ता यतस्तैर्ब्रह्मजिज्ञासायाः साधारणस्य साधनचतुष्टयस्यानन्तर्यं प्रकल्प्य युक्ततरस्य स्वरसप्राप्तस्याऽसाधारणस्याऽस्मन्मीमांसानुकूलस्य च कर्मज्ञानस्यानन्तर्यं परित्यक्तमित्युपेक्षणीय एवायमद्वैतवादः। परमोपसंहारमाह—तदिति। उक्तप्रकारेण निर्विकल्पकस्य सन्मात्रविषयकत्वं नास्तीति तस्य निर्विकल्पकस्यापि प्रत्यक्षस्य विशेषविषयत्वम्=विविधधर्मविशिष्टनीलपीतादिविशेषविषयत्वमस्त्येवेति सिद्धम्, किं तु निर्विकल्पकं सविशेषमपि वस्तु गृह्णत् विशेष्यविशेषणभावं नावगाहत इत्यन्यदेतत् सविकल्पकस्यैव विशेष्यविशेषणभावावगाहकत्वनियमात्।

एवं निर्विकल्पकस्य सन्मात्रग्राहकत्वं निराकृत्य बौद्धोक्तं निर्विकल्पकमेव प्रत्यक्षमिति नियमं च निराकृत्य निर्विकल्पकस्य बौद्धोक्तस्वलक्षणमात्रगोचरत्वनिराकरणाय पुनरपि बौद्धमतमुपस्थापयति—अपरे त्विति, स्वलक्षणमात्रम्=विशेषणांशरहितं विशेष्यव्यक्तिस्वरूपमात्रमेव गोचरो यस्य तत्स्वलक्षणमात्रगोचरम्। तार्किकरीत्या निर्विकल्पकं विशेष्यविशेषणभावादिकं न गृह्णातीत्येतन्मात्रं नोच्यते किं तु विशेषणं स्वरूपतोपि न गृह्णातीत्युच्यते। तच्च स्वलक्षणं गृहीत्वा न तदनन्तरं विशेषणस्वरूपं ग्रहीतुं शक्नोति "शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात्" इति न्यायात्। ज्ञानान्तरेण सविकल्पकेन विशेषणस्वरूपग्रहणे तु निर्विकल्पकस्य तस्य स्वलक्षणमात्रगोचरत्वमेव प्राप्तम्। एकेनैव ज्ञानेन विशेष्यविशेषणोभयग्रहणे त्वेकेनैव ज्ञानेन गन्धरसाद्युभयमपि गृह्येत न चैवं सम्भवतीति निर्विकल्पकं स्वलक्षणमात्रगोचरमिति प्राप्तमित्यर्थः।

परिहरति—तदपीति। हेतुमाह—प्रतीयते हीति। सहसैव=अक्षपातानन्तरमेव संमुग्धाकारम्=विशेष्यविशेषणभावरहितं वस्तु प्रतीयते। गौरयमिति

शुक्लोयम्, गच्छत्ययम्, डित्थोयम्, इति । तत्र निर्वि-कल्पकमनेकाकारं वस्तु संमुग्धं गृह्णाति, सविकल्पकं त्वेकैकाकारं जात्यादिकं विविच्य विषयी करोति ।

ननु षष्ठोपि विकल्पोस्ति—तदेवेदमिति तत्कथं पञ्चधा विकल्प इत्युच्यते ?, न त्वयं जातिविकल्पो व्यक्तिप्रत्यभिज्ञा ह्यियम्, न संज्ञाविकल्पः—अनवगतसंज्ञानामपि भावात् तिर्यञ्चोपि ह्यद्य जाताः स्वमातरं

---

जातिविकल्पः, दण्ड्ययमिति द्रव्यविकल्पः, शुक्लोयमिति गुणविकल्पः, गच्छत्ययमिति क्रियाविकल्पः, डित्थोयमिति नामविकल्पः । सिद्धान्ताभिप्रायमाह—तत्रेति, यतो निर्विकल्पकं ज्ञानमनेकारमेव वस्तु संमुग्धं गृह्णाति अतो न स्वलक्षणमात्रगोचरं किं तु विशकलितविशेष्यविशेषणोभयग्राहकमेव । ननु यदि निर्विकल्पकमपि विशेष्यं विशेषणं च गृह्णाति तदा तस्य सविकल्पकात् को भेदः ? इत्याशङ्क्याह—सविकल्पकमिति, निर्विकल्पकं तु विशेष्यं विशेषणं च विशकलितमेव गृह्णाति, सविकल्पकं तु विशेष्यविशेषणभावेन गृह्णाति । किं चायं घट इदं घटत्वमित्यादिरूपेण विवेकपूर्वकं गृह्णाति नैवं विवेको निर्विकल्पके संभवति तस्य स्वरूपमात्रग्राहकत्वादित्युक्तम्—एकैकाकारमिति, अयं जात्यंशः, अयं च व्यक्त्यंशः, अयं च तयोः सम्बन्ध इत्येवं पृथक् पृथगाकारेण विविच्य सविकल्पकं गृह्णाति । निर्विकल्पकं त्वेतादृशविवेकरहितं संमुग्धाकारमेव पदार्थं गृह्णातीति भेदः ।

ननु भवता जातिद्रव्यगुणक्रियानामभिः पञ्चप्रकारको विकल्प उक्तस्तन्नोपपद्यते तदेवेदमिति षष्ठस्यापि प्रत्यभिज्ञाविकल्पस्य सुप्रसिद्धत्वादित्याशङ्कते—नन्विति । ननु तदेवेदमिति यदि जातिविकल्पो न सम्भवति तदा नामविकल्प एवास्त्वित्याशङ्क्याह— न सञ्ज्ञेति । उक्तमुपपादयति—अनवगतेत्यादिना, यदि तदेवेदमिति सञ्ज्ञाविकल्पः स्यात्तदाऽनवगतसञ्ज्ञानां जीवानां तदेवेदमिति विकल्पो ज्ञानविशेषो न स्यात् न हि अनवगतदेवदत्तनामधेयो यज्ञदत्तो देवदत्तं स्वरूपतो दृष्ट्वापि देवदत्तोयमिति वक्तुं शक्नोति । शब्दानुवेधशून्यम्=सञ्ज्ञासम्बन्धशून्यं यथा स्यात्तथा किं वा सञ्ज्ञासम्बन्धं विनैव प्रत्यभिजानन्ति । तस्मादयं षष्ठ एव विकल्प इत्याह—तस्मादिति ।

प्रथममुपलभ्य क्षणान्तरे पुनरुपलभमानाः सैवेयमिति शब्दानुवेधशून्यमेव प्रत्यभिजानन्ति, तस्मादियं षष्ठी कल्पनेति पञ्चविधत्वानुपपत्तिः।

उच्यते–इयमेवास्माभिर्नामकल्पनेत्युच्यते। तथा हि–डित्थोयमिति तावद् गौरयमितिवत् गवात्मना डित्थात्मना वस्तु विकल्प्यते, न दण्डीतिवत् तत्संबन्धितया, मत्वर्थानुपादानात्। तत्र न डित्थशब्दो जातिवदर्थस्यात्मा अत्यन्तभिन्नत्वाद् यतस्तेनैवार्थोनुरज्येत। तदेतदेवं विज्ञेयम्–डित्थशब्देन तद्वाच्यं पूर्वा

---

परिहारमाह–उच्यते इत्यादिना, तदेवेदमिति न षष्ठो विकल्पः किं त्वस्य नामविकल्प एवान्तर्भाव इत्यर्थः। उपपादयति–तथा हीत्यादिना, यथा पूर्वावगतमेव वस्तु गौरयमिति विकल्पेन गवात्मना विकल्प्यते तथा पूर्वावगतमेव वस्तु डित्थोयमिति विकल्पेन डित्थात्मना विकल्प्यत इत्यन्वयः। अर्थाद् गौरयमिति विकल्पेन गौरिव यथा डित्थोयमिति विकल्पेन डित्थव्यक्तिर्विकल्प्यते तथैव पूर्वावगतमेव वस्तु तदेवेदमिति विकल्पेन विकल्प्यते इति तदेवेदमित्यस्य विकल्पस्य प्रत्यभिज्ञाऽपरपर्यायस्य नामविकल्प एवान्तर्भावः। एतदेवाग्रे विशदयति–डित्थशब्देनेत्यादिना। ननु डित्थोयमित्यत्र वाच्यसम्बन्धितया नाम कल्प्यते इति सम्बन्धिकल्पनैवेयमस्तु तदेवेदमित्यत्र तु न सम्बन्धिकल्पनेति न नामविकल्पे तदेवेदमित्यस्यान्तर्भाव इत्याशङ्क्याह–नेति, डित्थोयमिति न वाच्यसम्बन्धितया विकल्पो न सम्बन्धिकल्पनेत्यर्थः, यदि सम्बन्धिकल्पना स्यात्तदा दण्डीतिवत् डित्थशब्दादपि मत्वर्थीयप्रत्ययस्योत्पत्तिः स्यात्, न चैवमस्ति मत्वर्थप्रत्ययानुपादानात् तस्मान्न डित्थोयमिति सम्बन्धिकल्पना। हेत्वन्तरमाह–तत्रेति, डित्थशब्दस्य डित्थशब्दवाच्यव्यक्तितोऽत्यन्तभिन्नत्वात् डित्थशब्दो न जातिवत् अर्थस्य=डित्थपदवाच्यस्यात्मा=प्राणप्रदो यतः=येन तेनैव=डित्थशब्देन अर्थः=डित्थपदव्याच्यः पदार्थोनुरज्येत। डित्थशब्देन तद्वाच्यपदार्थवैशिष्ट्याऽसंभवान्न डित्थोयमिति संबन्धिकल्पना किंतु तदेवेदमितिवत् नामकल्पनापरपर्याया प्रत्यभिज्ञैव। गोत्वादिना तु पदार्थवैशिष्ट्यं सम्भवतीति युक्ता तत्र सम्बन्धित्वकल्पनेति भावः।

**वगतं डित्थमुपस्थाप्य तदात्मना पुरस्स्थितोऽर्थो विकल्प्यते–डित्थोयमिति ।**

**किमुक्तं भवति ? योसावस्माकं डित्थः सोयं पुरस्स्थितो नान्य इति, सेयं व्यक्तिप्रत्यभिज्ञैव पञ्चमी कल्पना । सा च शब्दविदां नामरूषितैव भवतीति नामविकल्पनेति व्यवह्रियते । एतेन यदाहुः–" डित्थोयमित्य ऽशब्दाकारस्यार्थस्य शब्दाकारेण विकल्पना-**

---

किं वा ननु यथा गौरयमित्यादौ मत्वर्थीयप्रत्ययं विनापि संबन्धविकल्पो भवति गोव्यक्तौ गोत्वसमवायप्रतीतेस्तथा डित्थोयमित्यत्रापि मत्वर्थप्रत्ययं विनापि संबन्धकल्पना वक्तुं शक्येति न डित्थोयमिति तदेवेदमित्यनयोर्विकल्पयोरभेद इत्याशङ्क्याह–तत्रेति । गोत्वं हि व्यक्तेः प्राणप्रदं नात्यन्तंभिन्नं चेति तेन व्यक्त्यनुरक्तिसंभवान्न तत्र मत्वर्थप्रत्ययापेक्षा डित्थशब्दस्तु दण्डवदत्यन्तभिन्न एवेति संबन्धकल्पनायां मत्वर्थप्रत्ययापेक्षावश्यं स्यान्न चास्तीति न डित्थोयमिति संबन्धकल्पना तस्मात्तदेवेदमिति विकल्पस्य डित्थोयमिति नामविकल्पतुल्यत्वात्तत्रैवान्तर्भाव इत्यर्थः । यथा तदेवेदमित्यत्र पूर्वावगतमेव वस्तु वर्तमानकालवृत्तित्वेन विकल्प्यते तथैव डित्थोयमित्यत्रापि पूर्वावगतमेव वस्तु तदात्मना=डित्थशब्दवाच्यत्वेन विकल्प्यते इत्याह–डित्थशब्देनेत्यादिना ।

किमुक्तं भवतीति–डित्थशब्देन तद्वाच्यमित्याद्युक्तस्य वाक्यस्य कोभिप्राय इति पृच्छति–किमुक्तमिति । उक्तवाक्याभिप्रायमाह–योसाविति । सेयमिति–डित्थोयमिति पञ्चमी नामकल्पना व्यक्तिप्रत्यभिज्ञैवास्ति, तदेवेदमित्यपि व्यक्तिप्रत्यभिज्ञैवेति तदेवेदमिति विकल्पस्य पञ्चमे नामविकल्प एवान्तर्भाव इति भावः । सा चेति–सा=व्यक्तिप्रत्यभिज्ञा नामरूषितैव भवतीति नामविकल्पनेत्युच्यते । नामरूषिता=नामानुविद्धा । सिंहावलोकनन्यायेन पुनरपि बौद्धमतं पराचष्टे–एतेनेति । बौद्धमते हि निर्विकल्पकस्यैव प्रत्यक्षत्वंप्रमाणत्वं चास्ति न सविकल्पकस्य तस्य निर्विकल्पकानुवादरूपत्वादित्युक्तम्–डित्थोयमिति । पुरस्स्थितां व्यक्तिमिदंशब्देनोपस्थाप्य सा डित्थशब्देन विकल्प्यते डित्थोयमिति न च सा व्यक्तिः शब्दरूपास्तीति अशब्दाकारस्य=शब्दभिन्नस्यार्थस्य शब्दाकारेण=शब्दत्वेन विकल्पनात् सविकल्पकं

दप्रमाणं सविकल्पकम् " इति तदपि निरस्तम् । न ह्यत्र शब्दाकारेणार्थः प्रतीयते किं तु पूर्वावगतार्थस्मरणमात्रे शब्दस्य व्यापारः, तेन च स्मृतेनार्थेन तादात्म्येन पुरस्स्थितार्थविकल्पनात् । आह च–

" यदा तु यादृशः पिण्डः पूर्वं शब्दात् प्रतीयते ।
तादृशस्मरणे हेतुः शब्दस्तत्र यथार्थता ॥" इति ।

---

डित्थोयमित्यादि ज्ञानमप्रमाणम्। यथा शुक्तिकाया रजतत्वेन विकल्पनाद्रजतमिदमिति ज्ञानमप्रमाणम् । परिहरति–तदपीति । हेतुमाह–न हीति, डित्थोयमित्यत्र शब्दार्थयोरभेदस्तु न प्रतीयते येन सर्वथा भिन्नयोः शब्दार्थयोरसतोऽभेदस्य प्रतीत्या सविकल्पकस्या ऽप्रामाण्यं स्यात् । किं तु डित्थशब्दवाच्यत्वं प्रतीयते इत्याह–किं त्विति । पूर्वावगतार्थस्य स्मरणमात्रे एव शब्दस्य सामर्थ्यं व्यापारश्च सम्भवति तेन च=तस्मात् स्मृतेनार्थेन सह पुरस्स्थितार्थस्य तादात्म्येन विकल्पो भवति यथा–य एव डित्थशब्देन स्मृतः पदार्थः स एवायं पुरस्स्थित इति । तेन च स्मृतेनेति सामानाधिकरण्यं बाज्ञेयम् । विकल्पनादिति निरस्तत्वहेतौ पञ्चमी ।

अत्र भट्टपादसंमतिमाह–यदेति। पूर्वम्=शाब्दबोधात्पूर्वं प्रत्यक्षकाले यादृशः पिण्डः प्रतीयते=अवगतस्तादृशस्यैव यदा शब्देन स्मरणं भवति तत्र शब्दस्य यथार्थता=प्रमाणता भवति, न त्वन्यथास्मरणकालेपि । इत्यनेन भट्टपादैरपि शब्दस्य पदार्थस्मरणे एव सामर्थ्यं व्यापारश्चोक्तः इति न डित्थोयमित्यत्र शब्दाकारेण विकल्पो भवति । उक्तं चात्र पार्थसारथिमिश्रैरपि–"सम्बन्धावगमवेलायां ततः प्राक् काले च यादृशमर्थरूपं तादृशमेव शब्दः स्मारयति न त्वात्मानमर्थेऽध्यस्यतीति । कथं तर्हि गौरयं शुक्लो गच्छतीति डित्थोयमिति च सामानाधिकरण्यम् ? जातिशब्दस्तावज्जातिं स्मारयित्वा तया तादात्म्येन व्यक्तिं बोधयन्नुपस्थितव्यक्तिबोधकेनाऽयमित्यनेन सामानाधिकरण्यं भजते । तथा गुणशब्दः क्रियाशब्दश्च । डित्थशब्दोपि यस्य पिण्डस्य वाचकत्वेन प्रागवगतस्तं स्मारयित्वा तत्तादात्म्येन पुरस्स्थितं पिण्डं विकल्पयति न तु स्वात्मना, न हि डित्थोयमित्यस्यायमर्थः–डित्थशब्दोयमिति, किं तर्हि ? डित्थ–इति नामाऽस्येत्यर्थः ।" इति ।

**तस्मान्नामविकल्पेपि जात्यादिवन्नास्त्यऽतद्रूपारोपः। किं पुनर्जात्यादिभिर्विकल्प्यते ?, द्रव्यम्। किं पुनरिदं द्रव्यं नाम ?, पृथिव्युदकतेजोवायुप्रभृति।**

**ननु रूपादिव्यतिरिक्तं द्रव्यं नाम न किंचिदुपलभामहे। न च तस्योपलम्भकमस्ति, चक्षुरादीनां रूपादिष्वेवोपक्षीणत्वात्। गन्धरूपरसस्पर्शसंघातः पृथिवी, रसरूपस्पर्शसंघात आपः, रूपस्पर्शसंघातस्तेजः, शब्दस्पर्शसंघातो वायुः, एवं रूपादिसंघातभेदादेव पृथिव्यादिविभागो, न द्रव्यं नाम किंचिदिति सौगताः।**

---

उपसंहरति–तस्मादिति। यथा गौरयमित्यादिजात्यादिविकल्पेऽतद्रूपस्य=तद्भिन्नस्याऽऽरोपो न भवति तथा डित्थोयमिति नामविकल्पेप्यतद्रूपारोपो न भवतीति प्रमाणमेव डित्थोयमित्यादिसविकल्पकं ज्ञानम्, अतद्रूपारोपे एव ज्ञानाप्रामाण्यनियमात्। डित्थोयमित्यत्र तु स्मृतस्य पुरस्स्थितस्य च पदार्थस्य तादात्म्येन विकल्पो भवति। गौरयमित्यादौ च गोत्वादिजातेः पुरस्स्थितस्य च तादत्म्येन विकल्पो भवतीति विवेकः। स्पष्टमन्यत्।

ननु रूपादिव्यतिरिक्तं द्रव्यं नास्त्येव तत्प्रतीत्यभावाद् रूपादिप्रतीत्यैव सर्वप्रतीत्युपपत्तेः, चक्षुरादीनां रूपादिग्रहणेष्वेवोपक्षीणत्वेन प्रमाणाभावाच्चेत्यभिप्रायेण सम्प्रति सौगतः शङ्कते–नन्विति। द्रव्यग्राहकप्रमाणस्या ऽभावमाह–न चेति। तस्य=द्रव्यस्य। उपलम्भकम्=ग्राहकं प्रतीतिकरणम्। ननु पृथिव्यादय एव प्रत्यक्षेणोपलभ्यमाना द्रव्यमित्याशङ्क्य सौगतः स्वसिद्धान्तमाह–गन्धेत्यादिना। संघातः=समूहः। गन्धरूपरसस्पर्शानां समूहादन्या पृथ्वी नास्त्येव या द्रव्यत्वेनोपदिश्येत, गन्धादयस्तु न द्रव्यं गुणत्वादिति तेषां समूहोपि न द्रव्यम्। न हि घटसमूहे पटत्वव्यवहारो भवति। आकाशस्त्वभावरूप एव न तस्य किंचित्संघातरूपता इत्यादि ज्ञेयम्। स्पष्टमन्यत्।

परिहर्तुमुपक्रमते–तदयुक्तमिति। आगमापायिषु=उत्पादविनाशशालिषु रूपादिषु यदाश्रित्य प्रत्यभिज्ञा जायते तद् द्रव्यम्। अयं भावः–प्रथमं यो

तदयुक्तम्—आगमापायिषु रूपादिषु यदनुयायिप्रत्यभिज्ञा जायते तद् द्रव्यम् । दर्शनस्पर्शनाभ्यां चास्य ग्रहणम्, प्रत्यभिज्ञा च—यथा वदरफलं श्यामावस्थायां रक्तावस्थायां च यथा वा घटपिण्डकपालावस्थासु मृद्द्रव्यम्। अस्ति हि तत्र पिण्डावस्थाभेदे श्यामरक्तरूपभेदेपि द्रव्यप्रत्यभिज्ञा—मृदियं पिण्डावस्थामपहाय घटावस्था संजाता, श्यामिमानं च त्यक्त्वा पका सत्यऽरुणिमानं गृहीतवती, अनन्तरं घटावस्थामपहाय कपालिका जातेति । एवं तन्तुपटाद्यवस्थास्वपि द्रष्टव्यम् ।

---

घटो नीलो दृष्टः कालान्तरे चारुणेपि दृष्टे स एवायं घट इति प्रत्यभिज्ञा जायते तत्र योनुभूतो नीलादिः स तु सम्प्रति नास्त्येव यस्य प्रत्यभिज्ञा स्यात्, अरुणरूपं तु पूर्वं नानुभूतमेवेति न तस्यापि प्रत्यभिज्ञा सम्भवति, भवतिच प्रत्यभिज्ञा स एवायमिति, तस्मादस्ति द्रव्यं नाम रूपादिभ्योतिरिक्तं यत्प्रत्यभिज्ञायते। यदुक्तम् "न च तस्योपलम्भकम्" इति तस्योत्तरमाह—दर्शनेति। चक्षुषा त्वचा च द्रव्यस्य ग्रहणं भवतीत्यर्थः । प्रत्यभिज्ञेति—द्रव्यं गृह्णातीति शेषः । यथा श्यामावस्थायां रक्तावस्थायां च तदेवेदं वदरफलमिति प्रत्यभिज्ञा वदरफलं गृह्णाति, यथा च घटावस्थायां कपालावस्थायां पिण्डावस्थायां च सैवेयं मृदिति मृद्द्रव्यं गृह्णाति । प्रत्यभिज्ञयेति युक्तः पाठः । एतदेवोपपादयति—अस्तीत्यादिना। तत्र=घटाद्यवस्थासु। पिण्डेति—प्रथमं पिण्ड आसीदिदानीं घटो जात इति पिण्डावस्थाभेदेपि सति, प्रथमं श्याम आसीदिदानीं रक्तो जात इति रूपभेदेपि च सति द्रव्यप्रत्यभिज्ञा भवति । यदि द्रव्यं रूपादिव्यतिरिक्तं किमपि न स्यात्तदा रूपादिभेदे सति कस्य प्रत्यभिज्ञा स्यादिति भावः । द्रव्यप्रत्यभिज्ञास्वरूपमाह—मृदियमिति । घटविनाशेपि मृद्द्रव्यप्रत्यभिज्ञा भवतीत्याह—अनन्तरमिति। अनन्तरम्=घटविनाशानन्तरमियं मृत् कपालिकाजातेति मृदेव प्रत्यभिज्ञायते । एवमन्यत्रापि द्रव्यप्रत्यभिज्ञा ज्ञेयेत्याह—एवमिति । एकस्यैव पटस्य क्रमेणानेकरागभेदेपि स एवायं पट इत्येवं द्रव्यप्रत्यभिज्ञा जायते ।

**ननु तन्तुपटादिषु द्रव्यान्तरोत्पत्तिरेवाभिमता, अन्यथा ह्यऽवयव्यऽपलापः स्यात् ?। नाऽवयविनमपन्हुमहे द्रव्यान्तरोत्पत्तिं तु नेच्छामः प्रतिपत्त्यभावात्। तन्तव एव हि संयोगविशेषादेकद्रव्यतामापद्यन्ते, अवयवी च भवन्ति, तादृशाश्च पटजातिं स्थौल्यं च बिभ्रत एकपटस्थूलबुद्ध्या गृह्यन्त इति लौकिकी प्रतिपत्तिः। अतो न द्रव्यस्य कदाचिदागमोऽपायो**

---

कार्यकारणयोर्भेदवादी तार्किकः शङ्कते—नन्विति। तर्कमते कारणे कार्यमुत्पद्यते यथा कपालयोर्घटस्तन्तुषु च पट इति, अत एव कारणे कार्यं समवायसम्बन्धेन तिष्ठति, यदि कार्यकारणयोरभेदः स्यात्तदा कथं कारणे कार्यं तिष्ठेदभेदात्, आश्रयाऽऽश्रयिभावस्य भेदव्याप्यत्वादिति तन्तुषु पटलक्षणस्य द्रव्यान्तरस्योत्पत्तिरेवाभिमता। अन्यथा=द्रव्यान्तरोत्पत्त्यऽस्वीकारेऽवयविनोऽपलाप एव स्यात्। तन्तूनां त्ववयवत्वान्नाऽवयवित्वमुपपद्यत इत्यऽवयविनो द्रव्यान्तरत्वं वा स्वीकार्यमभाव एव वा स्वीकार्यो न चा ऽभाव एव युक्तोऽवयविनः सर्वलोकसिद्धत्वादिति भावः।

मीमांसक उत्तरमाह—नेति। नापीति पाठे तु अपिर्भिन्नक्रमः—नाऽवयविनमपन्हुमहे, अपि तु द्रव्यान्तरोत्पत्तिं नेच्छामः=न स्वीकुर्म इत्यन्वयो ज्ञेयः। तन्तव एव संस्थानविशेषविशिष्टाः पट इत्युच्यते न तन्तुभ्यो भिन्नो द्रव्यान्तरमऽवयवी पट इति भावः। अत्र हेतुमाह—प्रतिपत्त्यऽभावात्=प्रतीत्यभावादिति। न हि तन्तुषु तदन्यः कोऽप्युत्पन्नः पटः प्रतीयते येन द्रव्यान्तरोत्पत्तिः स्वीक्रियेत, किं तु तन्तव एव पटरूपं प्राप्ताः पटत्वेन गृह्यन्त इति नाऽवयवी द्रव्यान्तरम्। तदाह—तन्तव एवेति। तादृशाः=संयोगविशेषविशिष्टास्तन्तवश्च पटजातिम्=पटत्वम्, स्थौल्यम्=स्थूलतां बिभ्रतः। एकेति—एकत्वबुद्ध्या पटत्वबुद्ध्या स्थूलत्वबुद्ध्या च गृह्यन्ते इति लौकिकी=सर्वसाधारणा प्रतिपत्तिः=निश्चयात्मिका प्रतीतिरस्तीति कथं तन्तुषु द्रव्यान्तरभूतस्य पटस्योत्पत्तिः स्वीक्रियेत। तन्तवस्तु नैकत्वादिविषयकबुद्ध्या गृह्यन्त इत्यपि ज्ञेयम्। उपसंहरति—अत इति, द्रव्यस्य मृदादेर्नागमः=उत्पत्तिः, नापायः=विनाशः, किं तु रूपादीनामाकारस्य चागमापायौ भवतः। घटादिशब्देन घ-

वा घटपटगवाश्वशुक्लरक्ताद्यवस्थानामेवागमापायौ ।
आह च—

"आविर्भावतिरोभावधर्मकेष्वनुयायि यत् ।
तद्धर्मि यत्र च ज्ञानं प्राग्धर्मग्रहणाद्भवेत् ॥" इति ।

तथा "यादृशमस्माभिरभिहितं द्रव्यं तादृशस्यैव हि सर्वस्य गुण एव भिद्यते न स्वरूपम्" इति । तत्सिद्धं द्रव्यम् । तच्च जात्यादिभिः पञ्चधा सविकल्पकेन

---

द्याकृतिर्ज्ञेया ।

अत्र श्रीभट्टपादस्य संमतिमाह—आविर्भावेति—उत्पत्तिविनाशशालिषु धर्मेषु यदऽनुयायि=अनुस्यूतं तद्धर्मि यथा—श्यामरक्तादिरूपेषु पिण्डकपालाद्याकृतिषु चानुस्यूतं मृद्द्रव्यमेव धर्मि, किं च धर्मग्रहणाद् प्राक् यत्र=यद्विषयकं ज्ञानं स्यात् तद्धर्मि यथा मन्दान्धकारे रूपादिग्रहणात्प्रथममेव यद् गृह्यते घटद्रव्यं तद्धर्मि, इत्यर्थः । उक्तं चात्र पार्थसारथिमिश्रैः—"रक्तत्वहरितत्वादिधर्मेष्वाविर्भावतिरोभावधर्मकेषु यद्बदरफलमवस्थाद्वयानुयायि प्रत्यभिज्ञायते, यद्वा पिण्डघटकपालाद्यवस्थास्वनुगतमवस्थावत्, यद्वा सन्तमसे बलाकापङ्क्तौ प्रागेव शुक्लरूपग्रहणाद् गृह्यते तद्धर्मि, न हि तदभावे प्रत्यभिज्ञा सम्भवति धर्माणां भिन्नत्वात् ।" इति । महाभाष्यकारैरप्युक्तम्—"द्रव्यं हि नित्यमाकृतिरनित्या सुवर्णं कया चिदाकृत्या युक्तं पिण्डो भवति, पिण्डाकृतिमुपमृद्य रुचकाः क्रियन्ते, रुचकाकृतिमुपमृद्य कटकाः क्रियन्ते, कटकाकृतिमुपमृद्य स्वस्तिकाः क्रियन्ते, पुनरावृत्तः सुवर्णपिण्डः पुनरपरयाऽऽकृत्या युक्तः खदिराङ्गारसदृशे कुण्डले भवतः, आकृतिरन्या चान्या च भवति द्रव्यं पुनस्तदेव, आकृत्युपमर्देन द्रव्यमेवावशिष्यते" इति ।

अत्र प्रमाणान्तरमाह—यादृशमिति । यादृशम्=आगमापायिषु धर्मेष्वनुस्यूतं द्रव्यमस्माभिरुक्तं तादृशस्यैव सर्वस्य द्रव्यस्य गुणादिरेव भिद्यते न स्वरूपमपि भिद्यत इत्यर्थः । उपसंहरति—तत्सिद्धमिति । तच्च=द्रव्यं जात्यादिभिः=जातिद्रव्यगुणक्रियानामभिः पञ्चभिः पञ्चधा सविकल्पकेन ज्ञानेन विभज्यते=विकल्प्यते । यथा—गौरयं दण्ड्ययं नीलोयं गच्छत्ययं डित्थोयमित्यादि । अतः इति, यतः सविकल्पकेनापि द्रव्याद्यापरोक्ष्यं भवत्यतः

**विभज्यते । अतः सविकल्पकमपि प्रत्यक्षम्, तत्पूर्वकं चानुमानादीति सिद्धं तेषामप्यनिमित्तत्वम् । इति प्रत्यक्षसूत्रम् ॥**

---

सविकल्पकमपि प्रत्यक्षमेव । अपिशब्दान्निर्विकल्पकमपि । तत्पूर्वकम्=सविकल्पकप्रत्यक्षहेतुकं चानुमानादि भवतीति प्रत्यक्षस्य धर्माऽग्राहकत्वादनुमानादीनामपि धर्माग्राहकत्वं प्राप्तमेवेत्याह—तेषामिति । तेषामनुमानादीनाम् । अनिमित्तत्वम्=धर्मज्ञानाऽनिमित्तत्वमित्यर्थस्तस्माच्चोदनैव धर्मे प्रमाणं न प्रत्यक्षादीति सिद्धम् । इति प्रत्यक्षसूत्रव्याख्या समाप्ता ॥ ४ ॥



( पञ्चमं धर्मे वेदप्रामाण्याधिकरणम् )

सू–औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ॥५॥

उक्तं प्रत्यक्षादीनामनिमित्तत्वम् । तत एव तन्मू-

---

ननु यदि धर्मे प्रत्यक्षं चानुमानादिकं च न प्रमाणभावं भजते तर्हि धर्मे किं प्रमाणमित्याशङ्क्याह–सूत्रकारः–औत्पत्तिकेति । सूत्रं चेदं वृत्तिकारेणैवं व्याख्यातम्–"शब्दस्य=नित्यवेदघटकपदस्य "अग्निहोत्रं जहुयात्स्वर्गकामः" इत्यादेरर्थेन=तत्प्रतिपाद्यार्थेन संबन्धः=शक्तिरूपः औत्पत्तिकः=स्वाभाविको नित्य इति यावत् । अतः तस्य=धर्मस्य, ज्ञानम्=अत्र करणे ल्युट् ज्ञप्तेर्यथार्थज्ञानस्य करणम् । अनुपलब्धे=प्रत्यक्षादिप्रमाणैरनुपलब्धेऽर्थे उपदेशः, अव्यतिरेकः=अर्थाव्यभिचारी दृश्यते । अत इतरानपेक्षत्वात्=प्रत्यक्षाद्यनपेक्षत्वात् । तत्=विधिघटितवाक्यं धर्मे प्रमाणं बादरायणाचार्यस्यानुमतम् । " इति । तथा चात्र–तस्य धर्मस्य ज्ञानं ज्ञानकरणमुपदेशो वेदवाक्यमेव तस्य चानुपलब्धेर्थेऽव्यतिरेको दृष्टोऽन्यप्रमाणानपेक्षं च तत् नित्यश्च शब्दार्थयोर्वाच्यवाचकभावः संबन्ध इति तत् चोदनावाक्यमेव धर्मे प्रमाणम्, इदं च मतं बादरायणस्याप्यनुमतमित्यन्वयः । शब्दार्थयोः संबन्धस्यानित्यत्वे संबन्धसंपत्तये प्रमाणान्तरापेक्षायां धर्मे शब्दस्य प्रामाण्यमन्यानपेक्षं न स्यादित्यौत्पत्तिक इत्याद्युक्तम् ।

स्वयं व्याचष्टे–उक्तमित्यादिना । प्रत्यक्षादीनां धर्मे प्रामाण्यं न संभवति धर्मस्य भावित्वेन प्रत्यक्षायोग्यत्वात् । तत इति–यतः प्रत्यक्षादीनां न धर्मे प्रामाण्यमऽत् एव तन्मूलस्य=प्रत्यक्षादिमूलस्य पुरुषवाक्यस्यापि न धर्मे प्रामाण्यम् । आप्तवाक्यस्यैव प्रामाण्यं भवति आप्तश्च न प्रत्यक्षादिभिरज्ञातमर्थं वदति धर्मश्च

**लपुरुषवचनस्याप्यनिमित्तत्वम् । एवं तर्हि शब्दस्य सर्वत्र प्रमाणान्तरापेक्षयैव प्रामाण्यदर्शनात् तदभावे तस्याप्यऽप्रामाण्यादऽभावगम्यत्वमेवायातं धर्मस्येत्याशङ्कानिराकरणाय चोदनायाः प्रामाण्यमुच्यते । सत्यम्—लोके प्रमाणान्तरमूलानां प्रामाण्यम्, अतन्मूलानां चाप्रामाण्यं दृश्यते, न त्वेवमपि सापेक्षं प्रामाण्यं किं तु स्वत एव । अनाप्तवाक्यस्य त्वऽप्रामाण्यं न मूलविरहात् किं तु दुष्टमूलतया शब्दस्य दुष्टत्वात्स्वाभाविकस्य प्रामाण्यस्याऽपवादात् ।**

---

भावित्वान्न प्रत्यक्षादियोग्य इति नाप्तवाक्यस्यापि धर्मस्वरूपबोधकत्वं संभवति, अनाप्तवाक्यं त्वप्रमाणमेवेति भावः ।

ननु यदि प्रत्यक्षस्य प्रत्यक्षमूलकस्य च प्रमाणजातस्य धर्मे प्रामाण्यं न संभवति तर्हि शब्दमात्रस्य सर्वत्र=लोके प्रमाणान्तरापेक्षयैव=प्रमाणान्तरमूलकस्यैव प्रामाण्यं भवतीति तदभावे=प्रत्यक्षादीनां धर्मं प्रति प्रामाण्याभावे तस्यापि=शब्दस्यापि धर्मं प्रति प्रामाण्याभावाद् धर्मस्याभावगम्यत्वम्=अनुपलब्धिगम्यत्वमेव प्राप्तमर्थादभाव एव धर्मस्य प्राप्तोऽभावस्यैवानुपलब्धिगम्यत्वात्, इत्याशङ्क्य तन्निराकरणाय सूत्रकारेण धर्मं प्रति चोदनायाः प्रामाण्यमुच्यते—"औत्पत्तिकस्तु" इत्यादिनेत्याह—एवं तर्हीति । अत्र च चोदनायाः प्रामाण्यमुपपादयति—सत्यमित्यादिना । लोके प्रमाणान्तरमूलानां वाक्यानां प्रामाण्यं, अतन्मूलानाम्=प्रमाणान्तरामूलकानां च वाक्यानामप्रामाण्यं दृश्यते इति सत्यम्, न त्वेवमपि=वाक्यप्रामाण्यस्य प्रमाणान्तरमूलकत्वेपि वाक्यप्रामाण्यं सापेक्षं नास्ति—परतः प्रामाण्यं नास्ति किं तु स्वत एव प्रामाण्यमस्ति, सर्वेषामेव प्रमाणानां प्रामाण्यस्य स्वतस्त्वस्वीकारात् । न च प्रत्यक्षादीनां धर्मं प्रति प्रामाण्यं द्वेषवशान्निराक्रियते किं तु धर्मस्य भावित्वेन धर्मे प्रत्यक्षादीनां प्रामाण्यासंभवात् । वेदवाक्यानां तु प्रत्यक्षायोग्यधर्मबोधकत्वसंभवात्प्रामाण्यमुच्यते इति भावः । ननु प्रामाण्यस्य स्वतस्त्वेऽनाप्तवाक्यस्यापि प्रामाण्यं स्यादित्याशङ्क्याह—अनाप्तेति । यदि वाक्यस्य प्रत्यक्षादिमूलाभावादप्रामाण्यमुक्तं स्यात्तदाऽनाप्तवाक्येपि प्रत्यक्षादिमू-

अपौरुषेये तु वेदे यद्यप्याप्तप्रणीतत्वं नास्ति तथापि प्रामाण्यस्य तदपेक्षाऽभावादऽनाप्तस्पर्शनिमित्तदोषाभावाच्चाऽनपोदितं प्रामाण्यं भवति। त्रेधा ह्यत्र पुरुषानुप्रवेशः-पदपदार्थसंबन्धद्वारेण वाक्यवाक्यार्थसंबन्धद्वारेण ग्रन्थस्यैव वा भारतादिवत् पौरुषेयत्वात्। न त्वेतत् त्रयमप्यस्ति-पदपदार्थसंबन्धस्य नित्यत्वमत्रौत्पत्तिकशब्देनोक्तम्, वाक्यार्थस्य च प-

---

लस्य सत्त्वादप्रामाण्यं न स्यान्नैवमस्ति, किं त्वनाप्तवाक्यस्य दुष्टमूलतया दुष्टत्वात् प्राप्तस्य स्वाभाविकस्य प्रामाण्यस्यापवादः=बाधो भवति। अनाप्तवाक्यं भ्रमादिदोषमूलकं भवतीति तस्य प्राप्तं प्रामाण्यं कारणदोषज्ञानेन बाध्यत इति नाऽनाप्तवाक्यस्य प्रामाण्यं संभवति।

एवं प्रत्यक्षादिष्वपि कारणदोषज्ञाने सति प्राप्तं प्रामाण्यं बाधितं भवत्येव। वेदवाक्यानां त्वपौरुषेयत्वेन मूलाभावाद् दुष्टमूलकत्वं नास्त्येव येनाऽप्रामाण्यशङ्का स्यादित्याह-अपौरुषेयेति। आप्ताऽप्रणीतत्वेऽपौरुषेयत्वमेव हेतुः। प्रामाण्यमाऽऽप्तप्रणीतत्वव्याप्यं नास्ति प्रत्यक्षादौ व्यभिचारादिति प्रामाण्यस्य तदपेक्षाभावात्=आप्तप्रणीतत्वापेक्षाभावात् आप्तप्रणीतत्वाभावेपि वेदस्य प्रामाण्यमनपोदितं भवति। किं चानाप्तस्पर्शोऽनाप्तसंबन्धः स चानाप्तकर्तृकत्वमेव तन्निमित्तो यो दोषः=अयथार्थप्रत्यायकत्वं तदभावाच्च वेदस्य प्रामाण्यमनपोदितम्=अबाधितं भवति। वेदाऽप्रामाण्यसाधकः कोपि हेतुर्नास्ति प्रामाण्यं च स्वत एवेति सिद्धं वेदस्य प्रामाण्यमिति भावः।

ननु वेदः पौरुषेय एव किं न स्यादित्याशङ्क्याह-त्रेधेति। अत्र=वेदे त्रिधा पुरुषानुप्रवेशः=पुरुषसंबन्धः संभवति। एत देवोपपादयति-पदेति। पदपदार्थयोः संबन्धरचनाद्वारेण १ वाक्यवाक्यार्थयोः संबन्धरचनाद्वारेण २ ग्रन्थस्यैव वा रचनाद्वारेण३। एतत् त्रितयमपि पुरुषप्रवेशस्य कारणं वेदे नास्ति येन वेदस्य पौरुषेयत्वं स्यादित्याह-नेति। तत्र पदपदार्थयोः संबन्धस्तु नित्य एवेति न तद्रचनाद्वारा पुरुषप्रवेशः संभवतीत्याह-पदेति। अत्र=उक्तसूत्रे। वाक्यार्थस्तु पदार्थानां परस्परं संसर्ग एव तत्र च स्वोपस्थितिद्वारा पदार्था एव कारणं न पुरुषसंबन्ध इति न वाक्यवाक्यार्थसंबन्धद्वारापि

**दार्थमूलत्वं वेदस्य चाऽपौरुषेयत्वमुपरिष्टाद्वक्ष्यते । न च साक्षाद्बाधकमस्तीत्यऽव्यतिरेकशब्देनोच्यते । अनुपलब्धार्थत्वाच्च नानुवादलक्षणमप्रामाण्यमस्तीति "अर्थेऽनुपलब्धे" इत्यनेनोक्तम् । एतच्च विशेषणत्रयमुपाददानेन सूत्रकारेण कारणदोषबाधकज्ञानरहितमऽगृहीतग्राहि ज्ञानं प्रमाणमिति प्रमाणलक्षणं सूचितम् ।**

---

वेदे पुरुषप्रवेशस्तदाह—वाक्येति । न च वाक्यरचनाद्वारा वेदे पुरुषप्रवेशः संभवति वेदस्यापौरुषेयत्वादेवेत्याह—वेदस्य चापौरुषेयत्वमिति । तस्माद् ग्रन्थरचनाद्वारापि पुरुषप्रवेशो नास्त्येव । ननूक्तप्रकारत्रयेण पुरुषप्रवेशाभावेपि यथा प्रत्यक्षादीनामप्रामाण्यं भवति तथा वेदस्यापि किं न स्यादित्याशङ्क्याह—न चेति । प्रत्यक्षादौ हि साक्षाद्बाधके सत्यप्रामाण्यं भवति न चैवं वेदवाक्यजन्यज्ञानस्य बाधकमस्ति ज्योतिष्टोमादौ कृते स्वर्गाद्यऽभावस्य केनाप्यनुपलब्धत्वात् । एतदेव सूत्रेप्युक्तम् "अव्यतिरेकश्च" इति । नन्वनुवादकत्वलक्षणमेव चोदनानामप्रामाण्यं भवत्वित्याशङ्क्याह—अनुपलब्धेति । अनुलब्धः=अज्ञातोऽर्थो यस्य सोऽनुपलब्धार्थः अज्ञातार्थबोधकत्वादित्यर्थः ।

सामान्यतः प्रमाणलक्षणमाह—एतच्चेति । "औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः" "अव्यतिरेकश्च" "अर्थेऽनुलब्धे" इति विशेषणत्रयम् । प्रामाण्ये कारणदोषराहित्यापेक्षास्तीति प्रथमविशेषणेन प्राप्तम्, बाधकज्ञानराहित्यापेक्षास्तीति द्वितीयविशेषणेन प्राप्तम्, अगृहीतग्राहित्वापेक्षास्तीति तृतीयविशेषणेन प्राप्तमित्याह—कारणेति । कारणदोषरहितं कारणदोषज्ञानरहितं वा बाधज्ञानरहितं च यदऽगृहीतग्राहि ज्ञानं तत्प्रमाणमित्यर्थः । उपाददानेन=कथयता । यत्र बाधकज्ञानं नोत्पन्नं तत्र केवलं कारणदोषज्ञानेनाऽप्रामाण्यं भवति यथा 'नद्यास्तीरे फलानि सन्ति' इति वाक्यं श्रुत्वा नदीतीरमगत्वैव यत्र वक्तरि वञ्चकत्वज्ञानं भवति तत्र कारणदोषज्ञानादेवाऽप्रामाण्यं नदीतीरगमनाभावेन बाधकज्ञानोत्पत्तेरभावात् । रजतमिदमित्यादौ नेदं रजतमित्यादिबाधकज्ञानेनाप्रामाण्यं कारणदोषस्तु भ्रमात्मकसकलज्ञानेषु भवत्येव । अनुवादकस्य च गृहीतग्राहित्वादप्रामाण्यमित्यवधेयम् ।

नन्वेवं धारावाहिकेषूत्तरेषां पूर्वगृहीतार्थविषयकत्वादप्रामाण्यं स्यात्, तस्मात् 'अनुभूतिः प्रमाणम्' इति प्रमाणलक्षणम् । स्मृतिव्यतिरिक्ता च प्रतीतिरनुभूतिः । स्मृतिश्च संस्कारमात्रजं ज्ञानमभिधीयते । मात्रग्रहणं च संस्कारसध्रीचीनेन्द्रियजस्य प्रत्यभिज्ञानस्य स्मृतित्वप्रसङ्गेनाप्रामाण्यं मा प्रसाङ्क्षीदित्येवमर्थम् । तदेवम्—संस्कारातिरिक्तकारणजन्यं ज्ञानं प्रमाणमित्युक्तं भवति, तदिदं स्वप्नदर्शने तावदव्यापकम्, संस्कार-

---

उक्तप्रमाणलक्षणे प्राभाकरः शङ्कते—नन्वेवमित्यादिना । घटोयं घटोयमित्यादि यत्रैकविषयकं चिरकालपर्यन्तं ज्ञानं भवति तत्र ज्ञानस्य तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वादनेकानि ज्ञानानि घटविषयकाणि वक्तव्यानि तेषु च द्वितीयादिज्ञानस्य पूर्वगृहीतार्थविषयकत्वादेवम्=प्रामाण्यलक्षणेऽगृहीतग्राहीतिविशेषणप्रवेशे सति प्रामाण्यं न स्यात्, अभिमतं च प्रामाण्यम्, तस्मादुक्तलक्षणं न युक्तम् । किं तु "अनुभूतित्वं प्रमाणत्वम्" इत्येव लक्षणं युक्तमित्याह—तस्मादिति । अनुभूतिस्वरूपमाह—स्मृतिव्यतिरिक्तेति । स्मृतिस्वरूपमाह—स्मृतिश्चेति । संस्कारमात्रजज्ञानमित्यपि क्वचित् पाठः । ननु संस्कारजन्यं ज्ञानं स्मृतिरित्येवास्तु संस्कारमात्रजमिति मात्रपदं किमर्थमुपन्यस्तमित्याशङ्क्याह—मात्रग्रहणमिति, प्रमाणभूतस्य प्रत्यभिज्ञालक्षणज्ञानस्य व्यवच्छेदाय मात्रपदं प्रत्यभिज्ञाया अपि संस्कारजन्यत्वात्, किं तु प्रत्यभिज्ञायाः संस्कारमात्रजन्यत्वं नास्ति तत्रेन्द्रियस्यापि कारणत्वादिति संस्कारमात्रजन्यत्वाभावान्न प्रत्यभिज्ञाया अप्रामाण्यम् । संस्कारसध्रीचीनम्=संस्कारसहितम् । सोयं देवदत्त इति हि प्रत्यभिज्ञा तत्र तत्तांशे संस्कारस्यैव व्यापारो भवति, इदंत्वांशे चेन्द्रियस्यैव व्यापारो भवतीति प्रत्यभिज्ञा न केवलमिन्द्रियजन्या नापि केवलं संस्कारजन्या किं तु संस्कारसध्रीचीनेन्द्रियजन्या । संस्कारेन्द्रियोभयजन्या भवतीति यावत् । मा प्रसाङ्क्षीत्=न प्राप्नुयात् ।

प्राभाकरोक्तमर्थं भाट्टः सिद्धान्ती संगृह्णाति—तदेवमिति । तत्रानेन प्रतिपादनेन 'संस्कारातिरिक्तकारणजन्यं ज्ञानं प्रमाणम्' इत्येतत् सिद्धम् । संस्कारमात्रजं ज्ञानमप्रमाणमित्यपि सिद्धम् । अत्र दोषमाह—तदिदमिति, सं-

मात्रजस्यापि ज्ञानस्य स्वरूपे कर्तरि च प्रामाण्यमिष्टं भवताम् ।

---

स्कारमात्रजस्यापि स्वाप्नस्य ज्ञानस्य स्वरूपे कर्तरि=आत्मनि च भवन्मते प्रामाण्यमस्त्येव न च तत्र संस्कारातिरिक्तकारणजन्यत्वं प्रमाणलक्षणमस्ति स्वाप्नज्ञानस्य संस्कारमात्रजत्वादित्यव्याप्तिः । सर्वेषां स्वाप्नादिज्ञानानां प्रकाशरूपत्वात् स्वस्वरूपप्रकाशाय ज्ञानान्तरापेक्षा नास्तीति स्वस्वरूपपरामर्शकत्वेन स्वरूपे प्रामाण्यमेव स्वरूपव्यभिचारासम्भवात् । तथात्माऽपरामर्शकत्वे स्वप्नकाले पश्याम्यहं प्रबोधकाले च दृष्टं मयेति प्रतीतिर्न स्याद् भवति चेयं प्रतीतिरित्यात्मपरामर्शकत्वेनाऽऽत्मन्यपि प्रामाण्यमेवात्मव्यभिचारस्याप्यसम्भवात् । किं वा ऽऽत्मनि स्वरूपे च कदापि संशयादर्शनात् प्रामाण्यमिति प्राभाकराभिप्रायस्तदुक्तम्-

"प्रमाणमनुभूतिः सा स्मृतेरन्या स्मृतिः पुनः ।
पूर्वविज्ञानसंस्कारमात्रजं ज्ञानमुच्यते ॥
न प्रमाणं स्मृतिः पूर्वप्रतिपत्तिव्यपेक्षणात् ॥" इति ।

तथा-"न चैवं धारावाहिकोत्तरज्ञानानां स्मृतित्वम्, इन्द्रियार्थसंनिकर्षजत्वात् पूर्ववत् । मात्रग्रहणाच्च प्रत्यभिज्ञाज्ञानस्य न स्मृतित्वम्, इन्द्रियार्थसंनिकर्षसचिवसंस्कारजत्वात् । यद्यनुभूतिः प्रमाणं ततो रजतमिदमिति भ्रान्तं यद्धि ज्ञानं तदपि प्रमाणं स्यात् ?, अत्रोच्यते-रजतमिदमिति नैकं ज्ञानं किं तु द्वे एते विज्ञाने तत्र रजतमिति स्मरणं तस्याऽननुभवरूपत्वान्न प्रामाण्यप्रसङ्गः । इदमित्यपि विज्ञानमनुभवरूपं प्रमाणमिष्यते एव । भ्रान्तिरूपता चात्र रजतज्ञानस्य स्मरणरूपस्यैव ग्रहणव्यवहारप्रवर्तकतया व्यवहारकाले विसंवादकत्वात्" इत्यादि । प्राभाकरैः सर्वेषामेव ज्ञानानां विषयवत् स्वस्वरूपात्मनोः परामर्शकत्वस्यापि स्वीकारात् तदुक्तम्-"यावती का चिद् ग्रहणस्मरणरूपा प्रतीतिस्तत्र साक्षादात्मा प्रतिभाति, प्रकाशस्तु प्रकाशात्मकत्वान्नान्यमपेक्षते, इदमहं स्मरामि गृह्णामीति त्रितयमेवावभासते" इत्यादि । त्रितयम्=ज्ञानमात्मा विषयश्च । एतदग्रे स्फुटी भविष्यति ।

ननु स्मृतिरूपाणां स्वप्नादिज्ञानानां स्मर्यमाणविषयापेक्षयैव स्मृतित्वमस्ति स्मर्यमाणविषये स्मर्यमाणविषयविषयकसंस्कारजन्यत्वात् । स्वरूपापेक्षया

अथ स्मर्तव्यापेक्षयैव स्मृतेः स्मृतित्वं तद्विषयसंस्काजत्वात्, स्वरूपकर्त्रपेक्षया त्वनुभूतिरेव, अतः सिध्यति प्रामाण्यमित्युच्यते?। एवं तर्हि मात्रग्रहणमनर्थकम्, प्रत्यभिज्ञानस्यापि पूर्वानुभूतांशापेक्षयैव स्मृतित्वात् तत्र चाप्रामाण्यमिष्टमेव, यत्र त्वंशे प्रामाण्यं तत्रानुभूतिरेव सा।

किं चानुवादानाम्—"य एवं विद्वान् पौर्णमासीम्" इत्यादीनामपि संस्कारमात्रजत्वाभावात् प्रामाण्यं स्यात्। भवतु इति चेत्?, न, लोकविरोधात्। तथा लौकिक-

---

कर्तृभूतात्मापेक्षया तु न स्मृतित्वं किं त्वनुभूतित्वमेव तथा च स्वरूपे कर्तरि च युक्तं प्रामाण्यमित्याशङ्कते—अथेति। अतः=अनुभूतित्वादेव, प्रामाण्यमित्यत्र स्वरूपे कर्तरि चेति शेषः। उत्तरमाह—एवं तर्हीति। यदि स्मरणेऽशद्वयमस्ति स्मर्तव्यापेक्षया स्मृतित्वं स्वस्वरूपात्मापेक्षया चानुभूतित्वं चेति तदा प्रत्यभिज्ञायामप्यंशद्वयमस्त्येव स्मृतित्वमनुभूतित्वं च तत्र सोऽयं देवदत्त इत्यादौ पूर्वानुभूतो यो तत्तांशस्तदपेक्षयैव प्रत्यभिज्ञायाः स्मृतित्वमस्ति तत्र=तत्तांशे चाप्रामाण्यमिष्टमेव, यस्तु पूर्वाननुभूत इदंत्वांशस्तदपेक्षया तु प्रत्यभिज्ञाया अनुभूतित्वमेवेति युज्यते इदंत्वांशे प्रामाण्यमिति 'संस्कारमात्रजन्यं ज्ञानं स्मृतिः' इति स्मृतिलक्षणे मात्रपदग्रहणमनर्थकं स्यादित्यर्थः। संस्कारजन्यं ज्ञानं स्मृतिरित्युक्तेपि यथा स्मृतेः स्वरूपे कर्तरि च प्रामाण्यं तथा प्रत्यभिज्ञायाः संस्कारजन्यत्वेन स्मृतित्वापत्तावपि इदत्वांशे प्रामाण्यं भविष्यत्येवानुभूतित्वात् तत्तांशे हि संस्कारजन्यत्वं तत्र च प्रत्यभिज्ञाया प्रामाण्यमपीष्टं नास्तीति भावः। सा=प्रत्यभिज्ञा।

दोषान्तरमाह—किं चेति, उक्तरीत्या 'संस्कारमात्रजन्यं ज्ञानमप्रमाणम्' इत्येव सिद्धम्, तथा चानुवादानां संस्कारमात्रजन्यत्वाभावात् प्रामाण्यं स्यात्, न चैतदिष्टम्। प्राभाकर आह—भवत्विति, भवत्वनुवादानां प्रामाण्यं को दोष इत्यर्थः। परिहरति—नेति। लोकविरोधात्=लोके भवन्मते चाऽनुवादानां प्रामाण्यं संमतं नास्तीत्यर्थः। दोषान्तरमाह—तथेति। अयं भावः—तव मते लौकिकवाक्यस्य वक्तृज्ञानानुमितार्थप्रत्यायकत्वात् प्रामाण्यं

मपि वाक्यं वक्तृज्ञानानुमितेर्थेऽनुवादकतया प्रवर्तमानं प्रमाणं स्यात् । न चैतदिष्टं भवताम्–असंनिकृष्टग्रह-

---

नास्ति तत् कस्य हेतोः ? वाक्यस्यानुमानानुवादकत्वादेवेति वक्तव्यं तत्र यदि वैदिकवाक्यानामनुवादकत्वेपि प्रामाण्यं स्यात्तदा लौकिकवाक्यस्याप्यनुवादकस्य प्रामाण्यं स्यादेव, न चैतदिष्टं भवतामिति विपक्षे बाधकमाह–न चेति । प्राभाकरैर्विधायकवेदवाक्यानां प्रामाण्ये स्वीकृतेपि लौकिकवाक्यानां वैशेषिकवदनुवादकत्वात्प्रामाण्यं न स्वीकृतमित्यभिप्रायः ।

उक्तं च शब्दप्रमाणमुपक्रम्य प्राभाकरैः–"–"शास्त्रं शब्दविज्ञानादसंनिकृष्टेऽर्थे बुद्धिः" शब्दविज्ञानापेक्षादात्मनः संनिकर्षाद् यदऽदृष्टार्थविषयं ज्ञानं तच्छास्त्रं नाम प्रमाणम् । नन्वशास्त्रमपि शाब्दमस्ति लौकिकम् ? तत् किमिति न लक्षितम् ? उच्यते–न शास्त्रव्यतिरिक्तं शाब्दमस्ति शब्दाद्धि यद्विज्ञानमसंनिकृष्टे तच्छास्त्रं स्यात् न च वेदव्यतिरेकेण तत्सम्भवति, लौकिकं हि वाक्यं नार्थे स्वयं निश्चयमापादयति लौकिकवचसामनृतभूयिष्ठत्वादऽर्थव्यभिचारस्य शङ्कितत्वात् । कथं तर्हि लौकिकवाक्येभ्यो व्यवहारप्रवृत्तिः ? उच्यते–अर्थसंशयेनापि लोको व्यवहरति–सन्दिग्धायामपि वृष्टौ वृष्ट्यायत्तफले कर्मणि प्रवर्तन्ते । अथ वास्त्येव निश्चयोपायः–यो हि पुरुष एवमवधारितो नायमशक्तो न प्रमादी सम्भवदेतदर्थविषयप्रमाणः सकलाशयदोषरहितश्च नायमऽविज्ञायार्थमऽन्वितार्थानि प्रयुङ्क्ते इति तद्वाक्यप्रयोगस्यान्वयज्ञानपूर्वकत्वादन्वयज्ञानं तावदनुमीयते अन्वयज्ञानाच्चान्वयोप्यनुमीयते–ज्ञानं हि ज्ञेयाऽविनाभावि ज्ञेयानुमाने भवत्येव लिङ्गम्, तदेवं लौकिकाद्वचसो लिङ्गभूताद्वक्तृज्ञानमनुमीयते ततोर्थं निश्चित्य व्यवहारः प्रवर्तते, एवं च निश्चितेऽन्वये निवृत्ताऽनन्वयाशङ्काद्वाक्यादप्यर्थनिश्चयो जायते किं तु तस्यां दशायामनुवादकतैव, अत एव लौकिके वचने न शाब्दं प्रमाणम्, अभिप्राये शब्दो लिङ्गम्, अभिप्रायोप्यर्थे लिङ्गम्, शब्दस्त्वर्थे पश्चान्निश्चयं जनयन्नप्यऽनुवादकत्वान्न प्रमाणम् । ननु तर्हि वक्तृज्ञानस्याऽन्यतोऽनवगतस्यावगमकं पौरुषेयं वाक्यं तत्रैव शाब्दं प्रमाणमस्तु ?, न, तत्रानुमानत्वात्, वक्तृज्ञाने हि निश्चितसम्बन्धं प्रसयितवचनं वक्ता तु धर्मी ज्ञानविशेषयोगिवाक्यप्रयोगिते तस्यैकदेशाविति, अत एव भगवान् काश्यपो वेदान् पौरुषेयान् मन्यमानः शब्दम-

**णमनुवादानां शास्त्रत्वनिवृत्त्यर्थमित्यङ्गीकरणात् ।**

**अथाऽनपेक्षं प्रमाणम्=यत्स्वविषये प्रमाणान्तरं नापेक्षते तत् प्रमाणम् । अनुवादानां तु पुरोवादसापेक्षत्वादप्रामाण्यमिति ? । एवं तर्हि लौकिकं वाक्यमप्यनुमितेऽर्थेप्रवर्तमानमऽनुमानस्य शङ्कानिराकरणमात्रौपयिकत्वादर्थप्रतिपादने तदपेक्षाऽभावात् प्रमाणं स्यात् ।**

---

नुमानेऽन्तर्भूतमुवाच—"तस्येदं कारणं कार्यम्" इति लैङ्गिकमुक्त्वा "एतेनैव शाब्दमप्युक्तम्" इति । वक्तृज्ञानं हि कारणं वाक्यं च कार्यम्, अत एवान्येनाप्युक्तम्—"वक्तुरभिप्रायं तु सूचयेयुः" इति "स एव तथा प्रतिपद्यमानतयाऽऽश्रयः" इति" इति । अत्र सः=वक्ता ।

उक्तविपक्षे बाधकं विशदयति—असंनिकृष्टेति, "शास्त्रं शब्दविज्ञानादसंनिकृष्टेऽर्थे विज्ञानम्" इति भाष्यं तस्य 'शब्दविज्ञानात्=वाक्यश्रवणादसंनिकृष्टेऽर्थे=अनधिगतार्थे यज्ज्ञानं तच्छास्त्रं नाम प्रमाणम्, इत्यर्थः । अत्रासंनिकृष्टपदेना ऽनुवादानामेवाऽप्रामाण्यमुच्यत इत्येवं भाष्यार्थस्य स्वीकारान्नानुवादानां प्रामाण्यं सम्भवतीत्यर्थः । तदुक्तं प्राभाकरैः—"असंनिकृष्ट इति किमिदम् ? प्रमाणान्तरेणाप्रतीत इति । स पुनरसंनिकृष्टोऽर्थो नियोगार्थ एव नियोगो हि प्रमाणान्तरानवगतमऽपूर्वमऽर्थमवबोधयति" इत्यादि ।

ननु याऽनपेक्षानुभूतिस्तत्प्रमाणं तथा च नानुवादानां प्रामाण्यं तेषां पुरोवादसापेक्षत्वात्=अनुवाद्यवाक्यसापेक्षत्वादित्येवं पुनः शङ्कते—अथेति । उक्तमुपपादयति—यत्स्वविषयेति, यत् वाक्यादिकम् । अत्र दोषमाह—एवमिति । यदि "यत्स्वविषये प्रमाणान्तरं नापेक्षते तत्प्रमाणम्" इत्युच्यते तदा लौकिकवाक्यस्यापि प्रामाण्यं स्यात् । भवन्मतेनानुमितार्थबोधकं लौकिकवाक्यमपि स्वविषयप्रत्यायने त्वनुमानं नापेक्षत इति तदपेक्षाभावात्=अनुमानापेक्षाभावात् स्वविषये प्रमाणमेव स्यात् प्रमाणान्तरानपेक्षत्वात् । तत्रानुमानेन तु शब्दाऽप्रामाण्यशङ्कानिराकरणमात्रं क्रियते न तु शब्दस्यार्थप्रतिपादने साहाय्यं वाक्यप्रतिपाद्यार्थप्रतिपादनं वेत्याह—शङ्केति । औपयिकत्वात्=हेतुत्वात् । इत्यतिव्याप्तिः । प्राभाकरैरपि—'देवदत्तो घटानयनविषयकतात्पर्यवान् घटमानयेति वाक्योच्चारयितृत्वात्' इत्येवं लौकिकशाब्दबोधस्थले-

तथाऽनुमानस्य प्रामाण्यं न स्यात्, तद्धि नियमग्रहणमपेक्षते। न च गृहीतमर्थं मात्रयाप्यधिकं गृह्णातीति भवतां दर्शनम्। पीतशङ्खज्ञानमप्यनुभूतित्वात् प्रमा-

---

नुमानमेव प्रमाणं न शब्दस्तस्यानुमितार्थबोधकत्वेनानुमानसापेक्षत्वादित्युच्यते।

अतिव्याप्तिमुक्त्वाऽव्याप्तिमाह–तथेति। तद्धि= अनुमानं हि स्वविषयप्रत्यायने नियमग्रहणम्=व्याप्तिग्रहणमपेक्षते व्याप्तिग्रहं विनानुमानासंभवात्, व्याप्तिग्रहश्च भूयःसहचारदर्शनलक्षणप्रत्यक्षेणैव भवतीत्यनुमानस्य प्रत्यक्षसापेक्षत्वात्प्रामाण्यं न स्यात्। इष्टं च भवतामनुमानस्य प्रामाण्यमित्यव्याप्तिर्दोषः। ननु यथा भवन्मते धारावाहिकज्ञानस्थल उत्तरोत्तरज्ञानानां पूर्वपूर्वज्ञानसापेक्षत्वेपि प्रामाण्यमस्ति तथाऽनुमानस्यापि व्याप्तिग्रहांशे प्रत्यक्षसापेक्षत्वेपि प्रामाण्यं भवत्वित्याशङ्क्याह–न चेति। अगृहीतार्थग्राहित्वादेव ज्ञानस्य प्रामाण्यं भवति तत्र धारावाहिकज्ञानस्थले उत्तरोत्तरज्ञानानां हि पूर्वपूर्वज्ञानाऽगृहीतोत्तरोत्तरक्षणविषयकत्वात् प्रामाण्यं भवति न चैवमनुमानस्थले संभवति यतो य एव व्याप्तिग्रहणसमये धूमसंबन्धे सति वन्हिसंबन्धो गृहीतः स एवाऽन्यूनानतिरिक्तोऽनुमानेन गृह्यते इति भवतामेव दर्शनम्=सिद्धान्तस्तस्मात्प्रत्यक्षसापेक्षत्वाद् गृहीतार्थग्राहित्वाच्चानुमानस्य प्रामाण्यं न स्यात्। अन्यत्राप्युक्तम्–"नन्वेवं संबन्धनियमावसायसमये एव यावद्धूमादिभावितया वन्ह्यादिसंबन्धस्यावगतत्वाद् धूमादिसत्तानिश्चयादधिकं निश्चेतव्यं नावशिष्यत इत्यनुमानमप्रमाणं स्यात्?, सत्यं स्याद् यद्यऽनधिगतार्थगन्तृ प्रमाणमिति प्रमाणलक्षणं स्यात्, अनुभूतिस्तु प्रमाणमित्युक्तम्, इति युक्तमेवानुमानस्य प्रामाण्यम्।" इति।

'अनपेक्षाऽनुभूतिः प्रमाणम्' इत्यत्र दोषान्तरमाह–पीतेति। पीतशङ्खज्ञानमप्यनुभूतिरथ चानपेक्षमिति तदपि प्रमाणं स्यादित्यर्थः। ननु पीतशङ्खज्ञानं प्रमाणमितीष्टमेव तदुक्तमस्माभिः–"पीतशङ्खज्ञानं तर्हि प्रमाणं प्रसक्तम्? तत्र हि पीतिमा शङ्खस्वरूपं च द्वयमप्यनुभूयत एव। नयनगतपित्तवर्ती हि पीतिमाऽनुभूयत एवेति नयवीथ्यां निपुणतरमुपपादितम्, शङ्खस्वरूपे चानुभूतिर्निर्विवादैव, नायं दोषः–को नाम पीतशङ्खज्ञानमप्रमाणमाह प्रमाणमेव हि तद् यथार्थविषयत्वात्, विज्ञानद्वयं चैतदेकसाधारणरूपं तत्रैकविज्ञानसाधरणरूपावमर्शादेकमिव ज्ञानं सदृशव्यवहारप्रवर्तकतया व्यवहारदशायां वि-

णं स्यात्। इष्टमेवेति वदतो लोकविरोधः। तस्माद् 'यथार्थमगृऽहीतग्राहि ज्ञानं प्रमाणम्' इति वक्तव्यम्। धारावाहिकेष्वप्युत्तरोत्तरेषां कालान्तरसम्बन्धस्यागृहीतस्य ग्रहणाद् युक्तं प्रामाण्यम्।

सन्नपि कालभेदोऽतिसूक्ष्मत्वान्न परामृष्यत इति चेत्? अहो सूक्ष्मदर्शी देवानां प्रियः। यो हि समानविषयया विज्ञानधारया चिरमवस्थायोपरतः सोऽनन्तरक्षणसम्बन्धितयार्थं स्मरति। तथा हि—किमत्र घटोऽवस्थित इति पृष्टः कथयति—अस्मिन् क्षणे मयोपल-

---

संवादमावहत् प्रमाणमपि सद् भ्रान्तमित्युच्यते" इति। इत्याशङ्क्याह—इष्टमेवेति वदतो लोकविरोध इति। पीतः शङ्ख इति ज्ञानस्य लोके प्रामाण्यास्वीकाराल्लोकविरोधः। मीमांसकः स्वमतमाह—तस्मादिति। यथार्थमित्यादिलक्षणस्यानुवादादाव ऽगृहीतार्थग्राहित्वाभावात् भ्रमादौ च यथार्थत्वाभावाच्च नातिव्याप्तिः। न चानुमानादावव्याप्तिरित्यपि विज्ञेयम्। धारावाहिकस्थले चोत्तरोत्तरक्षणसम्बन्धस्य पूर्वपूर्वज्ञानेनागृहीतस्योत्तरोत्तरज्ञानेन ग्रहणादगृहीतार्थग्राहित्वादुत्तरोत्तरज्ञानस्यापि प्रामाण्यं युज्यत एवेत्याह—धारेति। उत्तरोत्तरेषाम्—ज्ञानानामिति शेषः।

ननु यद्यप्युत्तरोत्तरं कालभेदो भवतीत्यस्ति धारावाहिकज्ञानविषयस्य घटादेः कालान्तरसम्बन्धस्तथापि सन्नपि स कालभेदोतिसूक्ष्मत्वान्न ग्रहीतुं शक्यत इत्याशङ्कते—सन्नपीति। उपालभते मीमांसकः—अहो इति। देवानां प्रियः=मूर्खः। कालपरामर्शं साधयति—यो हीति, यो हि देवदत्तः समानविषयया विज्ञानधारया घटोयं घटोयमित्याकारयोपलक्षितः, चिरमवस्थाय=चिरपर्यन्तं घटोयं घटोयमित्याकारेण ज्ञानेन घटमनुभूय, उपरतः=घटज्ञानपरम्परां त्यक्तवान् स देवदत्तोनन्तरक्षणसम्बन्धितया=उत्तरक्षणसम्बन्धितयाऽर्थम्=घटं स्मरति। तत्रोत्तरक्षणसम्बन्धिघटस्मरणे उत्तरक्षणस्यापि स्मरणं स्वीकार्यमेव स्मरणं चानुभूतस्यैव भवतीति क्षणादिकालभेदपरामर्शोपि सिद्धः। उक्तं कालपरामर्शमुपपादयति—तथाहीति, अस्मिन् क्षणे घटो मयोपलब्ध इति वक्तुरवश्यं क्षणपरामर्शोनुमीयते यदि तस्य क्षणपरामर्शो न स्यात्तदैवं

ब्ध इति । तथा प्रातरारभ्यैतावत्कालं मयोपलब्ध इ-
ति । कालभेदे त्वगृहीते कथ मेवं वदेत् । तस्मादस्ति
कालभेदस्य परामर्शः । तदाधिक्याच्च सिद्धमुत्तरेषां
प्रामाण्यम् ।

ननु यथार्थतापि चेत् प्रमाणलक्षणम्, उष्णजलज्ञा-
नमप्रमाणं स्यात् । इष्टमेवैतत् । ननु लोकविरोधः
स्यात्? , स्याद् यद्यऽयथार्थतां जानन्त एव लौकिकाः
प्रामाण्यं मन्वीरन् । ते तु यथार्थतामेवैतस्य मन्यमानाः

---

न वदेत् । प्रमाणान्तरमाह—तथेति । एतावत्कालम्=अस्मिन् काले, इयता
कालेन वेत्यर्थः । स्वाभिप्रायमाह—कालभेदेति । उपसंहरति—तस्मादिति । ए-
तद्ग्रन्थाभिप्रायमाह—तदाधिक्यादिति । कालाधिक्यादित्यर्थः । उत्तरोत्तरज्ञाने-
नोत्तरोत्तरकालस्य पूर्वज्ञानविषयापेक्षयाधिकस्य ग्रहणात् सिद्धं धारावाहिक-
स्थल उत्तरेषां ज्ञानानां प्रामाण्यमित्यर्थः ।

ननु यदि यथार्थतापि प्रमाणलक्षणम्=यद् यथार्थं तदेव प्रमाणमित्यु-
च्यते तदा जलस्य शीतस्वभावत्वेन जले उष्णताया औपाधिकत्वादुष्णं जल-
मिति ज्ञानमप्रमाणमेव स्यात् जले यथार्थोष्णत्वाभावादिति प्राभाकरः शङ्क-
ते— नन्विति । उत्तरमाह—इष्टमिति, जलमुष्णमिति ज्ञानमप्रमाणमितीष्टमेव ।
ननु लोके तूष्णं जलमिति ज्ञानं प्रमाणमेव उष्णजलज्ञानेन लोकप्रवृत्तिदर्शना-
दित्युष्णजलज्ञानस्याप्रामाण्यस्वीकारे लोकविरोधः प्राप्त इत्याशङ्कते— ननु लो-
कविरोधः स्यादिति । उत्तरमाह—स्यादित्यादिना । लोकविरोधः स्याद् यदि
लौकिका जना उष्णं जलमिति ज्ञानस्या ऽयथार्थतां जानन्त एव तस्य प्रामाण्यं
वदन्तु नैवमस्ति किं तु जलमुष्णमिति ज्ञानं यथार्थमेव जानन्ति न हि लोके-
पि जलं शीतमेव भवति तस्योष्णत्वं चौपाधिकमस्तीति शास्त्रीयव्यवहारः प्र-
सिद्धः । यथार्थताज्ञाने सति च प्रामाण्यवचनं युक्तमेवेति न लोकविरोध इत्या-
ह—ते त्विति, ते=लौकिकाः । एतस्येति—उष्णं जलमिति ज्ञानस्य प्रामाण्यम्,
उष्णं जलमिति ज्ञानवतश्चाऽभ्रान्तत्वं मन्यन्ते । उष्णजलज्ञानस्य शास्त्रीयम-
र्यादयाऽप्रामाण्येपि लोकविरोधो नास्ति लोके तस्य प्रामाण्यमप्यस्ति यथार्थ-
ताप्यस्त्येवेति न कोपि दोष इति भावः ।

प्रामाण्यमऽभ्रान्तत्वं च मन्यन्ते । ये त्वयथार्थतां जानन्ति ते नैव प्रामाण्यं मन्यन्ते, नाप्यऽभ्रान्तताम्, तस्मान्नास्ति विरोधः ।

पीतशङ्खज्ञानस्यापि स्मृतित्वाभिमानादनुभूतित्वापरिज्ञानादप्रामाण्यं मन्यन्ते, अतो ऽस्माकमपि नास्ति विरोध इति चेत् ?, तदयुक्तम्—न हि लौकिकाः शुक्ति-

---

ये तु शास्त्रीया जना उष्णजलज्ञानस्यायथार्थतां जानन्ति ते तु नैवोष्णजलज्ञानस्य प्रामाण्यं मन्यन्ते न चोष्णजलज्ञानवतश्चाभ्रान्तत्वं मन्यन्ते इति व्यतिरेकमाह—येत्विति । उपसंहरति—तस्मादिति । विरोधः=लोकविरोधः । प्राभाकरास्तूष्णजलज्ञानस्याऽभ्रान्तित्वं मन्यमाना एव माहुः—"यत्र तु व्यवहारविसंवादो नास्ति तत्र भ्रान्तिरपि न व्यपदिश्यते यथोष्णजलज्ञाने, तत्रापि हि न जलगतमौष्ण्यमनुभूयते किं तु वन्ह्यवयवगतमेव जलगतस्यौष्ण्यस्य वन्हिसंयोगेनोत्पादनाऽनभ्युपगमात्, पाकजो हि गुणः पाकान्तरेणैव निवर्तते जलगतस्य चौष्ण्यस्याऽनपेक्षितपाकस्यैवाग्निसंयोगविच्छेदेनैव निवृत्तिः, गत्वरा हि तेजोऽवयवाः सञ्चारितास्तेष्वन्यत्र गतेष्वपरतेजोवयवसञ्चरणविच्छेदे युक्तैवौष्ण्यस्य निवृत्तिरिति पीतशङ्खादिज्ञानतुल्यत्वमुष्णजलज्ञानस्य, यस्तु विपरीतख्यातिवाद्युष्णजलज्ञानमप्रमाणं भ्रान्तमाह तस्य सर्वलोकविरोधः।" इति ।

मीमांसकेन स्वकीयलक्षणस्य लोकविरोधः परिहृत इत्यालोच्य प्रतिवादी—"पीतशङ्खज्ञानमप्यनुभूतित्वात् प्रमाणं स्यात् । इष्टमेवेति वदतो लोकविरोधः"(१५८पृ)इत्येवं 'अनुभूतिः प्रमाणम्' इत्यत्र प्राप्तस्य लोकविरोधस्य परिजिहीर्षयोपक्रमते—पीतशङ्खेति । पीतः शङ्ख इत्यत्र लोकानां पीतिम्नः स्मृतिर्भवति पीतशङ्खज्ञानमनुभूतिरित्येवमनुभूतित्वग्रहो नैव भवतीवि युक्तं तस्याप्रामाण्यं तथैवाप्रामाण्यं लोका अपि मन्यन्ते इति नास्ति लोकविरोधः । यत्र यत्रानुभूतित्वं तत्र तत्र प्रामाण्यमित्येव मया "अनुभूतिः प्रमाणम्" इत्यनेनोक्तं न चास्या व्याप्तेः पीतशङ्खज्ञाने व्यभिचारोस्ति, अनुभूतित्वस्य च ज्ञातस्यैव प्रामाण्यापादकत्वमित्यप्यवधेयं तत्र यदि पीतशङ्खज्ञाने लोकानामनुभूतित्वज्ञाने सत्यऽप्रामाण्यज्ञानं स्यात्तदा स्यादपि लोकविरोधो नैवमस्तीति नास्माकमपि लोकविरोध इत्याह—अत इति । परिहरति— तदयुक्तमिति । हे-

**रजतज्ञानेपि स्मृतित्वं मन्यन्ते न तरां पीतशङ्खज्ञाने । तस्मात्सूक्तम्- " अर्थे ऽनुपलब्धे " इति ।**

**वृत्तिकारस्त्वन्यथेदं वर्णयां चकारेत्येवमादिनोपवर्षमतेन । " तस्य निमित्तपरीष्टिः " इत्येवमादिसूत्रत्रयमन्यथाकृत्वा व्याचष्टे भाष्यकारः, तत्र निमित्तसूत्रेण तावत् प्रतिज्ञातस्य चोदनाप्रामाण्यस्य परीक्षाऽपदेशेन स्वतःप्रामाण्यं हेतुरित्युच्यते ।**

---

तुमाह- न हीति । यदि पीतशङ्खज्ञाने लोकानां स्मृतित्वाभिमानः स्यात्तदा त्वदुक्तरीत्या न स्याल्लोकविरोधो नैवमस्ति किं तु लौकिका जनास्तु शुक्तिरजतज्ञानेपि सत्यपि रजतस्मरणे स्मृतित्वं न मन्यन्ते का कथा पुनः पीतशङ्खज्ञानस्य यत्र शास्त्रमर्यादयापि स्मृतिव्यापारो नास्ति तस्मात् पीतशङ्खज्ञानस्य स्मृतित्वाभिमानाभावात् त्वयि लोकविरोधस्तदवस्थ एव,-अस्त्यनुभूतित्वज्ञानं प्रामाण्यं च नास्त्यनुभूतित्वज्ञानात्प्रामाण्यं स्यादिति । परमोपसंहारमाह- तस्मादिति । " अगृहीतग्राहि ज्ञानं प्रमाणम् " इत्यत्र " नन्वेवं धारावाहिकेषु " इत्यादिना(१५३ पृ)चोद्यं यदारब्धं तदुक्तरीत्या समाहितमित्याह-" सूक्तम् " अर्थे नुपलब्धे " इति " इति ।

" तस्य निमित्तपरीष्टिः " इत्यादि ३.४.५. सूत्रत्रयं वृत्तिकारेणान्यथा व्याख्यातं भाष्यकारेण चान्यथा व्याख्यातमित्याह-वृत्तिकारेति । एतावत्पर्यन्तं भाष्यकाराभिप्रायानुकूल्येन व्याख्यातम् । इत परं तु यथा भाष्यकारेण वृत्तिकाराभिप्रायो वर्णितस्तदानुकूल्येन वृत्तिकाराभिप्रायं वक्तुमुपक्रमते-तत्रेत्यादिना । तत्र=सूत्रत्रयमध्ये । निमित्तसूत्रेण=" तस्य निमित्तपरीष्टिः " इति सूत्रेण । द्वितीयसूत्रेण प्रतिज्ञातस्य चोदनाप्रामाण्यस्य='धर्मे चोदनैव प्रमाणम्' इत्यस्यार्थस्य स्वतःप्रामाण्यमेव हेतुरिति परीक्षापदेशेन=परीक्षाव्याजेन (परीक्षारम्भेणेति यावत् ) निमित्तसूत्रेणोच्यत इत्यन्वयः । निमित्तसूत्रेण या प्रामाण्यपरीक्षाऽऽरब्धा तद्व्याजेन चोदनाप्रामाण्यस्य स्वतःप्रामाण्यमेव हेतुरित्युच्यत इत्यर्थः । यदि प्रमाणानां स्वतः प्रामाण्यं न स्यात्तदा परतः प्रामाण्यस्वीकारे चोदनोक्तविषयस्यान्यप्रमाणेन संशोधनासम्भवाच्चोदनानां प्रामाण्यं न स्यादेव, स्वतःप्रामाण्यस्वीकारे तु चोदनोक्तविषयस्य बाधप्र-

**प्रसिद्धानि हि प्रत्यक्षादीनि प्रमाणानि तदन्तर्गतं च शास्त्रम्, अतस्तदपि प्रसिद्धमेव । न च प्रसिद्धस्य प्रमाणस्य प्रामाण्यमन्येन परीक्षितव्यम्, स्वत एव तस्य स्वविषयोपस्थापनसामर्थ्यात् । यदि च परीक्ष्येत ततो येन परीक्ष्येत तस्याप्यन्येन परीक्ष्येत तस्याप्यन्येनेत्यनवस्था स्यात् । तस्मात्प्रसिद्धत्वात् प्रामाण्यस्य चोदनापि प्रमाणमिति ।**

---

त्यक्षाभावात्, अपौरुषेयत्वेन च कारणदोषासम्भवात् चोदनानां प्राप्तं स्वतःप्रामाण्यमनपोदितं भवतीति चोदनाप्रामाण्यसिद्धौ स्वतःप्रामाण्यमेव हेतुरिति भावः । उक्तं च भट्टपादैः—

"तस्माद् गुणेभ्यो दोषाणामऽभावस्तदभावतः ।
अप्रामाण्यद्वयासत्त्वं तेनोत्सर्गोऽनपोदितः ॥(उत्सर्गः प्रामाण्यम्)
प्रत्ययोत्पत्तिहेतुत्वात् प्रामाण्यं नापनीयते ॥" इति ।

विशदयति—प्रसिद्धानीति । स्वतःसिद्धानीत्यर्थः । प्रत्यक्षादीनि प्रमाणानि स्वतःप्रामाण्यवन्तीति यावत् । तदपि=शास्त्रमपि स्वतः प्रमाणमेव । परतः प्रामाण्यं निराकरोति—न चेति, हेतुमाह—स्वत एवेति । तस्य=प्रमाणस्य । विपक्षे बाधकमाह—यदि चेति, यदि प्रमाणस्य प्रामाण्यं प्रमाणान्तरेण परीक्ष्येत ततस्तस्य प्रमाणान्तरस्य प्रामाण्यमपि प्रमाणान्तरेण परीक्षितव्यमित्यनवस्थैव स्यात् । उपसंहरति— तस्मादिति । प्रामाण्यस्य प्रसिद्धत्वात्=स्वतःसिद्धत्वात्, चोदनापि प्रमाणमेवेति तस्या अपि प्रामाण्यं स्वतः सिद्धमेव नान्येन परीक्षितव्यमित्यर्थः । उक्तं च भट्टपादैः—

"जातेपि यदि विज्ञाने तावन्नार्थोऽवधार्यते ।
यावत्कारणशुद्धत्वं न प्रमाणान्तराद् भवेत् ॥
तत्र ज्ञानान्तरोत्पादः प्रतीक्ष्यः कारणान्तरात् ।
यावद्धि न परिच्छिन्ना शुद्धिस्तावदसत्समा ॥
तस्यापि कारणे शुद्धे तज्ज्ञाने स्यात्प्रमाणता ।
तस्याप्येवमितीच्छंश्च न क्वचिद् व्यवतिष्ठते ॥
यदा स्वतः प्रमाणत्वं तदाऽन्यन्नैव मृग्यते ।

**ननु न ज्ञानमुत्पन्नमित्येवाऽर्थतथात्वमध्यवसातुं शक्यम्-प्रसिद्धतरस्यापि प्रत्यक्षस्याऽयथार्थस्योत्पत्तिदर्शनात्, यथा-शुक्तिकायां रजतमिति प्रत्यक्षमेवाऽयथार्थम्। न, शुक्तिकायां रजतज्ञानस्य प्रत्यक्षाभासत्वात्।**

**किं पुनराभासाऽसंकीर्णं प्रत्यक्षलक्षणम्?। तद्दर्शयति—" तत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म सत्प्रत्यक्षम् "- यदाभासं विज्ञानं तेनेन्द्रियाणां संप्रयोगे यद्विज्ञानं तत् सत्प्रत्यक्षम्। तत्सतोर्व्य-**

---

निवर्तेते हि मिथ्यात्वं दोषाऽज्ञानादयत्नतः॥
तस्माद् बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते॥" इति।

ननु ज्ञानोत्पत्तिमात्रेणैवार्थस्य=तद्विषयस्य तथात्वम्=यथार्थत्वं न निश्चेतुं शक्यते उत्पन्नस्यापि प्रत्यक्षादेरऽयथार्थत्वदर्शनाद् यथा शुक्तिरजतज्ञानं प्रत्यक्षमपि सदुत्पन्नं चायथार्थमेव भवति तस्मात् प्रमाणान्तरेणैव ज्ञानस्य यथार्थत्वमध्यवसातुं शक्यमस्तीति न स्वतःप्रामाण्यमुपपद्यते इत्याशङ्कते—नन्विति। परिहरति—नेति, शुक्तिरजतज्ञानं तु प्रत्यक्षमेव न भवति तस्य प्रत्यक्षाभासत्वात्। यद्धि प्रत्यक्षं तन्नाऽयथार्थं भवति यथा रजते रजतज्ञानमिति, एवमन्यदपि यत् प्रमाणं तन्नैव व्यभिचरति यच्च व्यभिचरति तन्न प्रमाणमेव। शुक्तिरजतज्ञाने हि प्राप्तं स्वतः प्रामाण्यम् 'नेदं रजतम्' इति बाधकज्ञानेन बाध्यते। इदं तु नोक्तं प्रामाण्यस्य बाधोपि न भवतीति। तस्माद् युक्तं स्वतःप्रमाण्यम्।

प्रत्यक्षाभासेषु यस्यातिव्याप्तिर्नस्यादेवंभूतं प्रत्यक्षलक्षणं पृच्छति—किं पुनरिति। वृत्तिकारमतेनोपपादयति—तद्दर्शयतीति। तत्=प्रत्यक्षाभासासंकीर्णं प्रत्यक्षलक्षणं सूत्रेणैव दर्शयति वृत्तिकार इत्यर्थः। वृत्तिकारेण हि "सत्संप्रयोगे पुरुषस्य" इति सूत्रे सत्पदस्थाने तत्पदं कृत्वा तत्पदस्थाने च सत्पदं कृत्वा यथार्थप्रत्यक्षस्य लक्षणं संगृहीतं तदेवाह—तत्संप्रयोग इति। उक्तवाक्यं व्याचष्टे—यदाभासमिति। यदाभासम्=यद्विषयकं ज्ञानं जायते तेनैव विषयेण सहेन्द्रियाणां संयोगे सति यज्ज्ञानं जायते तज् ज्ञानं सत्प्रत्य-

त्ययादाऽऽभासाऽसंकरसिद्धिः । तदिति चाव्ययं तृतीयान्तं तेनेत्यर्थे ।

नन्वऽसत्यपि व्यत्यये नास्ति संकरः–'इन्द्रियसंप्रयोगजं ज्ञानं प्रत्यक्षम्' इत्येतावदेव वक्तम्, न हि शुक्तिकायां रजतज्ञानमिन्द्रियसंप्रयोगजम् । किं तर्हि ? इन्द्रियसंप्रयोगाच्छुक्तिशकलं रजतसाधारणेन भास्वरत्वादिरूपेण गृहीतम्, असाधारणं तु शुक्तिकात्वमिन्द्रियदौर्बल्यादऽगृहीतम्, अनन्तरं च संस्कारोद्बोधाद्रजतं स्मृतम्, ततः स्मृतरजतात्मना शुक्तिव्यक्तिर्दो-

---

क्षमित्युच्यते यथा रजतेनेन्द्रियसंयोगे रजतप्रत्यक्षम् । शुक्तिरजतज्ञाने तु ज्ञानं रजतविषयकमिन्द्रियं च शुक्त्या संयुक्तमिति न तत् सत्प्रत्यक्षं किं तु प्रत्यक्षाभास एवेत्यर्थः । व्यत्ययात् =व्यत्यासात् । तत्संप्रयोगे इत्यत्रत्यं तत्पदं व्याचष्टे–तदिति । तेनेत्यर्थे इति–तदित्यस्य तेनेत्यर्थकत्वात् तेन संप्रयोगे इत्यर्थो लब्धः । यद्विषयकं ज्ञानं भवति तेन संप्रयोगे यद् बुद्धिजन्म तत् सत्प्रत्यक्षमित्यन्वयः ।

ननु तत्सतोर्व्यत्यये=व्यत्यासेऽसत्यपि नास्ति सङ्करः=“सत्संप्रयोगे” इत्येवमप्युक्ते निष्पन्नस्य प्रत्यक्षलक्षणस्य 'सत्संप्रयोगे यद् बुद्धिजन्म तत्प्रत्यक्षम्' इत्यस्य शुक्तिरजतादिप्रत्यक्षाभासेऽतिव्याप्तिर्नास्तीत्यभिप्रायेणाशङ्कते–नन्विति । तर्हि किं प्रत्यक्षलक्षणं जातमित्याशङ्क्याह–इन्द्रियेति, यज्ज्ञानमिन्द्रियसंप्रयोगजं तत् प्रत्यक्षमित्यर्थः । अस्य लक्षणस्य शुक्तिरजतज्ञाने नास्त्यतिव्याप्तिरित्याह–न हीति, शुक्तिकायां यद्रजतं गृह्यते तदिन्द्रियसंयोगवशान्न गृह्यते किं तु दोषवशात् संस्कारवशाच्च गृह्यते इत्यर्थः । एतदेवोपपादयति–इन्द्रियसंप्रयोगादिति । संस्कारोद्बोधादिति–आपणे यद्रजतमनुभूतं तदनुभवजन्यस्य संस्कारस्येदानीं शुक्तिगतचाकचिक्यादिदर्शनेनोद्बोधो जातस्तेन रजतविषयकसंस्कारोद्बोधेन रजतं स्मृतमित्यर्थः । ततः=रजतस्मरणानन्तरम् । स्मृतरजतात्मना=रजतत्वेन रूपेण शुक्तिर्गृह्यते । उपसंहरति–अत इति । उक्तरीत्या शुक्तिरजतज्ञान इन्द्रियसंप्रयोगजत्वाभावान्न तत्रोक्तलक्षणस्यातिव्याप्तिरित्याह–नातिप्रसङ्ग इति ।

षवशाद् गृह्यते, अतो नेन्द्रियसंप्रयोगजं रजतविज्ञान-मिति नातिप्रसङ्गः।

प्रणाड्याऽस्तीन्द्रियसंप्रयोगजत्वमिति तद्व्यावृत्त्यर्थं तत्संप्रयोगजत्वमिति विशेषणं वक्तव्यमिति चेत्? तन्न, न हीह यथाकथंचित्संप्रयोगजन्यत्वं लक्षणम्, किं तु साक्षात्तज्जन्यत्वम्। यदि च यथाकथंचिदित्याश्रीयेत ततो विशेषणे सत्यप्यतिव्याप्तिमल्लक्षणं स्यात्–आरादग्निमध्यक्षयतो यदौष्ण्यविषयमनुमानं तदपि प्रत्यक्षं स्यात्, प्रणाड्येन्द्रियसंप्रयोगजत्वात् संप्रयुक्तविषयत्वा-

---

ननु शुक्तिशकलस्य यादिदंत्वेन प्रत्यक्षं तदिन्द्रियसंयोगजमेव शुक्तिशकलस्य प्रत्यक्षे जाते एव च रजतस्मृतिर्भवतीति शुक्तिशकलज्ञानद्वारा रजतज्ञानेपीन्द्रियसंयोगजत्वं प्राप्तमेवेत्याह–प्रणाड्येति। प्रणाड्या=परम्परया। तद्व्यावृत्त्यर्थम्=प्रत्यक्षलक्षणस्य शुक्तिरजतज्ञानेतिव्याप्तिव्यावृत्त्यर्थं तत्सतोर्व्यत्यासेन "तत्संप्रयोगे पुरुषस्य" इत्येवं तत्संप्रयोगजत्वमिति विशेषणम्=प्रत्यक्षविशेषणं वक्तव्यमेवेति पूर्वपक्षे पूर्वपक्षः। पूर्वपक्षी प्राभाकरः परिहरति–तन्नेति। उपपादयति–न हीति, यदि यथाकथंचित्संप्रयोगजत्वं प्रत्यक्षलक्षणं स्यात्तदा शुक्तिरजतज्ञानस्यापि प्रणाड्या संप्रयोगजत्वात्तत्र प्रत्यक्षलक्षणस्यातिव्याप्तिः स्यादपि नैवमस्ति, किं तु साक्षात्संप्रयोगजत्वमेव प्रत्यक्षलक्षणं साक्षात्संप्रयोगजत्वं तु शुक्तिरजतज्ञाने नास्त्येवेति न तत्रातिव्याप्तिरित्यर्थः। लक्षणे साक्षात्पदप्रदानाभावे बाधकमाह–यदीति, यदि प्रत्यक्षलक्षणे साक्षात्संप्रयोगजत्वं नोच्यते किं तु यथाकथंचित्संप्रयोगजत्वमेवाश्रीयते ततः=तदा तत्सतोर्व्यत्यासेन 'तत्संप्रयोगे सत्प्रत्यक्षम्' इत्येवं तत्संप्रयोगजमितिविशेषणे सत्यपि लक्षणमतिव्याप्तिदोषवत्स्यादेवेत्यर्थः।

अतिव्याप्तिं प्रदर्शयति–आरादिति। दूरादग्निप्रत्यक्षे जाते यदौष्ण्यविषयकमनुमानं भवति–अयमग्निरुष्णोऽग्नित्वात्संप्रतिपन्नवदिति तदनुमानमपि प्रत्यक्षं स्यात्=अत्रानुमाने प्रत्यक्षत्वस्याऽतिव्याप्तिः स्यादित्यर्थः। अनुमानविषयस्यौष्ण्यस्य प्रत्यक्षविषयत्वं स्यादिति भावः। उपपादयति–प्रणाड्येति, अग्निद्वारा तदौष्ण्येनापीन्द्रियसंप्रयोगो ऽस्त्येवेति औष्ण्येन यथा

च, अस्ति च्वौष्ण्यस्येन्द्रियसंप्रयोगः संयुक्तसमवायल-
क्षणः । तस्मादवश्यं साक्षात्संप्रयोगजत्वं लक्षणमित्य-
ङ्गीकर्तव्यम्, अतः शुक्तिरजतवेदनेपि व्यभिचाराभा-
वादनर्थकस्तत्सतोर्व्यत्ययः ।

सत्यम्—साक्षात्संप्रयोगजत्वं लक्षणम्, सत्यं च शु-
क्तिरजतज्ञानेपि नातिप्रसङ्गः, पीतशङ्खद्विचन्द्रादिज्ञा-
नेष्वतिव्याप्तिः स्यात् साक्षात्संप्रयोगजत्वात् । अपि
च स्मृतेन रजताकारेण यत् संनिहितस्य शुक्तिशक-
लस्य तादात्म्यग्रहणं तदऽनुपरतेन्द्रियव्यापारस्य भवत्

---

कथं चिदिन्द्रियसंप्रयोगे सति जातं यदुक्तानुमानात्मकं ज्ञानं तदपि प्रत्यक्ष-
मेवेति प्राप्तं परम्परयेन्द्रियसंप्रयोगजत्वात् । हेत्वन्तरमाह—संप्रयुक्तेति । इन्द्रि-
यसंयुक्तं यदौष्ण्यं तद्विषयकत्वादस्यानुमानस्यात्रोक्तलक्षणस्यातिव्याप्तिः प्रा-
प्तैव । नन्विन्द्रियसंयुक्तस्त्वग्निरेव नौष्ण्यमिति नातिव्याप्तिरित्याशङ्क्याह—
अस्तीति । इन्द्रियसंयुक्तोऽग्निस्तत्र समवाय औष्ण्यस्यास्तीतीन्द्रियस्यौष्ण्येन सं
युक्तसमवायलक्षणः संयोगः=संबधोस्त्येव । उपसंहरति—तस्मादिति । उक्तदो-
षपरिजिहीर्षया साक्षात्संप्रयोगजत्वं प्रत्यक्षलक्षणं वक्तव्यमेव, साक्षादिति विशे-
षणे च दत्ते तत्सतोर्व्यत्यासस्यापेक्षा नास्तीत्याह—अत इति । साक्षादिन्द्रिय-
संप्रयोगजं प्रत्यक्षमित्यस्य प्रत्यक्षलक्षणस्य शुक्तिरजतज्ञानेपि व्यभिचारः=अ-
तिव्याप्तिर्नास्ति, अनुमानादौवप्यतिव्याप्तिर्नास्ति साक्षादिन्द्रियसंयोगाभावा-
दित्यर्थः ।

उत्तरमाह मीमांसकः—सत्यमित्यादिना । यद्यपि साक्षात्संप्रयोगजत्वं प्र-
त्यक्षलक्षणं सम्भवति, तस्य च साक्षात्संप्रयोगजत्वस्य यद्यप्युक्तौष्ण्यानुमाने
शुक्तिरजतज्ञाने चातिव्याप्तिरपि नास्ति, तथापि पीतङ्खज्ञाने द्विचन्द्रादिज्ञाने
चातिव्याप्तिरस्त्येव । हेतुमाह—साक्षादिति । पीतशङ्खज्ञानं न सत्प्रत्यक्षं किं तु
प्रत्यक्षाभास एव तत्रापि साक्षादिन्द्रियसंप्रयोगजत्वमस्त्येव । एवं द्विचन्द्रज्ञा-
नेपि प्रत्यक्षाभासे साक्षादिन्द्रियसंप्रयोगजत्वमस्त्येवेत्यऽतिव्याप्तिदोषपरिहारा-
योक्तरीत्या तत्सतोर्व्यत्यास आवश्यक एवेत्यर्थः । शुक्तिरजतज्ञानेपि संप्र-
त्यतिव्याप्तिं दर्शयति—अपि चेति । स्मृतरजततादात्म्येन यत् शुक्तिशकलस्य

**साक्षात्संप्रयोगजमेवापरोक्षत्वात् । तस्मादाभासनिवृत्त्यर्थस्तत्सतोऽर्थस्येय इति सूक्ष्म् । भाष्ये त्वाभासप्रदर्शनार्थं शुक्तिकारजतज्ञानोदाहरणमित्यनवद्यम् ।**

**तत्संप्रयोगजत्वाऽतत्संप्रयोगजत्वे कथं विविच्येते?। उच्यते-ज्ञानस्वरसादेव विषयस्य तथात्वमध्यवसीयते, तदन्यथात्वं तु कारणदोषज्ञानादऽर्थान्यथात्वज्ञानाद्वा-**

---

ग्रहणं तदनुपरतेन्द्रियव्यापारस्यैव पुरुषस्य भवतीत्यपरोक्षत्वात्साक्षादिन्द्रियसंप्रयोगजमेवेति तत्राप्यतिव्याप्तिरस्त्येवेत्यर्थः । इन्द्रियव्यापारं विना शुक्तिशकले रजततादात्म्यस्यापि ग्रहणं न शक्यमिति तत् साक्षात्संप्रयोगजमेव । यदि साक्षादिन्द्रियसंप्रयोगजं न स्याच्छुक्तिरजतज्ञानं तदेन्द्रियव्यापारं विनापि स्यात्, नैवमस्ति, तस्मादस्ति शुक्तिरजतज्ञानेप्यतिव्याप्तिः । उपसंहरति-तस्मादिति । आभासनिवृत्त्यर्थम्=प्रत्यक्षाभासस्य येन सङ्ग्रहो न स्यात् । प्रत्यक्षाभासेतिव्याप्तिनिवृत्त्यर्थमित्यर्थः । तत्सतोऽर्थत्यासे च कृते यद्विषयकं ज्ञानं जायते तेनैव विषयेणेन्द्रियसंयोगे सति यज्ज्ञानं तत् सत्प्रत्यक्षमिति प्राप्तम्-तथा च शुक्तिरजतज्ञाने रजतेन सह पीतशङ्खज्ञाने पीतशङ्खेन द्विचन्द्रज्ञाने चन्द्रद्वयेन चन्द्रद्वित्वेन वा वन्ह्यौष्ण्यानुमाने च वन्ह्यौष्ण्येनेन्द्रियसंयोगाभावान्नातिव्याप्तिः। न च वन्ह्यौष्ण्येनापि संयुक्तसमवायलक्षणः सम्बन्धोस्त्येवेत्यतिव्याप्तिस्तत्र स्यादिति वाच्यम्, सूत्रे संयोगस्यैव सम्बन्धस्य विवक्षितत्वात् । यच्च भाष्ये प्रत्यक्षाभासस्य शुक्तिकारजतज्ञानमुदाहरणं दत्तं तदप्युक्तरीत्या शुक्तिरजततादात्म्यज्ञानेपि साक्षात्संप्रयोगजत्वस्य सत्त्वाद् युक्तमेवेत्याह-भाष्ये त्विति। किं वा वृत्तिकारेण तु पीतशङ्खज्ञानं द्विचन्द्रज्ञानं च प्रत्यक्षाभासोदाहरणत्वेनोक्तं भाष्यकारेण च शुक्तिकारजतज्ञानमित्याशयेनाह-भाष्ये त्विति ।

ननु तत्संप्रयोगजत्वमत्रास्त्यऽत्र च नास्तीति विवेकः कथं स्यादित्याशङ्कते-तत्संप्रयोगेति । उत्तरमाह-उच्यत इति । उपपादयति-ज्ञानेत्यादिना । ज्ञानस्वरसात्=ज्ञानस्वभावादेव तथात्वम्=यद्रूपेण ज्ञातं तद्रूपत्वम् । तदन्यथात्वम्=विषयान्यथात्वं तु कारणदोषज्ञानात् अर्थान्यथात्वज्ञानात्=बाधकज्ञानाद्वाऽवगन्तव्यम्=ज्ञायते । कारणदोषज्ञानादर्थान्यथात्वं यथा नद्यास्तीरे फलानि सन्ति' इति वाक्यं श्रुत्वा यत्र नदीतीरमगत्वैव वक्तरि वञ्चकत्वज्ञानं

ऽवगन्तव्यम् । अतो यत्र प्रयत्नेनान्विष्यमाणोपि कारणदोषो बाधकज्ञानं वा नोपलभ्यते तत्प्रमाणम्, इतरचाऽप्रमाणम् । चोदनार्थज्ञानस्य तूभयाभावात् सिद्धं प्रामाण्यम् । इत्यौत्पत्तिकसूत्रम् ।

"ननु सर्व एव निरालम्बनः" इत्यादिना पूर्वोक्तहेतुद्वयनिमित्तमिथ्यात्वाक्षेपेण शून्यवादी प्रत्यव-

---

भवति तत्र कारणदोषज्ञानादेवाऽर्थान्यथात्वं नदीतीरगमनाभावेन बाधकज्ञानोत्पत्तेरसंभवात्, उक्तवाक्यस्य कारणं यो वक्ता तत्र वञ्चकत्वदोषज्ञानं कारणान्तरवशाज्जातम् । बधाकज्ञानादर्थान्यथात्वं यथा—शुक्तिरजतज्ञानस्थले रजतस्यान्यथात्वं ज्ञायते । उपसंहरति—अत इति । यत्र=ज्ञाने प्रमाणे वा । तत्प्रमाणमिति—वेदवाक्यजन्यज्ञानस्य यत्कारणं वेदवाक्यं तत्रापि दोषो न संभवत्यपौरुषेयत्वात् बाधकज्ञानमपि न भवति फलस्य प्रायेण देहान्तरलभ्यत्वादिति वेदवाक्यजन्यं ज्ञानं प्रमाणमेवेत्यर्थः । इतरत्=यत्र कारणदोषो वा बाधकज्ञानं वोपलभ्यते तदप्रमाणं ज्ञानम् । चोदनार्थज्ञानस्य=चोदनावाक्यबोध्यविषयविषयकज्ञानस्य । चोदनाजन्यज्ञानस्य कारणदोषोपि नास्त्यपौरुषेयत्वात् बाधकमपि ज्ञानं नास्तीति सिद्धं प्रामाण्यम् । स्वतःप्राप्तस्य प्रामाण्यस्य कारणदोषबाधकज्ञानाभ्यामेव बाधो भवति यत्र च कारणदोषज्ञानं वा बाधकज्ञानं वा न जायते तत्र प्रत्यक्षस्य तत्संप्रयोगजत्वमेव ज्ञायत इतरत्र च कारणदोषज्ञाने वा बाधकज्ञाने वा सत्यऽतत्संप्रयोगजत्वं ज्ञायते । उक्तं च भट्टपादैः—

"तत्र दोषान्तरज्ञानं बाधधीर्वा परा न चेद्" इति ।
"तदुद्भूतौ द्वितीयस्य मिथ्यात्वादाद्यमानता" इति च ॥

सूत्रसंबद्धविषयान् समाप्याऽन्यानपि भाष्यवार्तिकोक्तविषान् विशदयति—

"ननु सर्व एव निरालम्बनः स्वप्नवत्प्रत्ययः प्रत्ययस्य हि निरालम्बनता स्वभाव उपलक्षितः स्वप्ने" इत्यादिना भाष्ये बाह्यार्थशून्यवादिना योगाचारबौद्धेन विप्रतिपत्तिः कृता तां दर्शयति— नन्वित्यादिना । पूर्वोक्तहेतुद्वयेति=कारणदोषबाधकज्ञानाभ्यामेव प्रत्ययस्य=ज्ञानस्य मिथ्यात्वम्=अयथार्थत्वं भवतीति न युक्तं ज्ञानमात्रस्य मिथ्यात्वादेव, यतोऽसतो

**तिष्ठते । तथा हि– यत्र कारणदोषज्ञानं बाधकज्ञानं वा तत्र मिथ्यात्वम्, अन्यत्र सत्यत्वमिति व्यवस्था नोपपद्यते, सर्वज्ञानानां मिथ्यात्वात् । सर्वमेव हि ज्ञानमात्मांशपर्यवसितमऽनादिवासनावशादात्मानमेव बाह्यतयाऽध्यवस्यन् मिथ्यैव ।**

**कथं पुनरात्मांशपर्यवसायित्वं गम्यते ?, अनुमानात्, बाह्ये च प्रवृत्त्यऽसामर्थ्यात् । यथा चासामर्थ्यं**

---

विषयस्य ग्रहणमेव ज्ञानस्य मिथ्यात्वमुच्यते तत्र च बाह्यार्थस्याभावादऽसन्नेव विषयो ज्ञानेन गृह्यत इति सर्वमेव ज्ञानं मिथ्या शुक्तिरजतज्ञानवत् स्वाप्नज्ञानवच्चेति कारणदोषबाधकज्ञानाभ्यामेव ज्ञानस्य मिथ्यात्वमिति व्यवस्था नोपपद्यते इत्याक्षेपेण शून्यवादी=बाह्यार्थशून्यवादी भाष्ये शङ्कते–"ननु सर्व एव" इत्यादिनेत्यर्थः । ज्ञानं मिथ्या न भवतीति नाक्षेपाभिप्रायः किं तु सर्वमेव ज्ञानं मिथ्येति हेतुद्वये सत्येव मिथ्येति न युज्यते इत्यभिप्रायः ।

शून्यवादिनोभिप्रायं विशदयति– तथा हीत्यादिना । अन्यत्र=यत्र कारणदोषज्ञानं बाधकज्ञानं वा नास्ति तत्र । शून्यवादी ज्ञानमात्रस्योक्तं मिथ्यात्वमुपपादयति–सर्वमेवेति । सर्वमेव घटपटादिज्ञानमात्मांशे=स्वरूपे एव पर्यवसितं स्वरूपस्यैव ग्राहकमस्ति, बाह्यस्य घटपटादेरभावात् ज्ञानस्यैव घटादिरूपेण परिणामो भवतीति घटादिकं ज्ञानरूपमेव तस्य ज्ञानरूपस्यैव घटादेर्ज्ञानेन ग्रहणाज्ज्ञानेन स्वांश एव गृह्यते इति ज्ञानस्य स्वात्मांशपर्यवसायित्वमुच्यत इति भावः । ननु यदि बाह्यं नास्ति तदा ज्ञानेन स्वरूपं ज्ञानत्वेनैव रूपेण गृह्येत न तु घटपटादिरूपेण, ज्ञानस्य घटपटादिरूपेण परिणामे मानाभावादित्याशङ्क्याह–अनादीति, अनादिवासनैवात्र कारणमित्यनादिवासनावशाज्ज्ञानं स्वात्मानमेव=स्वरूपमेव बाह्यतया=घटपटादिरूपेणाध्यवस्यति=जानातीति बाह्याभावेपि बाह्यतयाऽध्यवसायाज्ज्ञानं सर्वं मिथ्यैव, यद्यपि ज्ञानस्वरूपमस्त्येव तथापि विषयस्य मिथ्यात्वेन तद्ग्राहकं ज्ञानमपि मिथ्येत्युच्यते इत्यर्थः ।

आत्मांशपर्यवसायित्वे प्रमाणं पृच्छति–कथमिति । उत्तरमाह–अनुमानादिति । ज्ञानस्यात्मांशपर्यवसायित्वे हेतुमाह–बाह्ये चेति, बाह्येन घटपटादिना-

तथा वक्ष्यामः । संप्रत्यनुमानमुच्यते- स्तम्भादिप्रत्ययाः स्वांशमेव बाह्यतयाऽध्यवस्यन्तो मिथ्याभूताः प्रत्ययत्वात् स्वप्नप्रत्ययवत् शुक्तिकारजतादिप्रत्ययवच्च । स्वप्नादिप्रत्यया हि यथाऽवगम्यमानबाह्यार्थाभावाद् देशान्तरकालान्तरवर्तिनां च संनिहितदेशकालतया प्रतिभासाऽसम्भवात् क्वचित् कदा चिदप्यसम्भवतां स्वशिरश्छेदादीनां स्वप्ने प्रतिभासादवश्यं स्वात्मा-

---

ऽऽन्तरस्य ज्ञानस्य सम्बन्धासम्भवात् सत्यपि बाह्ये तत्र ज्ञानस्य प्रवृत्तौ=ग्रहणे सामर्थ्याभावात्- ज्ञानस्य बाह्यग्रहणे बाह्यप्रतिभासे वा सामर्थ्यं न सम्भवतीत्यर्थः, भासते च ज्ञानं घटपटाद्याकारेण तस्माज्ज्ञायते ज्ञानमेव घटाद्याकारेण परिणम्य स्वात्मानं घटाद्याकारेण गृह्णाति ज्ञानस्य च घटाद्याकारेण परिणामस्वीकारस्यावश्यंभावात् कृतं बाह्यविषयस्वीकारेण तस्मात् ज्ञानभिन्नं बाह्यं किमपि नास्तीति । बाह्ये च ज्ञानस्य यथा प्रवृत्त्यसामर्थ्यं तद्वक्ष्याम इत्याह- यथेति । अनुमानप्रयोगमाह-स्तम्भादीति । मिथ्याभूतत्वे हेतुमाह-स्वांशमेवेति, यतः स्वांशमेव बाह्यरूपेणाध्यवस्यन्ति, अतो मिथ्याभूताः । स्वप्ने यथा ज्ञानमेव स्वाप्नपदार्थरूपेण परिणमते, यथा च शुक्तिरजतज्ञानस्थले ज्ञानमेव रजताकारेण परिणमते, तद्वत् । अन्यथा तत्र गृहीतस्य विषयस्याभावात् प्रत्यक्षदर्शनमेव नोपपद्येत तदाह-स्वप्नादीति स्वप्ने यथा यद्रूपाः पदार्था अवगम्यन्ते तथा बहिर्न सम्भवन्तीति स्वप्नप्रत्ययाः स्वात्मांशमेव बाह्यवद् गृह्णन्ति, इत्याह- यथेति । तथा ये पदार्थाः स्वप्नदेशे स्वप्नकाले च न भवन्ति तेषां स्वप्नदेशे स्वप्नकाले च ग्रहणासम्भवात् स्वप्नप्रत्ययाः स्वात्मांशमेव तत्तद्रूपेण बाह्यवद् गृह्णन्तीत्याह-देशेति । संनिहितेति-संनिहितौ देशकालौ यस्य स संनिहितदेशकालस्तस्य भावः संनिहितदेशकालता तया=तद्रूपेण, संनिहितदेशकालवर्तिविषयताद्रूप्येण किं वा संनिहितदेशकालवृत्तित्वेनेति यावत् । तथा येषां स्वशिरश्छेदादीनां दर्शनस्य बहिः कदापि क्वचिदपि सम्भवो नास्ति तेषामपि स्वप्ने प्रतीतिर्भवतीत्यवश्यं स्वाप्नप्रत्ययाः स्वात्मांशमेव बाह्यवद् गृह्णन्तीति स्वीकार्यम्, स्वात्मांशग्राहित्वाच्च स्वाप्नप्रत्यया मिथ्यैव तथा जाग्रत्प्रत्यया अपि स्वात्मांशग्राहित्वान्मिथ्याभूताः

नमेव बहिर्वद् गृह्णन्तीत्यभ्युपगन्तव्यम् । अतस्तत्सामान्याज्जाग्रज्ज्ञानानामपि स्वांशपर्यवसायित्वान्मिथ्यात्वम् । इति प्राप्ते-

अभिधीयते- न तावत्स्वप्नादिप्रत्ययाः स्वांशावलम्बनाः, तेपि बाह्यार्थमेवान्यथा सन्तमेवान्यथा गृह्णन्तीति वक्ष्यामः । भवतु वा तत्रात्मख्यानं नैतावता नीलादिप्रत्ययास्तथा भवितुमर्हन्ति, तत्र हि नीलमिदं पीतमिदं स्तम्भोयं घटोयमित्येवमिदमाकारास्पदीभूतं बाह्यं नीलादिप्रत्यक्षेणावगम्यमानं न शक्यमनुमानेनाऽपन्होतुम् । आत्मग्राहित्वे ह्यऽहं नीलमिति स्यात् ।

---

प्रत्ययत्वादिति सिद्धं सेर्वेषामेव ज्ञानानां मिथ्यात्वमित्याह-अत इति । तत्सामान्यात्=स्वाप्नज्ञानसादृश्यात् । तथा च कारणदोषबाधकज्ञानाभ्यामेव ज्ञानस्य मिथ्यात्वं नान्यत्रेति व्यवस्था नोपपद्यते ।

परिहरति-इतिप्राप्तेभिधीयत इति। ज्ञानमेव विषयाकारेण परिणम्य स्वयमेव स्वात्मानं गृह्णातीति न युक्तम् । स्वाप्नप्रत्यया अपि न स्वांशावलम्बनाः= स्वात्मांशग्राहका इत्याह- न तावदिति । हेतुमाह- ते पीति, स्वाप्नप्रत्यया अपि बहिरन्यथादृष्टमेव विषयमन्यथा गृह्णन्ति यथा शिरश्छेदादिकमजादिसम्बन्धितया बहिरनुभूतमेव स्वाप्नज्ञानेन स्वसम्बन्धितया गृह्यते इत्येव विशेषः न च शिरश्छेदादीनामसत्त्वमस्ति अजादिशिरश्छेदादीनां बहिः सत्त्वादेव । अन्यथाभूतस्यान्यथाग्रहणादेव स्वाप्नज्ञानस्या ऽप्रामाण्यमुच्यते, अन्यथाग्रहणं च दोषादेव भवति । यदि स्वप्नेऽन्यथाग्रहणं न स्यात्तदा स्वाप्नज्ञानमपि प्रमाणमेव स्यात् । तव मते तु जाग्रज्ज्ञानस्य स्वाप्नज्ञानस्य च विशेषो नोपपद्यत उभयत्र स्वात्मांशस्यैव ग्रहणात् । अस्ति च विषयोपलब्ध्यादिकं विशेषः । किं च न हि यज्ञदत्ते धूर्ते सर्व एव जनो धूर्तो भवितुमर्हतीति यदि तत्र=स्वप्ने आत्मख्यानम्=विषयाकारेण परिणतस्य ज्ञानस्यैव ज्ञानेन ग्रहणं भवति तदा भवतु तत्रैवं. नैतावता नीलादिप्रत्ययाः= जाग्रत्प्रत्यया अपि तथा= स्वात्मांशग्राहका भवितुमर्हन्तीत्याह-भवत्वित्यादिना ।

तदेवं प्रत्यक्षमेव बाह्यार्थमुपस्थाप्य तदपन्हवप्रवृत्तस्यानुमानस्योदयं निरुणद्धि । स्वप्नादिषु तु बाधकेन ज्ञानान्तरेण बाह्यसद्भावनिराकरणाद् युज्येतात्मख्यातिः । न त्विह तथा बाधकमस्त्यऽन्यत् भवदुक्तादनुमानात् । न चानुमानमलं बाधितुमित्युक्तम् । दूषणसहस्रं चास्यानुमानस्य वार्तिके प्रपञ्चितमित्युपरम्यते ।

इति निरालम्बनवादः ।

---

स्पष्टोयं ग्रन्थः । तत्र=जाग्रति । इदमाकारास्पदीभूतम्=पुरस्थितम् । बाह्यम्=नीलादि । विपक्षे बाधकमाह—आत्मेति । यदि नीलाद्याकारेण ज्ञानस्य परिणामः स्यात्तदा तस्य ज्ञानेन ग्रहणेऽहं नीलमित्येव स्यात् त्वन्मते आत्मनो ज्ञानाभिन्नत्वात् । यथा दुष्यन्तरूपेणावतीर्णो नटोऽहं दुष्यन्तोस्मीति गृह्णाति वदति च तथा ।

उपसंहरति—तदेवमिति, एवम्=ज्ञानस्य स्वात्मांशग्राहित्वासंभवे सिद्धे । प्रत्यक्षमेव बाह्यार्थं उपस्थाप्य=विषयं कृत्वा निवेद्य वा तदपन्हवप्रवृत्तस्य=बाह्यार्थापन्हवप्रवृत्तस्य । अनुमानस्य='स्तम्भादिप्रत्यया मिथ्याभूताः प्रत्ययत्वात्' इत्यस्योदयम्=उत्पत्तिं निरुणद्धि । बाधितमिदनुमानमित्यर्थः । स्वप्नादिष्वति—स्वप्ने तु बाह्यस्य प्रतीतिर्न सम्भवतीति बाधकेन जाग्रत्प्रत्ययेन बाह्यसद्भावनिराकरणात्=बाह्यप्रतीतिसद्भावनिराकरणात् किं वा स्वप्ने साक्षाद् बाह्यस्यैव सद्भावनिराकरणात् आत्मख्यातिः=विषयाकारेण परिणतं स्वात्मानमेव ज्ञानं गृह्णातीति युज्येतापि, न त्वेवं जाग्रति युज्यते इत्याह— न त्विहेति । इह=जग्रत्प्रत्यये बाधकं नास्ति, त्वदुक्तस्य चानुमानस्य बाधकत्वमेव न सम्भवति तस्य स्वयं बाधितत्वात् । उपसंहरति—दूषणेति । उक्तं च वार्तिके भट्टपादैः—

> प्रत्यक्षादेश्च विषयो बाह्य एवावतिष्ठते ।
> तन्निषेधकृतस्तस्य तैर्भवेत् पक्षबाधनम् ॥,
> वक्तृश्रोत्रोश्च यज्ज्ञानं विशेषणविशेष्ययोः ।
> तन्निरालम्बनत्वेन स्ववाग्बाधो द्वयोरपि ॥,
> निरालम्बनता नाम न किंचिद्वस्तु गम्यते ।
> तेन तद् व्यतिरेकादौ प्रश्नो नैवोपपद्यते ॥" इत्यादि ॥

॥ इति निरालम्बनवादनिराकरणम् ॥

एवमनुमाने प्रत्यक्षविरोधेन निराकृते 'प्रत्यक्षस्य बहिः प्रवृत्तौ सामर्थ्यं नास्ति' इत्येवं पूर्वोक्ताक्षेपेण– “शून्यस्तु” इत्यादिना स एव शून्यवादी पुनः प्रत्यवतिष्ठते। तदिहैवं चिन्त्यते– यदिदं नीलमिदं पीतमिदमिति नीलाद्याकारं वस्तु प्रथते तत् किं विज्ञानमेव तथा प्रथते? किं वा बाह्यं वस्तु? इति। तदर्थमिदं विचार्यते– किं विज्ञानं प्रत्यक्षमुतानुमेयमिति, प्रत्यक्षत्वे सति निराकारस्य प्रत्यक्षग्रहणायोगात्, आकारस्य चैकस्यैव ग्रहणाद् गृह्यमाण आकारो ज्ञान एवावतिष्ठत इत्यर्थस्या

---

एवमिति। एवम्=उक्तरीत्या, 'स्तम्भादिप्रत्यया मिथ्याभूताः' इत्यनुमाने प्रत्यक्षविरोधेन निराकृतेपि “बाह्ये च प्रवृत्त्यसामर्थ्यात्” इति यो ज्ञानस्यात्मांशपर्यवसायित्वे हेतुरुक्तस्तदाश्रयेण स एव बाह्यार्थशून्यत्ववादी योगाचारः पुनः प्रत्यवतिष्ठते– “शून्यस्तु कथम्? अर्थज्ञानयोराकारभेदं नोपलभामहे प्रत्यक्षा च नो बुद्धिरतस्तद्भिन्नमर्थरूपं नाम न किंचिदस्तीति पश्यामः” इत्यादिना भाष्ये इति भावः। भाष्योक्तौ पूर्वोत्तरपक्षौ विशदतया निरूपयति– तदिहैवमित्यादिना। प्रथते=ज्ञानविषयत्वेन भासते। तत् किं विज्ञानमेव तथा=नीलाद्याकारेण प्रथते=भासते। ज्ञानमेव नीलाद्याकारेण भासत इति प्रथमपक्षेपि शङ्कते– किं विज्ञानं प्रत्यक्षमुतानुमेयमिति। अत्र विज्ञानं प्रत्यक्षमेव तदेव च नीलाद्याकारेण भासते इति बाह्यार्थशून्यवादिमतम्। विज्ञानमनुमेयमेव न प्रत्यक्षमिति न तस्य नीलाद्याकारेण प्रतिभासः सम्भवति, अन्यथा ज्ञानं प्रत्यक्षमेव स्यान्नचैतदस्ति तस्माद् बाह्यमेव वस्तु नीलाद्याकारेण भासत इति मीमांसकसिद्धान्तः।

तत्र पूर्वपक्षमुपपादयति–प्रत्यक्षत्व इति, ज्ञानं प्रत्यक्षमिति स्वीकृते सति यदि विज्ञानं निराकारं स्यात्तदा तस्य प्रत्यक्षेण ग्रहणं न स्यात्, भवति च (नीलाद्याकारेण परिणतस्य) ज्ञानस्य प्रत्यक्षेण ग्रहणं नीलोयमिति, स्वरूपेणापि च प्रत्यक्षविषयत्वं भवति घटविषयकज्ञानवानहमित्यत्र प्रत्यक्षज्ञाने ज्ञानस्यैव विषयत्वात्। तस्माज्ज्ञानं साकारमेवेति स्वीकार्यम्। तत्रापि नीलमिदमित्यादावेक एवाकारो गृह्यते न तु द्वौ येनैकस्य बाह्यत्वमपि स्यात्?

ऽगृह्यमाणत्वादसत्त्वमेव भवति । अनुमेयत्वे तु बाह्यार्थं
विनानुमानासंभवाद् बाह्यार्थसिद्धिः । तत्र–

ज्ञानमेवैवमाकारमात्मना प्रथते, कुतः ?– ।
नाऽप्रत्यक्षस्य तस्यास्ति प्रमाणान्तरतो गतिः ॥

---

ज्ञानं च प्रत्यक्षत्वादवश्यं साकारमेवेति गृह्यमाणः स आकारस्तस्मिन् विषयरूपेण परिणते ज्ञान एवावतिष्ठते, तेन ज्ञानस्यैव स आकारो न तु बाह्यस्येति सिद्धम् । तथा च बाह्यार्थस्याऽगृह्यमाणत्वं प्राप्तम्, अगृह्यमाणत्वेन च बाह्यस्यासत्त्वमेव सिद्धं यदि बाह्यं स्यात्तदा कदाचित्तु ज्ञानेन गृह्येत न च गृह्यते न तरां च ग्रहीतुं शक्यते आन्तरस्य ज्ञानस्य बाह्येन सह सम्बन्धस्य निरूपयितुमशक्यत्वादिति बाह्यं नास्त्येव, तथा च ज्ञानस्य बहिः प्रवृत्तौ सामर्थ्याभावात् स्वात्मांशपर्यवसायित्वं सिद्धमित्यर्थः । उक्तं च बौद्धैः—

"नान्योनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः ।
ग्राह्यग्राहकवैधुर्यात् स्वयं सैव प्रकाशते ॥
सहोपलम्भनियमादभेदो नीलतद्धियोः ॥" इत्यादि ।

ज्ञानस्यानुमेयत्वपक्षे त्वनुमापकं लिङ्गं किमपि स्वीकार्यं लिङ्गलिङ्गिभावस्य च भेदव्याप्यत्वेनानुमेयज्ञानापेक्षया भिन्नेन केन चिल्लिङ्गेन भवितव्यमिति सिद्धं ज्ञानातिरिक्तं बाह्यमप्यस्त्येवेति । किं च घटप्रतिभासे सत्येव घटज्ञानानुमानं स्यात् घटप्रतिभासश्च घटं विना न सम्भवति, अपि चोत्पन्नं सदेव ज्ञानमनुमेयं ज्ञानं च सविषयकमेवोत्पद्यते सविषयकत्वं च विषयं विना कथं स्यादिति ज्ञानस्यानुमेयत्वे तु सर्वथा बाह्यार्थसिद्धिः स्वीकार्यैवेति स्वाशयेनाह–अनुमेयत्वे त्विति ।

इत्येवं सङ्क्षेपेण पूर्वोत्तरपक्षावुक्त्वा विस्तरेण प्रतिपादयितुं प्रथमं तावत् पूर्वपक्षं पद्यद्वयेन संगृह्णाति–ज्ञानमेवेति । एवमाकारम्=नीलाद्याकारेण परिणतं ज्ञानमेवात्मना=ज्ञानेन प्रथते=भासते । अत्र हेतुं पृच्छति–कुत इति । उत्तरमाह–नाऽप्रत्यक्षेति । यदि ज्ञानमप्रत्यक्षं स्यात्तदा तस्य=ज्ञानस्य गतिः=ज्ञानं प्रमाणान्तरतः=अनुमानादितोपि न सम्भवति, यतः प्रत्यक्षभूतेनैव वन्हिना धूमसम्बन्धे ज्ञाते धूमेन वन्ह्यनुमानं भवति सर्वदाऽप्रत्यक्षेण ज्ञानेन सह कस्य सम्बन्धो गृहीतस्स्याद् येन ज्ञानानुमानं भवेत् ? तस्माज्ज्ञानं प्रत्यक्षमेव । बाह्यं निराचष्टे–

संवेद्यत्वाच्च नीलादेर्ज्ञानाकारत्वनिश्चयः ।
अर्थान्तरस्य च ग्राह्यलक्षणं न हि युज्यते ॥

यो हि विज्ञानमप्रत्यक्षमिच्छति तस्य ज्ञानमेव न सिद्ध्येत् प्रमाणान्तरासम्भवात् । अनुमानमिति चेत् ?, न, लिङ्गाभावात् । न तावदर्थो लिङ्गम्, विनापि तेन सुषुप्त्याद्यवस्थायामर्थसद्भावाभ्युपगमात् । अर्थव्यवहारो लिङ्गम्– स हि कादाचित्कं कारणं कल्पयतीति चेत् ?,

---

संवेद्यत्वादिति । नीलादिर्ज्ञानस्यैवाकारः संवेद्यत्वात्संप्रतिपन्नशुक्तिरजतवत् इत्यनुमानेन नीलादेर्ज्ञानाकारत्वम्=नीलादिकं ज्ञानस्यैवाकारः=परिणाम इति निश्चीयते । किं वा नीलादिकं संवेद्यम्=ज्ञानविषयो भवति बाह्यस्य च ज्ञानविषयत्वासम्भवात् नीलादिकं ज्ञानस्यैवाकार इति निश्चीयते । अर्थान्तरस्य=बाह्यस्य च ग्राह्यलक्षणम्=ग्राह्यत्वं नैव युज्यते, ग्राह्यत्वं च ज्ञानसम्बन्धप्रयुक्तं ज्ञानसम्बन्धश्च बाह्येन सार्कं नैव युज्यते ज्ञानस्यान्तरत्वादित्यर्थः ।

पद्याभ्यां सङ्क्षेपेणोक्तमर्थं व्याचष्टे– यो हीति । यः=मीमांसकः । अप्रत्यक्षम्=अनुमेयमिति इच्छति=वदति । तस्य=मीमांसकस्य मते विज्ञानसत्त्वैव न सिद्ध्येत्, विज्ञानसाधकप्रमाणान्तरस्यासम्भवात् । यतः विज्ञानसाधकं प्रमाणान्तरमपि विज्ञानमेवेति तस्य सत्तापि प्रमाणान्तरेण सिद्ध्येत् तस्यापि सत्ता प्रमाणान्तरेणेत्यनवस्थैव स्यात् । कस्यचित् स्वयंप्रत्यक्षतास्वीकारे प्रथमस्यैव ज्ञानस्य प्रत्यक्षता युक्तेत्यर्थः । नन्वनुमानमेवास्ति ज्ञानसाधकं प्रमाणान्तरमित्याशङ्क्याह– नेति । लिङ्गाभावादिति–अनुमापकहेतुसत्त्वे एवानुमानं भवति न च ज्ञानानुमापकहेतुत्वं कस्य चित्सम्भवतीत्यर्थः । ननु बाह्यपदार्थ एव ज्ञानानुमापकं लिङ्गमस्तु ? इत्याशङ्क्याह– न तावदिति । लिङ्गं हि तद् भवति यत्साध्यं विना नैव भवेत्, अन्यथा व्यभिचारित्वेनानुमापकत्वमेव न स्यात् । बाह्यपदार्थस्तु त्वया मीमांसकेन तेन=ज्ञानेन विनापि सुषुप्त्याद्यवस्थायामप्यभ्युपगम्यते सुषुप्तौ ज्ञानं न भवति बाह्यपदार्थस्तु भवतीति बाह्यपदार्थस्य ज्ञानव्यभिचारित्वाज्ज्ञानानुमापकत्वं न सम्भवतीति भावः ।

नन्वर्थव्यवहारस्तु ज्ञानं विना नैव भवति घटज्ञाने जाते हि घटेन जलानयनादिव्यवहारोपपत्तेरिति ज्ञानाऽविनाभूतोऽर्थव्यवहार एव ज्ञानस्य ज्ञा-

**एवं तु प्रागव्यवहाराज्ज्ञानप्रतिभासो न स्यात् । अव्यवहरन्नपि घटं पश्यन् 'जानेहं घटम्' इति ज्ञानमनुसन्धत्ते इति प्रतीतिसाक्षिकम् । अर्थधर्मो ज्ञानजन्मा लिङ्गमिति चेत् ?, न, तत्सद्भावे प्रमाणाभावात् । अतीतानागतयोश्चार्थयोर्धर्माऽसम्भवादऽतीताद्यनुमाने ज्ञानसिद्धिर्न स्यात्, तस्मादवश्यं विज्ञानं प्र-**

---

पकं लिङ्गमस्त्वित्याशङ्कते—अर्थेति । अर्थव्यवहारः=घटेन जलानयनादिः । स हि=अर्थव्यवहारः, कादाचित्कः सन् कादाचित्कं स्वकारणं कल्पयति, तत्र कादाचित्कमर्थज्ञानं विना कादाचित्कस्यार्थव्यवहारस्या संभवात् तेनार्थव्यवहारेण ज्ञानानुमानं भवतीत्यर्थः। परिहरति—एवमिति, एवं तु=यद्यर्थव्यवहारेणैव ज्ञानानुमानं भवेत्तदा प्रागर्थव्यवहाराज्ज्ञानप्रतीतिर्न भवेत्, ज्ञानस्यार्थव्यवहारमात्रेणानुमेयत्वात् । न चैवमस्ति—अव्यवहरन्नपि=ज्ञातेनार्थेन व्यवहारमकुर्वाणोपि=व्यवहारं विनापि घटं पश्यन् 'जानेहं घटम्'=घटविषयकज्ञानवानहमित्येवं ज्ञानानुसन्धानं करोतीति प्रतीतिसिद्धम्, अनुसन्धत्ते=प्रत्यक्षयति, किंवा प्रत्यक्षीकृतं स्मरति । तस्मात् ज्ञानं प्रत्यक्षमेव न त्वर्थव्यवहारेणानुमेयमित्यर्थः । यद्यप्यर्थव्यवहारो नार्थज्ञानस्य व्यभिचारी अर्थज्ञानाविनाभूतत्वात् तथाप्यर्थव्यवहारं विनाप्यर्थज्ञानस्य 'जानेहं घटम्' इत्यादौ प्रत्यक्षं भवत्येवेति न ज्ञानस्यावश्यमनुमेयत्वमेवेति भावः ।

ननु ज्ञानेन ज्ञाते विषये ज्ञाततारूपो धर्म उत्पद्यते सा ज्ञाततैव ज्ञानस्य फलमित्यर्थज्ञानाज्जातो ज्ञाततारूपो Sर्थधर्म एव ज्ञानस्य स्वकारणस्यानुमापकोऽस्तु वन्हेर्धूम इवेत्याशङ्कते—अर्थधर्मेति । परिहरति— नेति । तत्सद्भावे=ज्ञानजन्यज्ञाततारूपधर्मस्य सद्भावे प्रमाणाभावात्, तथा च साधनाप्रसिद्धिरेव दोषः । दोषान्तरमाह—अतीतेति, अर्थे सत्येव तस्यार्थस्य धर्मोपि संभवतीत्यतीतानागतयोरर्थयोरेवा Sभावात्तद्धर्मो ज्ञातताऽपि न संभवति तथा चातीताद्यनुमाने=अतीतानागतार्थविषयकानुमानस्थले ज्ञानज्ञापकस्य ज्ञाततारूपधर्मस्याभावाज्ज्ञानसिद्धिरेव न स्यात् । अतीताद्यर्थविषयकज्ञानविषयकानुमानं न स्यादेवानुमापकस्य हेतोर्ज्ञातताया एवाभावादिति भावः । न चैवमस्ति—दृष्टो मया घटः, द्रक्ष्यामि च घटमित्यादेरऽतीताद्यर्थविषयकज्ञानविषयकज्ञानस्यापि

**त्यक्षमेषितव्यम् । एवं च तस्यैवायमाकार इति नि॰ ष्प्रमाणकोऽर्थः ।**

**किं च वेद्यत्वादपि नीलादेर्ज्ञानाकारत्वम्, नह्यनात्मनो नीलस्य पीतवद् वेद्यता सम्भवति। यदि चार्थान्तरं नीलं ततोऽस्य किंलक्षणं वेद्यत्वम्?। यद्यर्थत्वलक्षणं स्यात्, सर्वं सर्वस्य वेद्यं स्याद् व्यवस्थाहेत्वभावात् । अथ हेतुत्वं व्यवस्थापकम्-य एवार्थो ज्ञानस्य**

---

जायमानत्वात् । तदाह-तस्मादिति । विज्ञानं प्रत्यक्षमित्येषितव्यम्=स्वीकार्यम् । उपसंहरति-एवं चेति । एवम्=ज्ञानस्य प्रत्यक्षत्वे सिद्धे अयम्=नीलादिस्तस्यैव=ज्ञानस्यैवाकारः, ज्ञानमेव बाह्याकारेण भासते इति स्वीकार्यम्, तस्माद् बाह्यार्थो नास्त्येव नवा स्वीकार्यस्तत्र प्रमाणाभावादित्याह-निष्प्रमाणकोऽर्थ इति ।

उक्तमर्थं प्रकारान्तरेणोपपादयति-किं चेत्यादिना, यद् वेद्यं तज्ज्ञानाकारमेव भवतीति व्याप्तेर्नीलादेर्वेद्यत्वादेव ज्ञानाकारत्वं सिद्धम्, यथा शुक्तिरजतादीनां वेद्यत्वाज्ज्ञानाकारत्वमुभयसंप्रतिपन्नम् । विपक्षे बाधकमाह-नहीति, यदि नीलं ज्ञानाकारं न स्यात्तदा यथा ज्ञानाकारस्य पीतस्य वेद्यता=ज्ञानविषयता भवति तथाऽनात्मनः=ज्ञानभिन्नस्य नीलस्य वेद्यता नैव भवेत् । भवति च नीलस्यापि वेद्यतेति वेद्यत्वात् पीतवन्नीलस्यापि ज्ञानाकारता सिद्धेत्यर्थः ।

ननु यद् वेद्यं तज्ज्ञानाकारमेवेति व्याप्तिरेव नास्ति येन वेद्यत्वान्नीलस्य ज्ञानाकारता स्यादित्याशङ्क्याह-यदीति, यदि नीलमर्थान्तरम्=ज्ञानभिन्नं तदास्य=नीलस्य यद् वेद्यत्वं तत् किंलक्षणं किंस्वरूपमस्तीति निरूप्यताम्?। नन्वर्थत्वस्वरूपमेव नीलस्य वेद्यत्वमित्याशङ्क्याह-यद्यर्थेति, यदि यदेवार्थत्वं तदेव वेद्यत्वं तदा सर्वं वस्तु सर्वस्य ज्ञानस्य वेद्यं स्यात् तव मतेन सर्वत्रैव बाह्येऽर्थत्वस्य विद्यमानत्वात् । अत्र हेतुमाह-व्यवस्थेति, इदमेवास्य ज्ञानस्य वेद्यं इदं नेति व्यवस्थायां हेतोरभावात् । वेद्यत्वापादकस्यार्थत्वस्य सर्वस्मिन्नेव सत्त्वात्सर्वस्यैव वस्तुनः सर्वं ज्ञानं प्रति वेद्यत्वं स्यादेवेत्यर्थः । ननु वेद्यत्वस्यार्थत्वस्वरूपत्वेऽप्यस्ति व्यवस्थापको हेतुर्येन सर्वं सर्वस्य वेद्यं न भवति-तत्र ज्ञाननिरूपितहेतुत्वस्यैव व्यवस्थापकत्वादित्याशङ्कते-अथेति । एत

हेतुः स एव वेद्यो नान्य इति चेत् ?, न, नेत्रादेरपि वेद्यत्वप्रसङ्गात् । सादृश्यं हेतुत्वं च विषयत्वं नीलार्थश्च नीलज्ञानेन सदृशो न नेत्रमिति चेत् ?, एवमपि समनन्तरप्रत्ययस्य हेतुत्वाद् विज्ञानत्वेन च सादृश्याद्विषयत्वं स्यात् ।

अथाऽसाधारणेन विषयाकारेण सादृश्यं विषयलक्षणम्-ज्ञानत्वं हि सर्वज्ञानसाधारणं नीलाद्याकारस्तु

---

देव व्याचष्टे-य एवेति, य एवार्थो ज्ञानस्य हेतुः=उत्पादकः स एव तेन ज्ञानेन वेद्यो भवति नान्यः पदार्थः, तथा च नीलज्ञानं प्रति नीलस्यैव हेतुत्वात्तस्य नीलमेव वेद्यं न पीतमिति सिद्धा व्यवस्था । परिहरति-नेति । एवं हि रूपज्ञानं प्रति नेत्रमपि हेतुरेवेति नेत्रस्यापि वेद्यता=रूपज्ञानविषयता स्यात्, न चैवं सम्भवतीन्द्रियाणामतिसूक्ष्मत्वेन प्रत्यक्षविषयत्वाभावात् । रूपादिज्ञानविषयत्वाभावाच्च ।

ननु न केवलं यो हेतुर्ज्ञानस्य स वेद्य इत्युच्यते येनोक्तदोषः स्यात् ? किं तु यो ज्ञानेन सदृशः सन् हेतुः स्यात्स एव तस्य ज्ञानस्य वेद्यो नान्य इत्युच्यते, इत्याशङ्कते-सादृश्यमिति, सादृश्यं हेतुत्वं चोभयमेव विषयत्वम्=वेद्यत्वम्, उभयमेव वेद्यत्वे कारणमित्यर्थः, तथा च नेत्रनीलयोरुभयोर्नीलज्ञानं प्रति समानेपि हेतुत्वे नीलमेव नीलज्ञानसदृशं न तु नेत्रमपि येन नेत्रस्यापि नीलज्ञानविषयता स्यात् ?, हेतुत्वे सति सदृशत्वस्यैव तज्ज्ञानविषयताप्रयोजकत्वादित्यर्थः । परिहरति-एवमपीति । एवम्=सदृशत्वे सति हेतुत्वस्यैव वेद्यत्वसंपादकत्वे सविकल्पकज्ञानं प्रति समनन्तरप्रत्ययस्य=पूर्वं जातस्य निर्विकल्पकज्ञानस्य हेतुत्वात् ज्ञानत्वेन सदृशत्वाच्च समनन्तरप्रत्ययस्य सविकल्पकज्ञानविषयत्वं स्यात्, न चैतदिष्टं सविकल्पकज्ञानं प्रति विशिष्टस्यार्थस्यैव विषयत्वस्येदित्यर्थः ।

ननु न सर्वज्ञानसाधारणेन ज्ञानत्वादिना रूपेण सादृश्यं विवक्षितं येन समनन्तरप्रत्ययस्यापि वेद्यत्वं स्यात्, किं त्वसाधारणेन विषयाकारेणैव सादृश्यं विषयलक्षणम्=वेद्यत्वम्=वेद्यत्वसंपादकम्, यथा नीलज्ञानस्य नीलस्य च नीलत्वेन रूपेण सादृश्यं नीलस्य वेद्यत्वापादकं भवति ज्ञानत्वं तु सर्वज्ञानसाधारणमिति

केषां चिदेवाऽसाधारणस्तेन तदाकारेण सादृश्यं विषयत्वम् ?। एवमपि धारावाहिकेषु पूर्वमुत्तरस्य विषयः स्यात्-उभयोर्नीलरूपत्वाद्धेतुत्वाच्च ।

स्यान्मतम्- न सादृश्यं विषयत्वं किं तु यो ज्ञाने नीलाद्याकारविशेषसमर्पको हेतुः स विषयः, समनन्तरप्रत्ययस्तु न नीलाद्याकाराणां समर्पकः ?। तथा सति-नीलज्ञानानन्तरं सर्वदैव नीलविज्ञानं स्यात् । तत्रैकस्मिन् सन्ताने नीलपीतादिविचित्राकारोदयो न स्यात् कारणाऽवैलक्षण्ये कार्यवैलक्षण्यायोगात् । नी-

---

न ज्ञानत्वेन सादृश्यं वेद्यत्वापादकम् । नीलाद्याकारेण तु सादृश्यं केषांचिदेव ज्ञानानां भवतीत्यसाधारणम्, तेन=तस्मात् तदाकारेण=नीलाद्याकारेणैव सादृश्यं विषयत्वम्=वेद्यत्वापादकमित्याशङ्कते-अथेति । परिहरति-एवमपीति । एवम्=असाधारणरूपेणापि सादृश्यस्य विषयत्वापादकत्वविवक्षायां धारावाहिकज्ञानस्थले यत्र नीलं नीलमित्येवं ज्ञानधारा तत्र पूर्वज्ञानस्योत्तरज्ञानं प्रति हेतुत्वमप्यस्ति पूर्वक्षणवृत्तित्वान्नीलाकारसमर्पकत्वाच्च, उभयोर्ज्ञानयोर्नीलत्वेनाऽसाधारणेनैव रूपेण सादृश्यमप्यस्त्येवेति पूर्वज्ञानमुत्तरज्ञानस्य विषयः=वेद्यं स्यात्, न चैवमस्ति-उत्तरज्ञानं प्रत्यपि नीलस्यैव विषयत्वात्पूर्वज्ञानस्य चाविषत्वात्, तस्माज्ज्ञानमेवविषयाकारेण भासते इति निष्प्रामणिको बाह्यार्थ इत्यर्थः ।

संप्रति बाह्यार्थशून्यवादी बाह्यार्थक्षणिकत्ववादिनः सौत्रान्तिकस्याभिप्रायमनुवदति-स्यान्मतमित्यादिना । ननु न सादृश्येन विषयत्वं भवति येन पूर्वज्ञानस्योत्तरज्ञानविषयता प्राप्नुयात् किं तु यो ज्ञाने नीलाद्याकारविशेषसमर्पकत्वेन हेतुः स एव विषय इत्युच्यते । समनन्तरप्रत्ययस्तु=पूर्वमुत्पन्नं तु ज्ञानं निर्विकल्पकादिकं नोत्तरज्ञाने नीलाद्याकारस्य समर्पको भवति, तथा सति=समनन्तरप्रत्ययस्योत्तरज्ञाने नीलाद्याकारसमर्पकत्वे सति, एकदा नीलज्ञने जाते सर्वदा नीलज्ञानमेव स्यात् समनन्तरप्रत्ययस्य नीलाकारसमर्पकत्वात् । तत्र=तथा चैकस्मिन् सन्ताने=विज्ञाने नीलपीतादिविविधाकारस्याप्युदयो न स्यात्=विविधाकारस्य विषयता न स्यात् । अत्र हेतुमाह-कारणेति, कारणवैलक्षण्ये सत्येव कार्यवैलक्षण्यं भवति कारणं च समनन्तरप्रत्यय एव स च नी-

लपीतादिविचित्रार्थसंनिधिविशेषकृतश्चायं विचित्रा-
कारोदय इत्यर्थस्यैव ग्राह्यत्वम् ।

ननु कार्यभूतज्ञानसमये कारणभूतस्यार्थस्य क्षणिक-
त्वेनाऽतीतत्वात् कथं प्रत्यक्षग्राह्यत्वम् ? । एतदेवार्थस्य
ग्राह्यत्वं यज्ज्ञानाकारार्पणक्षमहेतुत्वम् । यथाहुः—

---

लाकारस्यैव समर्पक इत्युत्तरज्ञानेषु नीलाकारतैव स्यान्न पीताकारतापि । न
च समनन्तरप्रत्ययस्य पीताकारत्वे कदाचित् पीतज्ञानमपि संभवतीति न स-
र्वदा नीलज्ञानापत्तिरिति वाच्यम्, तात्पर्यानवबोधात्—

अयं भावः—यस्य प्रथमं नीलज्ञानं जातं तस्य च नीलज्ञानस्य समनन्त-
रत्वादुत्तरज्ञानं नीलज्ञानमेव तस्य स्यात् एतस्य च नीलज्ञानत्वात्तदुत्तरज्ञान-
मपि नीलज्ञानमेव स्यादिति न मरणपर्यन्तं कदाचिदपि पीतज्ञानोत्पत्तिः स्यात्।
किं च न विद्यमानस्य समनन्तरप्रत्ययस्योत्तरज्ञानं प्रति हेतुत्वं संभवति एक-
स्मिन् क्षणे ज्ञानद्वयाऽसंभवात् तथा च द्वितीयक्षणवृत्तिप्रध्वंसप्रतियोगित्वेन
विनष्टस्यैव समनन्तरप्रत्ययस्योत्तरज्ञानं प्रति हेतुत्वं वक्तव्यं तत्र हेतुभूतस्य
समनन्तरप्रत्ययविनाशस्य सर्वदा सत्त्वात्सर्वदा नीलज्ञानमेव स्यान्न पीता-
दिज्ञानमपि । तस्मान्न समनन्तरप्रत्ययस्याऽऽकारसमर्पकत्वलक्षणं हेतुत्वं येन
समनन्तरप्रत्ययस्योत्तरज्ञानविषयत्वं स्यात् । किं तु बाह्य एव क्षणिकः पदार्थो
विषयस्तस्यैव ज्ञाने नीलाद्याकारसमर्पकत्वे सति हेतुत्वादित्याह— नीलपीतादी-
ति, यो वै ज्ञाने नीलपीतादिविचित्राकारस्योदयः स नीलपीतादिविचित्रप-
दार्थसंयोगविशेषकृत एवेति नीलपीतादिविचित्रपदार्थस्य क्षणिकस्य बाह्य-
स्यैव ग्राह्यत्वम्=वेद्यत्वं सिद्धं नीलादिपदार्थाभावे तत्संयोगासंभवात् तत्संयो-
गाभावे च ज्ञानवैचित्र्यासंभवादित्यर्थः । संनिधिः=ज्ञानार्थयोरिन्द्रियार्थयोर्वा
संयोगः ।

ननु ज्ञानरूपकार्यं प्रति तव मते क्षणिक एव पदार्थः कारणमस्ति तत्र ज्ञा-
नात्प्रथमं जातस्य क्षणिकत्वात् प्रथममेव विनष्टस्य बाह्यस्य पदार्थस्य कार्य-
भूतज्ञानसमये स्थितिरेव न संभवतीति कथं तस्य ग्राह्यत्वं स्यादिति योगा-
चारः शङ्कते—नन्विति । सौत्रान्तिक उत्तरमाह—एतदेवेति, ज्ञानकाले स्थि-
तिमत्त्वं ग्राह्यत्वं नास्ति येनोक्तदोषः स्यात् किं तु यः पदार्थो ज्ञाने स्वाका-

"भिन्नकालं कथं ग्राह्यमिति चेत् ?, ग्राह्यतां विदुः ।
हेतुत्वमेव तद् युक्तं ज्ञानाकारार्पणक्षमम् ॥" इति ।

यद्येवम् ? कस्यायमाकारो यो वर्तमानः प्रथते ?, यदि ज्ञानस्यैव-तर्हि अर्थस्याप्रथमानस्य सद्भावे ज्ञानं प्रति हेतुत्वे च किं प्रमाणम् ? । ज्ञानवैचित्र्यमेव, न हि

---

रार्पणक्षमत्वेन हेतुः स्यात् तस्यैव ग्राह्यत्वमुच्यते, स्वाकारार्पणक्षमत्वं तु क्षणिकस्यापि संभवत्येव चपलायाः स्वप्रकाशार्पणक्षमत्वमिवेत्यर्थः । अत्र प्रमाणमाह-भिन्नेति । ननु ज्ञानकाले सत एव ज्ञानेन ग्रहणं संभवति न तु भिन्नकालस्य=अतीतस्याऽनागतस्य च, अन्यथा कल्पान्तरीयपदार्थस्यापि प्रत्यक्षं स्याद्भासते च ज्ञानमतीताद्यर्थाकारेणापीति भासमान आकारो ज्ञानस्यैवेति युक्तं तथा च बाह्यं नास्तीति प्राप्तमिति चेन्न हेतुत्वमेव ग्राह्यतां विदुः अर्थात् विषयस्य ज्ञानोत्पादकत्वेन यत् ज्ञानहेतुत्वं तदेव तस्य ग्राह्यत्वम् । हेतुत्वस्वरूपमाह-तदिति, तद्=हेतुत्वं च ज्ञानाकारार्पणक्षममिति युक्तम्, अर्थात् विषयस्य यज्ज्ञाने स्वाकारार्पणक्षमत्वं तदेव तस्य हेतुत्वमिति युक्तम् । स्वाकारार्पणक्षमत्वेन हेतुत्वं चातीतानागतयोरपि संभवत्येव । किं वा ज्ञानाकारार्पणक्षमहेतुत्वमेव तत्=ग्राह्यत्वमित्यर्थः । अत्र च "भिन्नकालं कथं ग्राह्यम्" इति पूर्वपक्षस्तदग्रे उत्तरपक्षः । सर्वदर्शनसंग्रहे तु "तद् युक्तम्" इत्यत्र "च व्यक्तेः" इति पाठ उपलभ्यते ।

ननु यद्येवम्=क्षणिकस्यैवातीतस्य बाह्यस्य ज्ञाने स्वाकारार्पणक्षमत्वमुच्यते तदा नीलमिदमित्यादिज्ञाने यो वर्तमानकालसंबन्धितया नीलाकारः प्रथते=प्रकाशते स कस्याऽऽकारोऽस्ति ?, न हि सोऽर्थस्याकारः संभवति-अर्थस्य विनष्टत्वेन तदाकारस्यापि विनष्टत्वाद्वर्तमानकालसंबन्धितया तस्य प्रकाशासंभवादित्येवं योगाचारः पुनः शङ्कते-यद्येवमिति । ननु ज्ञाने प्रथमान आकारो ज्ञानस्यैव यथा घटनिष्ठ आकारो घटस्यैवेत्याशङ्क्याह-यदि ज्ञानस्यैवेति । अत्रापि चोद्यमाह-तर्हीति । यदि ज्ञाने प्रथमान आकारो ज्ञानस्यैव तदा ज्ञाने बाह्यपदार्थाकारो न प्रथत इति प्राप्तं बाह्यार्थस्य चान्तरज्ञाने प्रथनं सुतरामसंभवतीत्यऽप्रथमानस्यार्थस्य सद्भावे किं प्रमाणम् ? । असतश्च ज्ञानं प्रति हेतुत्वे च किं मानम् ? नैवेत्यर्थः । सौत्रान्तिकोऽर्थस्य सद्भावे ज्ञानं प्रति हेतुत्वे

**तत्समनन्तरप्रत्ययमात्रात् संभवतीत्युक्तम् । एवं तर्ह्य-नुमेयोर्थः कथं प्रत्यक्षग्राह्य इत्युच्यते?। एतदेव हि प्रत्य-क्षग्राह्यत्वमर्थस्य यत् साक्षादाकारसमर्पणेन हेतुत्वम्, यस्तु परम्परया ज्ञानाकारसमर्पको हेतुश्च सोनुमेयः । तद् यथा—वन्हिस्वलक्षणं धूमस्वलक्षणतद्दर्शनतद्वि-कल्पप्रणाड्या वन्हिज्ञानं जनयदनुमेयम् । अत एव**

---

च पृष्टं प्रमाणमाह—ज्ञानवैचित्र्यमिति, नीलपीताद्याकारभेदेन यज्ज्ञानवैचित्र्यं तदेव बाह्यार्थस्य सद्भावे तस्य ज्ञानं प्रति हेतुत्वे च प्रमाणमस्ति यदि बाह्यार्थनि-मित्ता ज्ञानोत्पत्तिर्न स्यात्तदा वैचित्र्यहेतोरभावाज्ज्ञानमेकाकारमेव स्यादिति ज्ञानवैचित्र्यं न स्यादिति । अत्र हेतुमाह—नहीति, तत्=ज्ञानवैचित्र्यं सम-नन्तरप्रत्ययमात्रेण तु नैव संभवतीति "तथा सति नीलज्ञानानन्तरं सर्वदैव नीलज्ञानं स्यात्" इत्यादिना(१८०पृ)पूर्वमेवोक्तम् ।

ननु यदि ज्ञानवैचित्र्यमेवार्थसद्भावे प्रमाणं तदान्येन ज्ञानवैचित्र्येणान्यस्यार्थ-स्य सद्भावज्ञानाज्ज्ञानवैचित्र्येणार्थोनुमीयत इति प्राप्तं तथा चार्थस्य प्रत्यक्षग्राह्यता कथमुच्यते इति पुनर्योगाचारः शङ्कते—एवमिति । उत्तरमाह—एतदेवेति । अ-र्थस्य ज्ञाने यत्साक्षात्स्वाकारसमर्पकत्वेन हेतुत्वम्=स्वाकारसमर्पकत्वं तदेव तस्य प्रत्यक्षग्राह्यत्वं तथा चार्थसद्भावस्य ज्ञानवैचित्र्येणानुमेयत्वेपि ज्ञाने स्वा-कारसमर्पकत्वेन प्रत्यक्षग्राह्यत्वमप्य ऽक्षतमेवेत्यन्वयः। अवच्छेयकत्वं तृतीयार्थः—आकारसमर्पणस्यैव हेतुतावच्छेदकत्वात् । साक्षादाकारसमर्पणद्वारा यद्धे-तुत्वं तत्प्रत्यक्षग्राह्यत्वमिति यावत् । प्रत्यक्षग्राह्यादनुमेयस्य भेदमाह—य-स्त्विति, यस्तु परम्परया ज्ञाने स्वाकारसमर्कत्वेन हेतुः सोऽनुमेयो यथा धू-मद्वारा धूमज्ञानद्वारा वा ज्ञाने स्वाकारसमर्पकत्वाद्वन्हेरनुमेयत्वं पर्वतो वन्हि-मानित्यत्र। वस्तुतस्तु सौत्रान्तिकमते क्षणिकस्यापि बाह्यार्थस्यानुमेयत्वमेवास्ति।

परम्परया ज्ञाने स्वाकारसमर्पणप्रकारमाह—तद् यथेत्यादिना । वन्हिस्व-स्वलक्षणम्=वन्हिस्वरूपं अस्य "वन्हिज्ञानं जनयदनुमेयम्" इत्यनेनान्वयः । धूमस्वलक्षणम्=धूमस्वरूपम्, तद्दर्शनम्=पर्वतादौ धूमदर्शनम्, तद्विकल्पः=धू-मदर्शनानन्तरं वन्हिव्याप्यधूमवान् पर्वत इति परामर्शस्तत्प्रणाड्या=एवं भूत-परम्परया वन्हिज्ञानं जनयद्वन्हिस्वलक्षणमनुमेयमित्युच्यते इत्यर्थः । अत एव=

**प्रत्यक्षमनुमानं च द्वे एव प्रमाणे, ज्ञानार्थयोर्भिन्नत्वात्। असति तादात्म्ये तदुत्पत्तिनिबन्धन एव ज्ञानादर्थनिश्चयः। तत्र साक्षादुत्पत्तौ प्रत्यक्षं प्रणाड्या त्वनुमानमिति द्वे एव विधे। अत एव विषयसादृश्यमेव प्रामाण्यं तदधीनत्वादर्थविशेषव्यवस्थापनस्य। न हि ज्ञा-**

---

क्वचित्साक्षादपि स्वाकारसमर्पकत्वं भवति क्वचिच्च परम्परयापि स्वाकारसमर्पकत्वं भवतीति हेतोः प्रत्यक्षमनुमानं च द्वे एव प्रमाणे नैकं प्रत्यक्षमात्रं प्रमाणम्। अत्र हेतुमाह—ज्ञानेति, ज्ञानार्थयोः परस्परं भेदात्। यदि ज्ञानार्थयोर्भेदो न स्यात्तदा ज्ञाने एव बाह्याकारतास्वीकारे ज्ञानस्य च स्वयंप्रत्यक्षत्वेनानुमेयत्वस्वीकारवैयर्थ्यादेकं प्रत्यक्षमेव प्रमाणं स्यात् न चैवमस्ति बाह्यार्थस्वीकारात् तस्य च क्वचित्साक्षात् क्वचित् परम्परया च ज्ञाने स्वाकारससमर्पकत्वात्प्रत्यक्षानुमानभेदेन प्रमाणद्वैविध्यमावश्यकमेवेति भावः।

असतीति। ज्ञानार्थयोर्भेदेन असति तदात्म्ये=ऐक्याभावे सिद्धे तदुत्पत्तिनिबन्धनः=ज्ञानोत्पत्तिकारणक एव ज्ञानादर्थनिश्चयोभवति। यतो नीलविषयकं ज्ञानमुत्पन्नमतोऽस्ति बाह्यं नीलमन्यथा नीलज्ञानोत्पत्तिर्न स्यादेवेति भावः। तत्रेति—यत्र ज्ञानोत्पत्तावर्थस्य साक्षात्कारणत्वं तत्र ज्ञानं प्रत्यक्षात्मकं भवति यत्र च परम्परया कारणत्वं तत्र ज्ञानमनुमानात्मकं भवतीति ज्ञानस्य द्वे एव विधे। "अनुमेयम्" इति पाठे तु यत्र विषयात्साक्षादेव ज्ञानोत्पत्तिर्भवति तत्र स विषयः प्रत्यक्षो भवति यत्र च परम्परया ज्ञानोत्पत्तिर्भवति तत्र स विषयोऽनुमेयो भवति यथा धूमपरम्परया वन्हिज्ञानोत्पत्तौ वन्हिरनुमेयो भवतीत्यन्वयः। अत एव=यतोऽर्थस्यैव साक्षात् परम्परया वा ज्ञानोत्पादकत्वमत एव ज्ञाने यद्विषयसादृश्यं तदेव तस्य प्रामाण्यम्, अन्यथा शुक्तिरजतज्ञानस्यापि प्रामाण्यं स्यात्, न च भवति तत्कस्य हेतोः ? ज्ञाने विषयसादृश्याभावादेव—विषयस्तु चक्षुस्संयुक्तत्वक्शुक्तिर्ज्ञानं च रजताकारमिति सादृश्याभावः, तस्माद्विषयसादृश्यमेव ज्ञानस्य प्रामाण्यमिति वक्तव्यम्। यदि चार्थस्य ज्ञानोत्पादकत्वं न स्यात्तदाऽर्थाभावे स्वीकृते तत्सादृश्यस्याप्यसम्भवात् प्रामाण्यं विषयसादृश्यस्वरूपं न स्यात्तथा च दोषबाधज्ञानयोरप्यसंभवात् शुक्तिरजतादिज्ञानानामप्रामाण्यं नैव स्यात्। न चैतदिष्टम्।

नमित्येव नीलवेदनं भवति पीतादावपि तुल्यत्वात्। नीलिम्ना तु नीलवेदनसिद्धिः, यथाहुः—"न हि संवित्तिसत्तयैव तद्वेदना युक्ता तस्याः सर्वत्राविशेषादऽवि-

---

प्रामाण्यस्य विषयसादृश्यरूपत्वे हेतुमाह—तदधीनेति, तदधीनत्वात्=विषयसादृश्याधीनत्वात्। यादृशमेव ज्ञानं भवति तादृश एव बहिर्विषयोस्तीत्यसति बाधके व्यवस्थाप्यते ततश्च यत्र ज्ञाने विषयसादृश्यं तस्यैव प्रामाण्यमिति विषयसादृश्यमेव प्रामाण्यमिति प्राप्तम्। किं वा बहिरर्थव्यवस्थापनस्य तदधीनत्वात्=ज्ञानप्रामाण्याधीनत्वात्, यथा ज्ञानं भवति तथैव तद्विषयोपि बहिर्भवतीति ज्ञानविषयव्यवस्थाया ज्ञानप्रामाण्याधीनत्वात् ज्ञानप्रामाण्याभावे उक्तव्यवस्थाया असम्भवात्, तत्र यदि प्रामाण्यं विषयसादृश्यं न स्यात्तदा ज्ञानप्रामाण्यस्य विषयव्यस्थापकत्वं न स्यात्। विषयसादृश्याभावेपि ज्ञानप्रामाण्ये शुक्तिरजतज्ञानमपि प्रमाणं स्यात्, न चैतदिष्टं तत्कस्य हेतोः? शुक्तिरजतज्ञाने विषयसादृश्याभावादित्येवोक्तं युक्तं स्यात्। तस्माद्विषयसादृश्यमेव प्रामाण्यं तथा च शुक्तिरजतज्ञाने इन्द्रियसंयुक्तत्वेन साक्षाज्ज्ञानोत्पादकत्वाद्विषयीभूतायाः शुक्तेः सादृश्याभावान्न प्रामाण्यमित्युपपद्यते। किं च यत् प्रामाण्यस्य बहिरर्थव्यवस्थापकत्वं तत्र प्रामाण्यस्य विषयसादृश्यरूपत्वं विना किं कारणं स्यादित्यनुसन्धेयम्। विपक्षे बाधकमाह— न हीति, यदि विषयसादृश्यं प्रामाण्यं न स्यात्तदा नीलसादृश्याभावेपि ज्ञानं नीले प्रमाणं स्यात् न चैवमस्ति ज्ञानत्वस्य पीतादिज्ञानेपि सत्त्वात्, तस्मात् नीलिम्ना=नीलत्वेन नीलज्ञानसिद्धिर्भवतीति वक्तव्यम्, ज्ञानस्य नीलत्वं च नीलविषयसादृश्यमेव, तथा च नीलसादृश्येनैव नीलज्ञानसिद्धिरिति प्राप्तं विषयसादृश्यमेव ज्ञानस्य प्रामाण्यमिति भावः।

अत्र प्रमाणमाह—यथाहुरित्यादिना। न हीति, संवित्तिसत्तयैव=किं चिज्ज्ञानसत्तयैव तद्वेदना=नीलवेदना न युक्ता इदं नीलज्ञानमिति न वक्तुं शक्यते। तस्याः=संवित्तिसत्तायाः सर्वत्र=पीतादिज्ञानेष्वपि अविशेषात्=अविशेषेण सत्त्वात्। अविशेषप्रसङ्गात्=यदि ज्ञानसत्तामात्रेणैव नीलसादृश्यं विनापि ज्ञानस्य नीलविषयकत्वं स्यात्तदा ज्ञानसत्ताया अविशेषात् पटविषयकत्वमपि स्याद् घटविषयकत्वमपि स्यात्तथा पीतविषयकस्यापि ज्ञानस्य नीलवि-

**शेषप्रसङ्गात्, तां तु सारूप्यमाविशत् सरूपयितुं घट-येत्" इति । तस्मात्साकारे विज्ञाने सिद्धमर्थस्य सत्त्वं ग्राह्यलक्षणं चेति सौत्रान्तिकाः ।**

---

षयकत्वं स्यादितीदं ज्ञानं नीलविषयकमिदं ज्ञानं पीतविषयकमिति विशेषो न स्यादित्यर्थः। अत्र च "संवित्तिसत्तैव" इत्यपि पाठान्तरम्। तु=किं तु ताम्= संवित्तिं(ज्ञानम्) सारूप्यमाविशत्=सरूपतां प्राप्नुवत्=स्वसमानाकारां कुर्वन्नीलादिवस्तु तज्ज्ञानं सरूपयितुम्=रूपेणाऽऽकारेण सहितं कर्तुं घटयेत्=घटते यतते इत्यन्वयः। ज्ञानसदृशो विषयो ज्ञाने स्वाकारं समर्पयन् तज्ज्ञानं स्वसमानाकारं कुर्वंश्च निरूपणीयं करोतीति भावः। कल्पतरुकारेण चेदं वाक्यम् "तद् बाह्यं वस्तु स्वेन रूपेण सरूपां वित्तिं कुर्वद् घटयेत्=वित्त्या सह विषयभावेन (स्वरूपम्) योजयेदित्यर्थः।" इत्येवं व्याख्यातम्।

एतेन ज्ञानस्य साकारत्वं सिद्धं ज्ञानस्याऽऽकारश्चोक्तरीत्या विषयाधीन एवेति तदर्थं बाह्यविषयस्य क्षणिकस्य सत्त्वं सिद्धमित्याह–तस्मादिति, एवं ज्ञाने साकारे सिद्धे सति। ज्ञाने स्वाकारसमर्पकत्वं च विषयस्य ग्राह्यत्वं विना न सम्भवतीति ग्राह्यत्वमपि सिद्धं ग्राह्यत्वलक्षणं विषयत्वं वा सिद्धमित्याह–ग्राह्यलक्षणमिति। अन्यत्राप्युक्तम्–"अर्थाकारं हि प्रत्यक्षं ज्ञानम्, अन्यथा निराकारं हि संवित्तिमात्रं कथं रूपादिवित्तिं व्यवस्थितां लभेत, अत एवार्थसारूप्यं प्रमाणम् (प्रामाण्यम्) तस्यैव व्यवस्थाहेतुत्वात्, अर्थेन हि सारूप्यं विज्ञानं घटयति नेन्द्रियादीति न तत् प्रमाणम्" इति । ज्ञानस्यार्थसादृश्यमेव प्रमाण्यं तत्रार्थेन सदृशं विज्ञानमेव भवति नेन्द्रियमपीति नेन्द्रियं प्रमाणं नतरामिन्द्रियजत्वं प्रामाण्यलक्षणमित्यर्थः। किं वा नहीत्यनेन बाह्यार्थाऽसत्त्वे बाधकमुक्तं तथा च ज्ञानस्वरूपमात्रेण नीलज्ञानत्वं न सम्भवति ज्ञानस्वरूपस्य पीतादिज्ञानेष्वपि सत्त्वात् पीतादिज्ञानानामपि नीलज्ञानत्वं स्यात् तस्मात् नीलिम्ना=नीलत्वेन नीलज्ञानत्वसिद्धिर्वक्तव्या ज्ञानस्य नीलत्वं च नीलविषयसादृश्यमेव नीलविषयसादृश्यं च बाह्यनीलादिपदार्थाऽस्वीकारे न सम्भवतीत्यवश्यं ज्ञानातिरिक्तो बाह्यार्थः स्वीकार्य इत्यर्थः । अत्र प्रमाणमुक्तं यथाहुरित्यादिना ।

अत्र वदामः—स्यादिदं ग्राह्यलक्षणं यद्यर्थस्याकार-समर्पकत्वे हेतुत्वे वा प्रमाणं स्यात्, न तु तदस्ति, समनन्तरप्रत्ययविशेषादेव विचित्राकारोदयसंभवात् । तथा हि- त्वयापि हि स्वप्नावस्थायामसत्यप्यर्थसंनिधौ ज्ञानवैचित्र्यदर्शनादवश्यं समनन्तरप्रत्ययकृतत्वमङ्गीकर्तव्यम्, एवं चेज्जाग्रत्प्रत्ययानामपि तथैवास्तु किमर्थग्रहणेन, अतो न हेतुत्वं ग्राह्यलक्षणम् ।

अथ ज्ञाननिबन्धनो यत्रोपादानादिव्यवहारः स विषय इत्युच्यते ?, तथा सति नीलज्ञानस्य नी-

---

योगाचारः परिहरति- अत्र वदाम इत्यादिना । इदम्=स्वाकारसमर्पकत्वं हेतुत्वं च भवेद् ग्राह्यस्य लक्षणं ( ग्राह्यत्वम् ) यदि विषयस्य ज्ञाने स्वाकारसमर्पकत्वे ज्ञानोत्पत्तौ च हेतुत्वे किमपि प्रमाणं स्यात् । न च तत्=उक्तप्रमाणमस्ति । ननु बाह्यविषयाभावे ज्ञानवैचित्र्यं न स्यादित्याशङ्क्याह–समनन्तरेति । उपपादितं चैतत्पूर्वमेव । विचित्राकारोदयसम्भवात्=विचित्राकारज्ञानोदयसम्भवात् । समनन्तरप्रत्ययवैचित्र्यादेवोत्तरज्ञाने वैचित्र्यमिति भावः । उपपादयति- त्वयेति । त्वया=सौत्रान्तिकेनापि स्वप्नावस्थायामर्थसांनिध्याभावेपि स्वाप्नज्ञानवैचित्र्यदर्शनात् तस्य वैचित्र्यस्य समनन्तरप्रत्ययहेतुकत्वं स्वीकार्यमेव स्वाप्नज्ञानवैचित्र्यापादकस्यान्यस्य हेतोरभावात् । एवं चेत्=यदि स्वाप्नज्ञानवैचित्र्यस्य समनन्तरप्रत्ययकृतत्वमङ्गीकृतं तदा जाग्रत्प्रत्ययानामपि वैचित्र्यं समनन्तरप्रत्ययकृतमित्यङ्गीकर्तव्यम् । अन्यथा स्वाप्नज्ञानवैचित्र्यं प्रति समनन्तरप्रत्ययवैचित्र्यं हेतुर्जाग्रत्प्रत्ययवैचित्र्यं च प्रति बाह्यार्थो हेतुरिति गौरवं स्यात् । जाग्रत्प्रत्ययवैचित्र्यस्य च समनन्तरप्रत्ययकृतत्वे स्वीकृते किमर्थस्य ग्रहणेन=स्वीकारेण । बाह्यार्थो नैव स्वीकार्य इति भावः । उपसंहरति–अत इति, यतो बाह्यार्थो नास्त्येवातस्तस्य हेतुत्वमपि न सम्भवतीति हेतुत्वलक्षणं ग्राह्यत्वमपि न सम्भवति ।

ननु ज्ञानमूलको यत्रोपादानादिव्यवहारो भवति स एव विषयः=वेद्यो यथा रजतज्ञाने जाते रजतविषयक उपादानव्यवहारो भवतीति रजतं विषय इति सौत्रान्तिकः शङ्कते–अथेति । परिहरति- तथा सतीति, यद्युपादानादिव्यवहार-

लान्तर्गताः परमाणवो रसादयश्च विषयभावमश्नुवी-
रन्, उपादीयमानत्वात् ।

अथ द्रव्यस्यैवोपादानं न गुणानां रसादीनाम् ? । एवं तर्हि रूपस्यापि विषयत्वं न स्यात् । किं च सुखार्थः सर्वो व्यवहारोऽतो ऽनुभूते सुखे न कश्चित्सुखविषयो व्यवहारोस्ति न च सम्भवति यतः सुखप्रतिबद्धव्यव-हारानुगुण्यं तद्वित्तेः स्यात्, तथा घ्राणगृहीते गन्धे

---

गोचरत्वमेव विषयत्वं तदा नीलद्रव्येण सह तत्परमाणूनां तद्रसादीनां चोपादानं भवत्येवेति तेषामपि नीलज्ञानविषयत्वं स्यात्, न चैवं युक्तं- नीलस्यैव नी-लज्ञानविषयत्वस्वीकारात् । परमाणूनामस्त्येव विषयत्वं द्रव्यस्य परमाणुपु-ञ्जत्वस्वीकारादित्याशङ्क्य रसादयश्चेत्युक्तम् ।

ननु द्रव्यस्यैवोपादानं भवति न रसादीनां गुणानां येन तेषामपि नी-लज्ञानविषयत्वं स्यात् ? द्रव्यसमवेतानां तु द्रव्येण सह स्वयमेव प्राप्तिर्भवती-त्यन्यदेतदित्याशङ्कते- अथेति । परिहरति- एव मिति, यदि गुणमात्रस्य विषयत्वं नास्ति तदा नीलद्रव्यज्ञानविषयत्वं तद्रूपस्यापि न स्यात्, न चैवं युक्तं रूपपुरस्कारेणैव चाक्षुषज्ञानसम्भवाद्रूपस्यापि तद्विषयत्वमावश्यकमेवान्य-था रूपाज्ञाने रूपिज्ञानं न स्यादेव । दोषान्तरमाह- किं चेति, आन्तरस्य सुखस्योपादानादिव्यवहारो न सम्भवतीति तस्य विषयत्वं न स्यात् । किं वा- सुखार्थ एव सर्वो व्यवहारो भवतीति यत्र जलपानादिजन्यं सुखमनुभूतं तत्र सुखस्यानुभूतत्वात्=जातत्वात् तदर्थो व्यवहारोपि न सम्भवतीति जल-विषयकोपादानादिव्यवहाराभावाज्जलज्ञाने सत्यपि जलस्य तद्विषयत्वं न स्यात्, तदाह- न चेति, उक्तव्यवहारस्यानुभूते सुखे सम्भावनापि नास्ति यतः=ये-न सुखप्रतिबद्धव्यवहारानुगुण्यं तद्वित्तेः स्यात् ? सुखप्रतिबद्धः=सुखप्रयो-ज्यः=सुखार्थो यो व्यवहारो जलादीनामुपादानादिस्तदानुगुण्यम्=तद्व्यव-हारानुकूल्यम्=तद्व्यवहारप्रयोजकत्वं तद्वित्तेः=जलादिज्ञानस्य स्यात् ? ।

अयं भावः- यत्र हि जलाद्युपादानादिर्व्यवहारो भवति तत्र जलादिज्ञान-स्योपादानादिव्यवहारप्रयोजकत्वं भवत्येव जलादिज्ञाने जाते एव तदुपादाना-दिव्यवहारस्य सम्भवात्, यदि चानुभूतेपि सुखे जलादिज्ञानस्य सुखप्रतिबद्ध-

न कश्चिदुपादानादिव्यवहारोस्तीति कथं तस्य विषयत्वम् ?।

ननु नोपादानमेव व्यवहारः शब्दप्रयोगस्यापि व्यवहारत्वात्, अतो नीलज्ञाननिबन्धनशब्दप्रयोगगोचरत्वान्नीलिम्नो विषयत्वम्, एवं सुखादेरपि । एवमप्युपादानस्यापि व्यवहारत्वात्तद्विषयभूतानां परमाणूनां विषयत्वापत्तिस्तदवस्थैव ।

किं च न शब्दप्रयोगवशेन ज्ञानस्य विषयनिरूपणं

---

व्यवहार(ग्रहणादि)प्रयोजकत्वं स्यात् तदा तादृशप्रयोजकसत्त्वात् तत्प्रयुक्तत्वाद्वा व्यवहारोपि स्यात् तथा चोपादानादिव्यवहारविषयत्वाज्जलादीनां जलादिज्ञानविषयत्वं स्यादपि, नैवं सम्भवति, तथा चानुभूते सुखे जलादिज्ञानस्य सुखप्रतिबद्धव्यवहारप्रयोजकत्वाभावेनोपादानादिव्यवहाराभावाज्जलादीनां विषयत्वं तत्र न स्यादित्यव्याप्तिः। अत्र च " सुखव्यवहारानुगुण्यम् " इत्यपि पाठान्तरम् । तथा घ्राणगृहीते गन्धे कथमप्युपादानादिव्यवहारो न सम्भवतीति तस्य=गन्धस्य विषयत्वं न स्यादित्याह– तथेति ।

ननु नोपादानमेव व्यवहारोस्ति भक्षणपानाघ्राणदर्शनादीनामपि व्यवहारत्वादिति यत्रोपादानं न संभवति तत्रान्यः कोपि व्यवहारः सम्भविष्यति शब्दप्रयोगव्यवहारस्तु सर्वत्रैव सम्भवतीति गन्धादावऽनुभूतेपि सुखे च 'शोभनोयं गन्धः सुन्दरं नीलं पारमार्थिकं सुखम्' इत्यादिशब्दप्रयोगलक्षणव्यवहारविषयत्वादेव विषयत्वं भविष्यतीत्याशङ्कते– नन्विति । नीलज्ञाननिबन्धनः=नीलज्ञानहेतुको यः शब्दप्रयोगस्तद्गोचरत्वात् । परिहरति–एवमपीति, उपादानमपि व्यवहार एवेति द्रव्योपादानव्यवहारविषयत्वात्तत्परमाणूनामपि द्रव्यज्ञानविषयत्वं स्यादित्यऽतिव्याप्तिः ।

परमाणूनां विषयत्वेष्टापत्त्या दोषान्तरमाह– किं चेति । यथा शब्दप्रयोगो भवति विषयस्तथैव भवतीति नियमो नास्त्यन्यथा घटे सति पटोयमित्युक्ते पटाभावेपि पट उपलभ्येत, किं तु यथा ज्ञानं भवति तथा शब्दप्रयोगो भवतीत्याह–विपरीतेति । इदमेव वैपरीत्यं यद् यथा विषयो वा ज्ञानं वा भवति तथा शब्दप्रयोगो भवति न तु शब्दप्रयोगानुकूल्येन विषयः ।

**शक्यं विपरीतत्वात्। अर्थसम्बद्धशब्दप्रयोगो हि लक्षणं न शब्दमात्रप्रयोगः, प्रत्याय्यप्रत्यायकत्वमेव हि शब्दार्थयोः सम्बन्धोऽतो यदर्थविषयं ज्ञानं शब्दो जनयति स तस्य वाच्यः, अतो ज्ञानविषयनिरूपणपूर्वकं शब्दविषयनिरूपणं तदधीने तु तस्मिन् दुरुत्तरमितरेतराश्रयमापद्येत।**

---

अर्थेति। अर्थसंबद्धः=विषयस्वरूपप्रतिपादको यः शब्दप्रयोगः स एव तस्य विषयस्य लक्षणम्=प्रतिपादको भवति न तु शब्दमात्रप्रयोगः, अन्यथा कम्बुग्रीवादिमानिति शब्दः पटस्यापि लक्षणं स्यात्। लक्ष्यश्च विषयः, तयोर्लक्ष्यलक्षणभूतयोर्विषयशब्दयोः प्रत्याय्यप्रत्यायकत्वं संबन्ध इति यद्विषयविषयकं ज्ञानं शब्दो जनयति स विषयस्तस्य शब्दस्य वाच्यो भवति यथा कम्बुग्रीवादिमानिति शब्दस्य घटो वाच्यो घटविषयकज्ञानजनकत्वात्। उपसंहरति—अत इति, यथा ज्ञाने विषयो भासते तथैव शब्देन प्रतिपाद्यते। किं वा यथा ज्ञानेन विषयो निरूप्यते तथैव शब्देनापि निरूप्यते। यद्विषयनिरूपकं प्रत्यक्षादिज्ञानं भवति तद्विषयनिरूपक एव शब्दो भवतीति यावत्। तथा च न शब्दप्रयोगवशेन(शब्दप्रयोगाधीनम्)ज्ञानस्य विषयनिरूपणं संभवतीति भावः। विपक्षे बाधकमाह—तदधीनेति। तस्मिन्=ज्ञानविषयनिरूपणे तदधीने=शब्दप्रयोगाधीने सति परस्पराश्रयो दोषः स्यात्। यदि शब्दप्रयोगाधीनं स्याद्विषयनिरूपणं तदा शब्दप्रयोगाधीनं विषयनिरूपणं ज्ञानेन विषयनिरूपणाधीनश्च शब्दप्रयोग इतीतरेतराश्रयः स्यादेव। तस्माज्ज्ञानविषयनिरूपणपूर्वकं शब्दविषयनिरूपणमिति मन्तव्यम्।

अयं भावः—यतः प्रत्याय्यप्रत्यायकत्वमेव शब्दार्थयोः संबन्ध इत्यर्थसंबद्ध एव शब्दप्रयोगो लक्षणम्=तद्विषयप्रतिपादको न तु शब्दमात्रप्रयोगोऽतो ज्ञानविषयनिरूपणपूर्वकमेव शब्दविषणनिरूपणमिति नियमः प्राप्त इत्युक्तमर्थसंबद्धेति। यदि शब्दार्थयोः प्रत्याय्यप्रत्यायकत्वं संबन्धो न स्यात्तदाऽर्थसंबद्धशब्दप्रयोग एव लक्षणमिति नियमो न स्यादपि, एतन्नियमाभावे च यः कोपि शब्दप्रयोगो नीलादीनां लक्षणं स्यादिति तादृशयत्किंचिच्छब्दप्रयोगगोचरत्वान्नीलादीनां विषयत्वं स्यादपि न चैवमस्ति। अर्थसंबद्धशब्दप्रयो-

ज्ञानजन्यातिशयभाक्त्वमेव ग्राह्यत्वमिति चेत् ?, नासावुपलभ्यते, न च संभवति भूतभविष्यतोरित्युक्तम्।

अथ यत्संप्रयुक्तेन्द्रियजं ज्ञानं यद्व्याप्तलिङ्गजं वा स विषय इति मतम् ? । ततो नेत्रजन्यस्य नीलज्ञानस्य स्पर्शो विषयः स्यात्, अस्ति च स्पर्शस्यापि रूपस्येव संयुक्तसमवायलक्षणः सम्बन्धो नेत्रेण । तथा गन्धलिङ्गस्य रसानुमानस्य रूपमपि विषयः स्यात्, रूपे-

---

गस्यैव लक्षणत्वनियमे च– अर्थसंबद्धशब्दप्रयोगस्तु ज्ञानविषयनिरूपणपूर्वक एव भवतीति ज्ञानेन विषयनिरूपणपूर्वकमेव शब्देन विषयनिरूपणमिति प्राप्तम्, तथा च यदि शब्दप्रयोगवशेन ज्ञानविषयनिरूपणं स्यात्तदा स्यादपि नीलादेः शब्दप्रयोगगोचरत्वाद्विषयत्वम्, न चैवमस्तीत्युक्तमेव । किं च ज्ञानविषयनिरूपणपूर्वकशब्दप्रयोगगोचरत्वं विषयत्वमित्यपि वदत आत्माश्रयत्वं स्यादेव विषयत्वलक्षणे एव विषयत्वप्रवेशात् । शब्दप्रयोगाधीने च ज्ञानविषयनिरूपणे इतरेतराश्रयो दोष इति पूर्वपक्षी दुरुत्तरमितरेतराश्रयमापद्येत=प्राप्नुयादित्यर्थः।

ननु यत्र ज्ञानेन जन्योऽतिशयो भवति तदेव ग्राह्यं यथा घटज्ञाने जाते घटे कोऽप्यतिशयो भवति न स घटज्ञानकाले पटे भवतीति शङ्कते–ज्ञानजन्येति । ग्राह्यत्वम्=विषयत्वम् । परिहरति–नासाविति । असौ=ज्ञानजन्योतिशयो नोपलभ्यते । दोषान्तरमाह– न चेति । एवं हि भूतभविष्यतोर्विषयत्वं न स्यात् तत्र ज्ञानजन्यातिशयाऽसंभवात् । भूतभविष्यतोरेव ज्ञानकालेऽभावात् क्व ज्ञानजन्यातिशयः स्यादिति भावः । एतच्च (१७७पृ) पूर्वमेवोक्तमित्याह–इत्युक्तमिति।

ननु येन सहेन्द्रियसंयोगे सति ज्ञानमुत्पद्यते स विषयो यथा घटेनेन्द्रियसंयोगे घटज्ञानं जायत इति घटो विषयः तथा यद्व्याप्तेन लिङ्गेन ज्ञानमुत्पद्यते स विषयो यथा वन्हिव्याप्तधूमेन वन्हिज्ञानं जायते इति वन्हिर्विषय इत्याशङ्कते–अथेति । परिहरति–तत इति, यथा नेत्रेण रूपस्य संयुक्तसमवायलक्षणः सम्बन्धोस्ति तथा स्पर्शस्याप्यस्त्येवेति नेत्रजन्यस्य नीलज्ञानस्य स्पर्शोपि विषयः स्यात् । यद्व्याप्तेत्यत्र दोषमाह– तथेति, यत्र हि गन्धेन रसानुमानं क्रियते तत्र यथा गन्धो रसव्याप्यस्तथा रूपव्याप्योपि भवतीति रसानुमानस्य रूपमपि विषयः स्यात् रूपव्याप्यगन्धजन्यत्वात् । आम्रस्य मधुरेण ग-

णापि रसेनेव तस्य व्याप्तत्वात् । तस्माज्ज्ञानात्मकत्वमेव नीलादेर्विषयलक्षणमिति सिद्धं तादात्म्यम् ।

सहोपलम्भनियमोपि ज्ञानार्थयोरनियमव्याप्तं भेदं व्यापकविरुद्धोपलब्ध्या प्रतिषेधन्नऽभेदमुपस्थापयति, भिन्नानां घटपटादीनामनियतसहोपलम्भत्वात् । न चाऽसिद्धो वेद्योपलम्भसमये वित्तेरुपलम्भ इति वा-

---

न्धेन माधुर्यानुमानमिव रक्तपीतरूपानुमानमपि सम्भवत्येवेति भावः । तस्य=गन्धस्य । उपसंहरति–तस्मादिति । उक्तलक्षणेष्वव्याप्त्यतिव्याप्त्यादिदोषाणां सत्त्वात् ज्ञानात्मकत्वमेव नीलदेर्विषयलक्षणम्=विषयत्वम् । नीलादेर्यद्विषयत्वं तज्ज्ञानात्मकत्वम्=ज्ञानाकारत्वमेवेति ज्ञानविषययोस्तादात्म्यम्=ऐक्यं सिद्धं किं वा विषयस्य ज्ञानतादात्म्यं सिद्धमिति योगाचारमतम् ।

योगाचारो ज्ञानार्थयोरभेदमेवोपपादयति–सहोपलम्भेति, ज्ञानतद्विषययोः कालभेदेनोपलब्धिर्न भवति किं तु ज्ञानकाल एव तद्विषयोप्युपलभ्यत इति ज्ञानार्थयोः सहोपलम्भनियमः, स ज्ञानार्थयोरनियमव्याप्तं भेदं व्यापकविरुद्धोपलब्ध्या प्रतिषेधन्नऽभेदमुपस्थापयतीत्यन्वयः । अयमर्थः– यत्र यत्र भेदस्तत्र तत्र सहोपलम्भाऽनियमोस्त्येव यथा देवदत्तयज्ञदत्तयोरित्यनियमव्याप्तः=सहोपलम्भानियमव्याप्तो भेदस्तम् व्यापकविरुद्धोपलब्ध्या=भेदव्यापकात् सहोपलम्भाऽनियमाद् विरुद्धस्य स्वात्मन एव सहोपलम्भनियमस्य वोपलब्ध्याऽनियमव्याप्तं भेदं प्रतिषेधन् सहोपलम्भनियमो ज्ञानार्थयोरभेदमुपस्थापयति। यथा ह्रदो वन्हिमान् धूमादित्यत्र व्यापकविरुद्धस्य जलस्योपलब्ध्या-वन्हिबाधेन धूमाभावोपि प्राप्नोति तथात्र व्यापकविरुद्धस्योपलब्ध्या सहोपलम्भानियमबाधेन ज्ञानार्थयोर्भेदाभावः= अभेदः प्राप्नोतीति यावत् । भिन्नानां तु घटपटादीनां नियमेन सहोपलम्भो न भवतीतिविपक्षेबाधकमाह–भिन्नानामिति । ज्ञानार्थयोस्तु नियमेन सहोपलम्भो भवतीति ज्ञानार्थयोरैक्यमेव प्राप्तम् । सहोपलम्भत्वादित्यत्र सहोपलम्भादिति युक्तः पाठः । किं वा अनियतः सहोपलम्भो येषां तेऽनियतसहोपलम्भास्तेषां भावस्तत्त्वं तस्मादित्यर्थः ।

ननु प्रथमम‌ऽयं घट इति घटज्ञानं भवति तदनन्तरं हि ज्ञातो घटः किं वा घटज्ञानवानहमिति घटज्ञानस्य ज्ञानं भवतीति विषयज्ञानसमये वित्तेर्ज्ञानस्य

व्यम्, उत्तरकालं सहैव ज्ञानेन विषयस्मरणदर्शनात्–'ज्ञातो घटः' इति। न चाननुभूतस्य स्मरणं सम्भवति, तस्मादुत्पत्तिवेलायामेव ज्ञानस्य प्रकाशनमङ्गीकर्तव्यम्। न च निराकारस्योपलब्धिरस्तीति सिद्धं ज्ञानात्मकत्वं नीलादेः। अवश्यं च स्वप्नादिबोधे बन्ध्यासुतो याति अङ्गुल्यग्रे हस्तियूथशतमित्यादौ चात्यन्तासम्भवाद्बाह्यस्य ज्ञानात्मकत्वमेवाऽऽकाराणामभ्युपगन्तव्यम्, तथाऽन्यत्राप्यस्तु, तस्मान्न बाह्यमस्ति। इति प्राप्ते–

---

ज्ञानं न सम्भवतीति सहोपलम्भ इति हेतुरसिद्धः पक्षे नास्तीति साध्यासाधक इत्याशङ्क्याह– न चेति। परिहारहेतुमाह–उत्तरेति, घटज्ञानोत्तरकाले 'ज्ञातो घटः' इत्येवं ज्ञानेन सहैव विषयस्य स्मरणं भवति, अननुभूतस्य च स्मरणं न संभवति भवति च स्मरणं ज्ञानविषययोरेकदैव 'ज्ञातो घटः' इति, तस्मादयं घट इत्यत्र ज्ञानघटयोरुभयोरेवानुभवो भवतीति स्वीकार्यं तथा च प्राप्तो ज्ञानार्थयोः सहोपलम्भ इति नाऽसिद्ध इत्याह–तस्मादिति। उत्पत्तिवेलायां विषयप्रकाशसमये एव। उपसंहरति– न चेति, निराकारस्योपलब्ध्यऽसंभवादुपलभ्यमानस्य ज्ञानस्य साकारताऽवश्यं स्वीकार्या, ज्ञानसाकारतायां स्वीकृतायां च प्रकाशमानो घटाद्याकारो ज्ञानस्यैवेति ज्ञानाकार एव विषयो भासते बाह्यं तु नास्त्येवेति नीलादेर्ज्ञानात्मकत्वं सिद्धम्। उक्ते दृष्टान्तमाह–अवश्यमित्यादिना, स्वप्नज्ञाने बाह्यं विनापि विषयः प्रकाशत इति विषयस्य ज्ञानाकारतैव वक्तव्या, बन्ध्यासुतो यातीत्यादावपि बन्ध्यासुतस्य बाह्यस्याभावाज्ज्ञाने प्रकाशमानस्य ज्ञानाकारतैव वक्तव्या, 'अङ्गुल्यग्रे हस्तियूथशतमास्ते' इत्यत्र अङ्गुल्यग्रे हस्तियूथशतासनस्य च बाह्यस्यासंभवाज्ज्ञानाकारतैव वक्तव्या, तथान्यत्रापि घटोयमित्यादौ प्रकाशमानस्य घटादेर्ज्ञानाकारतैव युक्तेत्यर्थः। बाह्यस्याऽत्यन्तासंभवादाकाराणाम्=प्रकाशमानानां विषयाणां ज्ञानात्मकत्वमभ्युपगन्तव्यमित्यन्वयः। तथा=ज्ञानात्मकत्वम्। अन्यत्र=जाग्रत्प्रत्ययेष्वप्यस्तु। तस्माद्बाह्यं नास्त्येवेत्युपसंहरति– तस्मान्नेति।

अभिधीयते-

नीलादिचित्तेरात्मांशग्राहित्वं केन गृह्यते ?।
नात्मना नान्यसंवित्त्या सापि ह्यात्मावसायिनी ॥
अज्ञानस्थिरचित्रत्वबाह्यत्वादेरनात्मनः।
असतो वा सतो वापि कथं विज्ञानवेद्यता ?॥

विज्ञानवादी हि सर्वमेव विज्ञानमात्मानमेव गृह्णाति नान्यत्, आत्मनैव च गृह्यते नान्येन, तस्याप्यन्यस्य स्वात्मपर्यवसायित्वादिति वदति, यथोक्तम्—

---

इत्येवं योगाचारमुखेन सौत्रान्तिकमतं निराकृत्य तस्य योगाचारस्य मतं स्वयं निराकर्तुमारभते-अभिधीयते इत्यादिना। वक्ष्यमाणार्थं संक्षेपेण पद्याभ्यां संगृह्णाति- नीलेति। नीलादिज्ञानं न बाह्यं गृह्णाति किं तु स्वात्मानमेव बाह्यतया गृह्णातीति विषयः केन ज्ञानेन गृह्यत इति बौद्धं प्रति प्रश्नः। नीलज्ञानेन त्वऽहं स्वात्मानं बाह्यतया गृह्णामीति न निवेद्यते तस्य स्वात्ममात्रग्राहकत्वादित्याह- नात्मनेति। न चान्येन केनापि ज्ञानेनोक्तविषयो निवेद्यते तस्यापि ज्ञानत्वेन स्वात्ममात्रग्राहकत्वापातात्, स्वात्मभिन्नग्राहकत्वे तु बाह्यग्राहकत्वमपि प्रसज्येतेत्याह-नान्येति। किं चा ऽज्ञातो घट इत्यादौ ज्ञानविषयीभूतस्या ऽज्ञानस्य ज्ञानाकारता न संभवति परस्परं विरोधात्। तथा तदेवेदमित्यादौ ज्ञानविषयीभूतस्य स्थायित्वस्य ज्ञानाकारता न संभवति ज्ञानस्य क्षणिकत्वेन स्थायित्वविरोधात्। समूहालम्बनज्ञाने चित्रतैव विषय इति नानाकारतारूपायाश्चित्रताया ज्ञानकारता न संभवति ज्ञानस्यैकाकारत्वेन विरोधात्। एवं बाह्यमस्तीत्यत्र बाह्यत्वं विषयस्तस्यापि ज्ञानाकरता न संभवति ज्ञानस्यान्तरत्वेन विरोधात्। तच्च बाह्यत्वादिकमसद्वा स्यात्सद्वा स्यात्तथापि तव मते ज्ञानवेद्यता न संभवति ज्ञानाकारत्वाऽसंभवादित्यर्थः।

उक्तं विज्ञानवादमतिसंक्षेपेणानुवदति-विज्ञानवादीति। नान्यदिति कर्मपदम्। अन्येन ज्ञानेनान्यस्य ज्ञानस्य ग्रहणमेव न संभवति तस्याप्यन्यस्य ज्ञानस्य स्वात्मपर्यवसायित्वात्=स्वात्ममात्रग्राहकत्वात्। अत्र बौद्धोक्तं प्रमाणमाह-नान्येति। ज्ञानस्यान्योऽनुभाव्यो नास्ति किं तु स्वात्मैव तस्यानुभाव्यः=ग्राह्यः। तथा तस्याः=बुद्धेरन्योनुभवोपि नास्ति किं तु स्वात्मनैव प्र-

"नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः।
ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशते॥" इति।

तमेवं वादिनं प्रत्युच्यते– नीलज्ञानस्यात्मावसायित्वं नीलस्य च विज्ञानाकारत्वं केन ज्ञानेन गृह्यते?। न तावदात्मनैव– न हि नीलमिदमित्यत्र स्वात्मपर्यवसायित्वं नीलाकारस्य च ज्ञानात्मकत्वं प्रकाशते नीलमात्रप्रकाशनात्। संवेद्यत्वग्राह्यलक्षणायोगसहोपलम्भनियमादिलिङ्गनिमित्तकेन त्वनुमानेनैव तदवगन्तव्यम्, तदपि त्वनुमानमाऽऽत्मांशग्राहि चेत्? न ज्ञानान्तरस्य स्वात्मपर्यवसायितां ग्रहीतुमलम्।

अथानुमानं न स्वात्मांशग्राहि? ततो नीलादिविज्ञा-

---

काशते। तथा च ग्राह्यग्राहकयोरन्ययोरभावात् सैव=बुद्धिरेव स्वात्मना स्वयं प्रकाशते घटाद्याकारेणेति बाह्यो नास्त्येवेत्यर्थः।

विस्तरेण निराकर्तुमारभते– तमेवमित्यादिना। आत्मावसायित्वम्=स्वात्मग्राहकत्वम्। स्पष्टमन्यत्। नीलज्ञाने नीलस्वरूपमात्रं प्रकाशते न तु नीलस्य ज्ञानाकारत्वं ज्ञानस्य च स्वात्मग्राहकत्वमपीत्यर्थः। यच्च संवेद्यत्वादिहेतुभिर्विषयस्य ज्ञानाकारत्वमुक्तं तत्पराचष्टे–संवेद्येति। "वेद्यत्वादपि नीलादेर्ज्ञानाकारत्वम्" इत्युक्तं तदाह–संवेद्यत्वेति। तथा "अर्थान्तरस्य च ग्राह्यलक्षणं नहि युज्यते" इत्यादिना ग्राह्यत्वस्याऽयोगः=बाह्यस्य ग्राह्यत्वं न संभवतीत्याद्युक्तं तदाह–ग्राह्यलक्षणायोग इति, सहोपलम्भनियमादपि विषयस्य ज्ञानाकारत्वमुक्तम्–"सहोपलम्भनियमोपि" इति तदाह–सहेति, संवेद्यत्वादिलिङ्गनिमित्तकेनानुमानेनैव तत्=विषयस्य ज्ञानाकारत्वंज्ञानस्यात्मावसायित्वं चावगन्तव्यं यथा–विषयो ज्ञानाभिन्नः संवेद्यत्वात्सहोपलम्भनियमाज्ज्ञानभिन्नस्य बाह्यस्य ग्राह्यत्वासंभवादिति। तत्र तदनुमानमपि यदि स्वात्मग्राहकमेव तदा तेन ज्ञानान्तरस्य स्वात्मग्राहकत्वं कथं गृहीतं स्यात्? अनुमानस्यापि ज्ञानत्वेन स्वात्ममात्रग्राहकत्वादित्याह–तदपीति। नेति–न ग्रहीतुमलमित्यन्वयः।

ननु नानुमानं स्वात्मग्राहकं किं तु ज्ञानान्तरस्य स्वात्मग्राहकताग्राहकमेवेति सिद्धमनुमानेन नीलादिज्ञानस्य स्वात्मग्राहकत्वमित्याशङ्कते–अथेति। उत्तरमा-

नैः किमपराद्धम् ? येन तानीदङ्कारास्पदीभूतबाह्य-नीलादिप्रकाशकत्वेनाऽवभासमानान्यपि स्वात्मन्येवाऽवरुध्यन्ते। न हि तदेतद्वक्तुं शक्यम्– नाऽनात्मनः संवेदनं ग्राह्यलक्षणं सहोपलम्भनियमो वा सम्भवतीति। सर्वेषामेवैतस्मिन्नेव भवदीयेऽनुमाने व्यभिचारात्। तत् खल्वात्मानमतिक्रम्य नीलादिवित्तेर्नीलाद्यात्मभूतस्वात्मांशावसायितां गृह्णातीत्यभ्युपगन्तव्यम्। तस्यापि स्वात्मपर्यवसायित्वे नीलबुद्धेस्तद्वशेन स्वात्मांशग्राहिता न सिध्येत्। आह च—

---

ह– तत इति, नीलादिज्ञानमपि ज्ञानमेवानुमानमपि ज्ञानमेवेति तत्रानुमानं न स्वात्मग्राहकं नीलादिज्ञानं तु स्वात्ममात्रग्राहकमिति वैषम्यं नोपपद्यते इत्युपालम्भः। तानि=नीलादिज्ञानानि। नीलमिदमिति–इदङ्कारास्पदता। स्वात्मन्येव=नीलादिज्ञानं स्वात्ममात्रग्राहकमित्येवं यत् स्वात्मग्राहकत्वेऽवरुध्यन्ते तन्न युक्तमिति भावः। नहीति–यदा ह्युक्तानुमानस्य स्वात्मांशग्राहितां विनापि नीदिज्ञानकर्तृकस्वात्मांशग्राहकताग्राहकत्वमुच्यते तदा 'अनात्मनः=बाह्यस्य संवेदनम्=ज्ञानं तस्य च बाह्यस्य ग्राह्यलक्षणम्=ग्राह्यत्वं न सम्भवति, तथा सहोपलम्भनियमो न सम्भवति' इति वक्तुं न शक्यते, अनात्मनः संवेदनाभावस्य सहोपलम्भनियमाभावस्य ग्राह्यत्वाभावस्य चैतस्मिन्नेवानुमाने व्यभिचारादित्याह– सर्वेषामिति। अयं भावः–उक्तानुमाने हि नीलादिज्ञानकर्तृकस्वात्मग्राहकत्वस्यानात्मन एव ग्राहकत्वमस्ति, इत्यनात्मनोपि संवेद्यत्वं सिद्धम्, अस्ति च तत्र सहोपलम्भनियमोपि तथाऽनात्मनो नीलादिज्ञानकर्तृकस्वात्मग्राहकत्वस्य ग्राह्यत्वमपीति त्वदुक्तानां नियमानामुक्तानुमाने एव व्यभिचारः प्राप्तः। उक्तानुमानस्यानात्मग्राहकत्वमेवाह–तत् खल्विति। तत्=अनुमानज्ञानम्, आत्मानम्=स्वरूपं स्वात्मांशग्राहितामतिक्रम्य=परित्यज्याऽनात्मानं नीलादिज्ञाननिष्ठस्वात्मग्राहकत्वं गृह्णाति। विपक्षे बाधकमाह– तस्यापीति, यद्युक्तानुमानमपि स्वात्मग्राहकमेव भवेत्तदा तस्य नीलादिज्ञाननिष्ठस्वात्मग्राहकताग्राहकत्वाभावात् तद्वशेन=तेनानुमानेन नीलादिज्ञानानां स्वात्मांशग्राहिता=स्वात्मग्राहकता न सिध्येत्।

" चैत्रादिप्रत्ययानां च निरालम्बनता यदि ।
धर्मभूता न गृह्येत साधनोत्थितया धिया ॥
ततो विषयनानात्वात् प्रतियोग्यनिराकृता ।
रूपात् सालम्बनप्राप्तिः सती केन निवार्यते ॥" इति ।

किं चाऽज्ञानमित्यस्य ज्ञानस्य ज्ञानाभावो ग्राह्यो न च ज्ञानाभावस्य ज्ञानात्मता सम्भवति अत्यन्तविपरीतत्वात् । तथा– तदेवेदमिति ज्ञाने पूर्वापरकाला-

---

अत्र श्रीकुमारिलभट्टपादं प्रमाणयति–चैत्रादीति–यदि साधनोत्थितया धिया=उक्तानुमानज्ञानेन चैत्रोयमित्यादिज्ञानानां धर्मभूता निरालम्बनता=स्वात्मग्राहकता न गृह्यते स्वात्ममात्रग्राहकत्वात्, ततः=तदा विषयनानात्वाद्रूपात् प्रतियोग्यनिराकृता सालम्बनप्राप्तिः=सालम्बनताप्राप्तिः सती केन निवार्यते ? न केनापि निवारयितुं शक्यते, नीलादिज्ञानानां तु स्वात्मैव विषयोऽनुमानस्य च नीलादिज्ञाननिष्ठा स्वात्मग्राहकता विषय इति विषयनानात्वरूपाद्धेतोः प्रतियोगिना=सालम्बनत्वविरोधिना निरालम्बनत्वेनाऽनिराकृता सती=स्वरसप्राप्ता प्रत्ययानां सालम्बनता बाह्यविषयकता केन वार्येत ? । किं वा यदि ज्ञानं स्वात्मग्राहकं सन्निरालम्बनमेव स्यात्तदा सदैकरूपमेव भवेत् न तु घटपटादिरूपेण विषयाणां नानात्वं भासेत भासते च विषयाणां नानात्वमिति विषयनानात्वरूपाद्धेतोः । उक्ता चानयोः पद्ययोः पार्थसारथिनैव व्याख्या–"किं च भवदीयसाधनोत्थितानुमानबुद्धिरियं, साप्यात्मांशपर्यवसायिन्येवेति तया प्रत्ययान्तराणां धर्मतया निरालम्बनत्वं न गृहीतमिति प्रतियोगिभूतेन निरालम्बनत्वेनाऽनिराकृता सती स्वरसप्राप्ता सालम्बनता न केन चिद् वारिता स्यादित्याह–चैत्रेति द्वयेन" इति । यद्युक्तानुमानेन निरालम्बनता गृहीता स्यात्तदा तया ज्ञानस्य सालम्बनता निराकृता=निषिद्धा स्यादपि नैवमस्तीति सिद्धं ज्ञानानां सालम्बनत्वम्. अगृहीतायाश्च निरालम्बनतायाः सालम्बनतानिराकर्तृत्वासम्भवादिति भावः ।

स्वोक्तमऽज्ञानेत्यादिद्वितीयपद्यं व्याचष्टे– किं चेति, अज्ञानमस्तीति ज्ञानस्याऽज्ञानमेव विषयो न च ज्ञानाभावरूपस्याज्ञानस्य ज्ञानाकारता सम्भवति विरोधादित्यर्थः । स्थिरपदं व्याचष्टे–तथेति । तदेवेदमिति ज्ञानेन हि

ऽवस्थायित्वं प्रकाशते, न च क्षणिकस्य ज्ञानस्य स्थायित्वमात्मा संभवति । तथा– चित्रबुद्धौ नानाऽऽकाराणामवभासः, न चैकस्य ज्ञानस्य नानाकारता सम्भवति ।

नन्वर्थस्यापि स्थायित्वमेकस्य च नानाकारत्वं न सम्भवत्येव ?, सम्भवतु वा मा वा, ज्ञानात्मता तावन्न सम्भवति । तदसम्भवे चाऽर्थाकारौ वा स्थायित्वचित्रत्वे स्यातां, अत्यन्तासद्रूपे वा, द्वेधापि ज्ञानाऽनात्मकयोर्ज्ञानेन ग्रहणात् सिद्धं नः समीहितम् ।

---

संनिकृष्टस्य वस्तुनः पूर्वापरकालस्थायित्वं विषयत्वेन गृह्यते न च स्थायित्वस्य ज्ञानाकारता सम्भवति ज्ञानस्य क्षणिकत्वेन स्थायित्वासम्भवात् । आत्मा=स्वरूपम् । चित्रेति पदं व्याचष्टे–तथेति, चित्रबुद्धौ=समूहालम्बनज्ञाने नानाकाराणाम्=घटपटादीनां प्रकाशो भवति न चैकस्य ज्ञानस्य नानाकारता सम्भवति । तस्माज्ज्ञानाज्ज्ञानविषयो भिन्न एवेति प्राप्तम् ।

नन्वर्थस्यापि क्षणिकत्वेन स्थायित्वं न सम्भवति एकत्वाच्च नानाकारता न सम्भवतीति यथा क्षणिकेपि बाह्येऽविद्यावशात् स्थायित्वारोपो नानाकारतारोपश्च भवति तथा ज्ञाने एव क्षणिके स्थायित्वारोपो नानाकारत्वारोपश्च किं न स्यादिति शङ्कते– नन्विति । उत्तरमाह मीमांसकः–सम्भवत्विति, बाह्यार्थस्य स्थायित्वं नानाकारत्वं च सम्भवतु वा मा वा सम्भवतु, किं तु स्थायित्वनानाकारत्वयोर्ज्ञानाकारता=ज्ञानतादात्म्यं तु नैव सम्भवति, ज्ञाने क्षणिकत्वस्य निश्चयाद् बाह्ये च क्षणिकत्वस्य सन्देहेन निश्चयाभावात् । तदसम्भवे=स्थायित्वनानाकारत्वयोर्ज्ञानाकारत्वासम्भवे च स्थायित्वं चित्रत्वं चार्थस्यैवाकाराविति परिशेषात्प्राप्तमित्याह–तदसम्भवेति । नन्वऽसद्रूपयोर्हि स्थायित्वचित्रत्वयोर्ज्ञानेन ग्रहणं भवति तत्रासद्रूपयोस्तयोः कथं बाह्यधर्मत्वं स्यादित्याशङ्क्याह–अत्यन्तेति । स्थायित्वचित्रत्वे सद्रूपे वा स्यातामत्यन्ताऽसद्रूपे वा स्यातां द्वेधापि=सद्रूपत्वेप्यसद्रूपत्वेपि च ज्ञानाऽनात्मकयोर्हि स्थायित्वचित्रत्वयोर्ज्ञानेन ग्रहणाज्ज्ञानाकारत्वं नैव सम्भवति, प्रकाशमानयोश्च तयोः किं चिदाकारत्वस्वीकारस्यावश्यकत्वाद् बाह्याकारत्वमेव परिशेषात्प्राप्तमिति नः समीहितं सिद्धमेवेत्यर्थः ।

तथा बाह्यं नास्तीति निषेधयताऽवश्यं बाह्यं बुद्धावाऽऽरोपयितव्यम्, ज्ञानातिरिक्तं च बाह्यम्। न च ज्ञानाकारता तस्य सम्भवति, तस्मादेवमादिसिद्ध्यर्थमवश्यं विज्ञानानामऽनात्मग्राहित्वं बलादभ्युपगन्तव्यम्, भवदीयानुमानार्थं च। तदेवं संविद्बलसिद्धस्य बाह्यस्य सम्भवे वेद्यत्वादिभिर्नापन्हवः सम्भवति, बाह्यस्यैव हि तदा संवेद्यत्वं दर्शनबलादभ्युपगम्यते। प्रत्युतात्मन एव संवेद्यत्वं न सम्भवति–नीलादिवि-

---

बाह्येतिपदं व्याचष्टे– तथेति, प्राप्तस्य हि प्रतिषेधो भवतीति न्यायेन बाह्यं नास्तीति बाह्यं निषेधयता त्वया बाह्यनिषेधाय बाह्यमवश्यं बुद्धावारोपयितव्यम्=ज्ञानेन ज्ञातव्यम्। बाह्यं च ज्ञानातिरिक्तमेवेति वक्तव्यमन्यथा तत्प्रतिषेधायोगात्। ज्ञानातिरिक्तस्य च ज्ञानाकारत्वं न सम्भवतीति बाह्यप्रतिषेध एव तत्र मते नोपपद्यते। ज्ञानाभिन्नस्य च बाह्यस्य प्रतिषेधे ज्ञानप्रतिषेध एव कृतः स्यात्। बाह्यप्रतिषेधाय तत्स्वरूपस्वीकारेपि सिद्धमेव बाह्यमित्युभयतः पाशारज्जुरित्यर्थः। तस्य=ज्ञानातिरिक्तस्य बाह्यस्य। उपसंहरति–तस्मादिति। एवमादिसिद्ध्यर्थम्=स्थायित्वचित्रत्वादीनां ज्ञानविषयतासिद्ध्यर्थमवश्यं ज्ञानस्याऽनात्मग्राहित्वम्=स्वभिन्नबाह्यनीलादिपदार्थग्राहकत्वमभ्युपगन्तव्यम्। भवदीयेति–यदि ज्ञानस्य स्वभिन्नग्राहकत्वं न स्यात्तदा भवदीयानुमानस्यापि स्वात्मग्राहकत्वेन नीलादिज्ञानकर्तृकस्वात्मग्राहकताग्राहकत्वं न स्यादेवेति भवदीयानुमानार्थमपि ज्ञानस्य स्वभिन्नबाह्यग्राहकत्वमवश्यमभ्युपगन्तव्यं येन भवदीयानुमानस्यापि नीलादिज्ञानकर्तृकस्वात्मग्राहकताग्राहकत्वं स्यादित्यर्थः। तदेवमिति–उक्तरीत्या बाह्ये सिद्धे वेद्यत्वादिभिर्हेतुभिस्तस्यापन्हवः=ज्ञानाकारता न सम्भवतीति भावः। तदा=बाह्यसत्तायां स्वीकृतायां बाह्यस्यैव वेद्यत्वं संभवतीत्याह–बाह्यस्यैवेति। प्रत्युत ज्ञानस्यैव वेद्यत्वं न सम्भवतीत्येवं विपक्षे बाधकमाह–प्रत्युतेति, आत्मनः=ज्ञानस्यैव वेद्यत्वं न सम्भवति तस्यानुमेयत्वात्। वेद्यत्वमिन्द्रियसंनिकृष्टस्य भवति न च ज्ञानमिन्द्रियसंनिकृष्टं तस्यात्मसमवेतत्वात्। अत्र हेतुमाह– नीलादीति, नीलादिज्ञानं हि 'इदं नीलमिदं पीतम्' इत्यादिरूपेण

त्तीनाम् 'इदं नीलमिदं पीतम्, इत्यऽनात्मावभासित्वा-
त् आत्मावभासित्वाऽभावात् ।

अहंप्रत्ययस्तर्हि ज्ञानावलम्बनो भवतु ? । सोपि
कर्त्रऽवलम्बनो न ज्ञानावलम्बन इत्यात्मवादे वक्ष्या-
मः । तथा ग्राह्यलक्षणमपि बाह्यस्यैव किं चिदेष्टव्य-
म् । अन्यथा नीलादिवित्तीनां स्वांशपर्यवसायित्व-
साधनार्थस्य त्वदीयानुमानस्य नीलादिवित्तिगतं स्वां-

---

ज्ञानभिन्नं बाह्यमेव प्रकाशयति न स्वात्मानमित्यर्थः । ननु बाह्यवत् स्वाव-
भासकत्वमपि ज्ञानस्य किं न स्यादित्याशङ्क्याह—आत्मावभासित्वाभावादिति ।

ननु यदुक्तं ज्ञानं बाह्यमेव प्रकाशयति न स्वात्मानमिति तन्न युक्तं नी-
लादिज्ञानानां बाह्यप्रकाशकत्वस्वीकारेप्यहंप्रत्ययः=अहंविषयकमऽयमहमित्या-
दिज्ञानं तु स्वात्मानमेव प्रकाशयति आत्मनो ज्ञानरूपत्वादित्याशङ्क्ते—अ-
हमिति । उत्तरमाह—सोपीति । सः=अहंप्रत्ययोपि कर्त्रवलम्बनः=कर्तारं
कर्तृभूतमात्मानं प्रकाशयति न तु ज्ञानमित्यात्मवादे वक्ष्यामः, आत्मा च ज्ञा-
नभिन्न एव न तु ज्ञानमेवात्मा । अहं जानाम्यहं गच्छामीत्यादौ सर्वत्राहंप-
देन कर्तुरेवपरामर्शादहंप्रत्ययो ज्ञानभिन्नमेव कर्तारं परामृशति । उक्तं च—

"अहमर्थो न चेदात्मा प्रत्यक्त्वं नात्मनो भवेत् ।
अहं बुद्ध्या परागर्थात् प्रत्यगर्थो हि भिद्यते ॥ "
अतोहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम् ॥ " इत्यादि ।

वेद्यत्ववद् ग्राह्यत्वमपि बाह्यस्यैव सम्भवतीत्याह—तथेति । किं चिदेष्ट-
व्यम्=ग्राह्यत्वं यत्स्वरूपं सिद्ध्येत तद् बाह्यस्यैव स्वीकार्यम् । किंस्वरूपं च
ग्राह्यत्वमित्यत्र नोच्यते । विपक्षे बाधकमाह—अन्यथेति, यदि ग्राह्यत्वं ज्ञा-
नभिन्नस्य बाह्यस्य न स्यात्तदा नीलादिज्ञानस्य स्वात्मांशग्राहितासिद्ध्यर्थं
प्रयुक्तस्य सहोपलम्भादिहेतुकस्य त्वदीयानुमानस्य स्वात्मांशमात्रग्राहकत्वा-
न्नीलादिज्ञाननिष्ठस्वात्मांशग्राहिताग्राहकत्वं न स्यात्, तव मते नीलादिज्ञान-
निष्ठस्वात्मांशग्राहितायां ज्ञानभिन्नत्वेन ग्राह्यत्वाभावात् अनुमाने तद्विषयक-
ग्राहकत्वस्याप्यसम्भवाद् ग्राहकत्वस्य ग्राह्यत्वनिरूपितत्वात् । नीलादिज्ञान-
निष्ठस्वात्मांशग्राहिताया ग्राह्यत्वे तु स्वीकृते प्राप्तं ज्ञानभिन्नस्यापि बाह्यस्य

शविषयत्वं ग्राह्यं न स्यात्, स्थायित्वादयश्च तद्बुद्धीनाम् ।

तल्लक्षणं चेतरेषामुक्तदोषात् ज्ञानजन्यफलभागित्वमेवाश्रयितव्यम् । ज्ञानक्रिया हि सकर्मिका कर्मभूतेऽर्थे फलं जनयति पाकादिवत्, तच्च फलमैन्द्रियकज्ञानजन्यमापरोक्ष्यम्, लिङ्गादिज्ञानजन्यं तु पारोक्ष्यमित्युच्यते। अस्ति हि विषयाविषयविभागः, विषयेष्वपि परोक्षापरोक्षविभागः सार्वजनीनः । न च फलमन्तरे-

---

ग्राह्यत्वं. नीलादिज्ञाननिष्ठस्वात्मांशग्राहितायाः अपि ज्ञानभिन्नत्वादित्याक्षेपः । एवं तदेवेदमित्यादिस्थायित्वादिविषयकज्ञानानां स्थायित्वादिकं ग्राह्यं न स्यात् स्थायित्वादेरपि ज्ञानभिन्नत्वेन त्वन्मते ग्राह्यत्वाभावादित्याह—स्थायित्वादयश्चेति । तद्बुद्धीनाम्=तदेवेदमित्याकारकस्थायित्वविषयकज्ञानानाम् । ग्राह्या न स्युरिति शेषः । भवति च स्थायित्वादीनां ग्राह्यत्वं तस्माद् बाह्यस्यैव ग्राह्यत्वं स्वीकार्यम् ।

विषयत्वमेव ग्राह्यत्वं तस्य लक्षणमाह—तल्लक्षणमिति । इतरेषाम्="सदृशत्वे सति हेतुत्वं विषयत्वम्, यत्संप्रयुक्तेन्द्रियजं ज्ञानं यद्व्याप्तलिङ्गजं वा स विषयः" इत्यादीनां लक्षणानामुक्तदोषात्=उक्तदोषग्रस्तत्वात् किं वेत्यादिषु लक्षणेषु दोषाणामुक्तत्वात्, ज्ञानजन्यफलभागित्वमेव तल्लक्षणम्=विषयत्वस्य लक्षणम्, ज्ञानजन्यफलभागित्वमेव विषयत्वं ग्राह्यत्वं चेत्यर्थः । ज्ञानजन्य फलभागित्वमेवोपपादयति—ज्ञानक्रियेति, यथा पाकेन तत्कर्मभूतेषु तण्डुलेषु विक्लितिरुत्पद्यते तथा ज्ञानेनापि तत्कर्मभूतेऽर्थे किमपि फलमुत्पद्यत एव। तत्फलमाह—तच्चेति, ऐन्द्रियकज्ञानेनाऽऽपरोक्ष्यमेव फलमुत्पद्यते लिङ्गादिज्ञानजन्यज्ञानेन तु पारोक्ष्यमेव फलं भवति। पारोक्ष्यापरोक्ष्ये च प्रकाशविशेषौ । अस्तीति—ज्ञातो घट इत्यत्र घटस्यैव विषयत्वं न पटादेरपीति विषयाविषयविभागः । अन्यथा॰ पदार्थमात्रस्यैकज्ञानविषयत्वं स्यात् । विषयेष्वपि घटेन्द्रियसंयोगे जाते घटोऽपरोक्षो भवति । धूमेदर्शनेन वन्हिज्ञाने जाते तु वन्हिः परोक्ष एव भवतीत्याह—विषयेष्वपीति । सार्वजनीनः=सकललोकप्रसिद्धः । विपक्षे बाधकमाह— न चेति । तत्=पारोक्ष्यापारोक्ष्यलक्षणं फलमाश्रीयते । पारोक्ष्यापारोक्ष्यसम्पादकस्य ज्ञानस्य तु प्रत्यक्षं न भवतीति त-

णार्थं विभागः सम्भवतीति तदाश्रीयते । तदेव च फलं कार्यभूतं कारणभूतं विज्ञानमुपकल्पयतीति सिध्यत्यऽप्रत्यक्षमपि ज्ञानम् ।

अथ वा ज्ञानक्रियाद्वारको यः कर्तृभूतस्यात्मनः कर्मभूतस्य चार्थस्य परस्परं सम्बन्धो व्याप्तृव्याप्यत्वलक्षणः स मानसप्रत्यक्षावगतो विज्ञानं कल्पयति, न ह्यागन्तुककारणमन्तरेणात्मनोऽर्थं प्रति व्याप्तृत्वमुत्पत्तुमर्हति । तच्च कारणं लोके ज्ञानशब्देनाभिधीयते ।

येपि स्वप्रकाशां संविदमातिष्ठन्ते तैरप्ययं सम्बन्धो मानसप्रत्यक्षगम्योऽवश्यमभ्युपगमनीयः । अन्य-

---

देव=पारोक्ष्यापरोक्ष्यरूपं ज्ञानकार्यभूतं फलं स्वकारणभूतं विज्ञानं कल्पयतीति ज्ञानमऽप्रत्यक्षमित्यपि सिद्ध्यतीत्याह—तदेवेति । यथा हि धूमेन तत्कारणीभूतस्य वन्हेरनुमानं भवति न प्रत्यक्षं किं वा यथेन्द्रियादीनामनुमानं भवति न प्रत्यक्षं तथा ज्ञानस्यापि ज्ञानजन्यपारोक्ष्याऽऽपरोक्ष्याभ्यामनुमानमेव भवतीति न ज्ञानं प्रत्यक्षमित्यर्थः ।

ज्ञानानुमापकान्तरमाह—अथ वेति, ज्ञानक्रियाद्वारको यो ज्ञानक्रियायां कर्तृभूतस्यात्मनः कर्मभूतस्य च विषयस्य व्याप्तृव्याप्यत्वरूपः परस्परं संबन्धः स मानसप्रत्यक्षावगतः सन् स्वकारणं ज्ञानं कल्पयति=अनुमापयति । स संबधो ज्ञानं विना न संभवति । आत्मा हि ज्ञानद्वारा विषयं व्याप्नोतीत्याऽऽत्मनो व्याप्तृत्वं विषयस्य च व्याप्यत्वं ज्ञेयम् । कल्पयतीत्यर्थापत्तिर्वा ज्ञेया । अत्र हेतुमाह—नहीति, आगन्तुकं ह्यर्थं प्रत्यात्मनो व्याप्तृत्वमिति तस्य कारणेनाप्यागन्तुकेनैवाऽवश्यं भवितव्यं तच्च कारणं ज्ञानमेवेत्याह—तच्चेति । ज्ञातो घटो जानामि देवदत्तमित्यादौ धात्वर्थस्य ज्ञानस्यैव कारणत्वौचित्यात् ।

ननु यदि ज्ञानमनुमेयं स्यात्तदा युज्येतैषां कल्पना न चैवमस्ति ज्ञानस्य स्वयं प्रकाशत्वादित्याशङ्क्याह—येऽपीति । येपि=वेदान्तिनः प्राभाकरश्च संविदम्=ज्ञानं स्वप्रकाशमातिष्ठन्ते=ज्ञानं स्वप्रकाशमिति प्रतिज्ञां कुर्वन्ति तैरप्ययं संबन्धो व्याप्तृव्याप्यत्वरूपोवश्यमङ्गीकर्तव्यः स च बाह्यप्रत्यक्षागम्यत्वान्मानसप्रत्यक्षगम्य इत्युक्तम् । घटादिप्रकाशस्य कारणाभावे नित्यत्वं

था 'ज्ञातो मया घटः' इति ज्ञानज्ञेयसम्बन्धो ज्ञातृज्ञेयसम्बन्धो वा न व्यवहर्तुं शक्यते। यन्मात्रं हि प्रकाशितं तन्मात्रमेव व्यवहर्तुं शक्यते, नान्यत्।

इह च संविन्मात्रं स्वयं प्रकाशितम्, अर्थोऽपि तद्वशात्, ज्ञानसम्बन्धस्तु केन प्रकाशितः ?। सोऽपि तयैव संविदा प्रकाशते इति चेत् ?, न, तदुत्पत्त्यवस्थायां सम्बन्धस्याऽनिष्पन्नत्वात्। प्रकाशकत्वमेव हि संविदो विषयेण सम्बन्धो नान्यः, तेन जातायां संविदि विषये च प्रकाशिते निष्पद्यमानः सम्बन्धो न

---

स्यात्। विपक्षे बाधकमाह—अन्यथेति, यन्मात्रं प्रकाशितं भवति तन्मात्रमेव व्यवहर्तुं=शब्देन वक्तुं शक्यते नान्यत्=अप्रकाशितमपीति ज्ञानज्ञेयसंबन्धस्य ज्ञातृज्ञेयसंबन्धस्य वा 'ज्ञातो मया घटः' इत्यत्र ज्ञाने प्रकाशाभावे स संबन्धो ज्ञातो मया घट इत्येवं व्यवहर्तुं न शक्येत। ज्ञानज्ञेयसंबन्धश्च ज्ञातृज्ञेसंबन्धश्च व्याप्तृव्याप्यत्वलक्षण एव ज्ञेयः। अत्र हेतुमाह—यन्मात्रमिति। भवति च व्यवहार उक्त संबन्धस्य तस्मात् सोऽपि प्रकाशते। ज्ञानमेव विषयं व्याप्नोतीति मतेनोक्तम्—ज्ञानज्ञेयेति। आत्मैव ज्ञानद्वारा विषयं व्याप्नोतीति मतेनोक्तम्—ज्ञातृज्ञेयेति।

उक्तसंबन्धस्य मानसप्रत्यक्षगम्यत्वमुपपादयति—इह चेत्यादिना। ननु इह=ज्ञातो घट इत्यादौ त्वन्मतेन ज्ञानं स्वयं प्रकाशत्वादेव प्रकाशते घटोऽपि तद्वशात्=ज्ञानवशात् प्रकाशते, ज्ञेयेन सह यो वै ज्ञानस्य संबन्धः स केन प्रकाशते ? इत्याशङ्क्ते—इह चेति। किं वा इह नाम ज्ञानस्य स्वयं प्रकाशत्वमते। ननु स संबन्धोऽपि तयैव स्वसंबन्धिन्या संविदैव प्रकाशत इत्याह—सोऽपीति। परिहरति—नेति। हेतुमाह— तदिति, संबन्धो हि सतोर्भवतीति ज्ञानोत्पत्तिपूर्वं न संभवति तदा ज्ञानस्यैवाऽभावात् किं तु ज्ञानोत्पत्त्यनन्तरं भविष्यतीति ज्ञानोत्पत्त्यऽवस्थायां संबन्धस्यानिष्पन्नत्वात्=अजातत्वादेव न तेन ज्ञानेन तस्य प्रकाशः संभवति। एतदेवोपपादयति—प्रकाशकत्वमेवेत्यादिना, विषयेण सह ज्ञानस्य प्रकाशकत्वमेव संबन्धः, तेन=तस्मादुत्पन्ने सति ज्ञाने तेन ज्ञानेन विषये च प्रकाशिते सति तदनन्तरं तयोर्ज्ञानविषययोः

तथा संविदा शक्यते विषयीकर्तुम्, विरम्य व्यापारासंभवात् । न हि प्रथममर्थं प्रकाश्य पुनः सम्बन्धं प्रकाशयितुमर्हति क्षणिकत्वात् ।

अथ सम्बन्धोपि स्वयं प्रकाशत इति मन्येथाः ?, नात्र प्रमाणमस्ति । तस्मान्मानसप्रत्यक्षगम्योऽर्थेन सहात्मनः सम्बन्धो ज्ञानं कल्पयतीति रमणीयम् । अस्ति हि कोपि सम्बन्धोऽर्थेन सहात्मनो मानसप्रत्यक्षगम्यः सर्वजनीनः स ज्ञानस्य कल्पकः ।

---

संबन्ध उत्पद्यते इति मन्तव्यं तथा च तेन ज्ञानेन विषयप्रकाशे कृेत संबन्धस्य प्रकाशो न कर्तुं शक्यत इत्यर्थः । अत्र हेतुमाह–विरम्येति, "शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात्" इति न्यायेन विषयप्रकाशेनैव ज्ञानस्य विरामे जाते न तेन विरतेन ज्ञानेन संबन्धप्रकाशः संभवति । एतदेवोपपादयति– न हीति । ज्ञानस्य विरम्य व्यापारो न भवतीत्यत्रापि हेतुमाह–क्षणिकत्वादिति, प्रथमक्षणे ज्ञानमुत्पन्नं द्वितीयक्षणे तिष्ठति तृतीयक्षणे तु विनश्यत्येवेति क्षणिकेन ज्ञानेनैकस्यैव स्वस्थितिकाले वर्तमानस्य प्रकाशनं संभवति किं वा स्वस्थितिकाले वर्तमानानां तु बहूनामपि प्रकाशनं संभवति न तु स्वस्थित्यनन्तरक्षणे निष्पन्नस्योक्तसंबन्धस्यापि । प्रकाशनं हि क्रिया सा चैकस्मिन् क्षण एकैव संभवति नाऽनेका इत्यपि ज्ञेयम् । जातायामित्यत्र ज्ञातायामिति पाठान्तरम् ।

ननु संबन्धोपि स्वयं प्रकाश एवेति शङ्कते–अथेति । परिहरति–नात्रेति, संबन्धः स्वयं प्रकाशते इत्यत्र प्रमाणं नास्ति । उपसंहरति–तस्मादिति, यस्मान्न स संबन्धस्तत्संबन्धिना ज्ञानेन प्रकाशयितुं शक्यते न च स्वयं प्रकाशो न चाप्यन्यविषयकेन ज्ञानान्तरेण प्रकाशयितुं शक्यते तस्यान्यविषयकत्वादेव न च संबन्धेनेन्द्रियसंबन्धः संभवति येन प्रत्यक्षं स्यात् न चापि संबन्धसंबद्धलिङ्गमुपलभ्यते येनानुमानं स्यात्तस्मादयं ज्ञातृज्ञेयसंबन्धो व्याप्तृव्याप्यत्वरूपो मानसप्रत्यक्षगम्य एव । स च सम्बन्धो ज्ञानं विना न सम्भवति ज्ञानक्रियाद्वारैवात्मनो विषयव्याप्तृत्वादित्यन्यथानुपपत्त्या स्वकारणं ज्ञानं कल्पयतीति न ज्ञानं प्रत्यक्षमित्यर्थः । अस्यैव पक्षस्य निर्दोषत्वादाह–रमणीयमिति । एतदेव विशदयति–अस्तीति । कोपि =व्याप्तृव्याप्यत्वरूपः ।

अर्थगतो वा ज्ञानजन्योतिशयः कल्पयति ज्ञानम्, अवश्यमङ्गीकरणीयश्चायमतिशयस्त्रितयप्रतिभासवादिभिरपि । त्रितयं प्रतिभासत इति वदता ज्ञानज्ञेयज्ञातृषु त्रिष्वप्यनुगतं प्रकाशनपदवाच्यमवश्यमङ्गीकर्तव्यम् । तत्र ज्ञानत्वं तावन्नाऽनुगतम्—तद्धि ज्ञाने एव न ज्ञातृज्ञेययोः । ज्ञेयत्वमपि ज्ञेय एव न ज्ञातृज्ञानयोः । ज्ञातृत्वं ज्ञातर्येव न ज्ञानज्ञेययोः ।

व्यवहारविषयत्वं प्रकाशमानत्वमिति चेत् ?, न, संविदि व्यवहाराभावाद् विनष्टत्वात् । शब्दप्रयो-

---

प्रकारान्तरेणोपपादयति—अर्थेति, ज्ञानजन्योतिशयोऽत्र प्रकाशनभासनादिपर्यायो ग्राह्यः स च ज्ञानजन्यत्वादेव स्वकारणं ज्ञानं कल्पयति । तदुक्तं न्यायरत्नाकरेपि—"ज्ञानजन्योर्थगतः कश्चिदतिशयः प्रकाशनभासनादिपर्यायपदवाच्यः स च पाकजन्यौदनादिगतातिशयवदऽनवगतेपि ज्ञाने शक्यतेऽवगन्तुमऽतो ज्ञानस्य कल्पकः" इति । अवश्यमिति— यद्ययमतिशयो न स्वीक्रियेत तदा ज्ञातस्य घटस्याज्ञातस्य च पटस्य कोपि विशेषो न स्यादऽस्ति च विशेष इति त्रितयप्रतिभासवादिभिरप्यङ्गीकरणीयः स एव हि ज्ञानजन्योऽतिशयो ज्ञानं कल्पयतीत्यर्थः । ननु ज्ञातो घट इत्यादौ ज्ञानं ज्ञेयं ज्ञाता चेति त्रितयं प्रतिभासते न च त्वदुक्तोऽतिशय इति कथं सोऽतिशयः स्वीक्रियेतेत्याशङ्क्याह—त्रितयमिति, त्रितयप्रतिभासवादिना प्रभाकरादिनापि ज्ञानज्ञेयज्ञातृष्वनुगतः प्रकाशनपदवाच्यो धर्मो ऽवश्यमङ्गीकर्तव्यः । स च धर्मो न ज्ञानत्वं न च ज्ञेयत्वं न वा ज्ञातृत्वं सम्भवत्येषामेकमात्रवृत्तित्वादित्याह—तत्रेति । तस्मात् त्रितयानुगतः कोपि धर्मः स्वीकार्यः ।

ननु व्यवहारविषयत्वमेव स धर्मो भवतु तदेव च प्रकाशमानत्वमित्याशङ्क्ते— व्यवहारेति । परिहरति—नेति, व्यवहारविषयत्वं हि प्रकाशे जाते एव तदनन्तरं विद्यमाने भवति ज्ञानं च प्रकाशानन्तरं नष्टमेवेति कथं तस्य व्यवहारविषयत्वं स्यादिति न स धर्मो व्यवहारविषयत्वं तस्य ज्ञेयमात्रानुगतत्वेन त्रितयानुगतत्वाभावादित्याह—संविदीति । ननु शब्दप्रयोगोपि व्यवहार एव तद्विषयत्वं तु नष्टघटस्येव विनष्टस्यापि ज्ञानस्य सम्भवत्येवेति शङ्कते—शब्द-

गो व्यवहार इति चेत् ?, न, उक्तदोषत्वात् । तदवश्यं प्रकाशनभासनादिपर्यायो धर्मविशेषस्त्रिष्वप्यनुवृत्तो गोत्वमिव गोव्यक्तिष्वऽस्ति । स च धर्मो ज्ञातरि ज्ञेये च ज्ञानवशाज्जायते, ज्ञानस्य तु स्वाभाविकोऽग्नेरिवौष्ण्यमिति स्वप्रकाशं ज्ञानम् । इतरौ परप्रकाश्यावित्याश्रयणीयम् । तन्निमित्तं च विषयस्य विषयत्वम्, व्यवहारादीनां हि विषयलक्षणत्वं प्रागेव दूषितम् ।

---

प्रयोगेति । परिहरति-नेति । उक्तदोषात्वात्="किं च न शब्दप्रयोगवशेन ज्ञानस्य विषयनिरूपणं शक्यं विपरीतत्वात्" इत्यादिना(१८९पृ)दोषाणामुक्तत्वात् । एकस्य शब्दप्रयोगव्यवहारस्य ज्ञेयज्ञानज्ञातृत्रितयानुगतत्वासम्भवाच्च, धर्मश्च त्रितयानुगतोऽपेक्ष्यत इति दोषः । उपसंहरन्नाह-तदवश्यमिति, प्रकाशनपदवाच्यो वा भासनपदवाच्यो वा कोपि धर्मविशेषस्त्रिषु=ज्ञातृज्ञानज्ञेयेष्वऽनुवृत्तोऽस्त्येव यथा गोव्यक्तिषु गोत्वमनुवृत्तमस्तीत्यर्थः । स च प्रकाशनादिपदवाच्यो धर्मविशेषो ज्ञातरि=आत्मनि ज्ञेये च घटादौ ज्ञानवशाज्जायते ज्ञाने जाते एव तयोः प्रकाशनियमात् ज्ञानस्य तु स धर्मः स्वाभाविक एवेति-ज्ञानं स्वप्रकाशमिति वक्तव्यम् । इतरौ=ज्ञातृज्ञेयौ तु परप्रकाश्यौ=ज्ञानप्रकाश्यावित्यभ्युपगन्तव्यम्-इत्याह- स चेति । तन्निमित्तमिति-विषयस्य विषयत्वं तन्निमित्तमेव=उक्तधर्मनिमित्तकमेव । अर्थात् प्रकाशमानत्वं भासमानत्वं वा विषयत्वमित्येव युक्तं व्यवहारादीनां तु विषयलक्षणत्वं नैव सम्भवतीति पूर्वमेव दोषा उक्ता इत्यर्थः ।

उक्तं च प्राभाकरैः-"सर्वाश्च प्रतीतयः स्वयं प्रत्यक्षाः प्रकाशन्ते तासां च युक्तमेव स्वात्मनि प्रत्यक्षत्वं मानत्वं च, मेयमातृप्रमाणानां त्वेष प्रतीतिविशेषः-मेये मातरि च व्यतिरिक्ता प्रतीतिः साक्षात्कारवती मितौ त्वव्यतिरिक्ता, इदमहं स्मरामि गृह्णामीति त्रितयमेवाऽवभासते, मेयमात्रुभयरूपा संविदेका न तस्याः संविदन्तरं चकास्ति न च सा नाऽवभाति, तदनवभासे सर्वानवभासप्रसङ्गात् प्रकाशस्तु प्रकाशात्मकत्वान्नान्यमपेक्षते ।" "प्रकाशस्य त्वऽप्रकाशमानस्य सत्तैव नाभ्युपेयते" "किं च स्वत एव यदुपपद्यते न तत्र परापेक्षा युक्ता मेयानां मातुश्च स्वतः प्रकाशो नोपपद्यत इति युक्ता

एकदेशिनां तु— व्यवहारनिबन्धनविषयताङ्गीकरणे रजतवित्तेः शुक्तिका विषयः स्यात्, न चैवमिच्छन्ति। तदेवमऽविवादसिद्धेऽर्थगतेऽतिशये तेनैव ज्ञानस्यानुमानं पूर्वोक्तेन वा मानसप्रत्यक्षगम्येन सम्ब-

---

तयोः परापेक्षा मितौ च का चिदनुपपत्तिर्नास्तीति स्वयं प्रकाशैव मितिः" इति। अत्र तस्या इति विषयत्वं षष्ठ्यर्थः। वितथमित्यारभ्यात्र ग्रन्थकृता प्रभाकरमतं प्रतिपादितं तदनेन प्रतिपादनेन प्रभाकरमतेपि ज्ञानजन्योतिशयो विषये उत्पद्यत एवेत्यङ्गीकारितस्तेन चातिशयेन ज्ञानानुमानं सम्भवत्येवेत्यभिप्रायः, एतदभिप्रायेणैवाग्रे वदति—तदेवमविवादसिद्धे इत्यादिना, ज्ञानस्यानुमेयत्वे च प्राप्ते स्वप्रकाशत्वं तु स्वयमेवोक्तवक्ष्यमाणरीतिभ्यां च पराहतमेवेत्येवमत्र ग्रन्थसङ्गतिरनुसन्धेया प्रकारान्तरस्याऽसम्भवात्।

व्यवहारभाक्त्वं विषयत्वमिति प्राभाकरमते दोषान्तरमाह—एकदेशिनामिति, व्यवहारनिबन्धनविषयताङ्गीकरणे=विषयतायां व्यवहार एव निमित्तं तथा च व्यवहारभाक्त्वं विषयत्वमिति प्राप्तमित्येवं स्वीकारे रजतज्ञानस्य शुक्तिरपि विषयः स्यात्, यतो रजतमिदमिति ज्ञाने जाते पुरोवर्तिनो रजतत्वेन ज्ञातस्य द्रव्यस्य ग्रहणे कृते शुक्तिरेव लभ्यते तत्रोपादानव्यवहारविषयत्वं तु शुक्तेरेवास्तीति रजतज्ञानस्य शुक्तिरेव विषयः स्यात्। अथ च न चैवमिच्छन्ति=रजतज्ञानस्य शुक्तिकां च विषयं न मन्यन्ते। तस्माद् व्यवहारभाक्त्वं न विषयत्वलक्षणं युक्तमिति भावः। उपसंहरन् स्वमतमाह— तदेवमिति, ज्ञानेन विषये कोप्यतिशय उत्पद्यत एवेत्यविवादं स चावरणभङ्गादिरूपो वा स्यात् प्रकाशमानत्वं वा स्यादित्यन्यदेतत्। तेनैवातिशयेन ज्ञानस्यानुमानं सम्भवति किं वा पूर्वोक्तेन मानसप्रत्यक्ष्यगम्येन सम्बन्धेन धर्मविशेषेण ज्ञानस्यानुमानं सम्भवतीति न ज्ञानं प्रत्यक्षगम्यं ज्ञानेन सहेन्द्रियसंयोगाभावादित्यर्थः।

ननु धर्मो हि धर्मिणि सत्येव सम्भवति न चासतोपि धर्मिणो धर्मः संभवतीति भूतभविष्यतोर्विषययोरेव धर्मिभूतयोरभावे कथं तद्धर्मः प्रकाशनादिकं स्यात्? तथा च भूतभविष्यद्धर्मिकप्रकाशनधर्मस्याभावाद् भूतभविष्यद्विषयकज्ञानानुमानं तु न सम्भवति भवति च भूतभाविष्यद्विषयक-

न्धेन सम्भवति । अतिक्रान्तदिवसगतदशत्वादिसं-ख्यावत्वाऽसतोर्भूतभविष्यतोरविद्यमानत्वेपि धर्मिणः प्रकाशनधर्मो जायत इति प्रमाणबलादभ्युपगम्यते । अतो न प्रत्यक्षत्वं संविदोऽभ्युपगन्तव्यम् ।

न च प्रतीतिबलादपि प्रत्यक्षत्वम्-अर्थावभास-समये संविदः प्रतिभास एव नास्ति नतरामापरोक्ष्य-म् । एवं च सहोपलम्भस्यैवाऽभावात् तन्नियमो य उक्तः स दूरापास्त इति प्रत्युक्तमेतत्-"सहोपलम्भ-नियमादभेदो नीलतद्धियोः" इति ।

---

ज्ञानस्यापि प्रतीतिरिति ज्ञानं प्रत्यक्षं स्वयं प्रकाशमेवेत्यभ्युपगन्तव्यमि-त्याशङ्क्याह-अतिक्रान्तेति । यथाऽतिक्रान्तदिवसानाम्=नष्टानामपि दिव-सानां दशत्वादिसङ्ख्या प्रकाशते- दश दिवसा गता इति, तथाऽसतोर्भूतभवि-ष्यतोर्विषययोरविद्यमानत्वेपि धर्मिणः=भूतस्य भविष्यतश्च विषयस्य प्रकाश-नाख्यो धर्मः=प्रकाशो जायते संभवति चेति प्रमाणबलादभ्युपगम्यते, अ-न्यथा भूतभविष्यतोः प्रतीतिरेव न स्यादिति, तथा च तेन प्रकाशाख्येन ध-र्मेण भूतभविष्यद्विषयकज्ञानस्याप्यनुमानं संभवत्येवेति न कोपि दोषः । तथा च न ज्ञानस्य प्रत्यक्षत्वापत्तिरित्याह-अत इति ।

ननु ज्ञानं प्रत्यक्षमित्येव प्रतीयते ज्ञानप्रकाशाय ज्ञानान्तरापेक्षाभा-वादित्याशङ्क्याह- न चेति । अत्र हेतुमाह-अर्थेति, विषयप्रकाशसमये विषय-मात्रं प्रकाशते न ज्ञानमपीति, प्रकाशमानस्यैव चापरोक्षत्वं भवति नाऽप्रका-शमानस्यापीत्याह-नतरामिति । सिंहावलोकितन्यायेन पुनरपि विज्ञानवादं नि-राकर्तुमाह-एवमिति, यतो विषयप्रकाशसमये विषयमात्रं प्रकाशते न ज्ञान-मऽतः सहोपलम्भ एव ज्ञानविषययोर्न संभवतीति सहोपलम्भस्य नियमस्तु दूरा-पास्तः।सहोपलम्भनियमस्य चासंभवात्तेन बाह्यस्य विषयस्य ज्ञानतादात्म्यमपि न संभवति । तदाह-प्रत्युक्तमेतदिति । एतेन-"सहोपलम्भनियमादभेदो नी-लतद्धियोः" इति प्रत्युक्तम् । नीलतज्ज्ञानयोरैक्यसंपादको हेतुस्त्वया सहोपल-म्भनियम उक्त स एवोक्तरीत्या न संभवतीति कथं नीलतज्ज्ञानयोरैक्यं स्या-दित्यर्थः ।

यत्तु पश्चात् स्मरणस्य दर्शनाज्ज्ञानमपि प्रागनुभूतमिति । तदप्यसिद्धम्– अर्थ एव हि तदा स्मर्यते, तत्तत्स्मरणाच्च तदैवार्थव्याप्तिरात्मनो मनसाऽवगम्यते, तद्वशाच्च तदाऽर्थे तावज्ज्ञानं कल्पयति । तस्य च ज्ञानस्येन्द्रियादिकारणाभावात् स्मृतित्वं निश्चित्य स्मृतिकारणभूतं पूर्वज्ञानं तदैव कल्पयतीति नास्य स्मरणम् ।

इतश्च न नीलादेर्ज्ञानात्मकत्वम्, अनुमानादिषु विषयाकाराणां परोक्षत्वात्, ज्ञानस्य च सर्वत्र प्रत्यक्षत्वाभ्युपगमात्, न हि परोक्षापरोक्षयोरेकत्वं संभ-

---

ननु स्मरणं ह्यनुभूतस्यैव भवति तत्र ज्ञातो मया घट इत्यादौ ज्ञानमपि स्मर्यते स्मरणाच्च ज्ञानस्याप्यनुभवः प्राप्त इति ज्ञानस्य प्रत्यक्षगम्यत्वमपि प्राप्तमिति किमिति ज्ञानस्यानुमानमात्रगम्यत्वमुच्यत इत्याशङ्कते– यत्त्विति । परिहरति– तदपीति, ज्ञानस्मरणमेव न सिद्धं येन स्मरणात्प्रत्यक्षतानुमिता स्यात् किं तु विषय एव स्मर्यते ज्ञानविषयस्य च स्मरणात्तद्विशेषणतया ज्ञानमप्यनुमितं स्मर्यते ऽनुमितस्यापि स्मरणसम्भवादित्यन्यदेतादिति । ज्ञानस्य स्मृत्यऽविषयत्वमुपपादयति–अर्थ इति । तदा=स्मरणकालेऽर्थ एव स्मर्यते न ज्ञानमपि । तत्तत्स्मरणात्=अर्थस्मरणाच्च तदैव=स्मरणकाले आत्मनः अर्थव्याप्तिः=अर्थेन सह सम्बन्धविशेषो मनसाऽवगम्यते तस्य मानसप्रत्यक्षगम्यत्वात्, तद्वशात्=अर्थव्याप्तिवशाच्च तदा=स्मरणकाले अर्थे=अर्थविषयकं ज्ञानं कल्पयति अनुमिनोति वा स्मरणशीलः–संप्रति मयि पूर्वानुभूतघटादिविषयकं ज्ञानं वर्तते घटादिव्याप्तिमत्त्वादिति, तच्च ज्ञानमिन्द्रियादिभिर्नोत्पन्नमिति तस्य स्मृतित्वं निश्चित्य, स्मृतिश्च पूर्वानुभूतस्यैव भवतीति स्मृतिकारणीभूतं स्मर्यमाणविषयविषयकं पूर्वजातमनुभवात्मकं ज्ञानं कल्पयति–अनुभूतोयं मया स्मर्यमाणो घट इति सिद्धं विषयस्यैव स्मरणं भवति नास्य=ज्ञानस्येत्यर्थः । तथा च ज्ञानमनुमेयमेव न प्रत्यक्षम् ।

पुनरपि विज्ञानवादं पराचष्टे–इतश्चेति, अनुमानादिस्थलेऽनुमेयस्य विषयस्याकारः परोक्षो भवति ज्ञानं च तव मते सर्वत्रापरोक्षमेवेति परोक्षापरोक्षयोरनुमेयानुमानयोरैक्यासम्भवात् तन्न्यायेन प्रत्यक्षाणामपि नीलादी-

वति । एवमत्यन्तासद्रूपत्वेनाभिमतस्य स्थायित्वादेः स-द्रूपज्ञानात्मकत्वमत्यन्तासम्भाव्यम् । तथा भूतानुमानेषु भूतत्वमवभासते न च वर्तमानस्य ज्ञानस्य भूतत्वमात्मा संभवति ।

भिन्नत्वेपि ग्राहकाद् ग्राह्यस्य ज्ञानमेवाऽतीतमुत्तरस्य ग्राह्यं नार्थ इति चेत् ?, न, प्रमाणाभावात् । अत्र चातीतं त्रेधा विकल्प्य " अतीतं यच्च विज्ञानम् "

---

नां ज्ञानात्मकत्वं न सम्भवतीत्यर्थः, तदाह—न हीति । एवमिति—त्वन्मते नीलादीनामसद्रूपत्वेप्यत्यन्तासद्रूपत्वं न सम्भवति ज्ञानस्य तदाकारेण परिणामसंभवात् क्षणिकस्य च ज्ञानस्य स्थायित्वेन तु परिणामोपि न सम्भवतीत्यऽत्यन्तासद्रूपत्वेनाभिमतस्य स्थायित्वादेः सद्रूपस्य च ज्ञानस्यैक्यं न सम्भवति परस्परमऽत्यन्तविरोधादित्यर्थः । तथेति— नदीपूरेण भूतवृष्ट्यनुमाने वृष्टिविशेषणत्वेन भूतत्वमप्यवभासते तत्र वृष्टिविषयकमनुमानात्मकं ज्ञानं तु वर्तमानमेव न च वर्तमानस्य ज्ञानस्य भूतत्वमात्मा=स्वरूपं संभवतीति न तत्र ज्ञानविषययोरैक्यं सम्भवतीत्यर्थः ।

ननु ग्राहकाद् ग्राह्यस्य भिन्नत्वेपि=ग्राह्यग्राहकयोर्भेदस्वीकारेपि न ज्ञानभिन्नं बाह्यमस्ति किं तु भूतानुमानादिस्थलेऽतीतम्=भूतं ज्ञानमेवोत्तरस्य ज्ञानस्य वर्तमानस्यानुमानादेर्ग्राह्यं भवति न बाह्योर्थ इति बाह्यं नास्त्येवेति शङ्कते—भिन्नत्वेपीति । एवं भविष्यद्विषयकानुमानादिस्थलेपि ज्ञेयम् । परिहरति—नेति, अतीतं ज्ञानात्मकं ज्ञानमेव वा गृह्यते न बाह्यमित्यत्र प्रमाणाभावात्, प्रकाशमानस्य बाह्यत्वस्यापि सम्भवात् । अत्र श्लोकवार्तिकं प्रमाणयति— अत्रेति । अत्र=अस्मिन् प्रकरणे " अतीतम् " इत्यादिनाऽतीतं त्रेधा विकल्प्य त्रेधाप्यतीतस्य ज्ञानाकारत्वं न सम्भवतीति दूषणमुक्तम् । तथा हि—

" अतीतत्वानुविद्धो हि स्मृत्या ग्राह्योनुभूयते ।
तद्वदेव भवेत्तत्र, स्वप्ने न स्याद्विपर्ययात् ॥
तत्र ह्यवर्तमानोपि गृह्यते वर्तमानवत् ।
बाधज्ञानादिदं भ्रान्तं न त्वत्रैवं विपर्ययः ॥"
" अतीतत्वेपि नार्थोयं धीरेषेत्यत्र का प्रमा ॥"

इत्यादिना दूषणमुक्तम् । उत्तरमपि त्रेधैव विकल्प्य "द्याकारकल्पनायां च" इत्यादिना दूषणमुक्तमिति विवेचनीयम् । तस्मादिदमपि वैभाषिकमतमयुक्तमेव । तस्माद्बाह्यार्थाकार एव नीलादिर्न ज्ञानाकारः ।

कथं तर्हि स्वप्ने ?, तत्रापि बाह्यमेव देशकालान्तरगतमदृष्टोद्बोधितसंस्कारवशात् स्मर्यमाणं निद्रा-

"अतीतं यच्च विज्ञानं ग्राह्यत्वेन प्रकल्पितम् ।
तस्माद् ग्राहकरूपं वा ग्राह्यं वोभयथापि वा ॥" इत्यादि ।

अतीतस्य ज्ञानस्यैव यदुत्तरज्ञानग्राह्यत्वमुच्यते तत्राऽतीतं ज्ञानं ग्राहकरूपं वा ग्राह्यरूपं वा ग्राह्यग्राहकोभयरूपं वेति विकल्प्य दूषणमुक्तं तत्तत्रैव द्रष्टव्यं नेह विस्तरभयात् प्रतन्यते । तथोत्तरमपि=भाविनमपि त्रेधा विकल्प्य "द्याकारकल्पनायां च" इत्यादिना त्रेधापि भाविनो ज्ञानाकारत्वं न सम्भवतीति दूषणमुक्तमित्याह— उत्तरमपीति । तथा हि—

"द्याकारकल्पनायां च परस्यात्मांश एव ते ।
प्रमापर्यवसानेन नाऽतीतो विषयो भवेत् ॥
(स्वरूपत्वे इत्यपिपाठः) पूर्वग्राह्यसरूपत्वे ग्राहकत्वं प्रहीयते ।
ग्राहकाकारमात्रत्वे स्याद्विषयो नाऽसरूपतः ॥" इति ।

अयं भावः—अतीतोत्तरयोर्विषययोर्ग्राहकस्वरूपत्वे ग्राह्यत्वमेव न स्यात्, ग्राह्यस्वरूपत्वे च त्वया विज्ञानमित्युच्यतेऽस्माभिर्विषय इत्युच्यत इति नाममात्रे विवादः । उभयाकारत्वं च परस्परविरोधादेव न सम्भवति । इदम्=ज्ञानार्थयोरैक्यप्रतिपादकं ज्ञानस्य प्रत्यक्षत्वप्रतिपादकं च वैभाषिकमतं नैव युक्तम् । वैभाषिकपदस्यात्र बौद्धत्वसादृश्याद् योगाचारे लक्षणा ज्ञेया वैभाषिकेन बाह्यार्थाभ्युपगमात् । उपसंहरति—तस्मादिति ।

ननु स्वप्ने प्रतीयमानस्तु नीलादिर्न बाह्यस्याकारः सम्भवति स्वप्ने बाह्यस्यैवाभावादिति स्वप्ने कथं व्यवस्था स्यात् ? तथा च यथा स्वप्ने नीलादिर्ज्ञानस्यैवाकारस्तथा जाग्रदवस्थायामपि किं न स्यादित्यभिप्रायेणाशङ्कते— कथं तर्हि स्वप्न इति । उत्तरमाह—तत्रापीत्यादिना । तत्रापि=स्वप्नेपि । स्वप्नेपि देशान्तरे कालान्तरे च दृष्टमुद्बुद्धसंस्कारवशात्स्मर्यमाणं सत् मनसो निद्रा-

दूषितमनस्कतया भ्रान्त्या संनिहितदेशकालमिव मन्यते । विस्पष्टं चैतदनन्तरदिवसानुभूतस्य स्वप्ने वर्तमानावभासदर्शनात्, अन्यत्रापि स्वप्ने तथाङ्गीकर्तुं युक्तम् । शिरश्छेदोऽप्यन्यत्रावगतः स्वसम्बन्धितया दोषवशादवगम्यते । सर्वत्र संसर्गमात्रमसदेवावभासते संसर्गिणस्तु सन्त एव । सेयं विपरीतख्यातिरित्युच्यते मीमांसकैः, । असत्ख्यातिवादिनस्तु संसर्गिणोऽप्यपलपन्तीति विशेषः । शुक्तिरजतवेदनेपि विद्यमानैव रजतत्वजातिर्विद्यमानस्यैव शुक्तिकाशकलस्यानात्मभूतैवाऽऽत्मतयाऽवगम्यते । तथा बन्ध्यासुता-

---

दोषेण दूषितत्वाद् भ्रान्त्या संनिहितदेशं संनिहितकालं च जनो मन्यते इति न तत्रापि नीलादीनां ज्ञानाकारत्वम् । अत्र प्रमाणमाह—विस्पष्टमिति, यथा पूर्वदिवसानुभूतस्य विषयस्य तदासन्नरात्रौ स्वप्ने दर्शनेनोक्तैव प्रक्रिया स्वीक्रियते—देशान्तरकालान्तरगतं स्मर्यमाणं निद्रादोषात् संनिहितदेशकालं भ्रान्त्याभिमन्यते इति, तथैव स्वप्नान्तरेष्वपि स्वीकार्यम् । शिर इति—शिरश्छेदोऽप्यजादिषु दृष्टः स्वप्ने स्मर्यमाणो निद्रादोषात्स्वसम्बन्धितयावगम्यते इति न तस्यापि ज्ञानाकारत्वमित्यर्थः । स्वशास्त्रमर्यादामाह—सर्वत्रेति । सर्वत्र= स्वप्नेषु सर्वेषु सतामेव पदार्थानां सम्बन्धमात्रं ह्यसदेव भासते सम्बन्धिनः पदार्थास्तु ते सन्त एव भासन्ते इति सिद्धान्तः । इदं च स्वाप्नादिज्ञानं मीमांसकैर्विपरीतख्यातिरित्युच्यते पदार्थानां वैपरीत्येन भानाद् यथाऽजसम्बन्धितया दृष्टः शिरश्छेदः स्वसम्बन्धितया भासते इति । शून्यवादिनस्तु—यथा संसर्गोऽसदेवा ऽवभासते तथा संसर्गिणोप्यऽसन्त एवावभासन्त इति वदन्तीत्याह—असदिति । अनेन स्वपरमतयोर्भेदो दर्शितः। निगदव्याख्यातोयं ग्रन्थः । असत एव ख्यातिः प्रतीतिरित्यसत्ख्यातिरित्युच्यते ।

नन्वेवं शुक्तिरजतज्ञानस्थले कथं स्यादित्याह—शुक्तिरजतवेदनेपीति, रजतत्वं हि रजतस्यैवात्मा शुक्तेस्त्वनात्मैवेति रजते विद्यमानमेव रजतत्वं शुक्तिशकलात्मतयाऽवभासते—रजतमिदमिति । तथा च नात्रापि रजतत्वस्य ज्ञानाकारत्वमिति भावः । तथेति— बन्ध्यासुतो यातीतिभ्रान्तावपि वि-

दिष्वपि विद्यमान एव सुतशब्दार्थो बन्ध्यान्वितया त-
त्पदसंनिधिदोषादवगम्यते ।

यत्तु कैश्चिदेवमादिषु तदाकारावभासमपन्हुत्य वि-
वेकाग्रहणमेव भ्रान्तिरित्युक्तम्, तत् संविद्विरोधादे-

---

द्यमान एव सुतो बन्ध्यासंम्बन्धितया प्रतीयते इति न बन्ध्यासुतस्यापि ज्ञानाकारता। अत्र कारणभूतं दोषमाह–तत्पदेति, यथा स्वप्ने निद्रा दोषः शुक्तिरजतादिज्ञाने चाकचिक्यादिदोषस्तथा बन्ध्यासुतप्रतीतौ बन्ध्याशब्दसंनिधिरेव दोषः। बन्ध्याशब्दसांनिध्यदोषादेव बन्ध्यापदार्थस्य सुतपदार्थस्य च संबन्धः प्रतीयत इति भावः।

प्रभाकरमते हीदन्त्वेन शुक्तिप्रत्यक्षं भवति चाकचिक्यवशाद्रजतस्मरणं भवति नेदं रजतमिति बाधकज्ञानाभावाद्रजतार्थिनस्तत्र प्रवृत्तिर्भवत्येषा भ्रान्तिप्रक्रिया तामुदिशति–यत्त्विति । एवमादिषु–रजतमिदमित्यादिज्ञानेषु तदाकारावभासम्=शुक्त्यादीनां रजतत्वाद्याकारावभासमपन्हुत्य=प्रतिषिध्य विवेकाग्रहणमेव भ्रान्तिरित्युच्यते–शुक्त्यादीनां रजतत्वाद्याकारेण प्रतीतिर्नैव भवति किं तु नेदं रजतमिति भेदग्रहणाभावादेव रजतमिदमितिज्ञानं रजतग्रहणे प्रवृत्तिश्च भवतीत्यर्थः। तत्रापि रजतांशस्य स्मरणादिदमंशस्य प्रत्यक्षत्वादेव सर्वं ज्ञानं यथार्थमेव भवति नाऽयथार्थमपि, तदुक्तं प्राभाकरैः–

" यथार्थं सर्वमेवेह विज्ञानमिति सिद्धये।
प्रभाकरगुरोर्भावः समीचीनः प्रकाश्यते ॥
तत्र तावदिदं केचिदूचिरे चारुचेतसः ।
भ्रमसंदेहविज्ञाने अयथार्थे उभे इति ॥
अत्र ब्रूमो य एवार्थो यस्यां संविदि भासते।
वेद्यः स एव नान्यद्धि वेद्याऽवेद्यस्य लक्षणम् ॥
इदं रजतमित्यत्र रजतं चावभासते।
तदेव तेन वेद्यं स्यान्न तु शुक्तिरऽवेदनात् ॥
नन्वेवं रजताभासः कथमेष घरिष्यति ? ( भविष्यति )।
उच्यते–शुक्तिशकलं गृहीतं भेदवर्जितम् ॥
शुक्तिकाया विशेषा ये रजताद् भेदहेतवः।

ते न ज्ञाता अभिभवाद् ज्ञाता सामान्यरूपता ॥
अनन्तरं च रजते स्मृतिर्जाता तयापि च ।
मनोदोषाव तदित्यंशपरामर्शविवर्जितम्- ॥
रजतं विषयी कृत्य नैव शुक्तेर्विवेचितम् ।
स्मृत्याऽतो रजताभास उपपन्नो भविष्यति ॥
सन्निहितरजतशकले रजतमतिर्भवति यादृशी सत्या ।
भेदानध्यवसायादियमपि तादृक् परिस्फुरति ॥
एवं स्वप्नेपि वस्तूनि स्मर्यमाणानि सन्त्यपि ।
अनुभूतांशमोषेण भासन्ते गृह्यमाणवत् ॥
पीतशङ्खावबोधे च पित्तस्येन्द्रियवर्तिनः ।
पीतिमा गृह्यते द्रव्यरहितोऽग्निस्विव तिग्मता ॥
शङ्खस्येन्द्रियदोषेण शुक्लिमा च न गृह्यते ।
केवलं द्रव्यमात्रं तु प्रथते रूपवर्जितम् ॥
गुणे द्रव्यव्यपेक्षे च द्रव्ये च गुणकाङ्क्षिणि- ।
भासमाने तयोर्बुद्धिरसम्बन्धं न बुध्यते ॥ (तयोः=शङ्खपीतिम्नोः)
मधुरे तिक्तधीरेवं व्याख्याता-पित्तवर्तिनः- ।
तैक्त्यस्य रसहीनस्य गुडस्य च परिग्रहात् ॥
तथा द्विचन्द्रबोधेपि भिन्नमेवैन्द्रियं महः ।
भिन्ने जनयति प्रख्ये एकस्मिन्नेव शीतगौ ॥
संवित्ती तेन भिद्येते तद्द्वित्वे सति मन्यते ।
भिन्नार्थबुद्धितुल्यत्वमत्रापि खलु पूर्ववत् ॥
दिङ्मोहे दृष्टसामर्थ्याद् दिक्स्वरूपानवग्रहात् ।
दिगन्तरस्वरूपस्य स्मरणाच्च भ्रमो मतः ॥
अलातचक्रेऽलातस्य भ्रमतः सर्वतो द्रुतम् ।
निरन्तरं धियो जाताश्चक्रबुद्धिसमा मताः ॥
कालभेदस्तु शीघ्रत्वाद्धियां तासां न लक्ष्यते ।
चक्रधीर्व्यवहारश्च तेनास्मिन्नपि युज्यते ॥
एतेनैव प्रकारेण सर्वभ्रान्तिषु पण्डितैः ।
ऊहनीया हेतुभेदा यथार्थज्ञानसिद्धये ॥

**वोपेक्षणीयम् । को हि नामाङ्गुलिनिपीडितदृष्टिश्चन्द्र-द्वित्वं न प्रकाशत इति ब्रूयात् । किं चैक एवायं च-न्द्रो न द्वावित्येवं द्वित्वविवेकं चन्द्रस्य विस्पष्टमनुसं-दधानस्य चक्षुषा द्वित्वभ्रमो जायमानः कथं विवेका-ग्रहणनिमित्तः स्यात् ? । एवमवगतदिक्कस्य दिग्भ्रमो नाऽग्रहनिमित्तः सम्भवति ।**

**कथं पुनर्द्वित्वस्यावगमः ?– न संस्मरणं तद्धेत्वभा-**

---

स्थाणुर्वा पुरुषो वेति सन्देहेपि यदा द्वयम् ।
स्मर्यतेऽन्योन्यनिर्मुक्तं तदार्थविरहः कुतः ॥ " इत्यादि ।

अप्स्विव तिग्मतेति–यथा तिग्मताश्रयद्रव्यस्य तेजसोऽग्रहणेप्यऽप्सु ति-ग्मता=तापो गृह्यते त्वचा तथा पीतिमाधारस्येन्द्रियवर्तिनः पित्तस्याग्रहणेपि पीतिमा चक्षुषा गृह्यते इत्यर्थः ।

उक्तमतं पराचष्टे–तदित्यादिना । यतस्तदाकारोऽवभासो भ्रान्तौ भव-त्येवातस्तत्=उक्तमतं ज्ञानविरोधादेवोपेक्षणीयम् । ज्ञानविरोधमेव दर्शयति–कोहीति । अङ्गुलिनिपीडितदृष्टिः=येन नेत्राग्रदेशेऽङ्गुलिः कृता स कोपि 'चन्द्रद्वित्वं न प्रकाशते' इति न ब्रूते, तस्माद् यथा चन्द्रस्यैकस्यापि द्वित्वेन भानं भवति तथा शुक्तेरपि रजतत्वेन भानं भवत्येव दोषात् । विशदयति–किं चेति, यः पुरुष एकश्चन्द्र इति जानाति न द्वाविति–चन्द्रे द्वित्वं नास्ती-ति द्वित्वभेदमप्यनुसन्धत्ते तस्य यदा द्वित्वविवेकमनुसन्दधानस्यापि द्वौ चन्द्रा-विति द्वित्वभ्रमो भवति तत्र विवेकाऽग्रहस्तु नास्त्येव चन्द्रौ न द्वाविति वि-वेकग्रहस्यैव सत्त्वादिति कथं विवेकाग्रहो भ्रान्तिनिमित्तं स्यात् ? तस्मात्त-दाकारावभास एव भ्रान्तिर्न विवेकाग्रहोपि । एवमिति– येन पुरुषेणैषा पू-र्वेत्येवं दिग्गृहीतास्ति तथापि तस्य दिग्भ्रमो भवति तत्रापि विवेकाग्रहो ना-स्तीति न विवेकाग्रहस्य भ्रान्तिकारणत्वं सम्भवतीत्यर्थः । अवगता दिग् ये-न तस्यावगतदिक्कस्य ।

ननु यदि द्वित्वादिभ्रान्तेर्विवेकाग्रहो न कारणं तदा कथं द्वित्वादीनां प्रतीतिर्भवतीति शङ्कते–कथमिति । न च द्वित्वादीनां स्मरणं संभवति चन्द्र-द्वित्वस्य कदाचिदप्यनुभूतत्वाभावादित्याह–नेति । तद्धेत्वभावात्=स्मरणहे-

वात्, न ग्रहणं अप्राप्तस्य चक्षुषा ग्रहणासम्भवात्। उच्यते—देशद्वयं नेत्रेण प्राप्तं चन्द्रश्च तयोश्च संसर्गो दोषवशादवगम्यते, देशद्वये चन्द्रं प्रतीत्य देशगतं द्वित्वं दोषवशाच्चन्द्रेऽध्यवस्यति। तथा पित्तवर्त्तिपीतत्वं शङ्खस्वरूपं च चक्षुषा गृह्णन् दोषवशात् सम्बन्धं बुध्यत इत्यवगन्तव्यम्।

किं च यदि सम्यग्रजतबोधे तादात्म्यमवभासते न शुक्तिरजतवेदने ततोऽवभास्यभेदादवभासस्य वैलक्षण्यं प्रागेव बाधकादनुसन्धातुं शक्नुयात्, वैलक्षण्यावगमाच्च न प्रवर्तेत।

---

त्वभावात्। न च ग्रहणम्=प्रत्यक्षं संभवति चक्षुषाऽसंनिकृष्टस्य चन्द्रद्वित्वस्य चक्षुषा ग्रहणासंभवादित्याह—न ग्रहणमिति। अप्राप्तस्य=असंबद्धस्य। अत्राह सिद्धान्ती उच्यते इति। उपपादयति—देशेति, यदा हि नेत्राग्रेऽङ्गुलिः क्रियते तदा नेत्ररश्मयो द्विधा भूत्वा निर्गता देशद्वयं वास्तवं गृह्णन्ति, तत्र देशद्वयं नेत्रेण संबद्धं चन्द्रश्च नेत्रसंबद्धः=देशद्वयेन चन्द्रेण च नेत्रसंयोगो जातस्तयोश्च=देशद्वयचन्द्रयोः संसर्गः=देशद्वये चन्द्रोस्तीति अङ्गुल्यवष्टम्भलक्षणदोषवशादवगम्यते ततश्च देशद्वये चन्द्रं दोषवशात् प्रतीत्य देशगतं द्वित्वं दोषवशादेव चन्द्रेऽध्यवस्यति— द्वौ चन्द्राविति, तदाह—देशद्वयेति। इत्येवं प्रक्रियया देशद्वये सत एव द्वित्वस्य चन्द्रेऽवभासो भवति न तु विवेकाग्रहादित्यर्थः। तथेति—एवं पित्तनिष्ठं पीतत्वं गृहीतं शङ्खस्वरूपमपि गृहीतं पित्तदोषादेव पीतत्वशङ्खयोः सम्बन्धः प्रतीयते—पीतः शङ्ख इति, तस्मान्न विवेकाग्रहणमेव भ्रान्तिः किं तु व्यधिकरणधर्मतादात्म्यप्रतीतिरेव भ्रान्तिरिति सिद्धम्।

उपपत्त्यन्तरमाह—किं चेति, यदि सम्यग्रजतबोधे=आपणस्थरजतज्ञाने तादात्म्यम्=रजतत्वतादात्म्यं भासते शुक्तिरजतज्ञानस्थले च रजतत्वतादात्म्यं न भासते ततोऽवभास्ययोः=रजतत्वतादात्म्याऽतादात्म्ययोर्भेदात्=विशेषात् (वैलक्षण्यात्) अवभासस्य=शुक्तिरजतज्ञानस्य वैलक्षण्यम्=आपणस्थरजतज्ञानापेक्षया यदऽप्रामाण्यलक्षणं वैलक्षण्यं तत् बाधकात्=नेदं रजतमिति बाधकज्ञानोत्पत्तेः पूर्वमेव प्रतीयेत—इदं ज्ञानमप्रमाणमिति तथा च

किं च यदि रजतार्थी शुक्तेरुपादानं कार्यतयाऽवगच्छेत् ?, ततोऽकार्यस्य कार्यतया भानाद्विपरीतख्यात्यापत्तिः । अथ नावगच्छेत् ? न प्रवर्तेत—तत्कार्यावगमाऽधीनत्वात् प्रवृत्तेः ।

अथ कार्यत्वानगमेऽपि तत्कार्यावगतिसादृश्यात् प्रवृत्तिः ?, ततस्तत्कार्यत्वानवगमेनाऽकार्यावगतिसादृश्यमप्यस्तीति निवृत्तिरपि स्यात् सादृश्ययोरविशेषा-

---

ज्ञानाऽप्रामाण्यज्ञाने जाते रजतार्थी नैव प्रवर्तेत प्रत्युत भ्रान्त्युच्छेद एव स्यात् । न चैवमस्ति यतः प्रवर्तते पुरुषः, तस्माच्छुक्तिरजतज्ञानस्थलेऽपि रजतत्वतादात्म्यमवभासत एवेति दोषकृतस्तादात्म्यावभास एव भ्रान्तिर्न तु विवेकाग्रह इत्यर्थः ।

प्रकारान्तरेण विपरीतख्यात्यापत्तिमाह— किं चेति । रजतार्थी शुक्तिरजतज्ञाने जाते शुक्तेरुपादानम्=ग्रहणं कार्यतया=कर्तव्यत्वेनावगच्छति न वा ?, यदि कार्यतयाऽवगच्छति तदा शुक्तेरुपादानं तु रजतार्थिनः कार्यं नास्तीत्यकार्यस्य शुक्त्युपादानस्य कार्यतया भानाद्विपरीतख्यातिः कार्यतांशे प्राप्तैवेत्याह—तत इति । द्वितीय आह—अथेति, यदि शुक्त्युपादानं कार्यतया नावगच्छति तदा न प्रवर्तेत ग्रहणाय, प्रवृत्तेः कार्यावगमाधीनत्वात्=कार्यत्वज्ञानाधीनत्वात् यतो यदुपादानं कार्यमवगच्छति तत्रैव प्रवर्तते । प्रवर्तते च शुक्तिरजतज्ञाने जाते तस्मादकार्यभूतस्यापि शुक्त्युपादानस्य कार्यतया भानं भवत्येवेति विपरीतख्यातिर्गले पतितैवेत्यर्थः ।

ननु शुक्त्युपादाने कार्यत्वप्रतीतिरपि न भवत्यऽकार्यत्वप्रतीतिरपि न भवति किं तु कार्यावगतिसादृश्यात्=कार्यत्वसादृश्यावगतेः प्रवृत्तिर्भवति यथा—पुरोवर्तिद्रव्योपादानं कर्तव्यतुल्यमिति—इत्याशङ्कते—अथेति । उत्तरमाह—तत इति, यदि कार्यत्वसादृश्यज्ञानमात्रेण प्रवृत्तिरुच्यते तदा यथा कार्यत्वसादृश्यज्ञानमस्ति तथा कार्यत्वज्ञानं नास्तीत्यऽकार्यावगतिसादृश्यम्=अकार्यत्वसादृश्यज्ञानमप्यस्तीति निवृत्तिरपि स्यात्, निवृत्तिं प्रत्यपि अकार्यत्वसादृश्यज्ञानमेव हेतुरिति सुवचत्वात् । न च कार्यत्वाऽकार्यत्वसादृश्ययोर्विशेषोऽस्ति येन कार्यत्वसादृश्यात् प्रवृत्तिस्तु स्यादऽकार्यत्वसादृश्याच्च निवृत्तिर्न

त् । न चासति कारणे कारणसदृशं तत्कार्यं साधयितु-
मर्हति- मा सीषधच्छुक्तिका रजतकार्यमारभमाणम् ।

ननु व्रीहिकार्यमपूर्वं नीवाराः साधयन्ति ?। नैवम्,
व्रीह्यंशा एव तत्र कार्यं कुर्वन्ति, ते च विकलाः सन्तो-
ऽप्यशक्त्यवस्थायां तत्साधनत्वेन यथाशक्तिप्रयोगविधा-
नादवगता इति नाऽकारणात् तत्सदृशात् कार्योत्पत्तिः।

अथ त्वकार्यानवगतिरेव प्रवृत्तेः कारणम् ?, ततो बा-

---

स्यादित्याह—सादृश्ययोरिति । कार्यत्वसादृश्यज्ञानात् प्रवृत्तौ बाधकान्तरमा-
ह—न चेति, असति कारणे तत्कारणसदृशं पदार्थान्तरं तस्य कारणस्य य-
त्कार्यं तत्कार्यं न साधयितुमर्हति यथा रजतकार्यमारभमाणं रजतसदृश्यपि
शुक्तिका न कदापि साधयति, तदाह—मा सीषधदिति—रजतकार्यं शुक्तिका
मा सीषधत् =न साधयतीत्यर्थः। सिध्धातो णिचि लुङः प्रयोगः। तस्मान्नका-
र्यत्वसादृश्यज्ञानात् प्रवृत्तिः सम्भवति ।

ननु व्रीहिकार्यं व्रीहिसदृशा नीवारा साधयन्तीति कथमुच्यते ' न का-
रणसदृशं तत्कार्यं साधयति ' इति ? इत्याशङ्कते— नन्विति । परिहरति—नै-
वमिति, नीवारेष्वपि व्रीह्यंशा सन्त्येव, अत एव नीवारा व्रीहिसदृशा भव-
न्ति, तस्मान्नीवारगता व्रीह्यंशा एव तत्रापूर्वमुत्पादयन्ति न नीवारा इत्यर्थः।
उत्तरान्तरमाह— ते चेति । अयं भावः—यथाशक्ति यागादिप्रयोगः कर्तव्य
इति विधानमस्ति ते च=व्रीह्यंशा नीवारेषु विकलाः सन्ति तथाप्यऽशक्त्य-
ऽवस्थायां व्रीह्यप्राप्त्यवस्थायां तत्साधनत्वेन=व्रीहिसम्पाद्यापूर्वसाधनत्वेन ते
विकला नीवारगता व्रीह्यंशा अवगता यथाशक्ति प्रयोगविधानात्=व्रीह्यभावे
नीवारैरेव चरुः कर्तव्य इति शास्त्रेण प्रतिपादनात्, तस्मान्ना ऽकारणात् का-
रणसदृशात्कार्योत्पत्तिर्भवति । किं त्वत्र व्रीह्यभावे नीवारग्रहणं शास्त्रेणैवोक्त-
मिति नीवाराणामप्यस्त्येवापूर्वसाधनत्वम् । न त्वकारणान्नीवारादपूर्वोत्पत्ति-
र्भवति । विधानादित्यत्राभिधानादित्यपि क्वचित्पाठः ।

ननु मा भवतु कार्यावगतिसादृश्यं प्रवृत्तिं प्रति हेतुः किं त्वऽकार्यानव-
गतिरेव प्रवृत्तेः कारणम्—इदमकार्यं नेति ज्ञानादेव शुक्त्याद्युपादाने प्रवृत्तेः
सम्भवादित्याशङ्कते— अथेति । परिहरति— तत इति, यद्यऽकार्यानवगतिरेव

ह्या अपि वेदार्थे प्रवर्तेरन् अकार्यत्वानवगमात् । अथ स्वकार्यमेव तेऽवगच्छेयुः? ततः कार्यस्याऽकार्यतयाऽवगमाद्विपरीतख्यातिरित्यास्तां तावत् । तस्मात्स्वप्नादिष्वपि बाह्यस्यैवान्यथाभूतस्यैवान्यथाऽवभासात् सिद्धं सर्वत्र बाह्यालम्बनत्वम् ।

अथ स्वप्नवत् प्रत्ययत्वात् स्तम्भादिज्ञानमन्यथाभूतमित्यनुमीयते? । तदसत्, तथा सति प्रत्ययत्वाविशेषात् त्वदीयमप्यनुमानं मिथ्या स्यात् । मिथ्यात्वग्राहिणोऽनुमानस्याऽमिथ्यात्वे वा तत्रैव हेतोर्व्यभि-

---

प्रवृत्तिकारणं तदा बाह्याः=बौद्धादयोपि वेदार्थे=यागादौ प्रवर्तेरन् तेषां यागादिरऽकार्यमेवेति निश्चयाभावेना ऽकार्यत्वानवगतेः सत्त्वात् । ननु बाह्यास्तु वेदार्थे निश्चयेनाकार्यमेव जानन्तीति न तेषां तत्र प्रवृत्तिः सम्भवति अकार्यत्वानवगतेरेवाभावादित्याशङ्क्याह—अथेति । उत्तरमाह—तत इति, यदि बाह्या वेदार्थमकार्यं जानन्ति तदा कार्यभूतस्य वेदार्थस्या ऽकार्यत्वेन रूपेण ज्ञानाद्विपरीतख्यातिर्गले पतितैवेत्यर्थः । उपसंहरति—तस्मादिति, यथा जाग्रद्भ्रमे बाह्यस्यैवालम्बनत्वं भवति न ज्ञानस्य तथा स्वप्नादिरूपभ्रमेष्वपि बाह्यस्यैवाऽन्यथादृष्टस्यान्यथाप्रतिभासाद् बाह्यमेवालम्बनं भवतीति सर्वत्र=भ्रममात्रे बाह्यस्यैवालम्बनत्वं भवति न ज्ञानस्येति सिद्धम् । किं वा सर्वत्र=ज्ञानमात्रे इत्यर्थः ।

ननु बाह्यप्रत्यया मिथ्या प्रत्ययत्वात् स्वप्नवदित्यनुमानेन स्तम्भादिज्ञानमन्यथाभूतम्=मिथ्याभूतमिति न बाह्यस्यालम्बनत्वं किं तु ज्ञानस्यैवेति सिद्धमित्याशङ्कते—अथेति । परिहरति—तदसदिति । हेतुमाह—तथेति । यदि प्रत्ययत्वादेव बाह्यस्तम्भादिज्ञानानां मिथ्यात्वं तदोक्तानुमानस्यापि प्रत्ययत्वान्मिथ्यात्वं स्यादेव तथा च न ज्ञानमिथ्यात्वसाधकत्वं स्यादित्यर्थः, यदि तु स्तम्भादिप्रत्ययमिथ्यात्वग्राहिण उक्तस्यानुमानस्य न मिथ्यात्वं तदा मिथ्यात्वलक्षणसाध्याभाववत्यप्युक्तानुमाने प्रत्ययत्वस्य हेतोः सत्त्वाद् व्यभिचारित्वं दोषः प्राप्त इति न मिथ्यात्वव्यभिचारिणः प्रत्ययत्वस्य मिथ्यात्वसाधकत्वं सम्भवतीत्याह—मिथ्यात्वेति । नन्वेवं नास्त्येव किं जगति मि-

चारः । तस्मात्सूक्तम्-" यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवाऽसमीचीनः प्रत्ययो नान्यः" इति । तस्मादव्यभिचारात् प्रत्यक्षं न परीक्षितव्यम् ।

इति शून्यवादः ॥

प्रत्यक्षस्य सत्संप्रयोगजन्यत्वलक्षणेन लोकसिद्धेनाऽव्यभिचारमुक्त्वा, इदानीमनुमानादेरप्यऽव्यभिचारार्थं लोकसिद्धमेव लक्षणमाह-" अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरे ऽसंनिकृष्टेऽर्थे बुद्धिः।"

---

थ्याप्रत्ययः ? इत्याशङ्क्योपसंहरन्नाह-तस्मात्सूक्तमिति, भाष्यकारेणेति शेषः । यस्येति-यस्य पुरुषस्य करणम्=इन्द्रियं दुष्टं तस्य प्रत्ययो मिथ्या यथा पीतः शङ्ख इति, पीतशङ्खज्ञानवतश्चक्षुषः पित्तदोषेण दुष्टत्वात् । यत्र च मिथ्येति प्रत्ययः स प्रत्ययोपि मिथ्या यथा शुक्तिरजतज्ञाने मिथ्येति प्रत्ययो भवति बाधादिति शुक्तिरजतप्रत्ययोऽसमीचीनः=मिथ्या । नान्यः रजतादौ रजतादिविषयकस्तु प्रत्ययो न मिथ्येत्यर्थः । अव्यभिचारादिति-यद् व्यभिचरति तन्न प्रत्यक्षं यन्न व्यभिचरति तदेव प्रत्यक्षं प्रमाणमिति न परीक्षापेक्षा व्यभिचारिण एव परीक्षायोग्यत्वादित्यर्थः ।

॥ इति शून्यवादखण्डनं समाप्तम् ॥ प्रत्यक्षखण्डश्च समाप्तः ॥

सूत्रकारेण तु " सत्संप्रयोगे " इत्यादिना प्रत्यक्षमात्रस्य लक्षणं कृतं भाष्यकारेण तु तत्प्रकरणवशादनुमानादीनामपि लक्षणं कृतमिति स्वसन्दर्भेपि सर्वेषामेव प्रमाणानां लक्षणं वक्तुं भाष्योक्तमेवानुमानलक्षणमवतारयितुमुपक्रमते-प्रत्यक्षस्येति । "सत्संप्रयोगे" इत्यादिलक्षणं सूत्रकारेण लोकसिद्धमेवोक्तं तस्यैववक्तव्यत्वात् तेन च लक्षणेन प्रत्यक्षस्याव्यभिचारमुक्त्वा, यथा-" अतो न निरालम्बनः प्रत्ययः, अतो नाऽभिचरति प्रत्यक्षम् " इति । इदानीमनुमानादेरप्यव्यभिचारार्थम्=यन्न व्यचिरति तदेवानुमानमिति वक्तुं प्रदर्शयितुं वा लोकसिद्धमेवानुमानस्यापि लक्षणमाह भाष्यकार इति शेषः । भाष्योक्तमनुमानलक्षणमुद्दिशति-अनुमानमिति, ज्ञातसम्बधस्य पदार्थद्वयस्य यथा वन्हिधूमयोः कारणकार्यभावः सम्बन्धो ज्ञातस्तत्रैकदेशदर्शनात्=धूमदर्शनादऽविनाभाविदर्शनात् असंनिकृष्टे=प्रमाणान्तरेणाऽज्ञातेऽबाधिते च, ए-

**यस्य यादृशस्य येन यादृशेन सह साक्षाद्वा प्रणाड्या वा यादृशः सम्बन्धः– संयोगः समवाय एकार्थसमवायः कार्यकारणत्वमऽन्यो वा दृष्टान्तधर्मिषु नियतो**

---

कदेशान्तरे वन्हौ यज्ज्ञानमुत्पद्यते–अस्त्यत्र वन्हिरित्यादि तदनुमानमित्यर्थः। उक्तं च शालिकनाथमिश्रेण–

" ज्ञातसम्बन्धनियमस्यैकदेशस्य दर्शनात्।
एकदेशान्तरे बुद्धिरनुमानमबाधिते॥"
" यः कश्चिद् येन यस्येह सम्बन्धो निरुपाधिकः।
प्रत्यक्षादिप्रमासिद्धः स तस्य गमको मतः॥"

" ज्ञातः सम्बन्धनियमो यस्य तस्यैकदेशस्य दर्शनादेकदेशान्तरे (या) बुद्धिः सानुमानमित्यर्थः।" इति।

निर्दिष्टं भाष्योक्तमनुमानलक्षणं स्वयं व्याचष्टे– यस्येत्यादिना। यस्य=धूमस्य, यादृशस्य=अनुच्छिन्नमूलादेः, येन=वन्हिना, यादृशेन=धूमसहकारिकाष्ठादिजन्येन, इदं विशेषणमयोगोलकादिनिष्ठवन्हिव्यावृत्त्यर्थम्। साक्षात्– यथा वन्हिधूमयोः। प्रणाड्या– यथा मीमांसकमते ज्ञानस्याप्रत्यक्षत्वाज्ज्ञाततायाः प्रत्यक्षेण प्रत्यक्षस्य चेन्द्रियेण सम्बन्ध इति ज्ञाततया प्रत्यक्षप्रणाड्येन्द्रियानुमानं प्रत्यक्षस्याप्रत्यक्षत्वेन साक्षात्प्रत्यक्षेणेन्द्रियानुमानासम्भवात्। संयोगेति– यथा यत्र दूरात् केनापि मर्यादया गच्छन् हस्ती पृष्ठतो दृष्टस्तत्र तेन हस्तिना यद्धस्तिपकानुमानं तत्र संयोग एव सम्बन्धः, अनुमेयेनानुमापकस्य संयोगमात्रस्य सत्त्वात् पक्षे हस्तिनि हस्तिनोऽपि तादात्म्यसम्बन्धेन सत्त्वात्। एवं गच्छद्रथेन सारथ्यनुमाने वाहानुमाने च संयोग एव ज्ञेयः। समवायेति–यत्र बिलेऽर्धप्रविष्टस्य मूषकादेः दृश्यमानपुच्छेनानुमानं तत्र समवाय एव सम्बन्धः मूषकादिशरीरस्यावयवभूतेन पुच्छेन सह समवायस्यैव सम्बन्धस्य सत्त्वात्। केवलसंयोगसमवाययोर्व्याप्तिकारणत्वं दुर्लभं मत्वाह– एकार्थसमवाय इति, यथा गन्धेन रसानुमाने एतद्वृक्षत्वेन कपिसंयोगानुमाने च साध्यसाधनयोरेकार्थसमवाय एव सम्बन्धः। कार्यकारणत्वम्=यथा वन्हिधूमयोः कार्यकारणभाव एव सम्बन्धः। अन्यः=प्रयोज्यप्रयोजकभावादिर्यथा वन्ह्यभावेन धूमाभावानुमाने।

**ज्ञातस्तं तादृशं साध्यधर्मिषु दृष्टवतस्तस्मिंस्तादृशे तादृशसम्बन्धसम्बन्धिनि प्रबलेन प्रमाणेन ताद्रूप्यतद्विपर्ययाभ्यामपरिच्छिन्ने या बुद्धिः साऽनुमानम् । यथा धूमस्याऽनुपरतोर्ध्वगमनस्याग्निसाहित्यं महानसादिषु नियतमुपलब्धवतः पर्वते तद्दर्शनादग्निज्ञानम् ।**

---

उक्तं च वैशेषिकोपस्कारेपि—"कार्याल्लिङ्गाद् धूमालोकादेरग्न्याद्यनुमानम्, कारणादपि यथा बधिरस्य भेरीदण्डसंयोगविशेषाच्छब्दानुमानम्, यथा वा धार्मिकस्य यथाविधि यागस्नानाद्यनुष्ठानाद्धर्मस्वर्गाद्यनुमानम्, यथाविधि कारीर्याद्यनुष्ठानाद्वा वर्षानुमानम्, पयःपूर्णनद्यादौ खन्यमानप्रवाहाद्वा जलनिस्सरणानुमानम्, उपरि वृष्टिदर्शनाद्वा नदीवृद्ध्यनुमानम्, स चायं कार्यकारणभावलक्षण एक(:) सम्बन्धः प्रकारद्वयेनोक्तः । संयोगिनः शरीरस्य दर्शनात्त्वगिन्द्रियानुमानम्, विरोधिनो विस्फूर्ज्जतोऽहेर्दर्शनात् झटाद्यन्तरितनकुलानुमानम्, समवायिना जलौष्ण्येन तत्सम्बद्धतेजोनुमानम् ।" इति ।

दृष्टान्तधर्मिषु=सपक्षेषु, नियतो ज्ञातः=नियमेन दृष्टः, यस्येत्यनेनान्वयः । तम्=धूमम् । तादृशम्= अविच्छिन्नमूलम् । साध्यधर्मिषु=पक्षेषु पर्वतादिषु दृष्टवतः जनस्य, या बुद्धिरित्यनेनान्वयः । साध्यविशेषणान्याह—तस्मिन्नित्यादिना । तस्मिन्=वन्हौ । तादृशे=धूमसहकारिकाष्ठादिजन्ये । तादृशसम्बधसम्बन्धिनि=सपक्षे व्याप्येन सह यादृशः कार्यकारणभावादिसम्बन्धो दृष्टस्तादृशसम्बन्धवति, सर्वत्र सप्तम्यर्थो विषयत्वम् । प्रबलेनेनि—प्रबलेन प्रमाणेन ताद्रूप्यतद्विपर्ययाभ्यां परिच्छिन्नत्वं यस्य न ज्ञातं तस्मिन्नित्यर्थः । ताद्रूप्यापरिच्छिन्नेति—तद्रूपस्य भावस्ताद्रूप्यं यथा पर्वतस्थता परिच्छेदो ज्ञानं पर्वतनिष्ठत्वेनाज्ञाते इत्यर्थः । ज्ञातस्यैवानुमानेऽनुमानस्यागृहीतग्राहित्वरूपं प्रामाण्यं न स्यात् । तथा तद्विपर्ययापरिच्छिन्ने= ताद्रूप्यविपर्ययापरिच्छिन्ने=येन रूपेणानुमातुमिष्यते तद्विरुद्धरूपेण चाज्ञाते वन्हौ या बुद्धिः साऽनुमानमित्यर्थः । अत्र दृष्टान्तमाह—यथेति । तद्दर्शनात्=धूमदर्शनात् । " अग्निज्ञानम् " इत्यत्रानुमानमिति शेषः । उक्तं च श्लोकवार्तिके—

" द्वयं वा ज्ञातसम्बन्धमुपलब्धं परस्परम् ।
तस्यैकदेशशब्दाभ्यामुच्येते समुदायिनौ ॥

**ननु नियमावधारणाधीनत्वे कथं ताद्रूप्येणापरिच्छिन्ने प्रवृत्तिः ? ईदृशो हि नियमः-यत्र यत्र धूमस्तत्र**

---

सम्बन्धो व्याप्तिरिष्टात्र लिङ्गधर्मस्य लिङ्गिना ।
व्याप्यस्य गमकत्वं च व्यापकं गम्यमिष्यते ॥
यो यस्य देशकालाभ्यां समो न्यूनोपि वा भवेत् ।
स व्याप्यो व्यापकस्तस्य समोवाऽभ्यधिकोपि वा ॥
तेन व्याप्ये गृहीतेर्थे व्यापकस्तस्य गृह्यते ।
नह्यन्यथा भवत्येषा व्याप्यव्यापकता तयोः ॥" इति ।

तथा-"असंनिकृष्टवाचा च द्वयमत्र जिहासितम्- ।
ताद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोपि च ॥
प्रमितस्य प्रमाणे हि नापेक्षा जायते पुनः ॥
ताद्रूप्येण परिच्छिन्ने प्रमाणं निष्फलं परम् ।
वैपरीत्यपरिच्छिन्ने नावकाशः परस्य तु ॥" इति ।

न्यायरत्नाकरे तु ग्रन्थकृता साध्यविशिष्टत्वेन पक्षस्यैवानुमेयत्वमाश्रित्याऽसंनिकृष्टपदस्य तद्विशेषणत्वमेवोक्तम्- " भाष्यकारेण " असंनिकृष्टे " इति प्रतिज्ञातार्थस्य साध्यस्य विशेषणमुपात्तं तस्य व्यावर्त्यं दर्शयति-असंनिकृष्टेति, येन रूपेणानुमातुमिष्यते तेनैव रूपेण तद्विपरीतेन वा रूपान्तरेण शीघ्रप्रमाणेन परिच्छिन्नो यो धर्मी स संनिकृष्टस्तस्य पक्षत्वं व्यावर्तयितुमसंनिकृष्टग्रहणम् । " " धूमवानग्निमानिति सामान्यतोऽवगतेपि पर्वतादेर्देशविशेषस्य स्वरूपं व्याप्तिसमये नावगतं नतरामग्निमत्त्वं तस्माद्देशकालाधिक्याद् युक्तमगृहीतग्राहित्वमनुमानस्य । स्मरणाभिमाननिरासार्थत्वे चासंनिकृष्टग्रहणस्य विपरीतपरिच्छिन्नेऽनुमानप्रवृत्तिरनिरस्ता स्यात् न हि तन्निरासस्यावयवान्तरमस्तीत्यलमनेन । " इति ।

नन्वऽनुमानस्य नियमावधारणाधीनत्वे=व्याप्तिग्रहाधीनत्वे सति ताद्रूप्येणापरिच्छिन्ने=प्रमाणान्तरेणाऽज्ञाते प्रवृत्तिर्न सम्भवति यतो यत्र धूमस्तत्र वन्हिरितिव्याप्तिग्रहवशेनैव धूमाधिकरणे पर्वते वन्हिर्ज्ञात एवेति ताद्रूप्यपरिच्छिन्ने=पर्वतस्थत्वेन ज्ञाते एव वन्हावनुमानस्य प्रवृत्तिः सम्भवति न तु ताद्रूप्येणापरिच्छिन्ने इत्याशङ्कते- नन्विति । उक्तनियमस्य=व्याप्तेः स्वरूपमाह-

तत्राग्निः यद्यद्रसवत्तत्तद्रूपवदिति । एवं चेत् ? यावद्धूममग्निसद्भावोऽवगत एवेति नाऽपरिच्छिन्नविषयत्वमनुमानस्य संभवतीति, । अत एव चोद्याद्बिभ्यतः केचिदसंनिकृष्टग्रहणं स्मरणाभिमाननिरासार्थं व्याचक्षते गृहीतग्राहित्वमेवानुमानस्य स्वीकुर्वाणाः ।

---

ईदृशेत्यादिना । एवं चेत्=यद्युक्तनियमोऽस्ति तदा तत्स्वीकारे प्राप्ते यावद्धूमम्=यत्र यत्र धूमस्तत्र तत्राग्निसद्भाव उक्तनियमवशेनैव ज्ञात एवेति परिच्छिन्नविषयत्वान्नाऽपरिच्छिन्नविषयत्वम्=अज्ञातविषयत्वमनुमानस्य संभवति। अत्र प्रभाकरानुमतिमाह- अत एवेति, अनुमानस्य गृहीतग्राहित्वमेव स्वीकुर्वाणाः केचित्=प्राभाकराः, अत एव=उक्तरीत्या नानुमानस्यापरिच्छिन्नविषयत्वं संभवतीत्येतस्माच्चोद्यादेव बिभ्यतो भाष्योक्तानुमानलक्षणेऽसंनिकृष्टग्रहणम्=असंनिकृष्टपदमनुमानस्य स्मरणाभिमाननिरासार्थम्=स्मृतित्वनिरासार्थमस्तीति व्याचक्षते=व्याख्यां कुर्वन्तीत्यन्वयः ।

अयं भावः-यद्यसंनिकृष्टपदं नोच्येत तदा "एकसम्बन्धिज्ञानादपरसम्बन्धिस्मरणं भवति" इति न्यायादेकदेशदर्शनादेकदेशान्तरेऽर्थे या बुद्धिः सा स्मृतिरूपैव स्यादित्यनुमानस्य स्मृतिरूपत्वेनाऽप्रामाण्यं प्राप्नुयादिति स्मृतित्वव्यावृत्त्यर्थमसंनिकृष्टपदमुक्तम्, संनिकृष्टमिति प्रमाणान्तरेण प्रतीतस्य संज्ञा असंनिकृष्टमिति च प्रमाणान्तरेणाऽप्रतीतस्य संज्ञा तथा च स्मृतौ प्रमाणान्तरेण प्रतीतस्यैव विषयत्वात् स्मृतेः संनिकृष्टविषयत्वम्, अनुमानस्यापि यद्यपि गृहीतग्राहित्वमेव तथाप्यनुमानविषयस्य वन्ह्यादेरनुमानाङ्गभूतव्याप्तिग्रहमात्रेण गृहीतत्वात् तदतिरिक्तप्रमाणेन चाऽगृहीतत्वादसंनिकृष्टत्वमुपपद्यते इत्यनुमानस्य गृहीतग्राहित्वेऽप्यसंनिकृष्टविषयत्वं सम्भवति । किं वाऽसंनिकृष्टे नाम संस्कारमात्रजज्ञानाऽविषये इत्यर्थः अत्र च वक्ष्यमाणस्य "अनुमानस्य च" इत्यादिग्रन्थस्याप्यानुकूल्यम् । वस्तुतस्तु-अनुमानस्य गृहीतग्राहित्ववादिनः प्रभाकरस्याऽसंनिकृष्टपदेन स्मृतित्वनिरासोपपादनं नावधार्यते तत्प्रकारानुपलब्धेः । न च गृहीतग्राहित्वेपि व्याप्तिग्रहेण सामान्यग्रहणे सत्यपि विशेषतो ग्रहणाऽभावादनुमानेन विशेषतो ग्रहणाच्चाऽसंनिकृष्टत्वं स्यादिति वाच्यम्, तेनानुमानस्य विशेषग्राहित्वानभ्युपगमात्,उक्तं च

तथापि नाऽप्रामाण्यम्, नह्यऽगृहीतग्रहणं प्रमाणलक्षणम्। अनुभूतिर्हि तल्लक्षणम्। अनुमानं च गृहीतग्राहित्वेपि प्रत्युत्पन्नलिङ्गकारणजन्यत्वेन संस्कारमात्रजन्यत्वाभावादऽनुभूतिरेवेति युक्तमस्य प्रामाण्यम्।

अथ स्मृतिप्रमोषः कस्मान्नाश्रीयते?, प्रत्युत्पन्नकारणसद्भावात्, संस्कारातिरिक्तकारणाऽसद्भावेन हि 'इदं

---

तन्मतमुद्दिश्य ग्रन्थकृता न्यायरत्नाकारे-"यश्च (प्रभाकरः) दृष्टस्यापि वन्ह्यादेर्देशकालान्तरसबन्धमात्रमप्यगृहीतं नानुमानेन गृह्यते गृहीतविषयमेवानुमानमिति वदति।" इति। अस्मिन्मतेऽनुमानस्य गृहीतग्राहित्वादसंनिकृष्टविषयत्वमेव नोपपद्येतेत्याद्यनुसन्धेयम्। एतद्ग्रन्थस्य सर्वात्मना प्रभाकरमतानुकूलत्वेपि केचित्पदग्रहणात् पूर्वपक्षिणः प्राभाकरभिन्नत्वमेव सामान्यतः प्रतीयते। पूर्वपक्षी संप्रति स्वमतमाह- तथापीति, अनुमानस्य गृहीतग्राहकत्वेपि नाऽप्रामाण्यम्। अत्र हेतुमाह- न हीति, यद्यगृहीतग्राहित्वं प्रमाणलक्षणं स्यात्तदानुमानस्योक्तरीत्या गृहीतग्राहकत्वान्नस्यादपि प्रामाण्यं नैवमस्ति, न ह्यगृहीतग्राहित्वं प्रमाणलक्षणमस्ति किं त्वनुभूतित्वमेव तल्लक्षणम्=प्रमाणलक्षणम्, तथा चानुमानस्य प्रत्युत्पन्नलिङ्गकारणजत्वेन=पक्षधर्मतया तत्कालज्ञातलिङ्गभूतं यत् कारणं तज्जन्यत्वेन संस्कारमात्रजन्यत्वाभावेन च स्मृतित्वाभावादनुभूतित्वमेवास्तीति युक्तमस्य=अनुमानस्य प्रामाण्यमित्यर्थः।

ननु यथा शुक्तिरजतज्ञानस्थले चाकचिक्यवशाद्रजतस्य स्मृतिर्भवति तस्याः स्मृतेश्च प्रमोषः स्वीक्रियत इति न शुक्तिरजतज्ञानस्य स्मृतित्वमापद्यते तथानुमानस्थलेपि "एकसंबन्धिज्ञानादपरसंबन्धिस्मरणं भवति" इति न्यायाद् धूमदर्शनेन वन्हेः स्मृतिर्भवति तस्याश्च स्मृतेः प्रमोषो भवतीति नानुमानस्यापि स्मृतित्वापत्तिरिति तथा च स्मृतित्वप्रमोष एवानुमानस्थले किं नाश्रीयते इत्येवं कोपि मुरारिमार्गानुगाम्याशङ्कते-अथेति। अनुमानस्य गृहीतग्राहित्ववादी पूर्वोक्तः पूर्वपक्ष्येव परिहरति-प्रत्युत्पन्नेति, इदं रजतमिति ज्ञानस्थले तु रजतज्ञानस्य संस्कारातिरिक्तं कारणं न संभवतीत्यनुभवरूपस्यापि रजतज्ञानस्य स्मृतित्वमाश्रीयते अथ च न स्मृतित्वमिष्टमिति हेतोस्तत्र स्मृतित्वप्रमोषोप्यङ्गीक्रियते, रजतज्ञानस्य स्मृतित्वे हि तस्य स्मर्यमाणरजतविषयकत्वेन भ्रा-

रजतम्' इत्यत्रानुभवरूपस्यापि रजतज्ञानस्य बालात् स्मृतित्वमाश्रित्य प्रमोषोऽङ्गीकृतः। अत्र तु लिङ्गस्यानुभवकारणस्य सद्भावादयुक्तं प्रतीतिसिद्धस्यानुभवरूपस्यापन्हवेन स्मृतिप्रमोषाङ्गीकरणमिति।

सोयमेषामकारणकस्त्रासः, तथा हि-यदि हि यावद्व्याप्यं व्यापकसद्भावोऽवगतः स्यात्ततो गृहीतग्रा-

---

हित्वं न स्यादिति स्मृतित्वप्रमोषे हेतुः। अनुमाने तु प्रत्युत्पन्नकारणस्य=तदानीमेवावगतस्य धूमस्य तदानीमेवोत्पन्नस्य धूमज्ञानस्य वा कारणस्य सद्भावान्न वन्हिज्ञानस्य संस्कारजन्यत्वं ये नानुमानस्य स्मृतित्वमापद्येत स्मृतेश्च पुनः प्रमोषः स्वीक्रियेत, संस्कारश्च न प्रत्युत्पन्नं कारणं तस्य प्राचीनत्वादित्याह-प्रत्युत्पन्नेति। एतदेव विशदयति- संस्कारातिरिक्तेति। अनुमाने व्यतिरेकमाह-अत्रेति, अत्र=अनुमाने। प्रतीतिसिद्धस्यानुभवरूपस्य=अनुभवत्वस्यापन्हवेन स्मृतित्वप्रमोषस्वीकारोऽयुक्त इत्यर्थः। तस्मादनुमानस्यानुभूतित्वादेव प्रामाण्यमिति सिद्धम्। प्रकरणपञ्चिकायामप्युक्तम्-"नन्वेवं संबन्धस्यावगतत्वाद् धूमादिसत्तानिश्चयादधिकं निश्चेतव्यं नावशिष्यत इत्यनुमानमप्रमाणं स्यात्। सत्यम्? स्याद् यद्यऽनधिगतार्थगन्तृ प्रमाणमिति प्रमाणलक्षणं स्यात्, अनुभूतिस्तु प्रमाणमित्युक्तम्, धूमाच्चाग्निज्ञानमनुभवाकारप्रवृत्तं धारावाहिकवत्(प्रमाणम्)। न चात्र स्मृतिप्रमोषकल्पना प्रत्युत्पन्नकारणसंभवात्, अनुभवकारणासंभवेन शुक्तिकारजतादिषु स्मृतिप्रमोषः प्रतीत्यनारूढोप्याश्रितः, इह तु संबन्धनियमस्मरणमेकदेशदर्शनं चानुभवकारणमस्तीति यथाप्रतीत्यनुभूतिरूपतैवाश्रयितुमुचितेति युक्तमेवानुमानस्य प्रामाण्यम्।"इति।

नन्वित्यादिना पूर्वपक्षिमतं प्रतिपाद्य संप्रति सिद्धान्ती तत्परिहारमारभते-सोयमित्यादिना, अनुमानस्य गृहीतग्राहित्वादऽप्रामाण्यं न स्यादिति नागृहीतग्राहित्वं प्रामाण्यं किं त्वनुभूतित्वमेव प्रमाणलक्षणं तथा चानुभूतित्वादेवानुमानस्य प्रामाण्यमऽसंनिकृष्टपदमप्यनुमानस्य स्मृतित्वनिरासार्थमित्ययं त्रासोऽकारणक एवेत्यर्थः। एतदेवोपपादयति-तथा हीत्यादिना। स्पष्टोयं ग्रन्थः। यावद्व्याप्यं व्यापकसद्भावावगमे हि धूमाधिकरणे पर्वते व्याप्तिग्रहदशायामेव वन्हिरवगतः स्यादित्यवगतस्यैव वन्हेरनुमानेन ग्रहणादनु-

हित्वमाशङ्क्येतापि, न त्वेवमस्ति, महानसादिष्वेव हि दृष्टान्तधर्मिषु प्रागऽनुमानाद् धूमस्याग्निसाहित्यमवगतं न सर्वत्र, प्रमाणासंभवात्। यथा चासंभवस्तथा न्यायरत्नमालायामेव प्रपञ्चितम्।

दृष्टान्तधर्मिष्वेव बहुशोऽग्निसाहित्यमुपलब्धवतोऽनग्नौ च क्वचिदपि प्रयत्नेनान्विष्यमाणे धूममदृष्टवतः

---

मानस्य गृहीतग्राहित्वाशङ्का स्यादपि नैवमस्तीति भावः। अत्र हेतुमाह—महानसादीति। न सर्वत्रेति—धूमस्याग्निसाहित्यं सर्वत्र पर्वतादौ नावगतं प्रमाणासम्भवात्, तथाच पर्वतेऽगृहीतस्यैवाग्नेर्ग्रहणात् युक्तमनुमानस्य प्रामाण्यमित्यर्थः। प्रामाणासम्भवश्च न्यायरत्नमालायां विस्तरेण प्रतिपादित इति नेह पुनः प्रतिपाद्यत इत्याह—यथा चेति। तत्र हि—"कश्चित्तु बहिरिन्द्रियविषयमेव नियममिच्छति, स हि मन्यते—वन्हिधूमयोः सम्बन्धो देशकालानवच्छिन्न एव प्रत्यक्षेणावगम्यत इति" इत्यादिनाऽशङ्क्य, "अपि चैवं प्रत्यक्षानगततत्कालसम्बन्धनियमविरुद्धस्यात्यन्तानवगतस्य कालान्तरसम्बन्धस्यानुमानेन ग्रहणे गृहीतग्राहित्वमनुमानस्य दूरापास्तं स्यात्" "अवगतमपि महानसादौ सामान्यं देशान्तरकालान्तरादौ प्रत्यक्षेणेवानुमानेन प्रत्यभिज्ञायमानं भवति प्रमेयमि न सिद्धसाध्यता।" इत्येवमादिना सविस्तरग्रन्थेन परिहृतं तत्रैव द्रष्टव्यम्। वार्तिककारैरप्युक्तम्—

"देशस्य पर्वतादेस्तु स्वरूपे पावकादृते।
गृहीतेग्निविशिष्टस्य पुनर्ज्ञानं न दुष्यति॥
तस्माद्धर्मविशिष्टस्य धर्मिणः स्यात् प्रमेयता।
सा देशस्याग्नियुक्तस्य, धूमस्यान्यैश्च कल्पिता॥" इति।

स्वमतेनानुमानप्रकारमुपपादयति— दृष्टान्तेति, दृष्टान्तधर्मिषु=सपक्षेषु महानसादिषु धूमस्याग्निसाहित्यमुपलब्धवतः=दृष्टवतः पुरुषस्य। अनग्नौ=अग्निरहिते स्थाने क्वचिदपि प्रयत्नेनान्विष्यमाणेपि धूमे धूममदृष्टवतः पुरुषस्य, इत्यनेन व्यभिचारादर्शनापेक्षाप्युपपादिता। यस्य यं विना क्वचिदपि स्थितिर्न भवति तेनाव्यभिचरितेन हेतुना तस्य साध्यस्य साध्यधर्मिषु=पक्षेष्वनुमानं भवति तदाह—साध्येति। अत्र भट्टपादं प्रमाणयति—साहि-

साध्यधर्मिष्वग्निमत्ताज्ञानमुत्पद्यते । आह च—

"साहित्ये मितदेशत्वात् प्रसिद्धे वन्हिधूमयोः ।
व्यतिरेकस्य चादृष्टेर्गमकत्वं प्रकल्प्यते ॥" इति ।

"धूमस्तु दृष्टिमात्रेण गमकः सहचारिणः" इति च ।
ततश्चानुमित्सता न सर्वेषां धूमवतामग्निमत्ताऽवगन्तव्या, नापि सर्वत्राऽनग्नौ धूमस्याऽभावः। भूयोग्निसाहित्यं व्यभिचाराऽदर्शनमित्येतावदेवानुमानार्थिभिरभ्यर्थनीयं नाधिकं किं चित् । यत्त्विदं यत्र यत्र धूमस्तत्राग्निरिति ज्ञानं तदनुमानमेवेति तत्रैवोक्तम् ।

---

त्येति । वन्हिधूमयोः साहित्ये मितदेशत्वात्=साहित्यग्राहकदेशानां महानसादीनामल्पत्वात् प्रसिद्धे=ज्ञाते सति व्यतिरेकस्य=व्यभिचारस्य=व्यन्ह्यभाववति धूमसत्त्वस्य चादृष्टे सति तस्य धूमस्य गमकत्वम्=वन्ह्यनुमापकत्वं प्रकल्प्यते इत्यर्थः। धूमेति–धूमश्च दृष्टिमात्रेण=दर्शनमात्रेण सहचारिणः=वन्हेर्गमकः=अनुमापको भवतीत्यर्थः। उपसंहरन् "नत्वेवमस्ति" इति(२२७पृ) प्रतिज्ञातमर्थमाह– ततश्चेति, यतः केषु चिदेव सपक्षेष्वग्निसाहित्यमुपलब्धवतोऽनुमानं संभवति ततोऽनुमित्सता जनेन न सर्वेषां धूमवतामऽग्निमत्तावगन्तव्या येनानुमानस्य गृहीतग्राहित्वं प्रसज्येत । नापीति–अवगन्तव्य इति शेषः। सर्वेषु साध्याभाववत्प्रदेशेषु हेत्वभावज्ञानस्याप्यसंभवात्। तर्ह्यनुमित्सता किमवगन्तव्यमित्याह–भूय इति। किं वा व्याप्तिग्रहसामग्रीमाह–भूय इति। अभ्यर्थनीयम्=अपेक्षितमस्ति । अधिकम्=साध्यसकलदेशवृत्तित्वग्रहणं नापेक्षितमस्तीत्यर्थः। ननु 'यत्र यत्र धूमस्तत्राग्निः' इत्यस्य प्रमाणभूतस्य ज्ञानस्य कस्मिन् प्रमाणेऽन्तर्भाव इत्याशङ्क्याह–यत्त्विदमिति । तत्र=न्यायरत्नमालायाम्? तथा हि–"यस्त्वयं यत्र यत्र धूमस्तत्राग्निरिति भूयोदर्शनतोऽवगमः स कथम्? न ह्यसौ नास्ति न चाप्रमाणं सर्वदा सर्वेषां दृढत्वेन जायमानत्वात्, तदयं कस्मिंश्चित्प्रमाणेऽन्तर्भवतीति वक्तव्यम् । उच्यते–आनुमानिकोयमवगमो ज्ञातसंबन्धस्योपजायमानत्वात् । परोक्षरूपत्वाच्च नैन्द्रियकः साक्षात्कारित्वाभावात् संविद्विरोधाच्च" इति। तस्मात् 'यत्र यत्र धूमस्तत्राग्निः' इत्यपि ज्ञानमनुमानात्मकमेवेति सिद्धम्।

**नन्वेवमप्यनेनैव सामान्यानुमानेन सर्वधूमवतामग्निमत्ताऽवगतेति यत् पुनः पर्वतादिदेशविशेषेषु धूमदर्शनादग्न्यनुमानं तस्य गृहीतग्राहित्वं तदवस्थमेव स्यात् ? । मैवम्, सामान्यविशेषभेदात्–सामान्येन हि धूमवतामग्निमत्ताऽवगता पर्वतादेस्तु देशविशेषस्य स्वरूपमपि प्रागनवगतम्, न तरामग्निमत्त्वम् ।**

**यस्त्ववगतमेवेति मन्यते, तेन पर्वतस्वरूपमेव तावदप्राप्तं पर्वतसमीपस्थैः केन प्रमाणेनावगतमिति वक्त-**

---

ननु यदि–'यत्र यत्र धूमस्तत्राग्निः' इति ज्ञानमनुमानमेव प्रमाणभूतं तदाऽनेनैव सामान्यानुमानेन सकलधूमवतामग्निमत्ताऽवगमात् पर्वतस्याप्यनेनैवाग्निमत्ता गृहीतैवेति गृहीताया एवाग्निमत्तायाः पर्वतो वन्हिमानिति विशेषानुमानेन ग्रहणादस्य गृहीतग्राहित्वं तदवस्थमेव=प्राप्तमेवेति शङ्कते– नन्विति । परिहरति–मैवमिति । उपपादयति–सामान्येति, 'यत्र यत्र धूमस्तत्राग्निः' इत्यनुमानेन तु सामान्यरूपेणैव सकलधूमवतामग्निमत्ता गृहीता न तु विशेषरूपेण पर्वतस्य, पर्वतो वन्हिमानित्यनेन तु विशेषरूपेण पर्वतस्याग्निमत्ता गृह्यत इति न गृहीतग्राहित्वमित्यर्थः । संक्षेपेणोक्तं विशदयति–सामान्येनेति, सामान्यरूपेणेत्यर्थः । प्राक्=पर्वतो वन्हिमानिति ज्ञानात् पूर्वं यत्र यत्र धूमस्तत्राग्निरिति व्याप्तिग्रहकाले पर्वतादिदेशविशेषस्य स्वरूपमपि न प्रत्यक्षीकृतमिति तस्य पर्वतादेरग्निमत्ताग्रहणस्य तु का वार्तेत्याह–न तरामिति ।

यस्त्विति–तेन वक्तव्यमित्यन्वयः । यस्तु पण्डितंमन्योऽनुमानस्य गृहीतग्राहित्वप्रतिपादनार्थं यत्र धूमस्तत्राग्निरितिज्ञानेनैव पर्वतस्याग्निमत्त्वमवगतमेवेति मन्यते तेन 'पर्वते वन्हिमनुमित्सता पुरुषेण पर्वतेन सह चक्षुस्संयोगात् पूर्वं पर्वतस्वरूपमेवाऽप्राप्तम्=अगृहीतं पर्वतसमीपस्थैः=पर्वतसमीपवासिजनैः केन प्रमाणेनावगतम्' इति वक्तव्यम् । न च प्रत्यक्षेण पर्वतस्वरूपावगमः सम्भवति प्रत्यक्षेण हि प्राप्तम्=चक्षुरादिसंनिकृष्टमेव गृह्यते न च पर्वतस्वरूपं तदा चक्षुरादिसंयुक्तं येन प्रत्यक्षेण गृह्येतेत्याह–न प्रत्यक्षेणेति । नाप्यनुमानादिना पर्वतस्वरूपावगमः सम्भवति, अनुमापकादिग्रहणाभावा-

व्यम्, न प्रत्यक्षेण नान्येन प्रमाणेन, न चानवगतपर्व-
तस्तस्याग्निमत्तामवधारयितुमलम् । यदि चेदानीतनं
पर्वतस्याग्निमत्त्वं प्रागेवावगतं स्यात् ततोऽग्न्यर्थी वि-
नैव धूमदर्शनेनाग्नये पर्वतमारोहेत्, नह्यग्न्यर्थिनोऽव-
गतेऽग्नौ धूमदर्शनेनार्थः कश्चित् ।

किं च धूमोपलक्षितस्य पर्वतादिदेशविशेषस्या-
ग्निसंबन्धोऽवगत इति वदता धूमसंबन्धोऽप्यवगत
इति वक्तव्यम्, नह्यज्ञातसंबन्धमुपलक्षणमुपलक्ष्यमु-
पलक्षयितुं क्षमम् ।

---

दित्याह- नान्येनेति । यदि हि पर्वतस्वरूपमेव नावगतं तदा तस्याग्निमत्ता कथमवगता स्यादित्याह- न चेति । अनवगतपर्वतः पुरुषः । तस्य=पर्वतस्य । अलम्=समर्थः । विपक्षे बाधकमाह-यदीति । इदानींतनम्=पर्वतोवन्हिमानित्यनुमानकालिकम् । प्रागेव=यत्र धूमस्तत्राग्निरितिव्याप्तिग्रहकाल एव । अत्र हेतुमाह- न हीति । अर्थः=प्रयोजनम् । अग्न्यर्थिनो हि धूमदर्शनेनेदमेव प्रयोजनं यद् धूमदर्शनेनाग्न्यवगमः स्यादिति, अग्न्यवगमश्च तस्य प्रागेव जात इति न धूमदर्शनस्य प्रयोजनमुपपद्येत, भवति च धूमदर्शनेन तस्य प्रयोजनमिति ज्ञायते न तेन पर्वतेऽग्निमत्त्वं प्रागवगतमित्यर्थः ।

दोषान्तरमाह-किं चेति, यदि यज्ञदत्तेन धूमोपलक्षितस्य पर्वतादिदेशमात्रस्याग्निमत्त्वमवगतमेव तदा तेन पर्वतादौ धूमसम्बन्धोऽप्यवगत एवेति वक्तव्यम्, अन्यथा धूमसम्बन्धावगतिं विनाग्निसम्बन्धावगमस्याप्यनुपपत्तेरित्याह- न हीति, यस्योपलक्षणस्य धूमादेः पर्वते सम्बन्धो न ज्ञातस्तदज्ञातसम्बन्धमुपलक्षणमुपलक्ष्यम्=पर्वतादिकमुपलक्षयितुम्=वन्ह्यादिना विशेष्टुं न क्षमं भवतीति धूमादेरपि पर्वतादौ सम्बन्धस्तेनावगत एवेति वक्तव्यं तथा च " लिङ्गस्यैव देशकालातिरेको न लिङ्गिनः" इति यत्पूर्वपक्षिणानुमाने संकेतः कृतस्तन्नयुज्यते उक्तरीत्या लिङ्गसम्बन्धस्याप्यवगतत्वापत्तेरिति भावः ।

ननु देशमात्रस्य=देशसामान्यस्यैव धूमेनोपलक्षणम्=धूमोपलक्षणकत्वमस्ति, अर्थाद्धूमस्तु सामान्यदेशस्यैवोपलक्षणत्वेन ज्ञातो न तु पर्वतादिदेशविशेषस्योपलक्षणत्वेनेति न धूमसम्बन्धस्यापि प्रागेवाऽवगतत्वापत्तिरित्याशङ्क-

अथ देशमात्रस्य धूमेनोपलक्षणं न देशविशेषस्य ?, ततोऽग्निमत्त्वमपि तन्मात्रस्या वगतं न देशविशेषस्य, अतो लिङ्गलिङ्गिनोरविशेषात् "लिङ्गस्यैव देशकालातिरेको न लिङ्गिनः" इति प्रलापमात्रम् ।

अपि च यत्राग्नीन्धनसंयोगस्तत्र धूम इत्यनेन धूमोऽप्यवगत एवेति न किंचिदप्यवगन्तव्यमवशिष्यते धूमज्ञानेनेत्यलं बालजल्पितेन ।

---

ते-अथेति । उत्तरमाह- तत इति, यदि 'यत्र धूमस्तत्राग्निः' इति ज्ञानेन धूमोपलक्षणकत्वं देशसामान्यस्यैव ज्ञातं न पर्वतादिदेशविशेषस्य तदाग्निमत्त्वमपि तन्मात्रस्य=देशसामान्यमात्रस्यैवावगतं न तु पर्वतादिदेशविशेषस्येति देशविशेषस्यैवानुमानेनाग्निमत्त्वग्रहणान्नानुमानस्य गृहीतग्राहित्वमित्यर्थः । अतोऽनुमानस्य गृहीतग्राहित्ववादिभिर्यदुक्तम्-" लिङ्गस्यैव देशकालातिरेको न लिङ्गिनः " इति तल्लिङ्गलिङ्गिनोरविशेषात् प्रलापमात्रमित्यन्वयः । लिङ्गिनो वन्ह्यादेर्देशकालकृतोऽतिरेको विशेषो न भवति किं तु यत्र धूमस्तत्राग्निरित्यनेनैव ज्ञानेन सकलधूमवतामग्निमत्त्वमवगतं भवत्येवेति गृहीतग्राह्येवानुमानम्, लिङ्गस्य च देशकालातिरेको भवतीति न प्राक् पर्वते धूमसम्बन्धावगमः । तथा चाग्निसम्बन्धावगमस्योपपत्तये धूमसम्बन्धावगमस्यापत्तिर्नास्तीति पूर्वपक्षिवाक्याभिप्रायः । परिहारस्तु लिङ्गलिङ्गिनोरविशेषादिति- वन्हिधूमयोरविशेषात् यदि वन्हेः सकलधूमवत्सु सम्बन्धो गृहीतस्तदा धूमस्यापि गृहीत एव धूमसम्बन्धावगमं विना वन्हिसम्बन्धावगमानुपपत्तेः । यदि धूमसम्बन्धः सर्वत्र नावगतस्तदा वन्हिसम्बन्धोऽपि नावगत इति नानुमानस्य गृहीतग्राहित्वमित्याशयः ।

दोषान्तरमाह-अपि चेति, यदि 'यत्र धूमस्तत्राग्निः' इति व्याप्तिज्ञानेन व्यापकस्यैव सकलव्याप्यदेशेषु सत्त्वं विशेषरूपेणापि गृह्यते न व्याप्यस्य तदापि 'यत्राग्नीन्धनसंयोगस्तत्र धूमः' इत्यनेन व्याप्तिज्ञानेन तु व्यापकीभूतस्य धूमस्यापि सर्वेष्वग्नीन्धनसंयोगवत्सु देशेषु सत्त्वमवगतमेवेति वक्तव्यं त्वया तथा च पर्वतादिषु वन्हिसत्ताप्यवगता धूमसत्ताप्यवगता, तदिदानीं किमवशिष्यते यद्धूमज्ञानेन ज्ञातं स्यात् ? तथा च तव मते धूमज्ञानं व्यर्थमेव

यदि चावगतमेवानुमानेनावगम्यते ततः स्मरणमेव प्रमुषिततद्भावमऽनुमानज्ञानं स्यात् । न च प्रत्युत्पन्नकारणजत्वादऽस्मृतित्वम्, तदसिद्धेः—संबन्धिदर्शनं हि सदृशदर्शनवत् संस्कारमुद्बोधयेत्, क्लृप्तं हि तत्र तस्य कारणत्वम्, संस्कारश्चोद्बोधितः स्मृतिं जनयतीत्यविवादम्, स्मृतेश्च प्रमोषः शुक्तिकारजतादिवेदनेषु क्लृप्त एव । तदेवं क्लृप्तेनैव मार्गेण धूमादग्निज्ञानोत्पत्तौ को नामाऽक्लृप्तं लिङ्गस्य लिङ्गिज्ञानहेतुत्वं कल्पयेत् । कल्पनायां वा शुक्तावपि रजतवेदनस्यानुभवरूपत्वात्त-

---

स्यादित्यर्थः । तस्मादस्य पक्षस्य हेयतामाह—अलमिति । बालजल्पितं च—"लिङ्गस्यैव देशकालातिरेको न लिङ्गिनः" इति पूर्वपक्ष्युक्तिरेव ज्ञेया । किं वा बालैः सह जल्पितं ( वादः ) बालजल्पितम् ।

विपक्षे बाधकमाह—यदि चेति । प्रमुषिततद्भावम्=प्रमुषितस्मरणत्वम् । अनुमानज्ञानं स्मरणतुल्यमेव स्यादित्यर्थः । नन्वनुमानस्य संस्कारजन्यत्वाभावात् प्रत्युत्पन्नहेतुज्ञानरूपकारणजन्यत्वाच्च न स्मृतित्वमित्याशङ्क्याह—न चेति । हेतुमाह—तदसिद्धेरिति, प्रत्युत्पन्नकारणजत्वासिद्धेः अस्मृतित्वासिद्धेर्वेत्यर्थः । अत्रानुमानस्य स्मृतिरूपत्वमुपपादयति—सम्बन्धीति, यथा सदृशदर्शनेन संस्कारोद्बोधो भवति कमलदर्शनेन प्रियामुखस्मरणे तथा सम्बन्धिदर्शनेनापि संस्कारोद्बोधो भवत्येव यथा हस्तिदर्शनेन हस्तिपकस्मरणे । क्लृप्तम्=नियतम् । तत्र=संस्कारोद्बोधे । तस्य=सम्बन्धिदर्शनस्य कारणत्वम् । शुक्तिकेति—शुक्तिरजतज्ञाने यथा रजतस्य स्मृतिरेव भवति तथापि तत्र स्मृतित्वप्रमोषः स्वीक्रियते तथाऽनुमानेपि स्मृतित्वप्रमोष एव भविष्यति, तथा च धूमलक्षणसम्बन्धिदर्शनजन्यसंस्कारोद्बोधेनैव वन्हिज्ञाने सम्भवति धूमस्य धूमज्ञानस्य वा वन्हिज्ञानं प्रति हेतुत्वं नूतनं को नाम कल्पयेदित्याह— तदेवमिति । यद्यऽक्लृप्तस्यैव लिङ्गस्य लिङ्गिज्ञानं प्रति हेतुत्वमवकल्प्यते तदा शुक्तिरजतज्ञानस्याप्यनुभवरूपत्वात् तदुपपत्तये= अनुभवत्वोपपत्तये दोषस्यैवाक्लृप्तस्य तद्धेतुत्वं कल्पनीयं स्यादित्याह—कल्पनायामिति । यदि शुक्तिरजतज्ञानं प्रति दोषस्य हेतुत्वं न कल्प्यते किं तु तत्र

दुपपत्तये दोषस्यैवानुभवहेतुत्वं कल्पनीयम्। अकल्पने त्वत्रापि स्मृतिप्रमोषादऽप्रामाण्यमेव स्यात्। तस्मादवश्यमऽगृहीतग्राहित्वमङ्गीकर्तव्यम्।

नन्वग्निविशेषस्याऽगृहीतसंबन्धस्याऽननुमेत्वात्सामान्यमेवानुमेयं तच्च प्रागवगतमेवेति कथमऽगृहीतग्राहित्वम्? यथाहुः—

"विशेषेऽनुगमाभावः सामान्ये सिद्धसाध्यता।
अनुमाभङ्गपङ्केऽस्मिन्निमग्ना वादिदन्तिनः॥" इति।

नैष दोषः—अवगतस्यापि सामान्यस्य देशान्तरकाला-

---

स्मृतित्वप्रमोष एव स्वीक्रियते तदात्रापि=अनुमानस्थलेऽपि स्मृतित्वप्रमोष एव स्वीकार्यस्तथा चानुमानस्याप्रामाण्यमेव स्यादित्याह—अकल्पनेति। उपसंहरति—तस्मादिति, यस्माद् गृहीतग्राहित्वे प्रामाण्यं नोपपद्यते तस्मादवश्यमऽगृहीतग्राहित्वमनुमानस्य स्वीकार्यम्।

ननु पर्वतीयाग्निना तु धूमस्य व्याप्तिरेव न गृहीतेति न विशेषस्य पर्वतीयाग्नेरनुमानं सम्भवतीत्यगृहीतसम्बन्धस्याग्निविशेषस्याऽननुमेयत्वाद् वन्हिसामान्यमेवानुमेयं तच्च=वन्हिसामान्यं च प्रागेव 'यत्र धूमस्तत्राग्निः' इति ज्ञानेनैव धूमदेशे गृहीतमेवेति पुनरपि गृहीतग्राहित्वमेवानुमानस्य प्राप्तमित्याशङ्कते— नन्विति। अत्र प्रमाणमाह—विशेषेति, वन्हिविशेषस्यानुमेयत्वेऽनुगम एव न सम्भवति, अनुगमो हि यत्र धूमस्तत्राग्निरित्येव, पर्वतीयश्च वन्हिः पर्वते एव भवति महानसीयश्च महानस एव भवति न सकलेषु धूमाधिकरणेष्वित्यनुगमाभावः। अनुगमश्च वन्हिधूमसामान्ययोरेव भवतीति सामान्यस्यैवानुमेयत्वं सम्भवति सामान्यस्यानुमेयत्वे च सिद्धसाध्यता=गृहीतग्राहितानुमानस्य प्रसज्यते सामान्यस्य 'यत्र धूमस्तत्राग्निः' इत्येनैवाऽवगतत्वात् तस्मादनुमानप्रमाणभङ्गलक्षणपङ्के वादिदन्तिनो निमग्ना न ततो बहिरायातुं अनुमानप्रामाण्यमुपपादयितुं समर्था इत्यर्थः। भङ्गः=अनुपपत्तिः। परिहरति—नैषेति, "विशेषेऽनुगमाभावः सामान्ये सिद्धसाध्यता" इति न दोषावहः। एतदेवोपपादयति—अवगतेति, वन्हेः सामान्यरूपेण 'यत्र धूमः' इत्यनेनावगतस्यापि देशान्तरकालान्तरसम्बन्धस्याऽगृ-

न्तरसंबन्धस्यागृहीतस्य ग्रहणाद् ह्युपपन्नं प्रमेयत्वम् ।

इदं चापरमेकदेशिना वक्तव्यम्—केन प्रमाणेन धूमदर्शनस्याग्निज्ञानहेतुत्वमवगम्यते ? इति । तदानन्तर्यादिति चेत् ?, न, तस्य संस्कारद्वारेणाप्युपपत्तेः । अनुभवरूपत्वमनुपपन्नमिति चेत् ?, न, स्मरणस्यापि तत्परामर्शप्रमोषेणानुभवाभिमानोपपत्तेः । वस्तुतोऽनुभवत्वं त्वासिद्धमेव प्रमाणाभवात्, न ह्यग्निज्ञानस्या-

---

हीतस्य ग्रहणात्तस्य प्रमेयत्वमुपपद्यते तस्य चाऽगृहीतस्य संबन्धलक्षणप्रमेयस्य ग्रहणात्तद्विषयकस्यानुमानस्याप्यगृहीतग्राहित्वादुपपन्नं प्रामाण्यमित्यर्थः ।

सम्प्रति पूर्वपक्षिणं प्रति सिद्धान्ती शङ्कते— इदं चेत्यादिना, यद् धूमदर्शनस्याग्निज्ञानहेतुत्वमस्ति तत्र किं प्रमाणमिति वक्तव्यमित्यर्थः । यद्यनुमानस्यागृहीतग्राहित्वं नास्ति तदा स्मृतिरूपत्वमेव प्राप्स्यतीति सिद्धान्तिप्रश्नाभिप्रायः । उत्तरमाह—तदानन्तर्येति, यतो धूमदर्शनादनन्तरमेव वन्हिज्ञानं जायतेऽतो ऽर्थापत्त्यैव धूमदर्शनस्य वन्हिज्ञानहेतुत्वं ज्ञायते यदि धूमदर्शनमग्निज्ञानहेतुर्न स्यात्तदा धूमदर्शनादनन्तरमेव वन्हिज्ञानं न जायेतेत्यर्थापत्तिरेवात्र प्रमाणमित्यर्थः । परिहरति—तस्येति, तस्य =धूमदर्शनस्य संस्कारद्वारेण =संस्कारोद्बोधद्वारेणाप्यग्निज्ञानहेतुत्वमुपपद्यते यत एकसम्बन्धिदर्शनमपरसम्बन्धिस्मारकं भवत्येव, तथा चानुमानं प्रमुषितस्मृतिभावं स्मरणरूपमेव स्यादित्यर्थः । ननु यदि धूमदर्शनस्य संस्कारोद्बोधद्वारेणाग्निज्ञानहेतुत्वं स्यात्तदाऽनुमानज्ञानस्य स्मृतिभावत्वापत्त्याऽनुभवरूपत्वं न स्यादस्ति चानुभवरूपत्वमिति न धूमदर्शनस्य संस्कारोद्बोधद्वाराऽग्निज्ञानहेतुत्वमिति शङ्कते— अनुभवेति । परिहरति— नेति, यथा शुक्तिरजतस्य स्मरणस्वीकारेऽपि स्मृतित्वप्रमोषान्न शुक्तिरजतज्ञानस्य स्मृतित्वमापद्यते तथा धूमेन वन्हेः स्मरणस्यापि स्वीकारे 'वन्हिं स्मरामि' इत्याकारकपरामर्शस्य प्रमोषादनुमानस्याप्यनुभवाभिमानोपपत्तेर्न स्मृतिरूपत्वं स्यादित्याह—स्मरणेति, स्मरणस्य =वन्हिस्मरणस्य । वस्तुगत्यानुमाने स्मृतित्वप्रमोष एवोपपद्यतेऽनुभवत्वस्य तूपपत्तिरेव नास्तीत्याह—वस्तुत इति, अनुभवत्वमेवासिद्धमित्यर्थः । अनुमानस्यानुभवत्वे प्रमाणाभावमाह— न हीति, अग्निज्ञानमेव न प्रत्यक्षमिति तस्य ध-

नुभवत्वे ? प्रत्यक्षमन्यद्वा प्रमाणमस्ति । अस्ति तु स्मृतिप्रमोषे ।

अथ स्मृतिप्रमोषत्वे बाधकं स्यात्, न चाग्निज्ञानस्य तदस्तीत्यतो न स्मृतिप्रमोष इति चेत् ?, न, स्मृतिप्रमोषस्याप्यबाधदर्शनात् । मणिप्रभादर्शिनो मणिबुद्धिस्तावत् स्मृतिप्रमोष एव, अन्यथा विपरीतख्यातिप्रसङ्गात्, अथ च प्रवृत्तस्य मणिलाभान्न बाधकमस्ति, तस्मात्स्मृतिरेवानुमानमित्यऽप्रामाण्यापत्तिः ।

---

र्मोऽनुभवत्वं कथं प्रत्यक्षं स्यात् प्रत्यक्षाभावे चानुमानाद्यपि न सम्भवति तेषां प्रत्यक्षाधीनत्वात्, न च श्रुतिरप्यस्तीत्यर्थः । प्रत्युत स्मृतिप्रमोषे=स्मृतित्वप्रमोषे तु प्रमाणमस्तीत्याह—अस्तीति । प्रमाणं चात्र " तस्य संस्कार द्वारेणाप्युपपत्तेः " इत्यादि यदुक्तं तदेव ज्ञेयम् ।

ननु यत्र बाधकज्ञानमुत्पद्यते तत्रैव बाधज्ञाने जाते सति स्मृतित्वप्रमोषः स्वीक्रियते यथा शुक्तिरजतज्ञाने स्मृतित्वप्रमोषोऽस्ति तत्र नेदं रजतमिति बाधकमप्यस्त्येव तथाग्निज्ञानस्यापि स्मृतित्वप्रमोषोपपत्तये नायं पर्वतोऽग्निमानिति बाधकमपेक्ष्यते न चाग्निज्ञानस्य=पर्वतोऽग्निमानिति ज्ञानस्य तदस्ति=बाधकमस्तीति नानुमानस्थले स्मृतित्वप्रमोषः संभवतीति शङ्कते— अथेति । परिहरति—नेति । स्मृतीति—स्मृतित्वप्रमोषस्यापि बाधकं नास्ति येन स्मृतित्वप्रमोषो न स्वीक्रियेत । यद्येकसंबन्धिज्ञानस्यापरसंबन्धिस्मारकत्वं न स्यात्तदा धूमदर्शनेन वन्हिस्मृतिर्नोपपद्येत तथा च स्मृतित्वप्रमोषोपि नोपपद्येत न चैवमस्तीति भावः । न चायं नियमो यद्बाधकसत्त्वे एव स्मृतित्वप्रमोषो भवतीति येनाऽनुमानस्थले बाधकं विना स्मृतित्वमोषो न स्वीक्रियेत, यतो मणिप्रभायां मणित्वज्ञाने जाते तत्र मणिसंबन्धिप्रभादर्शनेन मणेः स्मरणमेव स्वीक्रियते शुक्तिरजतस्येवाऽथ च मणिज्ञानस्यानुभवत्वोपपत्तये स्मृतित्वप्रमोषोपि स्वीक्रियते न च तत्र नायं मणिरिति बाधकमस्ति प्रवृत्तस्य मणिलाभादेवेत्याह—मणिप्रभेति । अन्यथा=यदि मणिप्रभायां मणिज्ञानस्थले नायं मणिरिति बाधकं स्यात्तदा शुक्तिरजतज्ञानस्येव मणिज्ञानस्यापि विपरीतख्यातित्वं स्यात् न चैवमिष्टम् । बाधकाभावमेवाह—अथ चेति । उपसंहरति—

कथं च गृहीतग्राहित्वमनुमानस्य ?, अत्यन्तापरिदृष्टे देशे काले चाग्निरनुमीयते स केन प्रमाणेन प्रागवगतः ?, न प्रत्यक्षेण तस्य विद्यमानोपलम्भनत्वात् । न चान्येन केन चित् । किं चाग्निधूमयोर्मिथः सम्बन्धो देशकालानवच्छिन्नः प्रत्यक्षेणावगत इत्येतावदेव भवान् ब्रवीति, न चैतावता देशान्तरकालान्तरसम्बन्धोऽग्नेरवगतो भवति, तस्मादगृहीतग्राह्येवानुमानम् ।

किमत्रागृहीतम् ?, अग्निसामान्यं तावद् गृहीतमेव पर्वतोपि प्रत्यक्षेणावगतः, अग्निविशिष्टस्तु पर्वतो न केनाप्यवगत इति सोनुमेयो भविष्यति । तत्र च

---

तस्मादिति । यस्मादनुमानस्थले स्मृतित्वप्रमोषस्वीकारे बाधकं नास्ति तस्मादनुमानं स्मृतिरेव स्यात्तथा चाप्राण्यापत्तिरित्याक्षेपः ।

पुनरपि सिद्धान्त्याक्षिपति- कथं चेत्यादिना । स्पष्टोयं ग्रन्थः । कथमनुमानस्य गृहीतग्राहित्वं स्यात् ? अनुमानात्पूर्वं तु महानस एव वन्हिरवगतो न पर्वते न चास्मिन् काल इति पर्वते वन्हिः केन प्रमाणेन प्रागवगतः ? । न प्रत्यक्षेण प्रत्यक्षस्य विद्यमानमात्रग्राहकत्वात् न च प्राक् पर्वते वन्हेर्विद्यमानतायां प्रमाणमस्ति । तथा प्रत्यक्षस्य सत्संप्रयोगजन्यत्वान्नेदानीमपि वन्हिना सहेन्द्रियसंयोगोस्ति नतरां प्राक् । न चान्येन=अनुमानादिना, अनुमानादीनां प्रत्यक्षपरतन्त्रत्वादित्यर्थः। तव मतेनाप्यनुमानस्य गृहीतग्राहित्वं न संभवतीत्याह-किं चेति । 'यत्र धूमस्तत्राग्निः' इत्यनेन तु देशान्तरकालान्तरानवच्छिन्न एवाग्निधूमयोः संबन्धोऽवगतो न चैतावता देशान्तरकालान्तरसंबन्धोग्नेरवगतो येनानुमानस्य गृहीतग्राहित्वं स्यादित्यर्थः । स्वमतेनोपसंहरति-तस्मादिति ।

पूर्वपक्षी पृच्छति-किमत्रेति, पर्वतो वन्हिमानित्यत्र किमऽगृहीतमस्ति यस्य ग्रहणेनानुमानस्या ऽगृहीतग्राहित्वं त्वयोक्तमुपपद्येतेत्यर्थः । उत्तरमाह सिद्धान्ती-अग्नीति, 'यत्र धूमस्तत्राग्निः' इत्यनेनाग्निसामान्यमपि गृहीतमेव पर्वतस्तु प्रत्यक्षेणैवावगतः, अग्निविशिष्टस्तु पर्वतो न केनापि प्रमाणेनावगत इत्यग्निविशिष्टः पर्वत एवागृहीतोस्ति स एवानुमीयते-पर्वतो वन्हिमानिति। अ-

प्राप्ताऽप्राप्तविवेकेन सम्बन्धमात्रं प्रमेयमवशिष्यते । यथा "दध्ना जुहोति" इति विशिष्टविषयोपि विधिर्विशेषणपरो भवति तथेहापि, विशिष्टविषयमेवानुमानं विशेषणविशेष्ययोस्तु प्राप्तत्वात् "यजुर्युक्तं रथमध्वर्यवे ददाति" इतिवत्सम्बन्धविषयं भवतीति ।

---

स्यापि प्रमाणपुरस्सरमभिप्रायमाह– तत्रेति, प्राप्ताऽप्राप्तयोर्मध्येऽप्राप्तमेव विधीयत इति न्यायादग्निसामान्यस्य पर्वतस्य च प्राप्तत्वादप्राप्तं पर्वताग्निसंबन्धमात्रमेवात्र प्रमेयमस्तीत्यगृहीतस्य पर्वताग्निसंबन्धस्य ग्रहणादुपपन्नमनुमानस्यागृहीतग्राहित्वमित्यर्थः । अत्र दृष्टान्तमाह–यथेति, यथा–"दध्ना जुहोति" इति वाक्येन दधिकरणकत्वविशिष्टो होमो विधीयते इति विशिष्टहोमविषयोपि विधिर्होमस्य "अग्निहोत्रं जुहोति" इत्यनेन प्राप्तत्वाद् दधिलक्षणविशेषणमात्रपरो भवति, तथा पर्वतो वन्हिमानित्यत्रापि वन्हिसामान्यपर्वतयोः प्राप्तत्वात् विशेषणीभूतः पर्वताग्निसंबन्ध एवाप्राप्तोऽनुमेयो भवति । उक्तं च "दध्ना जुहोति" इत्यत्र माधवेन द्वितीयाध्यायद्वितीयपादीयदशमाधिकरणे—

"दधिहोमेन्यकर्मत्वं गुणो वाऽन्यत्तु पूर्ववत् ।
निर्गुणत्वादग्निहोत्रे युक्तो दध्यादिको गुणः ॥" इति ।

विशेषणविशेष्ययोः=वन्हिपर्वतयोः । दृष्टान्तान्तरमाह–यजुरिति । यथा "यजुर्युक्तं रथमध्वर्यवे ददाति" इत्यत्र दानस्य रथस्य च "सप्त दश रथान् ददाति" इत्यादिना प्राप्तत्वात् यजुर्युक्तरथस्याध्वर्योश्च संबन्धमात्रं विधीयते तदुक्तं माधवेन दशमाध्यायतृतीयपादविंशत्यधिकरणे—

"यजुर्युक्तोऽध्वर्युभागं बाधते यमयत्युत ।
बाधः प्रकाशवन्मैवं पक्षे प्राप्तेर्नियम्यते ॥" इति ।

यजमानारोहणाय यो वैरथः "इन्द्रस्य वज्रोसि" इत्यादियजुर्वेदमन्त्रैर्वाजपेये सज्जी क्रियते स यजुर्युक्तो रथ इत्युच्यते स रथोऽध्वर्यव एव दातव्य इति संबन्धमात्रं नियम्यत इति भावस्तथा पर्वतो वन्हिमानित्यत्रापि वन्हिपर्वतयोः सम्बन्ध एव नियम्यते सम्बन्धश्च प्रागऽप्राप्त एवेत्यगृहीतग्राहित्वाद् युक्तमनुमानस्य प्रामाण्यमित्यर्थः । अत्र च " यथा " इत्यारभ्य " तथेहापि " इतिपर्यन्तमेकं दृष्टान्तवाक्यम्, " विशिष्टविषयम् " इत्यारभ्य च " भवतीति "

यस्तु प्रतिपन्नमर्थं परमऽनुमानेन प्रतिपिपादयिषति तेन साधनं प्रयोक्तव्यम् । येन वाक्येन परस्यानुमानबुद्धिरुत्पद्यते तत् साधनमित्युच्यते । तच्च पञ्चतयं केचित्, द्वयमऽन्ये, वयं त्रयम्-'उदाहरणपर्यन्तं यद्वोदाहरणादिकम्' । अक्षपादीयास्तावत्- प्रतिज्ञाहेतूदाह-

---

इतिपर्यन्तं द्वितीयं दृष्टान्तवाक्यम्, वेतिशेषः, इति प्रतिभाति । " दध्नाजुहोति " इति विशिष्टविषयविधिदृष्टान्तेन विशिष्टविषयस्यानुमानस्य विशेषणपरत्वं प्राप्तं पर्वते चाग्निरपि विशेषणमग्निसम्बन्धोपि विशेषणं तत्राग्नेरपि व्याप्तिग्रहेण प्राप्तत्वादग्निसम्बन्धपरत्वे " यजुर्युक्तम् " इति दृष्टान्तः । अप्राप्तपरत्वं तु दृष्टान्तद्वयस्या ऽस्त्येव । ग्रन्थकारोपि वक्ष्यति-" सप्तदश रथा द्रव्यान्तराणि च वाजपेयस्य दक्षिणात्वेन विहितानीति तत्र यजुर्युक्तस्यापि रथस्य प्राप्तमेव दानं सत्वऽध्वर्यवेऽन्यस्मै वा कस्मै चिद्दातव्यः सन्नऽध्वर्योर्नियम्यते " इति । अत्र च 'यथा " दध्नाजुहोति " इति विशिष्टविषयोपि विधिर्विशेषणपरो भवति यथा च " यजुर्युक्तं रथमध्वर्यवे ददाति " इति विधिः सम्बन्धपरो भवति तथा विशिष्टविषयमेवानुमानं विशेषणविशेष्ययोस्तु प्राप्तत्वात्सम्बन्धविषयं भवति ' इत्येवं वक्तव्यमासीत् ।

स्वार्थानुमानं निरूप्य परार्थानुमानं निरूपयति- यस्त्वित्यादिना । निगदव्याख्यातप्रायोयं ग्रन्थः । यस्तु=देवदत्तादिः । प्रतिपन्नमर्थम्=स्वज्ञातार्थम् । परं प्रत्यनुमानेन प्रतिपिपादयिषति=प्रतिपादयितुमिच्छति तेन=देवदत्तादिना साधनं प्रयोक्तव्यम्=पर्वतो वन्हिमान् धूमादित्याद्युच्चारणीयम् । स्वार्थानुमाने साधनवाक्यनामुच्चारणस्यापेक्षाऽभावात् । साधनलक्षणमाह- येनेति, यथा पर्वतो वन्हिमानित्यादिना वाक्येन परस्यानुमानं जायत इति पर्वतो वन्हिमानित्यादिवाक्यं साधनं साधनवाक्यं चोच्यते । तच्च=साधनम् । पञ्चतयम्=पञ्चावयवकं भवति " संख्याया अवयवे तयप् " इत्यनेन तयप् । केचित्=नैयायिकाः । अन्ये=सौत्रान्तिका, ते द्व्यवयवमेवानुमानं मन्यन्ते । स्वमतमाह- वयमिति । उदाहरणपर्यन्तम्=प्रतिज्ञाहेतूदाहरणानि । उदाहरणादिकम्=उदाहरणोपनयनिगमनानि । वयमेवंरीत्या त्र्यवयवात्मकमनुमानं मन्यामह इत्यर्थः । न्यायमतेन पञ्चावयवानां स्वरूपमाह-अक्षपा-

रणोपनयनिगमनैः पञ्चावयवं साधनं मन्यन्ते। अनित्यः शब्द इति प्रतिज्ञा, कृतकत्वादिति हेतुः, यत्कृतकं तदनित्यं दृष्टं यथा घटादीत्युदाहरणम्, कृतकश्चशब्द इत्युपनयः, तस्मादनित्य इति निगमनम्।

अयं त्वऽतिविस्तरो गतार्थ इति मन्वानाः सौगता द्व्यवयवम्–उदाहरणोपनयात्मकं मन्यन्ते। स्मर्यमाणनियमं हि लिङ्गं साध्यधर्मिण्यनुसन्दधानस्य स्वयमेव लिङ्गिबुद्धिरुत्पद्यते, तेन यत्कृतकं तदनित्यमिति कृतकत्वस्याऽनित्यत्वेन व्याप्तिनियमं स्मारयित्वा कृतकश्चशब्द इत्युपनयमात्रे कृते शब्दस्यानित्यत्वमवगम्यत

---

दीयेति। तथा च गौतमीयं सूत्रम्–"प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यऽवयवाः" इति। स्पष्टमन्यत्।

द्व्यवयवात्मकानुमानस्वीकर्तुः सौत्रान्तिकस्य मतमाह–अयमित्यादिना। अयम्=पञ्चावयवप्रयोगात्मकः। गतार्थ इति–यदेव कृतकत्वादिति हेत्ववयवेनोच्यते तदेव कृतकश्च शब्द इत्युपनयावयवेनोच्यते तथा प्रतिज्ञानिगमनयोरप्येकार्थबोधकत्वमेवेत्यर्थः। द्व्यवयवमिति–अनुमानमिति शेषः। ततश्च सौत्रान्तिकमते– यो यो धूमवान् स स वन्हिमान् दृष्टो यथा महानसो धूमवांश्चायं पर्वत इत्येवानुमानस्याकारः। द्वाभ्यामेवाऽवयवाभ्यां कथमनुमेयस्य भानं स्यादित्याशङ्क्य सौत्रान्तिकमतेनोपपादयति– स्मर्यमाणेति, स्मर्यमाणोऽस्ति नियमो व्याप्तिर्यस्य तल्लिङ्गं स्मर्यमाणनियमं द्वितीयान्तं पदम्, साध्यधर्मिणि=पक्षे पर्वतादौ स्मर्यमाणनियमं हेतुं धूमादिकमनुसंदधानस्य=पश्यतः पुरुषस्य लिङ्गिबुद्धिः=साध्यज्ञानम्=पर्वतो वन्हिमानित्यादि स्वयमेवोत्पद्यते एवेति तदर्थमवयवान्तरस्य निगमनस्य प्रतिज्ञाया वाऽपेक्षा नास्तीति भावः। एतदेवोदाहरणद्वारा विशदयति– तेनेति। यदा हि यज्ञदत्तेन 'यत् कृतकं तदनित्यम्' इत्युक्तं तदा देवदत्तेन कृतकत्वानित्यत्वयोर्नियमो व्याप्तिः स्मर्यत इत्युक्तं स्मारयित्वेति। तदनन्तरं 'कृतकश्च शब्दः' इत्युपनयमात्रस्य प्रयोगे कृते स्वयमेव कृतकस्य शब्दस्यानित्यत्वं देवदत्तेनावगम्यत एवेति नावयवान्तरापेक्षेत्यर्थः।

एवेति कृतमवयवान्तरैः ।

एवं त्वऽत्यन्तसाकाङ्क्षमेव वाक्यं क्लेशगम्यार्थं भवतीति त्र्यवयवमेव युक्तम्-अनित्यः शब्दः कृतकत्वाद् यत्कृतकं तदनित्यं यथा घटादीत्येवमुदाहरणान्तं साधनं सर्वत्र वार्तिककारः प्रयुङ्क्ते । अथ वा-यत् कृतकं तदनित्यं यथा घटादि कृतकश्च शब्दस्तस्मादनित्यः-इत्युदाहरणप्रभृति प्रयोक्तव्यम् । एवमप्यन्यूनाधिकमेव साधनम् । तथा च "यत् कर्म तत् फलवद् होमोपि कर्म तेनापि फलवता भवितव्यम्" इत्येव सर्वत्र भाष्यकारः प्रयुङ्क्ते ।

प्रतिज्ञादोषाः प्रत्यक्षविरोधादयोऽप्रसिद्धविशेषणत्वादयश्च वार्तिके प्रपञ्चिताः ।

---

संप्रति स्वमतमाह-एवमित्यादिना, एवम्=अवयवद्वयमात्रस्य प्रयोगे । त्र्यवयवमिति-अनुमानमिति शेषः । उदाहरणान्तमुदाहरणादि वेत्यर्थः । अत्र वार्त्तिककारं प्रमाणयन् उदाहरणान्तस्य त्र्यऽवयवस्यानुमानस्योदाहरणमाह-अनित्य इति । उदाहरणादेस्त्र्यवयवस्यानुमानस्योदाहरणमाह-अथ वा यदिति । उदाहरणप्रभृति=उदाहरणादारभ्य, निगमनान्तं प्रयोक्तव्यम् । एवमपि=एवं तु । अपिस्त्वर्थः । सौत्रान्तिकमते साध्यसत्ताबोधकस्यावयवस्य प्रतिज्ञाया निगमनस्य वाऽभावान्न्यूनत्वम् । तर्कमते च प्रतिज्ञानिगमनयोर्हेतूपनययोश्चैकार्थप्रतिपादकत्वादानर्थक्येनाधिक्यमेव, अस्मन्मते च त्र्यवयवानुमानस्वीकारान्न न्यूनं नाप्यधिकं साधनं प्रयोक्तव्यं भवतीत्यर्थः । विस्तरश्च मदीयाद्वैतचन्द्रिकायां द्रष्टव्यः । अत्र द्वितीयाध्यायद्वितीयपादीयपञ्चविंशतिकसूत्रस्य भाष्यमपि प्रमाणयति- तथा चेति । इत्येव=त्र्यवयवमेवानुमानं प्रयुङ्क्ते । श्लोकवार्तिकेपि प्रतिज्ञानिगमनयोरन्यतरस्यापेक्षा प्रदर्शिता-

"तत्र धर्मिणमुद्दिश्य साध्यधर्मो विधीयते" इति ॥

एवमनुमानस्य स्वरूपं निरूप्य तस्य चागृहीतग्राहित्वं तत्कृतं प्रामाण्यं च प्रतिपाद्य, तद्दोषान् वक्तुमारभते-प्रतिज्ञेत्यादिना । वन्हिरनुष्ण इति प्रतिज्ञायां प्रत्यक्षविरोधः प्रत्यक्षेण वन्हावुष्णत्वग्रहणात् । पर्वतः काञ्चनमय-

वन्हिमानिति प्रतिज्ञायामऽप्रसिद्धविशेषणत्वं दोषः, विशेषणस्य काञ्चनमय-वन्हेरप्रसिद्धत्वात्। इत्यादयः प्रतिज्ञादोषाः श्लोकवार्तिके विस्तरेण प्रदर्शिता इति नेह प्रतन्यन्ते। तथा हि–

"प्रत्यक्षादेश्च षट्कस्य येनैवार्थोवधारितः।
तेनैवोत्तरबाधः स्याद्विकल्पादेरऽसम्भवात्॥
अग्राह्यता तु शब्दादेः प्रत्यक्षेण विरुद्ध्यते॥
तेषामश्रावणत्वादि विरुद्धमनुमानतः॥
त्रिधा शब्दविरोधः स्यात् प्रतिज्ञादिविभागतः।
प्रतिज्ञा–पूर्वसंजल्प–सर्वलोकप्रसिद्धितः॥
यावज्जीवमहं मौनीत्युक्तिमात्रेण बाध्यते॥
बौद्धस्य शब्दनित्यत्वं पूर्वोपेतेन बाध्यते॥
चन्द्रशब्दाभिधेयत्वं शशिनो यो निषेधति।
स सर्वलोकसिद्धेन चन्द्रज्ञानेन बाध्यते॥
ज्ञातगोगवयाकारं प्रति यः साधयेदिदम्–।
न गोर्गवयसादृश्यं तस्य बाधोपमानतः॥
गेहावगतनास्तित्वो जीवंश्चैत्रो यदा बहिः।
नास्तीति साध्यते बाधस्तत्रार्थापत्तितो भवेत्॥
शशशृङ्गादिसद्भावविरोधोऽनुपलब्धितः।
एवं च धर्मसंबन्धबाधस्तावदुदाहृतः॥" इति।

प्रत्यक्षेत्यादिपद्यमेतत्पार्थसारथिमिश्रेणैवं व्याख्यातम्–"न केवलमनुमानविषयमेवेदं मन्थरस्य बाध्यत्वं षण्णामपि प्रत्यक्षादीनां मध्ये येनैव शीघ्रप्रवृत्तिना प्रथममर्थोऽवधारितो भवति तेनैवोत्तरकालस्य मन्थरस्योत्पत्तिनिरोधलक्षणो बाधो भवतीत्याह–प्रत्यक्षादेरिति" इति। प्रत्यक्षविरोधमुदाहरति– अग्राह्यतेति, येन शब्दादिविषयाणामग्राह्यत्वं प्रतिज्ञातं तत्र शब्दादीनां ग्राह्यतायाः प्रत्यक्षत्वात् प्रतिज्ञायाः प्रत्यक्षेण विरोध इत्यर्थः। अनुमानविरोधमुदाहरति– तेषामिति, येन शब्दस्याऽश्रावणत्वं प्रतिज्ञातं तत्र शब्दस्य श्रावणताऽनुमानगम्यास्तीति प्रतिज्ञाया अनुमानेन विरोधः। श्रावणतायाः अनुमानमात्रगम्यत्वान्नात्र प्रत्यक्षादिविरोधः किं त्वनुमानविरोध एवेत्यर्थः। शब्दविरोधभेदानाह–त्रिधेति, प्रतिज्ञायाः प्रतिज्ञान्तरेण विरोधः, पूर्वोक्तेन

**असिद्धिः, अनैकान्तिकत्वम्, बाधकत्वम्, चेति त्रयो हेतुदोषाः । तत्रासिद्धिः पञ्चधा- बुद्धो धर्माधर्मवेदी स्वर्वज्ञत्वादिति स्वरूपासिद्धिः, न हि सर्वज्ञत्वस्वरूपं-**

---

विरोधः, सर्वलोकप्रसिद्धिविरोधः, इत्यर्थः । तत्र प्रतिज्ञान्तरविरोधमाह-यावदिति, येन 'यावज्जीवमहं मौनी' इत्युक्तं तस्य यावज्जीवमौनित्वप्रतिज्ञाया अनया प्रतिज्ञया विरोधोऽस्ति यतो 'यावज्जीवम्' इति वाक्य उच्चारिते मौनित्वप्रतिज्ञा नष्टेत्यर्थः । पूर्वसञ्जल्पः=पूर्वोक्तिस्तद्विरोधमुदाहरति-बौद्धेति, यत्र बौद्धेन शब्दस्य नित्यत्वं प्रतिज्ञातं तत्रास्याः प्रतिज्ञायाः पूर्वं बौद्धोक्तसर्वपदार्थमिथ्यात्वेन विरोध इत्यर्थः । सर्वलोकप्रसिद्धिविरोधमुदाहरति- चन्द्रेति, यदा हिमांशोश्चन्द्रशब्दवाच्यत्वं नास्तीति प्रतिज्ञातं तदा सर्वलोके हिमांशोश्चन्द्रशब्दवाच्यत्वप्रसिद्ध्या प्रतिज्ञाविरोध इत्यर्थः । न चात्रानुमानादिनैव बाधो न शब्देनेति वाच्यम्, अनुमानादिना बाधस्य सत्त्वेपि विरोधस्य शब्दसंस्पर्शित्वमात्रेण शब्दविरोध इति प्रतिपादनात् । उपमानविरोधमुदाहरति- ज्ञातेति, ज्ञातगोगवयाकारं प्रति यदा गवयसादृश्यं गोर्नास्तीति प्रतिज्ञातं तदा तेन गोर्गवयसादृश्यस्य गृहीतत्वादुपमानविरोध इत्यर्थः । अज्ञातगोगवयाकारं प्रति प्रतिज्ञाते तु तेन तयोः सादृश्यस्याग्रहणान्न भवति विरोध इत्युक्तम्-ज्ञातेति । अर्थापत्तिविरोधमुदाहरति-गेहेति, यदा जीवतो गृहेऽसतश्च चैत्रस्याभावः प्रतिज्ञातस्तत्रार्थापत्त्या बहिःसत्त्वावगमादर्थापत्तिविरोध इत्यर्थः । अनुपलब्धिविरोधमुदाहरति-शशेति, यत्र शशशृङ्गस्य सत्त्वं प्रतिज्ञातं तत्रानुपलब्ध्याऽसत्त्वावगमादनुपलब्धिविरोध इत्यर्थः । उपसंहरति-एवमिति । विस्तरस्तु श्लोकवार्तिकानुमानपरिच्छेदे द्रष्टव्यः । अप्रसिद्धविशेषणत्वमुदाहरति-

" तृणादिविक्रियाहेतोरग्निमद्धिमसाधने ॥" इत्यादि ।

प्रतिज्ञादोषानुपेक्ष्य हेतुदोषान् स्वयमपि प्रपञ्चयति-असिद्धिरित्यादिना । बाधकत्वं विरुद्धत्वम् । तत्रासिद्धिः पञ्चधा-स्वरूपासिद्धिः, सम्बन्धासिद्धिः, व्यतिरेकासिद्धिः, आश्रयासिद्धिः, व्याप्यत्वासिद्धिः, इति । तत्र स्वरूपासिद्धिमुदाहरति-बुद्ध इति । स्वरूपासिद्धिमुपपादयति- न हीति, यदा कचिदपि सर्वज्ञत्वं नास्ति तदा बुद्धेपि नास्तीति पक्षे हेत्वभावात् (पक्षे

क्वचिदस्ति १। वन्हिरदाहकः शीतत्वादिति सम्बन्धासिद्धिः शैत्यस्य वन्हिसम्बन्धाभावात् २।

नन्वेवं समुद्रवृद्धौ चन्द्रोदयस्य हेतुत्वं न स्यात्, उदयस्य समुद्रसम्बन्धाभावात् ?, एककालसम्बन्धादुभयोरदोषः ।

---

हेत्वभावः) स्वरूपासिद्धिः । अत्र च बुद्धे सर्वज्ञत्ववत्तावुद्धिं प्रति बुद्धे सर्वज्ञत्वाभाववत्तानिश्चयस्य प्रतिबन्धकत्वम् । वस्तुतोत्र हेतोः स्वरूपेणैवासिद्धिरभिप्रेता तथा च यत्र सर्वथाऽप्रसिद्ध एव हेतुरुच्यते तत्र स्वरूपासिद्धिः । सर्वज्ञत्वस्य क्वचिदपि स्वीकाराभावात् । सम्बन्धासिद्धिमुदाहरति– वन्हिरिति । सम्बन्धासिद्धिमुपपादयति– शैत्यस्येति । सम्बन्धासिद्धिरेषा पक्षे हेत्वभावस्वरूपा स्वरूपासिद्धिरेवावगन्तव्या । सर्वज्ञत्वं तु क्वचिदपि न प्रसिद्धं शीतत्वं तु जलादौ प्रसिद्धमप्यग्नौ नास्तीति पूर्वोत्तरदोषयोर्विशेषः ।

ननु यदि पक्षे हेत्वभावस्वरूपा सम्बन्धासिद्धिर्दोष एव तदा चन्द्रोदयस्य समुद्रवृद्ध्यनुमापकत्वं न स्यात् हेतुभूतस्य चन्द्रोदयस्य चन्द्रमात्रेण संबन्धात् समुद्रेण संबन्धाभावाचेत्याशङ्कते–नन्विति। परिहरति–एकेति । उभयोः=समुद्रवृद्धिचन्द्रोदययोरेककालिकत्वं सम्बन्धोस्तीति चन्द्रोदयः स्वकालवर्तिनीं समुद्रवृद्धिमनुमापयति। न चैवं वन्हिरदाहक इत्यत्राप्येककालिकत्वसंबन्धेन दोषाभाव इति शङ्क्यम्, शीतत्वादाहकत्वयोः कार्यकारणभावाऽभावात् वन्हावऽदाहकत्वस्य प्रत्यक्षबाधितत्वेन तदनुमानासंभवाच्च समुद्रे वृद्धिसत्त्वे च प्रत्यक्षविरोधाभावात् । यद्यपि चन्द्रोदयः समुद्रे नास्तीति सम्बन्धासिद्धिरस्त्येव तथाप्येककालिकत्वसम्बन्धेनानुमानसिद्धिसम्भवादऽनुमितिप्रतिबन्धाभावान्न कोपि दोषः । "यद्धि येन साक्षात् प्रणाड्या वा" इत्याद्यग्रिमग्रन्थेनाप्ययमेवाभिप्रायः प्रतीयते यदत्र साध्यसाधनयोर्वैयधिकरण्येपि न दोषस्तयोरेककालिकत्वस्यैव संबन्धस्येष्टत्वात्, अदाहकत्वानुमाने तदसंभवाच्च । मतान्तरेणात्र कालस्यापि पक्षत्वं सम्भवति तदुक्तम्–" एककालवर्तित्वं चन्द्रोदयसमुद्रवृद्ध्योः सम्बन्धस्तत्र काल एवैक आश्रयः । " इति । यद्येककालिकत्वसम्बन्धेन सम्बन्धासिद्धिपरिहारे एव ग्रन्थकृदभिप्रायस्तदा स्वाधिकरणकालवृत्तित्वसम्बन्धेन चन्द्रोदयः समुद्रेप्यस्त्येवेति नात्र सम्बन्धासिद्धिरित्यपि वदन्ति ।

**यदा तर्हि चन्द्रस्य नभोमध्ये स्थितिं दृष्ट्वा पञ्चदशनाडिकातिक्रान्ता समुद्रवृद्धिरनुमीयते तदा कथम् ?, तत्रापि परम्परासंबन्धादुभयोरदोषः । न हि**

---

नन्वेककालिकत्वसम्बन्धेनोक्तदोषे परिहृतेपि यत्र चन्द्रस्य नभोमध्यस्थित्या पञ्चदशनाडिकातिक्रान्तत्वविशिष्टा समुद्रवृद्धिरनुमीयते तत्र तु हेतुसाध्ययोरेककालिकत्वमपि सम्बन्धो न सम्भवति–नभोमध्यस्थितेर्वर्तमानकाले तादृशसमुद्रवृद्धेः पञ्चदशनाडिकातिक्रान्तत्वेन वर्तमानत्वाभावादित्याशङ्कते–यदेति । यदा तर्हीत्यत्र तर्हि यदेति व्युत्क्रमेणान्वयः । निशीथसमये चन्द्रस्य नभोमध्यस्थितिस्तु वर्तमाना तादृशसमुद्रवृद्धिश्च पञ्चदशनाडिकातिक्रान्तेति न समानकालिकत्वम् । चन्द्रस्य नभोमध्यस्थितिकालेपि समुद्रवृद्धेर्वर्तमानत्वेपि चन्द्रोदयकालिकायाः पञ्चदशनाडिकातिक्रान्तत्वविशिष्टायाः समुद्रवृद्धेरतीतत्वेन वर्तमानत्वं न सम्भवतीति ज्ञेयम् । उत्तरमाह–तत्रापीति, यद्यपि चन्द्रस्य नभोमध्यस्थितिर्हेतुभूता पक्षे समुद्रे नास्तीति सम्बन्धासिद्धिरस्त्येव यद्यपि चाप्येककालिकत्वं सम्बन्धोपि न सम्भवति तथाप्यन्येन केनापि परम्परासम्बन्धेनानुमितिसम्भवान्न दोष इत्यर्थः । परम्परासम्बन्धश्चात्र–स्वाधिकरणकालपूर्वकालवृत्तित्वं वा स्वाधिकरणकालापेक्षया पञ्चदशनाडिकापूर्वकालवृत्तित्वं वा, स्वं नभोमध्यस्थितिः, अर्धरात्रकालपरिच्छेदकनाडिकानिकरव्यवहितपूर्वकालवृत्तित्वं वेत्यादिर्विज्ञेयः ।

इदमवगन्तव्यम्–यथा वन्हिधूमयोः कार्यकारणभाव एव व्याप्तिमूलकः सम्बन्धो न तु संयोगस्तथापि धूमः संयोगसम्बन्धेन स्वाधिकरणे वन्हिमनुमापयति–अत्र संयोगेन वन्हिर्वर्तत इति सूचयति तथा समुद्रवृद्धिचन्द्रोदययोर्व्याप्तिमूलकस्तु संबन्धः कार्यकारणभाव एव तथापि चन्द्रोदयः स्वाधिकरणकालवृत्तित्वरूपेणैककालिकत्वेन सम्बन्धेन समुद्रवृद्धिमनुमापयति–अस्मिन् काले समुद्रवृद्धिर्वर्तते इति सूचयति, सा च समुद्रवृद्धिः समुद्र एव सम्भवति न च्चन्द्रोदयप्रदेशे समुद्रवृद्धेः समुद्रवृत्तित्वनियमादिति व्यधिकरणेनापि चन्द्रोदयेन समुद्रे वृद्धिरनुमातुं शक्यते, तथैव चन्द्रस्य नभोमध्यस्थितिरप्युक्तपरम्परासम्बन्धेन पञ्चदशनाडिकातिक्रान्तसमुद्रवृद्धिमनुमापयति–सूचयति चेदानीं पञ्चदशनाडिकातिक्रान्ता समुद्रवृद्धिर्वर्तते इति । न्यायरत्नमालायामप्युक्तम्–

साक्षात्संबन्ध एव सर्वत्राश्रीयते, यद्धि येन साक्षात् प्रणाड्या वा केनापि संबन्धेन नियतं तत् तस्य तथैवा-नुमापकं भवतीति दर्शितमेवैतत्। तेन यादृशः संबन्धो हेतोर्वादिना दर्शितस्तदसिद्धौ दोषो भवति नान्यथा।

गोशब्दः सास्नादिमद्वचनो गोशब्दत्वादिति व्यतिरेकासिद्धिः, नहि धर्मिव्यतिरेकेण गोशब्दत्वं नाम

---

" उदयस्तु चन्द्रगतः समुद्रगतां तत्कालां वृद्धिम्, तस्यैव नभोमध्यस्थिति-स्तामेवार्धपञ्चदशनाडिकातिक्रान्तां तादृश्यैव तया ( समुद्रवृद्ध्या ) तस्याः ( नभोमध्यस्थितेः ) नियतत्वात् । " इति । अन्यत्राप्युक्तम्– " तथा कृत्तिकोदयरोहिण्यासत्त्योरप्येकाहोरात्रवर्तित्वेन सम्बन्धस्तेन कृत्तिकोदया-दहोरात्रज एवासन्नरोहिण्युदयोऽनुमीयते, एतेन मध्यगतनक्षत्रदर्शनादष्टम-नक्षत्रास्तमयोदयानुमानमुक्तम् । " इति ।

स्वाभिप्रायमाह–नहीति । एतच्च पूर्वमेव प्रदर्शितमिति स्मारयति–यद्धी-ति । यत्=धूमादि । येन=वन्ह्यादिना । नियतम्=व्याप्तम् । तत्=धूमादि । तस्य=वन्ह्यादेः । तथैव=साक्षात्सम्बन्धे सति साक्षात्, परम्परासम्बन्धे सति परम्परयाऽनुमापकं भवतीत्यर्थः । उपसंहरति–तेनेति । दोषः=हेत्वाभासत्वम् । हेतोर्यादृशः सम्बन्धः प्रदर्शितः तस्य सिद्धौ तु न दोषो भवतीत्याह–नान्यथे-ति । तस्माद्वन्हिरदाहकः शीतत्वादित्यत्र शीतत्वस्य वन्हौ समवायाभावात् सम्बन्धासिद्धिरस्त्येव सा च दोष एव । समुद्रवृद्ध्यनुमानयोस्तु प्रदर्शितसम्ब-न्धयोरासिद्धिर्नास्तीति न सम्बन्धासिद्धिर्दोष इत्यभिप्रायः ।

व्यतिरेकासिद्धिमुदाहरति–गोशब्द इति । सस्नादिमद्वचनः=सास्नादिम-त्पदार्थवाचकः । पक्षाऽवैशिष्ट्यमेव व्यतिरेकासिद्धिस्तथा चात्रपक्षहेत्वोरेकत्वाद् व्यतिरेकस्य भेदस्या ऽसिद्धिरेवेत्याह–न हीति, मीमांसकमते आकृतेरेव जाति-त्वादाकृतेश्च सामान्यरूपत्वेन व्यक्त्यऽभिन्नत्वाद् गोशब्दत्वं न गोशब्दभिन्नं किं तु गोशब्द एवेति धर्मिव्यतिरेकेण=पक्षव्यतिरेकेण नाम पक्षभिन्नं गोशब्दत्वं किमपि नास्त्येव जातेराकृतिभिन्नत्वे प्रमाणाभावादित्यत्र पक्षहेत्वोरैक्यं प्राप्तमित्यर्थः । उक्तं च भाष्ये–" द्रव्यगुणकर्मणां सामान्यमात्रमाकृतिः, असाधारणविशेषो व्यक्तिः । व्यक्तिपदार्थकस्याकृतिश्चिन्हभूता भविष्यति य एवमाकृतिकः स

किं चिदस्ति ३ । नित्यमाकाशमऽनवयवद्रव्यत्वादिति सौत्रान्तिकमाऽऽकाशाभाववादिनं प्रत्याऽऽश्रयासिद्धिः ४ । वायुराकाशश्चाऽनित्यो मूर्तत्वादिति व्याप्त्यऽसिद्धिः मूर्तत्वस्याकाशे व्याप्त्यऽभावादिति ५ ।

अनैकान्तिकत्वं द्विविधम्- सव्यभिचारं सप्रतिसाधनं च । नित्यः शब्दोऽमूर्तत्वादिति कर्मादिष्वनित्येष्वप्यऽमूर्तत्वस्य संभवाद् व्यभिचार्यऽमूर्तत्वम् । अप्र-

---

गौरिति । " इति । ग्रन्थकृत्स्वयमपि वक्ष्यति-" तस्माद्स्त्येकमाऽऽकृतिजातिसामान्यशब्दाभिलपनीयं शावलेयादिष्वनुगतम् । " इत्याकृतिरेव जातिरिति सिद्धम् । आकृतेश्च व्यक्त्यभिन्नत्वं स्पष्टमेव । एवं साध्यावैशिष्ट्येपि व्यतिरेकासिद्धिर्ज्ञेया यथा-गोशब्दः सास्नादिमद्वचनः सास्नादिमद्वचनत्वादिति । आश्रयासिद्धिमुदाहरति-नित्यमिति । उपपादयति-सौत्रान्तिकेति, नित्यत्वसाधनाय पक्षीकृतमाऽऽकाशं सौत्रान्तिकमते नास्त्येवेत्याश्रयस्य=पक्षस्यासिद्धिरित्यर्थः । व्याप्त्यऽसिद्धिमुदाहरति-वायुरिति, व्याप्त्यऽसिद्धिर्भागासिद्धिरेव विज्ञेया तथा चात्र वाय्वाकाशौ पक्षस्तत्र पक्षैकदेश आकाशे मूर्तत्वस्याभावाद् व्याप्त्यऽसिद्धिरित्यर्थः । उक्तं च-

" शैत्यान्न दाहको वन्हिश्चाक्षुषत्वादनित्यता ।
शब्दस्येत्येवमादौ तु द्वयोः सिद्धो विपर्ययः ॥
कृतकत्वगुणत्वादौ परोक्ते याज्ञिकं प्रति ।
स्वोक्ते चैवं प्रकारे स्यादऽसिद्धोऽन्यतरस्य तु ॥
वाष्पादिभावसंदिग्धो द्वयोरन्यतरस्य वा ।
धूमस्त्रिधाप्यसिद्धः स्यादेवं तावत्स्वरूपतः ॥
एत एव प्रकाराः स्युराश्रयासिद्धिकल्पने ॥ " इति ।

असिद्धिमुदाहृत्य संप्रत्यनैकान्तिकमाह-अनैकान्तीति । सव्यभिचारः सप्रतिसाधनश्च हेतुरनैकान्तिक इत्यर्थः । तत्र सव्यभिचारमुदाहरति-नित्य इति, नित्यत्वाभाववत्सु कर्मादिष्वप्यऽमूर्तत्वस्य सत्त्वादमूर्तत्वं नित्यत्वव्यभिचारीति न नित्यत्वसाधनसमर्थ इत्यर्थः । सप्रतिसाधनमुदाहरति-अप्रत्यक्षेति, अरूपत्वं तु प्रत्यक्षभूतेषु गुणादिष्वप्यस्तीत्यरूपत्वस्याप्रत्यक्षत्वसाधकत्वं न स्यादिति

त्यक्षो वायुर्द्रव्यत्वे सत्यऽरूपत्वात् प्रत्यक्षो वायुर्महत्त्वे सति स्पर्शवत्त्वादिति सप्रतिसाधनत्वादुभयमप्यनिर्णायकं संशयहेतुः, अगृह्यमाणबलाबलत्वादुभयोः।

कश्चित्त्वाह– न विरुद्धार्थं हेतुद्वयं तुल्यबलमेकत्रसम्भवति, तद्भावे वस्तुनि नित्यसंशयापत्तेः। द्रव्य-

---

द्रव्यत्वे सतीतयुक्तम्। द्रव्यस्यारूपस्य चाप्रत्यक्षत्वमाकाशे प्रसिद्धमेव। तथा–स्पर्शवत्त्वं त्वप्रत्यक्षभूतेषु परमाणुष्वप्यस्त्येवेति स्पर्शवत्त्वस्य प्रत्यक्षत्वसाधकत्वं न स्यादिति महत्त्वे सतीत्युक्तं महतश्चस्पर्शवतः प्रत्यक्षत्वं घटादिषु प्रसिद्धमिति ज्ञेयम्। हेतुद्वयमेव सप्रतिसाधनमस्तीति वायुः प्रत्यक्षो वाऽप्रत्यक्षो वेति निर्णयो न सम्भवतीत्याह–सप्रतीति। प्रत्युत संशय एवोत्पद्यत इत्याह–संशयेति। अत्र हेतुमाह–अगृह्येति, यद्येकत्र हेतौ बलवत्त्वं गृह्येत तदा तद्व्यापकमेव सिद्ध्येत यथाऽरूपत्वस्य बलवत्त्वेऽप्रत्यक्षत्वमेव स्यात्, स्पर्शवत्त्वस्य च बलवत्त्वे प्रत्यक्षत्वमेव स्यात्। एकत्राबलत्वग्रहे च तत्साध्यं न स्यादिति द्वितीयहेतोरेव साध्यं सिद्ध्येत न चात्र कस्य चिदपि बलाबलत्वं गृहीतमिति न स्वसाध्यसाधकत्वं प्रत्युत तुल्यबलत्वात् संशयापादकत्वमेवेत्यर्थः। उभयोः=हेत्वोः। अप्रत्यक्षत्वाभाववति प्रत्यक्षे वायौ अप्रत्यक्षत्वसाधकत्वेनोपन्यस्तस्यारूपत्वस्य हेतोः सत्त्वादरूपत्वस्य व्यभिचारित्वम्, प्रत्यक्षत्वाभाववत्यऽप्रत्यक्षे च वायौ प्रत्यक्षत्वसाधकत्वेनोपन्यस्तस्य स्पर्शवत्त्वस्य हेतोः सत्त्वात् स्पर्शवत्त्वस्य व्यभिचारित्वं साध्याभाववति वृत्तिमत एव व्यभिचारित्वादित्यभिप्रायेण सत्प्रतिपक्षेत्यपरनामधेयस्य सप्रतिसाधनस्याऽनैकान्तिकत्वमुक्तम्। किं वा व्यभिचारित्वत्संशयजनकत्वादस्यानैकान्तिकत्वमुक्तम्।

तुल्यबलयोरेव सप्रतिसाधनत्वं वक्तव्यं न च तत्सम्भवतीतिप्राभाकरैरुक्तं शङ्कते–कश्चिदित्यादिना, एकत्र विरुद्धपदार्थद्वयं न सम्भवतीति तदनुमापकं विरुद्धार्थं तुल्यबलं हेतुद्वयमप्येकत्र न सम्भवति पदार्थस्य विरुद्धस्वभावद्वयाक्रान्त्यऽसम्भवादित्यर्थः। विरुद्धार्थम्=परस्परविरुद्धसाध्यसाधकम्। तद्भावे=एकत्र यदि विरुद्धार्थं तुल्यबलं हेतुद्वयं स्यात्तदा वस्तुनि=हेत्वाश्रये नित्यं संशय एव स्यात्। यथात्रारूपत्वस्पर्शवत्त्वयोर्हेत्वोस्तुलबलत्वे वायुः प्रत्यक्षो वाऽप्रत्यक्षो वेति नित्यं संशय एव स्यात्,

**त्वे सत्यऽरूपत्वस्याऽपरोक्षावभासाविरोधादऽप्रत्यक्ष-त्वमनुमापयितुमसामर्थ्याद् दौर्बल्यम् । स्पार्शनानुमानं त्वविरुद्धं बलवदिति न द्वयोस्तुल्यबलत्वम्, अतो नास्ति सप्रतिसाधनो हेतुरिति । स वक्तव्यः–सव्यभिचारोपि तर्हि न संशयहेतुः स्यान्नित्यसंशयापत्तिप्रसङ्गादेव ।**

---

एकतरावधरणेऽपरस्य हेतोः प्रतिबन्धकत्वात् । तस्मान्न हेतुद्वयं विरुद्धार्थमेकत्र तुल्यबलं भवतीत्याह–द्रव्यत्वे सतीति, द्रव्यत्वसमानाधिकरणारूपत्व हेतोरपरोक्षावभासेन=प्रत्यक्षत्वेन सह विरोधो नास्तीति न स हेतुरप्रत्यक्षत्वमनुमापयितुं समर्थोऽत एव दुर्बलः, यत आत्मन्यऽप्रत्यक्षत्वाभावस्वरूपं प्रत्यक्षत्वमेव वर्तते तत्र द्रव्यत्वे सत्यरूपत्वस्य सत्त्वात् साध्याभाववति वृत्तित्वेन व्यभिचारित्वमेव प्राप्तम् । स्पार्शनेति–महत्त्वसमानाधिकरणस्पर्शवत्त्वस्य तु प्रत्यक्षत्वेन सहान्वयव्यतिरेकोभयव्याप्तिरस्तीति स हेतुर्बलवान्, वायोः प्रत्यक्षत्वसाधने विरोधोपि नास्तीति न द्वयोर्हेत्वोस्तुल्यबलत्वमित्यर्थः । तुल्यबलत्वाभावाच्च न सप्रतिसाधनत्वं हेतोः सम्भवतीत्याह–अत इति ।

तदुक्तं प्राभाकरैः–" अन्ये पुनरसत्प्रतिपक्षत्वमप्यनुमानकारणमाहुः, यथोदितलक्षणोपि हेतुर्यथोदितहेत्वन्तरप्रतिबद्धो नानुमानं जनयति किं तु संशयम्, यथाऽप्रत्यक्षो वायुर्द्रव्यत्वे सत्यरूपत्वादित्यनेन हेत्वन्तरेण प्रतिबद्धः प्रत्यक्षो वायुर्महत्त्वे सति स्पर्शवत्त्वादित्ययं हेतुर्वायौ प्रत्यक्षत्वाप्रत्यक्षत्वसंशयमपादयति न त्वनुमानं जनयितुमलमिति । तदनुपपन्नम्–यथोदितलक्षणयोर्हेत्वोरेकत्र समवायाभावात् भावे वा वस्तुनो नित्यसंशयितधर्मत्वापत्तेः । तस्मादनुमानबाधितविषयत्वादरूपत्वादित्यऽप्रत्यक्षत्वं नोपस्थापयति, स्पर्शवत्त्वादित्येतदेव निष्प्रतिपक्षमनुमानं जनयति । " इत्यादिकम् । परिहरति–स वक्तव्य इति, तस्मै वक्ष्यमाणरीत्योत्तरं दातव्यमित्यर्थः । सव्यभिचारोपीति–धूमवान् वन्हेरित्यत्र यद्यपि वन्हेर्धूमसाधकत्वं न भवति व्यभिचारित्वात् तथापि क्वचिद्वन्हिमत्यपि धूमदर्शनाद् धूमवान् वन्हेरिति श्रुते धूमसंशयस्तु भवत्येव तत्र च त्वदुक्तरीत्या नित्यसंशयापत्तिप्रसङ्गाद् व्यभिचार्यपि हेतु संशयोत्पादको न स्यादित्यर्थः ।

सत्यपि तस्य संशयहेतुत्वे प्रमाणान्तरेण निर्णयसंभवान्न नित्यसंशयापत्तिरिति चेत् ?, तर्हीहापि प्रमाणान्तरेण निर्णयसंभवादऽदोषः। तथा सति यत्प्रमाणान्तरविरुद्धं तस्य दुर्बलत्वादितरस्य बलीयस्त्वादऽतुल्यबलत्वमिति चेत् ?, केन चोक्तमुभयं तुल्यबलम् ? इति, किं त्वऽगृह्यमाणबलाबलत्वमात्रम्।

तथा हि– यः स्थाणुत्वं पुरुषत्वं वा नावधारयति तस्योर्ध्वत्वं संशयहेतुर्भवति, निर्णीते त्वन्यतरस्मिन् रूपे संशयो निवर्तते। तथा यो वायोरपरोक्षावभासं नावधारितवान् तस्य पृथिव्यादिषु प्रत्यक्षत्वव्याप्तं स्पर्शवत्त्वं व्योमादिषु चाऽप्रत्यक्षत्वव्याप्तमरूपत्वं वायावुपलभमानस्य भवत्येव संशयः। स तु प्रमाणा-

---

ननु तस्य=व्यभिचारिणः संशयहेतुत्वेपि तत्र प्रमाणान्तरेण निर्णयसंभवान्न नित्यसंशयापत्तिर्येन व्यभिचारी संशयोत्पादको न स्यादित्याशङ्क्ते– सत्यपीति। यथा धूमवान् वन्हेरित्यत्र महानसे प्रत्यक्षेण शब्देन वा धूमज्ञानान्न संशयः। उत्तरमाह–तर्हीति। इहापि=सत्प्रतिपक्षस्थलेपि। अदोषः= न नित्यसंशयापत्तिः। नन्वेवं यो हेतुः प्रमाणान्तरविरुद्धः स दुर्बलः स्याद् यश्च प्रमाणान्तरानुकूलः स सुबलः स्यादिति द्वयोर्हेत्वोस्तुल्यबलत्वं न स्यादित्याशङ्क्ते– तथा सतीति। उत्तरमाह–केनेति, उभयोस्तुल्यबलत्वं नोच्यते किंतु अगृह्यमाणबलाबलत्वमित्येतावन्मात्रमुच्यते कस्यापि बलवत्त्वमबलत्वं वा नगृहीतमित्येतावतैव तुल्यबलत्वव्यवहारो न तु प्रामाणिकं तुल्यबलत्वं भवत्यऽसम्भवादित्यर्थः।

उपपादयति– तथा हीति। यः=पुरुषः, दृश्यमानपदार्थं स्थाणुरयं पुरुषो वेति न निश्चेतुं शक्नोति तस्य=पुरुषस्य, ऊर्ध्वत्वं स्थाणावपि भवति पुरुषेपि भवतीत्यूर्ध्वत्वं संशयमुत्पादयति स्थाणुर्वा पुरुषो वेति, निर्णीते ह्यन्यतरस्मिन् रूपे=स्थाणुत्वे पुरुषत्वे वा संशयो निवर्तते। तथा यः पुरुषो वायुः प्रत्यक्षो वाऽप्रत्यक्षो वेति न निश्चेतुं शक्नोति तस्य पुरुषस्य, प्रत्यक्षत्वव्याप्तं स्पर्शवत्त्वमपि वायावुपलभ्यते ऽप्रत्यक्षत्वव्याप्तमरूपत्वमपि वायावुपलभ्यते इति भवति संशयो

न्तरेण निर्णयेसति निवर्तत इत्यास्तां तावत् । तस्मात्सप्रतिसाधनमपि सव्यभिचारवत्संशयहेतुः । तथा च भाष्यकारः- " यत्कर्म तत् फलवद् होमोपि कर्म तेनापि फलवता भवितव्यम् " इत्यस्य " उपरते कर्मणि द्रव्याणां तत्संयोगानां च द्रव्यान्तरं लफं दृष्टमिति द्रव्यमपि फलवत्स्यात् " इति सप्रतिसाधनं ब्रुवन् सप्रतिसाधनत्वमपि दूषणमिति दर्शयति, तस्मात् सोपि संशयहेतुः ।

असाधारणं तु गन्धवत्त्वं पृथिव्यां दृष्टं न कचिदपि बुद्धिमादधातीति न संशयहेतुः । साधारणं हि द्वयोः साध्यतदभावयोर्दृष्टत्वादुभयत्राप्यनवस्थया बु-

---

वायुः प्रत्यक्षो वाऽप्रत्यक्षो वेति, सः=संशयः प्रमाणान्तरेण=उक्तरीत्याऽरूपत्वस्य दुर्बलत्वज्ञानेन स्पर्शवत्त्वस्य च सबलत्वज्ञानेन निवर्तते, तस्मात्सत्प्रतिपक्षस्थलेपि संशयो भवत्येवेति सत्प्रतिपक्षोपि हेत्वाभास एव । प्रमाणान्तरेण च संशयो निवर्ततेपीति न नित्यसंशयापत्तिरित्युपसंहरति-तस्मादिति । अत्र भाष्यकारं प्रमाणयति-तथा चेति, द्वितीयाध्यायद्वितीयपादीशपञ्चविंशतिकेसूत्रे भाष्यकारेण प्रथमम्- " यत्कर्म तत्फलवत् " इत्युक्तं पुनश्च " उपरतेकर्मणि द्रव्याणां तत्संयोगानां च द्रव्यान्तरं फलम् " इत्यनेन पश्वादिकं न होमस्य फलं किं तु द्रव्यस्यैवेत्युक्तमिति भाष्यकारेण सत्प्रतिपक्ष एव प्रदर्शित इति भावः । यत्कर्मेत्युक्तस्योपरते कर्मणीत्यनुमानं प्रतिबन्धकमेवेति सत्प्रतिपक्षस्य दूषणत्वमपि भाष्यकारेण व्यञ्जितमित्याह-सप्रतीति । उपसंहरति-तस्मादिति । सोपि=सप्रतिसाधनोपि हेतुः संशयोत्पादको भवत्येवेत्यर्थः ।

असाधारणं तु पक्षमात्रवृत्ति भवतीति न संशयमापादयतीत्याह-असाधारणेति । यथा- इयं पृथिवी गन्धवत्त्वात् किं वा पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वादिति । पृथिवीभिन्ने जलादौ गन्धवत्त्वं नोपलभ्यत इति न मत्र पृथिवीत्वबुद्धिमापादयतीति न संशयो जायते यदि जलादौ गन्धवत्त्वमुपलभ्येत तदा तत्र पृथिवीत्वसंशयः स्यादपि नैवमस्तीति भावः । साधारणमिति-साधारणं तु द्वयोः साध्यतदभावयोः=साध्यतदभाववतोः सपक्षविपक्षयोर्दृष्ट

द्धिमादधत् संशयहेतुरिति युक्तम् । तथा विरुद्धार्थव्याप्तमपि हेतुद्वयमेकत्र दृश्यमानं स्वव्यापकमेकस्मिन् धर्मिण्युपसंहरदेकस्य विरुद्धोभयरूपधर्मत्वासम्भवात् संशयं जनयति । न चैवम्भावोऽसाधारणस्य सम्भवतीति नायं संशयहेतुः ।

---

इति उभयत्रापि=साध्यतदाभावयोः विषयत्वं सप्तम्यर्थः । बुद्धिमादधाति=साध्यविषयकां साध्याभावविषयकां च बुद्धिं जनयतीति संशयहेतुर्भवति । यथा-पर्वतो धूमवान् वन्हेरित्यत्र धूमवति महानसे वन्हिर्दृष्ट इति पर्वते वन्हिना धूमवत्ता ज्ञानं जायते, धूमाभाववत्ययोगोलकेपि वन्हिर्दृष्ट इति धूमाभाववत्ताज्ञानमपि जायते । यथा साधारणं संशयजनकं भवति तथा सत्प्रतिपक्षेपि संशयो भवत्यवेत्याह-तथेति, यथा पर्वतो धूमवान् जलवांश्चेत्यत्र धूमो वन्हिव्याप्योस्ति जलं च वन्ह्यभावव्याप्यमस्तीति विरुद्धार्थव्याप्तमिदं हेतुद्वयमेकत्र पर्वते दृश्यमानं सदेकस्मिन् धर्मिणि पर्वते जलं हि स्वव्यापकम्=वन्ह्यभावमुपसंहरति धूमश्च वन्हिमुपसंहरति=अवगमयति, एकस्य च पर्वतस्य वन्हितदभावोभयवत्त्वं न सम्भवतीति संशयो जायते। असाधारणस्थले त्वेवं न सम्भवतीत्याह-न चैवमिति । एवंभावः=विरुद्धार्थव्याप्तत्वम् । गन्धवत्त्वं पृथिवीत्वमात्रनियतं पृथिव्यामेव च दृष्टं न पृथिवीत्वाभावानुमानेपि हेतुर्भवतीति न संशयहेतुरिति भावः ।

उक्तं च श्लोकवार्तिकटीकायाम्-"युक्तं तावत्साधारणो द्वाभ्यां सह दृष्टो द्वये स्मृतिं जनयन् संशयहेतुरिति, यश्चासाधारणः स केनापि सहाऽदृष्टः क चिदपि बुद्धिमनादधद् कथं संशयहेतुः" तथा-" तदिदं शाक्यमतेना ऽसाधारणस्य संशयहेतुत्वमुक्तं स्वयं त्वस्य संशयहेतुत्वं प्रदेशान्तरे निरस्तम् । न हि साधारणो द्वयमनुमापयन् संशयनिदानं द्वयोरपि नियमाभावेनानुमानासम्भवात् किं तु द्वाभ्यां सह दृष्टिमात्रेण स्मरणं जनयति, विरुद्धार्थद्वयस्मरणं चान्यतरनिर्धारणकारणाभावे संशयं जनयति । यस्त्वऽसाधारणः क चिदप्यदृष्टो धर्मिवदेव न क चिद्भावेऽभावे वा स्मृतिं जनयतीति नास्य संशय हेतुत्वमिति" इति । शाक्यमतमनुसृत्य चासाधारणस्य संशयहेतुत्वं तत्रैवोक्तम्-"सपक्षान्वयो विपक्षव्यतिरेकश्च द्वयं निश्चयाङ्गम्, तत्र सा-

तथा बाधको नाम हेत्वाभासो यो विरुद्ध इति तार्किकैरभिधीयते । स च षड्विध इति केचित्- धर्मधर्म्युभयेषां स्वरूपस्य विशेषस्य च बाधात् । चतु-

---

धारणस्य सपक्षान्वयोस्ति विपक्षव्यतिरेकश्च नास्ति तत्रापि वृत्तेः, असाधारणस्य विपक्षव्यतिरेकोस्ति न सपक्षान्वयोस्ति तेन निश्चयैकाङ्गवैकल्यात् साधारणवदऽसाधारणोपि संशयकारणमिति ।" इति । वार्तिकेप्युक्तम्-

"नित्या भूर्गन्धवत्त्वेन स्यादसाधारणस्त्वयम् ।
निश्चयैकाङ्गवैकल्यादेष संशयकारणम् ॥
साधारणो यथा दृष्टो बुद्धिद्वयनिमित्तकः ।
विरुद्धैकाऽनवाप्तेश्च संशये कारणं मतम् ॥ " इति ।

संप्रति हेतोर्बाधकत्वं दोषमाह-तथेत्यादिना । कोसौ बाधक इत्याह-य- इति । तार्किकैरिति-"यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः" "साध्यव्यापकीभूताभावप्रतियोगी हेतुर्विरुद्धः" इति । अस्य मतान्तरेण प्रभेदानाह-षड्विध इति । धर्मस्वरूपबाधः १ धर्मविशेषबाधः २ धर्मिस्वरूपबाधः ३ धर्मिविशेषबाधः ४ धर्मधर्म्युभयस्वरूपबाधः ५ धर्मधर्म्युभयविशेषबाधः ६ इति । धर्मस्वरूपबाधो यथा-नित्यः शब्दः कृतकत्वादिति, अत्र शब्दे कृतकत्वे ज्ञाते धर्मस्य=साध्यस्य नित्यत्वस्य स्वरूपेणैव बाधोभवतीति धर्मस्वरूपबाधः । तदुक्तं वार्तिके-

" नित्यत्वे कृतकत्वस्य धर्मबाधाद्विरुद्धता । " इति । १

धर्मविशेषबाधो यथा-अगृहीतसम्बन्धोपि शब्दः स्वाभिधेयमर्थं बोधयति विभक्तिमत्त्वाद् गृहीतसम्बन्धवदिति, अत्र शब्दे सम्बन्ध(शक्ति)ग्रहणात् प्रागप्यर्थबोधकत्वं साध्यते तत्र शब्दे शक्तिग्रहानन्तरं सामान्यतोर्थबोधकत्वे सत्यपि शक्तिग्रहानन्तरिकार्थबोधेन हेतोर्व्याप्तिदर्शनात् शक्तिग्रहणात् प्रागर्थबोधकत्वरूपविशेषस्य धर्मस्य बाधनाद् धर्मविशेषबाधो ज्ञेयः । तदुक्तं वार्तिके-

" बाधो धर्मविशेषस्य यदा त्वेवं प्रयुज्यते- ।
अर्थवच्छब्दरूपं स्यात् प्राक् सम्बन्धावधारणात् ॥
विभक्तिमत्त्वात् पश्चाद्वत् स्वरूपेणेति चाश्रिते ॥
अस्वरूपार्थयोगस्तु पश्चाच्छब्दस्य दृश्यते ।

तेन प्रागपि सम्बन्धादस्वरूपार्थता भवेत् ॥ " इति । २

धर्मिस्वरूपतद्विशेषबाधौ यथा—समवायो द्रव्यातिरिक्त इहप्रत्ययहेतुत्वात्संयोगवदिति, अत्र यत्र यत्रेहप्रत्ययहेतुत्वं दृष्टं तत्र तत्राऽसमवायत्वमनेकत्वं च दृष्टं यथा संयोगेऽतः इहप्रत्ययहेतुत्वादसमवायत्वमनेकत्वं च प्राप्तमिति धर्मिणः पक्षस्य समवायस्य स्वरूपेणैव बाधो जात इति धर्मिस्वरूपबाधः । तथाऽनेकत्वेनैकत्वस्यापि बाधो जात इति धर्मिविशेषबाधः । अत्र चैकत्वस्य धर्मिभूतसमवायरूपेणैव बाधो ज्ञेयः समवायधर्मिकैकत्वबाधे तु धर्मविशेषबाध एव स्यान्नतु धर्मिविशेषबाध इत्यभिप्रायः । तदुक्तं वार्तिके—

" इहप्रत्ययहेतुत्वाद् द्रव्यादेर्व्यतिरिच्यते ।
समवायो यथेहाऽयं घट इत्यादिसङ्गतिः ॥ (संगतिः = संयोगः)

धर्मिस्वरूपबाधमाह—अत्राप्यसमवायत्वं संयोगस्येव सिध्यति ।
तेन धर्मिस्वरूपस्य वैपरीत्याद्विरुद्धता ॥

धर्मिविशेषबाधमाह—यच्च सत्तावदेकत्वं समवायस्य कल्पितम् ।
तत्र संयोगवद्भेदात् स्याद्विशेषविरुद्धता ॥" । ३ । ४ ।

उभयस्वरूपबाधो यथा—आत्मा नित्योऽनवयवित्वाद् व्योमवदिति, अत्र सौत्रान्तिकमत आत्मैव नास्ति नतरां तस्य नित्यत्वमिति धर्मधर्मिणोरुभयोरेव स्वरूपतो बाधादुभयस्वरूपबाधः । तदुक्तम्—

" नित्यमात्मास्तिता कैश्चिद् यदा सौत्रान्तिकं प्रति ।
साध्यतेऽवयवाभावाद् व्योमवद्, द्वयबाधनम् ॥" इति । ५ ।

उभयविशेषबाधो यथा— चक्षुरादयः परार्थाः संघातात् शयनादिवदिति, संघातात्=सत्त्वरजस्तमआत्मकत्वात् ( गुणत्रयात्मकत्वात् ) अत्र यत्र यत्र शयनादिषु संहतत्वमस्ति तत्र तत्र भौतिकत्वमप्यस्ति तथा संघातात्मकशरीरादिपारार्थ्यमप्यस्तीति संहतत्वहेतुना चक्षुरादीनामपि भौतिकत्वं प्राप्तमित्याऽऽहङ्कारिकत्वस्य बाधो जातः, यद्यपि चक्षुरादिरूपधर्मिणां पक्षाणां सामान्यतो बाधो नास्ति तथापि तेषामाऽऽहङ्कारिकत्वेन विशेषरूपेण बाधो जात एवेति धर्मिविशेष बाधः, साङ्ख्येन यदाऽऽहङ्कारिकत्वमुक्तं तस्य बाधः । तथात्र चक्षुरादीनां पारार्थ्येनात्मा साधनीयो यदर्थाश्चक्षुरादय स आत्मेति रूपेण. तत्र च संहतत्वं हेतुर्हि संघातात्मकशरीरादिपारार्थ्येन व्याप्तं शयनादिषु दृष्टमिति चक्षुरादीनामपि संहतत्वहेतुना संघातात्मकशरीरादिकं प्रत्येव

र्धेति केचित्-उभयबाधस्य धर्मधर्मिबाधान्तर्गतत्वत् । एकधेत्यपरे- सर्वथा समीहितधर्मविपर्ययसाधनत्वा-त्, इदमेव च युक्तम्, अवान्तरभेदस्यानुपयोगात् । य-द्यवश्यमवान्तरभेदो वक्तव्यस्तर्हि द्वैविध्यमेव वक्त-व्यम्- धर्मस्वरूपबाधनं तद्विशेषबाधनं चेति । न हि धर्मितद्विशेषबाधकत्वं नाम हेतोर्दूषणं सम्भवतीति स्वयमेव वार्तिककारेण—

---

पारार्थ्यं सेत्स्यति न त्वात्मानं प्रति आत्मनः संघातात्मकत्वाभावादिति ध-र्मस्य साध्यस्य पारार्थ्यस्य सामान्यतो बाधाभावेपि आत्मनिरूपितपरार्थत्वेन विशेषेण रूपेण बाधोस्त्येवेति धर्मविशेषबाध इत्युभयविशेषबाधः । तदुक्तम्-

" तदोभयविशेषस्य बाधोयं साध्यते यदा- ।
पारार्थ्यं चक्षुरादीनां संघाताच्छयनादिवत् ॥

धर्मविशेषबाधमाह—शयने संघपारार्थ्यं भौतिकव्याप्तहेतुके ।
आत्मानं प्रति पारर्थ्यमसिद्धमिति बाधनम् ॥
असंहतपरार्थत्वे दृष्टे संहततापि च ।

धर्मिविशेषबाधमाह—अनहङ्कारिकत्वं च चक्षुरादेः प्रसज्यते ॥" इति । ६ ॥

इत्येवं बाधस्य षड्विधत्वं श्लोकवार्तिकानुसारेण व्याख्यातम् ।

मतान्तरमाह-चतुर्धेति । अत्र हेतुमाह- उभयबाधस्येति, पञ्चमषष्ठयोर्भे-दयोः पूर्वोक्तचतुर्ष्वेवान्तरर्भावादित्यर्थः । उक्तं च मतबाहुल्यम्—

"षोढा विरुद्धतामाहुश्चतुर्धा वैकधापि वा ।
श्रुत्यर्थोक्तस्य बाधायां प्रतिज्ञार्थस्य हेतुना ॥" इति ।

स्वमतमाह-एकधेति । समीहितः=साध्यमानो यो धर्मो नित्यत्वादि त-द्विपर्ययसाधकत्वात् । स्वाभिप्रायमुद्घाटयति-इदमेवेति, एकधेत्येव युक्त-मित्यर्थः । अत्र हेतुमाह-अवान्तरेति, धर्मिस्वरूपतद्विशेषयोर्बाधे हेतोर्दूष-णत्वं नास्त्येव धर्मस्वरूपतद्विशेषबाधौ तु धर्मबाधत्वेन रूपेणैकधेत्यनेन गृही-तावेवेति भावः । अवान्तरभेदस्यावश्यापेक्षायामाह-यदीति । द्वैविध्यमेव द-र्शयति-धर्मस्वरूपेति । विपक्षे बाधकमाह- नहीति, हेतुसाध्ययोरेव व्याप्तिर्भ-वतीति हेतुदोषेण साध्य एव दोषः संभवति न तु पक्षेपीति भावः । अत्र

"धर्मिस्वरूपबाधेन विरुद्धो योऽभिधीयते।"[1]
इत्यादिना दर्शितम्।

तथा हि- द्रव्यातिरिक्तः समवाय इहप्रत्ययहेतुत्वात् संयोगवदिति, अत्रेहप्रत्ययहेतुत्वमऽसमवायत्वेन भेदेन च व्याप्तं संयोगे दृष्टम्, समवायस्यासमवायत्वं भेदं चापादयत् समवायधर्मिस्वरूपं तद्विशेषणं चैकत्वं बाधत इत्युदाहृतम्। तदयुक्तम्-इहप्रत्ययहेतुत्वं हि समवाये धर्मिणि दृष्टं न वा? यद्यऽदृष्टं ततोऽसिद्धत्वान्न कस्य चिदपि साधकं बाधकं वा भवति, यदि दृष्टं तत्कथं तत्रैव दृश्यमानं तस्यैव बाधनं कुर्यात्? विरोधे हि सति बाधेत न च तद्धर्मतया दृश्यमानस्य कथं चिदपि तेन विरोधः सम्भवति।

---

वार्तिकं प्रमाणयति-धर्मिस्वरूपेति।

धर्मिस्वरूपबाधकत्वं तु हेतोर्नैव संभवतीत्युपपादयति-तथा हीत्यादिना। धर्मिस्वरूपतद्विशेषबाधोदाहरणस्थले समनन्तरमेवायं पूर्वपक्षग्रन्थो व्याख्यातः। परिहरति-तदयुक्तमिति, समवाये धर्मिणि यदीहप्रत्ययहेतुत्वं न दृष्टं तदा असिद्धत्वात्=स्वरूपासिद्धत्वात्=हेतोः पक्षेऽभावादेव न कस्य चित्=असमवायत्वस्य भेदस्य च साधकं न च समवायत्वस्यैकत्वस्य च बाधकमित्याह-यद्यऽदृष्टमिति। यदि च समवाये धर्मिणीहप्रत्ययहेतुत्वं दृष्टं तदा कथं स्वाधारभूतं समवायं बाधेत? न हि भूतलवृत्तिर्घटः भूतलं बाधते, प्रत्युत तस्य स्वाधिकरणत्वात्तत्सत्तायां प्रमाणमेव भवेदित्याह-यदि दृष्टमिति। विरोधेति-परस्परं विरोधे हि सत्येकेनापरो बाध्यते यथा वन्हिजलयोर्विरोधाज्जलेन ह्रदे वन्हेर्बाधो भवति, न च तद्धर्मतया दृश्यमानस्य धर्मस्य तेन=धर्मिणा सह विरोधः सम्भवति प्रत्युतानुकूल्यमेव भवति तेन धर्मेणैव धर्मिणो धर्मित्वादित्याह- न चेति। तस्माद्धेतोर्धर्मिबाधकत्वं नैव संभवतीति भावः।

---

१ पद्यमिदमनुमानखण्डेन सम्बद्धत्वात् श्लोकवार्तिकस्यैवेतिनिश्चीयते किं तु श्लोकवार्तिकलिखितमुद्रितपुस्तकेषु प्रयत्नेनान्विष्यमाणमपि नोपलब्धमिति महान् खेदः।

ननु समवायत्वं बाधत इत्युक्तम् ? । यदि समवायत्वं नाम समवायधर्मिणोऽतिरिक्तं तद्बाधेऽपि न धर्मिस्वरूपं बाधितं स्यात् । अथ धर्म्येव तत्र तस्य बाधकं सम्भवतीत्युक्तम् । तस्मान्न धर्मिस्वरूपबाधनं नाम हेतुदोषः क्वचित्सम्भवति, सर्वत्राऽदृश्यमानस्यासत्त्वात् दृश्यमानस्य चाऽविरोधात् । धर्मिविशेषणस्यैकत्वस्य कामं सम्भवति बाधो न त्वेतद् दूषणम् । यदि खल्विहप्रत्ययहेतुत्वं समवायस्यैकत्वं विरुन्ध्यात् ततो द्रव्यातिरेकं साधयतः किं हीयते ? । न हि द्रव्यातिरेकसाधनकृतमेकत्वसाधनं यतस्तस्य दूषणत्वेन संभा-

---

नन्विहप्रत्ययहेतुत्वं हेतुः समवायत्वं बाधते न स्वाधारभूतं समवायं येनोक्तदोषः स्यादित्याशङ्कते– नन्विति । परिहरति–यदीति, यदि समवायरूपधर्मिणो भिन्नं समवायत्वं तदा धर्मस्वरूपस्यैव बाधनान्न धर्मिस्वरूपबाधः । यदि समवायत्वं धर्म्येव तदा न तस्य बाधः सम्भवतीति समनन्तरमेवोक्तमित्याह–अथेति । उपसंहरति–तस्मादिति । अत्र हेतुमाह–सर्वत्रेति, यत्र पक्षे दृश्यते तदऽसदेव न चासतः साधकत्वं बाधकत्वं वा सम्भवति, यच्च पक्षे दृश्यते तस्य तु स्वाधारभूतेन पक्षेण साकं विरोध एव न सम्भवतीति कथं तद्बाधकं स्यादित्ययमेव सर्वत्र न्याय इति भावः। किं वा यत्सर्वत्रैव न दृश्यते तदसदित्यर्थः । एकत्वं तु समवायस्य धर्म एवेति तस्य बाधस्तु संभवति न त्वेतद्दूषणमित्याह–यदीति, अयं भावः–यत्साधनाय हेतुः प्रयुज्यते तस्यैव बाधने हेतोर्बाधकत्वं दूषणं भवति न तु साध्यातिरिक्तधर्मबाधनेऽपि यथा वन्हिमान् धूमादित्यत्र वन्हिमाक्षिपता धूमेन वन्हिविरोधिनो जलस्य बाधेऽपि न बाधकत्वं दूषणं न हि सर्वमेकत्रैकेनैव साधनीयं भवति, एवमत्रापि द्रव्यातिरेकसाधनाय प्रयुक्तेनेहप्रत्ययहेतुत्वेन हेतुना यद्येकत्वस्य बाधः सम्भाव्यते तदा नायं हेतोर्दोषस्तस्य द्रव्यातिरेकसाधनाय प्रयुक्तत्वेनैकत्वसाधनायाऽप्रयुक्तत्वादिति । विपक्षे बाधकमाह–न हीति ।

अयं भावः–यथाऽऽर्द्रेन्धनसंयोगेन धूमः साध्यते धूमेन च वन्हिः साध्यते इति धूमसाधने कृते वन्हिसाधनमपि भवत्येवेति धूमसाधनकृतं ( प्रयु-

ऽयेत । तस्माद्धर्मस्वरूपस्य तद्विशेषस्य च बाधनाद् द्वि-
विधमेव बाधकम् । तत्र-नित्यः शब्दः कृतकत्वादिति
कृतकत्वमनित्यत्वेन व्याप्तत्वान्नित्यस्वरूपमेव बाधते ।

यस्तु-स्वरूपमेव शब्दानामभिधेयं नार्थान्तरमित्ये-
तमर्थं प्रतिपिपादयिषुस्तत्सिद्ध्यर्थमेवं प्रयुङ्क्ते-अगृहीत-
संबन्धावस्थोपि शब्दः स्वाभिधेयमर्थं प्रतिपादयति
विभक्तिमत्त्वाद् गृहीतसंबन्धवदिति, तस्य धर्मविशे-

---

कम् ) वन्हिसाधनं तत्र यद्यार्द्रेन्धनसंयोगस्य वन्हिना विरोधः स्याद्विरोधव-
शाच्च वन्हिं बाधेत तदा वन्हिं विना धूमो न भवतीति धूमबाधोपि स्यादिति
हेतोर्बाधकत्वं दोषः स्यात्, एवमत्रापि यदीहप्रत्ययहेतुत्वेन द्रव्यातिरेकस्तेन
चैकत्वं सिद्ध्येत तदा द्रव्यातिरेकसाधनकृतमेकत्वसाधनं स्यात् तत्र चेहप्र-
त्ययहेतुत्वेनैकत्वस्य बाधे द्रव्यातिरेकस्यापि स्वव्यापकबाधाद् बाधः स्यात्त-
था चैकत्वबाधनं तस्य=हेतोर्दूषणत्वेन सम्भाव्येत, नहि द्रव्यातिरेकसाधन-
कृतमेकत्वसाधनं यतः=येनैकत्वबाधनं तस्य दूषणत्वेन सम्भाव्येत । एक-
त्वसाधनमित्यत्रैकत्वबाधनमित्यपि क्वचित् पाठः । उपसंहरति-तस्मादिति ।
स्वीकृतधर्मस्वरूपतद्विशेषबाधकयोर्धर्मस्वरूपबाधकमुदाहरति- तत्रेत्यादिना ।
नित्य इत्यादि समनन्तरमेवात्र(२५२पृ)प्रतिपादितम् । नित्यस्वरूपमेव=शब्दस्य
धर्मत्वेनोक्तं नित्यत्वमेव सामान्यतो बाधत इति धर्मस्वरूपबाधः ।

धर्मविशेषबाधमुपपादयति-यस्त्विति । उक्तं च न्यायरत्नाकरे-"यो हि
स्वरूपमेव शब्दानामभिधेयमित्याश्रित्य तत्सिद्ध्यर्थमेवं प्रयुङ्क्ते-संबन्धग्रहणात्
प्रागपि शब्दोऽर्थवान् अर्थं बोधयतीति यावत् विभक्तिमत्त्वात् पश्चाद्वदिति,
सिद्धे चार्थबोधनेऽर्थान्तरबोधाभावात् स्वरूपार्थत्वं सिद्धं भवतीति, तं प्रत्यु-
च्यते" इति । अस्मिन्मते बाह्यार्थेन सह संबन्धग्रहाभावेन तदभिधानाऽसंभवाद-
र्थात्स्वरूपाभिधायकत्वं शब्दानां प्राप्तम् । तथा च शब्दानां स्वरूपमेवाभिधेय-
मस्ति न तु कम्बुग्रीवादिमदादिपदार्थान्तरमिति साधनार्थम्-अगृहीतसम्बन्ध
इत्यादि यः प्रयुङ्क्ते तस्य पुरुषस्य विभक्तिमत्त्वादिति हेतुः धर्मविशेषविपर्यय-
साधनः=धर्मविशेषस्याऽगृहीतासम्बन्धावस्थायामपि स्वाभिधेयार्थप्रतिपाद-
कत्वस्य विपर्ययसाधनः उक्तधर्मसाधनासमर्थ इत्यर्थः । एतदेवोपपादयति-प-

**षविपर्ययसाधनो हेतुः, पश्चाद्धि संबन्धग्रहणादस्वरूपप्रतिपादनं दृष्टमिति तद्वदेव प्रागस्वरूपार्थत्वं तेनैव हेतुना प्रसज्येत, स्वरूपप्रतिपादने च बाधितेऽर्थप्रतिपादनमपि तद्धर्मस्वरूपं बाधितमेव। नहि प्राक् संबन्धग्रहादर्थान्तरप्रतिपत्तिः शक्यते वक्तुं प्रतीतिविरोधादेव।**

**सर्वत्र यो हेतुर्यादृग्विशेषविशिष्टेन साध्येन दृष्टान्तधर्मिषु नियतः स तादृग्विशेषविशिष्टस्य साध्यस्य धर्मिणि प्रमाणान्तरविरोधात् साधनासम्भवे-**

---

श्चादिति। येनैव रूपेण साध्यसाधनयोर्व्याप्तिग्रहो भवति तेनैव रूपेणाऽनुमानमपि भवतीति शक्तिग्रहणात् पश्चाच्छब्देन पदार्थान्तरमेव प्रतिपाद्यते न स्वरूपमिति गृहीतसम्बन्धशब्दे दृष्टं तत्र च विभक्तिमत्त्वं हेतुरप्यस्तीति शक्तिग्रहणात् प्रथममपि विभक्तिमत्त्वेन हेतुनाऽगृहीतशक्तिकस्य शब्दस्याऽस्वरूपार्थत्वम्=स्वरूपप्रतिपादकत्वाभाव एव प्रसज्यते, अगृहीतशक्तिकस्य शब्दस्य यदोक्तरीत्या स्वरूपप्रतिपादकत्वमपि बाधितं तदा सुतरामऽर्थान्तरप्रतिपदकत्वमपि बाधितमिति तद्धर्मस्वरूपम्=अगृहीतसम्बन्धस्य शब्दस्य धर्मस्वरूपमऽर्थप्रतिपादकत्वं बाधितमेवेत्यर्थः। एतदेवाह–न हीति। शक्तिग्रहणात् पूर्वं कथमपि शब्दस्यार्थप्रत्यायकत्वं न सम्भवति प्रतीतिविरोधात्=शक्तिग्रहणादनन्तरमेव शब्देनार्थः प्रत्याय्यत इति सर्वलोकप्रतीतिसिद्धमस्ति तद्विरोधात्। शक्तिग्रहणात्पूर्वमप्यर्थप्रत्यायकत्वे शक्तिग्रहणं व्यर्थमेव स्यात्, अर्थप्रत्यायकत्वस्यैव शक्तिग्रहप्रयोजनत्वात्। अत्र च शब्दे सामान्यतोऽर्थबोधकत्वे सत्यपि शक्तिग्रहात् प्रागऽर्थबोधकत्वरूपविशेषस्य धर्मस्याऽसाधनाद् बाध इति धर्मविशेषबाधो विज्ञेयः।

बाधकस्य हेतोरभीप्सितसाध्यासाधकत्वमुपपादयति– सर्वत्रेति। यो हेतुः=विभक्तिमत्त्वम्, यादृग्विशेषविशिष्टेन=गृहीतसम्बन्धशब्दनिष्ठत्वविशेषविशिष्टेन, साध्येन=स्वार्थप्रतिपादकत्वेन, सह दृष्टान्तधर्मिषु=सपक्षभूतेषु गृहीतसम्बन्धशब्देषु, नियतः=व्याप्तः, सः=विभक्तिमत्त्वं हेतुः, तादृग्विशेषविशिष्टस्य=गृहीतसम्बन्धशब्दनिष्ठत्वविशेषविशिष्टस्य, साध्यस्य=स्वार्थप्रतिपादकत्वस्य, धर्मिणि=पक्षभूतेऽगृहीतसम्बन्धे शब्दे, प्रमाणान्तरविरो-

न विपरीतं विशेषं नियमबलात्स्वयमेव बाधमानो निर्विशेषस्य च साध्यस्यासम्भवात् साध्यमेव न साधयति। यथा शरीरिचेतनकर्तृकत्वेन घटादिषु व्याप्तमुत्पत्तिमत्त्वं देहाङ्कुरादीनां चेतनकर्तृकत्वसाधनायोच्यमानं शरीरिणश्चेतनस्यानुपलब्धिविरोधेन साधयितुमशक्यत्वादऽशरीरस्य तेनैव हेतुना घटादिवन्निवारणाद् विधाद्वयशून्यस्य चेतनस्यासम्भवाच्चेतनकर्तृकत्वमेवाङ्कुरादीनां न साधयति। तेन धर्मविशेष-

---

धात्=अगृहीतसम्बन्धेन शब्देन स्वार्थं न प्रतिपाद्यत इत्यादिप्रमाणविरोधात् साधनासम्भवेन=उक्तसाध्यस्य साधनेऽसमर्थत्वात्, विपरीतम्=स्वविपरीतम्=स्वविरुद्धम्, विशेषम्=अर्थप्रतिपादकत्वस्याऽगृहीतसम्बन्धशब्दनिष्ठत्वम्, नियमबलात्=व्याप्तिबलात्, बाधमानः, यतो विभक्तिमत्त्वस्य याऽर्थप्रतिपादकत्वेन सह व्याप्तिर्गृहीता सा गृहीतसम्बन्धशब्दनिष्ठत्वविशिष्टेनैवार्थप्रतिपादकत्वेन गृहीता अतोऽगृहीतसम्बन्धशब्दनिष्ठत्वविशिष्टमर्थप्रतिपादकत्वं बाधमानः, गृहीतसम्बन्धशब्दनिष्ठत्वविशिष्टं त्वर्थप्रतिपादकत्वमऽगृहीतसम्बन्धे शब्दे नास्त्येव, निर्विशेषं च साध्यमेव न सम्भवति निर्विशेषे प्रमाणाभावादिति सामान्यत एव साध्यं बाधत एवेति न स्वाभिलषितं प्रतिज्ञातं साध्यं साधयतीत्यन्वयः। अयमेव सर्वत्र बाधस्थले न्याय इत्युक्तम्—सर्वत्रेति।

स्वयं चोदाहरणेन विशदयति—यथेति, देहाङ्कुरादिकं चेतनकर्तृकमुत्पत्तिमत्त्वाद् घटादिवदिति प्रयोगः। तत्र घटादिषूत्पत्तिमत्त्वस्य हेतोः शरीरिचेतनकर्तृकत्वेन सह व्याप्तिर्गृहीतास्ति, देहाङ्कुरादीनां कर्ता च शरीरी नोपलभ्यते इति न साधयितुमपि शक्यते, अशरीरस्येत्यत्र चेतनस्येति शेषः, अशरीरचेतनकर्तृकत्वेन साकं तूत्पत्तिमत्त्वस्य व्याप्तिरेव न गृहीतेति नाशरीरचेतनकर्तृकत्वं साध्यते प्रत्युत निवार्यत एवेत्याह—घटादिवदिति=यथा घटादीनामशरीरिचेतनकर्तृकत्वं निवार्यते तथा। विधाद्वयशून्यस्य=शरीरित्वाशरीरित्वलक्षणप्रकारद्वयशून्यस्य चेतनस्याऽसम्भवात्सामान्यतः चेतनकर्तृकत्वमेव न साधयतीत्यन्वयः। वस्तुतस्तु शरीरिणश्चेतनस्यानुपलब्धिविरो-

विरोधो हेतोः साध्यसिद्धिमेव निरुणद्धीति भवति दूषणम्। धर्मिविशेषविरोधस्तु साध्याविरोधित्वान्न दूषणं प्रत्युत सिद्धान्तान्तरदूषणत्वात् प्रतिवादिन एव निग्रहस्थानत्वाद् दूषणं तद्भवति न वादिनः।

यस्तु दृष्टान्तपरिदृष्टसाध्यविशेषविरोधसम्भवेपि तद्रहितं साध्यमात्रं हेतुः साधयत्येव तच्च विशेषान्त-

---

धेन साधयितुमशक्यत्वादिति तु न युक्तं न हि यन्नोपलभ्यते तद् ऽसदिति वक्तुं शक्यते, अन्यथा स्वर्गादीनां देशान्तरस्थपदार्थमात्रस्य चानुपलब्ध्याऽसत्त्वमेव स्यात्, तस्मादस्ति दिव्यवपुः श्रीमन्नारायणश्चेतनः स एव स्वेच्छामात्रेण सर्वं सृजति विस्तरस्तु वेदान्तेषु द्रष्टव्यः। उपसंहरति- तेनेति। धर्मिविशेषेण हेतोर्विरोधस्तु न दोषावह इत्याह-धर्मिविशेषेति। साध्यसाधनासामर्थ्यमेव हेतोर्दूषणं तच्च प्राधान्येन पञ्चविधं तदुक्तम्—

" अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः।
कालात्ययोपदिष्टश्च हेत्वाभासास्तु पञ्चधा " इति।

एतत्सर्वं हेत्वाभासग्रन्थेषु द्रष्टव्यम्। न तु धर्मिविशेषविरोधोपि हेतुदूषणं तस्य साध्यसाधने प्रतिबन्धकत्वाभावात्। प्रत्युत हेतोः साध्यसाधकत्वेपि धर्मिविशेषमात्रविरोधेन साध्यसिध्यऽप्रतिबन्धकेन बाधकत्वदोषकथनं दोषमुद्भावयतः प्रतिवादिन एव सिद्धान्तान्तरदूषणत्वात्=हेतोर्हठाद्बाधकत्वदोषमुद्भाव्य वादिनः सिद्धान्ते दोषारोपणान्निरनुयोज्यानुयोगलक्षणं निग्रहस्थानमापततीति प्रतिवादिन एव तद्दूषणं भवति न वादिन इति भावः, तथा च न्यायसूत्रम्-" अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः " इति। एतदभिप्रायेणाह-प्रत्युतेति। श्लोकवार्तिकटीकायामप्युक्तम्-" यस्तुविशेषो नाक्षिप्यते तस्मिन् बाधितेपि न प्रतिज्ञातार्थो बाधितो भवति, तस्य यदि बाध्युपगममात्रेण प्रतिवादी बाधं ब्रूयात्ततः प्रकृतात् सिद्धान्तान्तरदूषणं नाम निग्रहस्थानमापद्यते " इति।

ननु सपक्षे यद्विशेषविशिष्टं साध्यं दृष्टं तद्विशेषविशिष्टस्य पक्षे विरोधेपि तद्रहितम्=तद्विशेषरहितं साध्यं हेतुः साधयत्येव निर्विशेषस्य तु साध्यस्याऽसम्भवात् तत्=साध्यं विशेषान्तरमाक्षिप्य=विशेषान्तरविशिष्टं सिध्यति,

**रमाक्षिप्य सिध्यतीति वदति, तस्य-उष्णाग्निनियत-स्तृणादिविकारो हिमे दृश्यमानः शैत्यप्रत्यक्षविरोधा-दौष्ण्यासम्भवेप्यऽनुष्णमेवाग्निं साधयेत्, तस्माद्धर्मि-विशेषविपर्ययसाधनत्वं हेतोरदूषणमेव।**

---

यथा स्वार्थप्रतिपादकत्वं साध्यं सपक्षे गृहीतसम्बन्धशब्दे गृहीतसम्बन्धशब्द-निष्ठत्वविशेषविशिष्टमेव दृष्टं पक्षेऽगृहीतसम्बन्धशब्दे तूक्तविशेषविशिष्टस्य स्वार्थप्रतिपादकत्वस्यासम्भवेपि स्वार्थप्रतिपादकत्वं विभक्तिमत्त्वादिति हेतुः साधयत्येव तच्च साध्यं निर्विशेषं न सम्भवतीत्यऽगृहीतसम्बन्धशब्दनिष्ठत्ववि-शेषविशिष्टमेव सिध्यतीत्याशङ्कते-यस्त्विति। यथा शूद्रे ब्राह्मणत्वविशिष्टं मनुष्यत्वं न सम्भवतीति ब्राह्मणत्वविशिष्टमनुष्यत्वनिवृत्तावपि शूद्रत्ववि-शिष्टं केवलं वा मनुष्यत्वं तु न निवर्तते ? तथात्रापि द्रष्टव्यमिति भावः। परि-हरन्नाह-तस्येति। तस्य=उक्तवाक्यवादिनो मते। उष्णेति-अयं भावः-अ-ग्निसम्बन्धात् तृणादीनां भस्म भवति भस्मीभावाऽभावेपि वैरूप्यादिकं भव-त्येवेति यथाग्निना दाहकत्वात् तृणादिषु विकार उत्पद्यते तथा हिमसम्बन्धा-दपि तृणादिषु वैरूप्यादिको विकार उत्पद्यते हिमे च शैत्यविरोधादुष्णोग्नि-र्न सम्भवतीति शीत एवाग्निः पूर्वपक्षिणो मते सिध्येत पूर्वपक्षिणा सपक्षे दृष्टस्य विशेषस्य पक्षेऽसम्भवेपि हेतोः साध्यसाधकत्वस्वीकारात् तथा च महा-नसादावऽग्निरुष्ण एव दृष्टो हिमे चोष्णाग्नेरसम्भवेपि दृश्यमानेन तृणादिवि-कारेण शीत एवाग्निः सिध्येत दृश्यमानतृणादिविकारस्याग्निं विनाऽनुप-पत्तेस्तथा हि-हिममऽग्निमत् तृणादिविकारकारित्वादयोगोलकवदिति, अत्र प्रत्यक्षभूतशैत्यविरोधाद्धिमे उष्णत्वं न सम्भवत्यऽग्निश्च तादात्म्यसम्बन्धे-नोष्णत्वव्याप्य एवेत्यग्निव्यापकस्योष्णत्वस्य निवृत्त्याग्निरपि निवर्तते तन्न स्यात् किं-तु यस्त्वित्याद्युक्तरीत्याऽयोगोलक उष्णत्वविशिष्टोऽग्निर्दृष्ट उष्ण-त्वस्य च हिमे विरोधादुष्णत्वरहितमनुष्णमेवाग्निं हेतुः साधयेत्, न चैवं सं-भवति, तस्मात्सपक्षे साध्यं यद्विशेषेण विशिष्टं दृष्टं तस्य विशेषस्य पक्षेऽसं-भवे हेतुः साध्यं नैव साधयति। तदुक्तं श्लोकवार्तिकटीकायाम्- "अग्नि-र्ह्युष्णत्वव्याप्तः स्वव्यापकमुष्णत्वमाक्षिपेत् तस्य च ( उष्णत्वस्य ) प्रत्यक्षाव-

उदाहरणं द्विविधम्-साधर्म्योदाहरणं वैधर्म्योदाहरणं च। साधर्म्यम्-लिङ्गमुद्दिश्य लिङ्गिन उपादानम्-यो यो धूमवान्महानसादिः स सर्वोऽग्निमान् दृष्ट इति, सम्यगुक्ते च साधर्म्ये न वैधर्म्यं वक्तव्यं गतार्थत्वात्। यदा वक्तव्यमापतति तदा लिङ्ग्यभावमुद्दिश्य लिङ्गाभावोपादानम्-यत्राग्निर्नास्ति तत्र धूमोऽपि नास्ति यथा तोयादिष्विति। यत्र भावेन भावः साध्यते तत्रैव विधिरूपं साधर्म्यं तत्प्रतिषेधरूपं च वैधर्म्यम्। यत्र तु मेघाभावादिना वृष्ट्याद्यभावः साध्यते तत्र साधर्म्यमेव प्रतिषेधरूपं यथा-यदा यत्र मेघोत्पत्तिर्ना-

---

गतेन शैत्येन बाधात् तद्व्याप्तोऽग्निरपि बाधितो भवति।" वार्तिकेऽप्युक्तम्-

"तृणादिविक्रियाहेतोरग्निमद्भिमसाधने।
प्रत्यक्षावगताच्छैत्यात्तद्विशेषोत्थबाधनम्॥" इति।

मृगेन्द्रावलोकितन्यायेनाऽऽशङ्कितस्य परिहारमुक्त्वा प्रकृतमुपसंहरति-तस्मादिति। साध्यसाधने हानेरभावाद्धर्मिविशेषविपर्ययसाधनं हेतोरदूषणमित्यर्थः।

हेतुदोषानुपपाद्य संप्रत्युदाहरणं व्युत्पादयितुमारभते-उदाहरणमिति। सम्यक्=अव्यभिचरितसाधनसाध्ययोः साधर्म्ये उक्ते। गतार्थत्वात्=सम्यक्साधर्म्येणाप्यनुमित्युत्पत्तेर्वैधर्म्यस्यानपेक्षितत्वात्। वैधर्म्योदाहरणप्रदर्शनपक्षमप्याह-यदेति। भावेनेति-यथा यत्र धूमस्तत्र वन्हिरिति साधर्म्यं विधिरूपम्=भावरूपं भावपदार्थविषयकं भवतीति शेषः। यत्र चाभावेनाऽभावः साध्यते यथा ह्रदो धूमाभाववान् वन्ह्यभावादिति किं वा यत्र वन्हिर्नास्ति तत्र धूमोऽपि नास्तीति तत्र तत्प्रतिषेधरूपम्=भावपदार्थप्रतिषेधरूपं वैधर्म्यम्। भावसाध्यकस्थले साधर्म्यं विधिरूपं भवति वैधर्म्यं च प्रतिषेधरूपं भवतीति भावः। सर्वत्र साधर्म्यं विधिरूपं वैधर्म्यं च प्रतिषेधरूपमेव भवतीति नियमो नास्ति किं त्वऽन्वयव्याप्तौ साधर्म्यं भवति व्यतिरेकव्याप्तौ च वैधर्म्यं भवति तत् विधिरूपं वा स्यात् प्रतिषेधरूपं वा स्यादित्याह- यत्र त्विति। मेघाभावेन वृष्ट्यभावानुमानेऽभावयोरेवान्वयव्याप्तिरस्तीति साधर्म्यमपि प्रतिषेधरूपमेवास्ति। उदाहरणमाह-यथेति। मेघाभाववृष्ट्यभावयोश्च व्यति-

स्ति तदा तत्र वृष्टिर्नास्तीति । वैधर्म्यं तु विधिरूपम्- यत्र वृष्टिरस्ति तत्र मेघोत्पत्तिरस्तीति । तेन यद्भिक्षुणोक्तम्-" प्रसज्यप्रतिषेधात्मकमेव वैधर्म्यम् " इति तदनादरणीयम् ।

साधर्म्याऽऽभासाश्च- साध्यविकलत्वादयः, वैधर्म्याभासाश्च-साध्याभाववैकल्यादयो वार्तिक एव द्रष्टव्या इति ।

---

रेकव्याप्तिस्तु यत्र वृष्टिस्तत्र मेघोत्पत्तिरित्येव-एतच्च भावयोरेव वैधर्म्यमिति विधिरूपमेवेत्याह-वैधर्म्यं त्विति । कैश्चिदुक्तम्-वैधर्म्यं प्रतिषेधात्मकमेव भवत्यऽर्थादभावयोरेव व्यतिरेकव्याप्तिर्भवतीति तन्न युक्तम्, अभावसाध्यकस्थले भावयोरेव व्यतिरेकव्याप्तेरिति तत्र वैधर्म्यमेव विधिरूपं भवति न प्रतिषेधरूपं किं तु साधर्म्यमेव प्रतिषेधरूपं भवति दर्शितश्चायंक्रमो यत्र त्वित्यादिना । एतदेवाह- तेनेत्यादिना । " तत्रैव " इत्यत्र " तत्रैवम् " इत्यपि पाठान्तरम् । उदाहरणप्रतिपादनमुपक्रम्य वार्तिकेऽप्युक्तम्—

" गमकस्यैकदेशस्य व्याप्तिं[1] गम्येन भाषितुम् ।
साध्यसाधर्म्यवैधर्म्यदृष्टान्तः प्रतिपाद्यते ॥
तत्र हेत्वर्थमुद्दिश्य साध्योपादानमिष्यते ।
उद्देश्यो व्याप्यते धर्मो व्यापकश्चेतरो मतः ॥
यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् ।
तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम् ॥" इत्यादि ।

गमकस्य=हेतोः । गम्येन=साध्येन । यद्वृत्तेति-यत्तु प्रथमं यच्छब्देनोच्यते तदुद्देश्यंभवति यथा यो धूमवानिति । यत्त्वेवकारतच्छब्दाभ्यामुच्यते तदुपादेयं भवति यथा स वन्हिमानेवेति ।

उदाहरणस्वरूपं निरूप्य तद्दोषान् वार्तिकोक्तान् सूचयति-साधर्म्याभासेति । दृष्टान्तस्य यत्साध्यवैकल्यं तत्साधर्म्याभासो यथा-वन्हिमान् धूमाज्जलह्रदवदित्यत्र जलह्रदे वन्हिः कदापि न दृष्ट इति साध्यवैकल्यात्साधर्म्याभासो

---

१ वार्तिकपुस्तकेषु "व्याप्तिर्गम्येति" "व्याप्तं गम्येत" इत्येवं पाठद्वयमुपलभ्यते तत्तु न शोभनमिति तिलकानुसारेण मयैवात्र " व्याप्तिं गम्येन " इति पाठः कृतः ।

दोषस्तस्मान्महानसवदित्येव वक्तव्यम् । व्यतिरेकदृष्टान्तस्य यत्साध्याभाववैकल्यं तद्वैधर्म्याभासो यथा यत्र वन्हिर्नास्ति तत्र धूमोपि नास्ति महानसवदित्यत्र महानसे वह्न्यभाववैकल्याद्वैधर्म्याभासो दोषस्तस्मादत्र जलह्रदवदित्येव वक्तव्यम् । तदुक्तं वार्तिके—

" यदा सम्यक्प्रयुक्तेपि वाक्येऽर्थो न तथा भवेत् ।
साध्यहेतूभयव्याप्तिशून्यत्वात् परमार्थतः ॥
नित्यो ध्वनिरमूर्तत्वात् कर्मवत् परमाणुवत् ।
घटवद्, व्योमवच्चापि तदसद्भाववादिनं प्रति ॥
धर्म्यऽसिद्धावपि ह्येवं दृष्टान्ताभासता भवेत् ॥" इत्यादि ।

दृष्टान्तस्य साध्यशून्यत्वे हेतुशून्यत्वे साध्यहेतूभयव्याप्तिशून्यत्वे च दृष्टान्ताभासता भवति यथा— ध्वनिर्नित्योऽमूर्तत्वात् कर्मवदित्यत्र दृष्टान्ते कर्मणि नित्यत्वं साध्यं नास्तीति साध्यशून्यत्वाद् दृष्टान्ताभासता । परमाणुवदित्युक्ते परमाणावऽमूर्तत्वं नास्तीति हेतुशून्यत्वाद् दृष्टान्ताभासता । घटवदित्युक्ते घटे नित्यत्वममूर्तत्वमुभयमेव नास्तीत्युभयव्याप्तिशून्यत्वाद् दृष्टान्ताभासता । व्योमवदित्युक्ते व्योमानङ्गीकर्तृमते धर्मिणः=दृष्टान्तस्य सिद्धिरेव नास्तीति दृष्टान्ताभासतेत्यर्थस्तदाह—व्योमेति । वैधर्म्योदाहरणं चोपक्रम्योक्तं वार्तिके—

" सहभावित्वदृष्ट्या तु यदा व्याप्तिं न लक्षयेत् ।
परः साधर्म्यदृष्टान्तात् तं च नापेक्षते यदा ॥
वक्ता वा सहभावित्वं शुद्धं तेन वदेद् यदा ।
विपरीतान्वयं वापि तत्समाधित्सया तदा— ॥
पूर्वज्ञानोपमर्देन वैधर्म्येणेष्टसाधनम् ॥ "
व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते ।
तयोरभावयोस्तस्माद्विपरीतः प्रतीयते ॥
धूमभावेऽग्निभावेन व्याप्तेऽनग्निस्ततश्च्युतः ।
अधूम एव विद्येतेत्येवं व्याप्यत्वमश्नुते ॥"
तस्माद्धूमेन साध्यत्वमग्नेः प्रार्थयते यदा ।
तदाऽनग्निरधूमेन व्याप्तो वाच्यो न चान्यथा ॥
अनग्न्यधूमसाहित्ये व्याप्तेर्वापि विपर्यये ।
न प्रस्तुतोपकारः स्यादन्यद्वापि प्रसाध्यत ॥

"तत्तु द्विविधम्" इति दृष्टस्वलक्षणविषयमे-
वानुमानमिति मन्वानान् निराकर्तुमऽदृष्टस्वलक्षणवि-

---

यत्राप्यर्थस्य शून्यत्वं द्वाभ्यामेकेन वा भवेत् ।
यदनित्यं तु तन्मूर्तमणुवद् बुद्धिवत् खवत् ॥" इत्यादि ।

व्याप्यव्यापकेति—अन्वयव्याप्तौ वन्हेर्व्यापकत्वेन व्यतिरेकव्याप्तौ धूमाभावस्यैव व्यापकत्वं वन्ह्यभावस्य तु व्याप्यत्वमेवेत्यर्थस्तदाह—विपरीत इति । धूमभावेति—इदं च ग्रन्थकारेणैवैवं व्याख्यातम्— "यो हि यत्रैव भवन् यद्देशकालौ नातिक्रामति स तद्व्याप्यः, व्यापकस्त्वाधिक्येऽप्यविरुद्धः, तत्र धूमस्याग्निदेशकालानतिक्रमात् सकलधूमदेशकालेऽग्निना व्याप्ते, अनग्निरऽन्यभावस्ततः=धूमात्प्रच्युतो धूमाभावे एव भवन् धूमाभावदेशकालाऽनतिक्रमाद् व्याप्यो भवति, एवमेवानग्नावप्यधूमेन व्याप्ते धूमस्ततोऽनग्नेः स्वविरुद्धाद् धूमाभावव्याप्तात्प्रच्युतोऽग्नावेव भवन्नऽग्निना व्याप्तो भवति, तेन धूमेनाग्निं साधयता धूमस्याग्निव्याप्तिसिद्ध्यर्थमनग्नेरधूमेन व्याप्तिर्वैधर्म्ये वक्तव्या" इति । वार्तिककृदुपसंहरति— तस्मादिति । "यत्राप्यर्थस्य" इत्यनेनापि "न तत्रापि प्रस्तुतोपकारः स्यात्" इत्यस्यान्वयः । द्वाभ्यामिति— साध्याभावेन हेत्वभावेन साध्याभावहेत्वभावाभ्यां च शून्यत्वे वैकल्याद् वैधर्म्याभासत्वं भवति । उदाहरति—यदनित्यमिति । ध्वनिर्नित्योऽमूर्तत्वादित्यस्य यन्न नित्यं तन्नामूर्तमिति व्यतिरेकव्याप्तिः तस्या एव स्वरूपम्— यदनित्यं तन्मूर्तमऽणुवदिति, अत्र परमाणौ साध्याभावोऽनित्यत्वं नास्तीति साध्याभाववैकल्यम्, बुद्धिवदित्युक्ते बुद्धौ=ज्ञाने हेत्वभावो मूर्तत्वं नास्तीति हेत्वभाववैकल्यम्, खवदित्युक्ते खे=आकाशे मूर्तत्वमनित्यत्वमुभयमेव नास्तीत्युभयाभाववैकल्यम् । तस्मान्नात्र परमाण्वादीनां वैधर्म्यदृष्टान्तत्वं सम्भवति किं तु घटादीनामेवेति भावः, विस्तरस्तु वार्तिके द्रष्टव्यः ।

केचिद्वदन्ति प्रत्यक्षेण यः पदार्थः क्वचिदनुभूयते तद्विषयकमेव क्वचित्कदाचिदनुमानं सम्भवति प्रत्यक्षपदार्थेनैव सह कस्यचिद्धेतुभूतस्य व्याप्तिग्रहसम्भवात् । अप्रत्यक्षपदार्थेन सार्कं तु कस्य चिदपि व्याप्तिग्रह एव न सम्भवति भूयः सहदर्शनस्यैव व्याप्तिग्रहनिदानत्वादित्यऽप्रत्यक्षपदार्थविषयकमनुमानं नैव सम्भवतीत्याह—दृष्टस्वलक्षणेति । दृष्टं प्रत्यक्षं स्वलक्षणं स्वरूपं यस्य-

षयमप्यनुमानं क्रियादिविषयमस्तीति दर्शयितुं द्वै-

---

तद् दृष्टस्वलणम् । अदृष्टेति-अदृष्टमऽप्रत्यक्षं स्वलक्षणं स्वरूपं येषां क्रियादिप दार्थानां तद्विषयमप्यनुमानं भवत्येवेत्यनुमानस्य भाष्यकारेण द्वैविध्यमुक्तमित्यर्थः । प्रभाकरमतेन भाष्याभिप्रायं प्रदर्शयितुं भाष्यप्रतीकमाह- तत्त्विति । तथा च भाष्यम्- "अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसंनिकृष्टेऽर्थे बुद्धिः, तत्तु द्विविधम्-प्रत्यक्षतो दृष्टसम्बन्धं सामान्यतो दृष्टसम्बन्धं च । प्रत्यक्षतो दृष्टसम्बन्धं यथा-धूमाकृतिदर्शनादऽग्न्याकृतिविज्ञानम्, सामान्यतो दृष्टसम्बन्धं यथा-देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्यादित्यगतिस्मरणम् " इति । यत्र देशान्तरप्राप्तिस्तत्र गतिरस्त्येव यथा गच्छद्देवदत्ते. रविरपि देशान्तरमस्ताचलादिकं प्राप्नोति तस्माज्ज्ञायते गच्छति रविरिति तस्मात् प्रत्यक्षीकृतपदार्थविषयकमेवानुमानमिति मन्वानान् निराकर्तुमेव " तत्तु द्विविधम् " इति भाष्येण द्वैविध्याभिधानात् प्रत्यक्षायोग्यपदार्थविषयकमप्यनुमानं भवतीति प्रतिपादितमिति प्रभाकराभिप्रेतोऽर्थः ।

अयमभिप्रायः-प्रभाकरेणानुमानस्य द्विविधं प्रमेयमभ्युपगम्यते-प्रत्यक्षयोग्यं प्रत्यक्षायोग्यं च तत्र प्रत्यक्षयोग्यं वन्ह्यादिकं प्रत्यक्षायोग्यं च क्रियादिकम् । क्रियया सहेन्द्रियसंयोगासम्भवादऽप्रत्यक्षत्वं क्रियाफलयोः संयोगविभागयोरेव प्रत्यक्षत्वेन क्रियायां प्रत्यक्षत्वभ्रान्तिरेव । उक्तं च- " प्रत्यक्षेण हि गच्छति द्रव्ये विभागसंयोगातिरिक्तविशेषानुपलब्धेः । यस्त्वयं गच्छतीति प्रत्ययः स विभागसंयोगानुमितक्रियालम्बनः " इति । तथा च ये केवलं क्वचित् प्रत्यक्षीकृतपदार्थविषयकमेवानुमानं भवतीति वदन्ति तान् निराकर्तुं प्रत्यक्षायोग्यपदार्थविषयकमप्यनुमानं भवतीति प्रतिपादयितुं च प्रभाकरेण " तत्तु द्विविधम् " इति भाष्यमुपन्यस्य तस्य ' प्रत्यक्षयोग्यपदार्थविषकानुमानवत् प्रत्यक्षायोग्यपदार्थविषयकमप्यनुमानं भवत्येवेति प्रत्यक्षयोग्यायोग्यपदार्थविषयकत्वेनैव भाष्यकारेणानुमानस्य द्वैविध्यमुक्तम् ' इत्यभिप्रायो वर्णितः, उक्तं च तैः- " द्विविधमनुमानस्य प्रमेयं किं चिद् दृष्टस्वलक्षणं यथा वन्ह्यादिकं किं चिद्दाऽदृष्टस्वलक्षणं यथा कर्मादिकम् " इति । एवं स्थितेऽत्रग्रन्थकारः पूर्वपक्षिणं निराकर्तुं प्रभाकरमतेनोपक्रमते- तत्त्वित्यादिना । स्वमतस्य वक्ष्यमाणत्वात् तेन च प्रभाकरमतस्यापि निराकार्यत्वादिति युक्तं

विध्याभिधानम् । न हि क्रियास्वलक्षणं प्रत्यक्षेण क-

---

प्रभाकरमुखेन पूर्वपक्षनिराकरणम् । भट्टपादमतेन त्वत्र भाष्ये न प्रत्यक्षयोग्यायोग्यपदार्थविषयकत्वेनानुमानस्य द्वैविध्याभिधानं किं तु सामान्यविशेषविषयत्वेनैव, यत्र वन्हिमात्रमनुमीयते तत्र सामान्यविषयत्वं यत्र च करीषादिजन्यो वन्हिविशेषोऽनुमीयते तत्र विशेषविषयत्वमिति विवेकः, उक्तं च न्यायरत्नाकरे– "अतो यत्र विशेषयोरेव प्रत्यक्षेण सम्बन्धो गृह्यते तत् प्रत्यक्षेण दृष्टसम्बन्धमित्युच्यते" इति, एतच्चाग्रे स्फुटीभविष्यति । अत्र च भगवता वार्तिककारेणाप्युक्तम्–

"द्वैविध्यं नोपपन्नं तु–यथैव ह्यग्निधूमयोः ।
प्रत्यक्षदृष्टः सम्बन्धो गतिप्राप्त्योस्तथैव हि ॥
आदित्येऽनुपलब्धिश्चेन्न देशेप्यधुनातने ।
क्वचित्तत्रोपलब्धिश्चेद् देवदत्तेपि दृश्यताम् ॥
यदि धर्म्यन्तरापेक्षा तत्र सामान्यदृष्टता ।
स्यादग्निधूमयोः सैव, तस्मादेवं प्रचक्षते– ॥
प्रत्यक्षदृष्टसम्बन्धं ययोरेव विशेषयोः ।
गोमयेन्धनतज्जन्यविशेषादिमतिः कृता ॥
तद्देशस्थेन तेनैव गत्वा कालान्तरेपि तम् ।
यदाग्निं बुध्यते, तस्य पूर्वबोधात् पुनः पुनः ॥
सन्दिह्यमानसद्भाववस्तुबोधात् प्रमाणता ॥" इत्यादि । (बोधादित्यत्र भेदादितिपाठान्तरम् )

क्रियायाः प्रत्यक्षत्वमपि स्वमतेनाग्रे वदिष्यति– "अस्ति प्रत्यक्षावगमात्" इति । न भट्टमते क्रिया सर्वत्राऽप्रत्यक्षा किं तु क्वचिदेव, अन्यथा सपक्षभूते देवदत्तेपि देशान्तरप्राप्तेर्गत्या सह व्याप्तिग्रहो न स्यादिति देशान्तरप्राप्त्या रविगतेरनुमानं न स्यादेव तस्मात् क्रिया प्रत्यक्षापि भवत्येव, उक्तं च न्यायरत्नाकरे–" न हि नित्यानुमेयं कर्मस्वरूपमऽपरोक्षेणैवा ऽवभासात् नित्यानुमेयत्वे च देवदत्तेप्यनुमेयत्वात् "देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्याऽऽदित्यगतिस्मरणम् ।" इति भाष्यमनुपपन्नं स्यात् ।" इति । तस्मात्सर्वत्राऽप्रत्यक्षा क्रियेति प्रभाकरस्यैव मतं न भट्टपादानामिति ज्ञेयम् ।

प्रभाकरमुखेन क्रियाया अप्रत्यक्षत्वमाह– नहीति । क्रियास्वलक्षणम्=

दाचिद् गृह्यते पूर्वोत्तरदेशसंयोगविभागमात्रस्य प्रत्यक्षेण ग्रहणम्, ताभ्यामेवागन्तुकाभ्यामागन्तुकं कारणमनुमीयते तच्च क्रियेत्युच्यते।

ननु द्रव्यमेव कारणं स्यात्?, न, तस्य प्रागपि सद्भावात्।

ननु क्षणान्तरेऽन्यद् द्रव्यं सर्वसंस्काराणां क्षणिक-

---

क्रियास्वरूपम्। ननु देवदत्तो गच्छतीति प्रत्यक्षात् क्रियाया एव प्रत्यक्षत्वं प्राप्तमिति कथमुच्यते क्रिया न प्रत्यक्षेत्याशङ्क्याह–पूर्वोत्तरेति, पूर्वदेशविभाग उत्तरदेशसंयोगश्च तत्र प्रत्यक्षेण गृह्यते न क्रिया, विभागसंयोगयोस्तु गुणत्वात्सम्भवति प्रत्यक्षेण ग्रहणमित्यर्थः। नन्वेवं क्रियायां किं मानमित्याशङ्क्याह–ताभ्यामिति। ताभ्याम्=संयोगविभागाभ्याम्। संयोगविभागयोरागन्तुकयोः कार्यभूतयोः कारणेनावश्यं भवितव्यं यच्च तयोः कारणं सा क्रियेति संयोगविभागाभ्यां तत्कारणीभूतायाः क्रियाया अनुमानं सम्भवत्येवेति भावः।

ननु यदि पूर्वोत्तरदेशविभागसंयोगयोरन्यत् किमपि कारणं नोपपद्येत तदा तत्कारणत्वेन क्रिया कल्प्येतापि न चैवमस्ति द्रव्यस्यापि कारणत्वसम्भवादित्याशङ्कते– नन्विति। परिहरति–नेति। तस्य=द्रव्यस्य संयोगविभागोत्पत्तेः पूर्वमपि सत्त्वान्न कारणत्वमुपपद्यते, यदि द्रव्यमेव कारणं स्यात्तदा पूर्वमेव किं न संयोगविभागावुत्पन्नौ द्रव्यस्य पूर्वमपिसत्त्वात्। तस्मान्न द्रव्यस्य कारणत्वं किं तु क्रियैव तत्पूर्वक्षणे जाता तयोः कारणमिति युक्तम्।

ननु त्वयाऽऽगन्तुकयोः संयोगविभागयोः कारणेनाप्यागन्तुकेन भवितव्यमित्येवोच्यते तत्र द्रव्यमपि क्षणिकत्वादाऽऽगन्तुकमेव भवदुक्तक्रियावद् द्रव्यस्यापि तत्पूर्वक्षणमात्रवृत्तित्वादिति युक्तं द्रव्यस्यैव कारणत्वम्। क्षणान्तरे=संयोगविभागोत्पत्तिपूर्वक्षणभिन्नक्षणे। संयोगविभागोत्पत्तिपूर्वक्षणे त्वन्यदेव द्रव्यमित्यागन्तुकमेवेत्याशङ्कते बौद्धः–नन्विति। ननु यदि सर्वं द्रव्यं क्षणिकमेव तदा स एवायं घट इति प्रत्यभिज्ञा कथं स्यात् यतः पूर्वं दृष्टस्यैव कालान्तरे दर्शने प्रत्यभिज्ञा भवतीत्याशङ्क्याह बौद्धः–सादृश्यादिति। यथा सैवेयं तोडीत्यत्र सादृश्येनैव प्रत्यभिज्ञा तथा द्रव्येऽपि सादृश्यमेव प्रत्यभिज्ञाकारणं द्रव्यं च पूर्वक्षणसदृशमेवोत्तरक्षणे उत्पद्यत इति भावः। तस्मादागन्तुकत्वाद् द्रव्यस्यैव कारणत्वम्।

त्वात्, सादृश्यात्तु प्रत्यभिज्ञानम्। यदा समानदेशे पूर्वपूर्वमुत्तरोत्तरमारभते तदा तिष्ठतीति लक्ष्यते। यदा त्वनन्तरदेशे पूर्वपूर्वमुत्तरोत्तरमारभते तदा गच्छतीति लक्ष्यते। दीपगमनवच्छायागमनवच्च सदृशापरापरक्षणानामुत्तरोत्तरदेशप्रारब्धानां गमनावभासनिमित्तत्वात् कृतं क्रियया। किं चानुत्पन्नस्य क्षणस्य क्रियाश्रयत्वायोगात्, उत्पन्नस्य च विनाशग्रस्तत्वात् कथं क्रियारम्भकत्वम्?। यथाहुः—

---

ननु पदार्थस्य क्षणिकत्वे तिष्ठति गच्छति चेत्यादिप्रतीतिर्न स्याद् यतोऽनेकक्षणपर्यन्तमेकदेशे स्थितिरेव तिष्ठति पदेनोच्यते तथैकस्यैव देवदत्तस्योत्तरोत्तरसंयोगे एव गच्छतीत्युच्यते क्षणिकस्य त्वनेकदेशसंयोगो नोपपद्यते न वाऽनेकक्षणपर्यन्तमेकदेशस्थितिरपीत्याशङ्क्य—तिष्ठति गच्छतीति प्रतीतिमुपपादयति क्षणिकमतेन—यदेत्यादिना। यदैकस्मिन्नेव देशे पूर्वपूर्वक्षणमुत्तरोत्तरक्षणमारभते तदा तिष्ठति देवदत्त इत्युच्यते। यदा तूत्तरोत्तरदेशे पूर्वपूर्वक्षणमुत्तरोत्तरक्षणमारभते तदा गच्छतीत्युच्यते। यथा प्रतिबिन्दु दीपज्वालाया दीपप्रकाशस्य च भेदेनोत्तरोत्तरदेशसंयोगासम्भवेपि सादृश्यात् दीपो गच्छतीत्युच्यते यथा चाचेतनायाश्छायायाः प्रतिदेशभिन्नायाः किं वा प्रतिक्षणतैलबिन्दुभेदाद् भिन्नप्रकाशभेदेन भिन्नायाः गमनासम्भवेपि छाया गच्छतीत्युच्यते तथैकस्यानेकदेशसंयोगासम्भवेपि सादृश्यमात्रेण गच्छतीत्युच्यत इत्याह—दीपेति। स्वाभिप्रायमाह—सदृशेति। सदृशानामपरापराणामुत्तरोत्तरदेशे जातानां क्षणानामेव गमनादिक्रियारूपत्वेनाऽवभाससंभवात् क्रियापदार्थस्यातिरिक्तस्य स्वीकारो व्यर्थ इत्यर्थः। किं च क्रियापि कार्यमेवेति तस्या अपि कारणेनाऽऽश्रयेण च भवितव्यं न च तत्कारणत्वं तदाश्रयत्वं च कस्य चिदुपपद्यत इत्याह—किं चेति, अनुत्पन्नस्य क्षणस्य पदार्थस्यासत्त्वादेव क्रियाश्रयत्वं न सम्भवति, उत्पन्नेनापि द्वितीयक्षणे एव क्रिया कर्तव्या द्वितीयक्षणे तु पदार्थो विनश्यत्येव पदार्थमात्रस्य द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वादित्युत्पन्नस्य विनाशग्रस्तत्वादेव न क्रियाश्रयत्वं सम्भवतीति कथं क्रियारम्भकत्वं स्यादित्यर्थः। अत्र प्रमाणमाह—क्षणिकेति। क्षणिक-

"क्षणिकाः सर्वसंस्काराः, अस्थिराणां कुतः क्रिया" इति। तदिदं शब्दाधिकरणे निराकरिष्यामः । ततः स्थिरत्वे सति तन्मात्रेणानुपपत्तेः क्रियानुमानं युक्तमिति।

न युक्तम्—कार्यं हि कारणमात्रमपेक्षते तच्चेह दृष्टमेवास्ति—प्रयत्नविशेषानन्तरं हि शरीरे देशसंयोगविभागाख्यं फलमुत्पद्यमानमुपलभ्यते ततः स एव निमित्तम् । तद्वदात्मशरीरसंयोगश्चाऽसमवायि शरीरं च समवायीति किमत्राऽदृष्टकारणानुमानेन ?।

---

त्वेनाऽस्थिराणां पदार्थानां कथं क्रियाकर्तृत्वं स्यात्, कर्तृत्वं ह्युत्पन्नस्य स्थितिमत्त्वे सम्भवति न चैतत्सम्भवति क्षणिकत्वादिति भावः । अत्राह सिद्धान्ती—तदिदमिति । शब्दाधिकरणे=षष्ठेऽधिकरणे " ननु सर्वभावानाम् " इत्यारभ्य । इदम्=क्षणिकत्वम् । प्रभाकरमतेनाह— तत इति । क्षणिकत्वस्य निराकरिष्यमाणत्वात् पदार्थानां स्थिरत्वे सिद्धे सति तन्मात्रेण=स्थिरद्रव्यपदार्थमात्रेण संयोगविभागोत्पत्तेरनुपपत्तेस्तत्कारणत्वेन क्रियानुमानं युक्तमेवेत्यर्थः । तदुक्तं प्रकरणपञ्चिकायाम्—" द्विविधमनुमानस्य प्रमेयं किं चिद् दृष्टस्वलक्षणं यथा वन्ह्यादिकं किं चिचादृष्टस्वलक्षणं यथा कर्मादिकम्" इति।

प्राक्तनभूषणकारमतेन पूर्वोक्तं पराचष्टे—न युक्तमित्यादिना। उक्तरीत्यापि क्रियानुमानं न युक्तमित्यर्थः । उपपादयति—कार्यमिति । कार्यं हि किंचित्स्वकारणमपेक्षते नतु क्रियामेव स्वकारणत्वेनापेक्षते । संयोगविभागयोरपि कारणमात्रेण भवितव्यं तच्च=कारणं प्रयत्नरूपं दृष्टमेवेति नाऽदृष्टक्रियाकल्पनं युक्तमित्यर्थः सः=प्रयत्नविशेषः । संयोगविभागयोरिति शेषः । कार्यस्य त्रिविधं कारणं भवति समवायिकारणमऽसमवायिकारणं निमित्तकारणं च तत्र संयोगविभागयोर्निमित्तकारणं प्रयत्न एवाऽसमवायिकारणं त्वाऽऽत्मशरीरसंयोगः समवायिकारणं च शरीरादिकमेवेत्याह—तद्वदिति। तद्वदात्मशरीरसंयोगः=प्रयत्नवदात्मशरीरसंयोगः । अदृष्टकारणानुमानेन=क्रियानुमानेन किम् ?, प्रयत्नरूपदृष्टकारणेनैव सिद्धत्वादित्यर्थः । अन्यत्राप्युक्तम्—" कथं पुनर्यस्य स्वलक्षणं न प्रतीतं तदनुमातुं शक्यते ? येन हि सह हेतोः सम्बन्धः प्रतिपन्नः स तस्माद्धेतोरनुमातुं शक्यते न चाऽदृष्टस्वलक्षणेन सह

**नन्वऽसमवायिकारणभूतस्य संयोगस्य स्वाश्रये स्वाश्रयसमवेते वा कार्यं नान्यत्र, तन्तुसंयोगानामिव स्वाश्रयेषु तन्तुषु पटः, तन्तुतुरीसंयोगस्य वा पटतुरीसंयोगः। प्रयत्नवदात्मसंयोगस्त्वऽनेवंविधे व्योम्नि कथं संयोगमारभते ? अतः कारणान्तरं कल्पनीयमिति चेत् ?, न तन्तुसंयोगः स्वाश्रय एव पटमारभते पटस्य बहुतन्तुव्यापित्वात् संयोगानां च द्वयोर्द्वयोरेव वृत्तेः।**

---

सम्बन्धनियमावधारणं कस्य चित्सम्भवतीति नादृष्टस्वलक्षणमऽनुमातुं शक्यते " तथा—" न चानुमातुमपि कर्म शक्यते, तद्धि न नित्यं विभागसंयोगयोः सदोदयप्रसक्तेः, अनित्यत्वे तस्याप्यसमवायिकारणमऽवश्यमाश्रयणीयं तद्वरं संयोगविभागयोरेवास्त्विति न कर्मानुमाने किं चिदपि लिङ्गं समर्थं तदुक्तम्—

" नित्यत्वे च सदा जन्म स्यात्संयोगविभागयोः ।
अनित्यत्वेऽस्य यो हेतुस्तयोरेवास्तु तेन किम् "।" इति ।

अत्र च—अस्य=कर्मणः। तयोः=संयोगविभागयोः। तेन=कर्मणा ।

प्राभाकरः शङ्कते— नन्विति । नन्वसमवायिकारणभूतस्य संयोगस्य स्वाश्रये स्वाश्रयसमवेते वा कार्यमुत्पद्यते नान्यत्रोत्पद्यते, यथा पटासमवायिकारणभूतानां तन्तुसंयोगानां स्वाश्रयेषु=तन्तुसंयोगाश्रयेषु तन्तुष्वेव पट उत्पद्यते नान्यत्र कपालादिषु । पटतुरीसंयोगासमवायिकारणभूतस्य च तन्तुतुरीसंयोगस्य स्वाश्रयसमवेते=स्वं तन्तुतुरीसंयोगस्तदाश्रयस्तन्तुस्तत्समवेते पटे एव तत्कार्यं पटतुरीसंयोग उत्पद्यते नान्यत्र, तथात्मशरीरसंयोगस्या ऽसमवायिकारणस्य कार्येण संयोगविभागाख्येनापि तदाश्रये शरीर आत्मनि वा भवितव्यं तदाश्रयसमवेते वा (आत्मनि शरीरे वा समवेते) भवितव्यं तथा चाकाशे संयोग विभागयोरुत्पत्तिः कथं स्यादित्याह—प्रयत्नवदेति । प्रयत्नवदात्मशरीरसंयोगः उत्तरदेशसंयोगस्यासमवायिकारणभूतः अनेवंविधे=अतदाश्रये तदाश्रयासमवेते चाकाशे । उपसंहरति—अत इति । कारणान्तरम्=क्रियारूपम् । पूर्वपक्षी परिहरति— नेत्यादिना । तन्तुसंयोगो न स्वाश्रय एव पटमारभते तस्य तन्तुद्वयसंयोगस्य तत्तन्तुद्वयमात्रवृत्तित्वात् तत्कार्यस्य पटस्य तु बहुत-

किं च शरज्यासंयोगान्नोदनाख्याद् युगपदेव शरे शरावयवेषु च सर्वेष्वन्तर्बहिर्वर्तिषु बहूनि कर्माण्युत्पद्यन्ते, तत्र येषामवयवानां ज्यासंयोगो नास्ति तेष्वऽस्वाश्रयेषु स्वाश्रयाऽसमवेतेषु च ज्यासंयोगः कर्माऽऽरभते इति व्यभिचारः । नहि ते संयोगाश्रयीभूते शरे समवेताः शरस्यैव तेषु समवायात् ।

किं च प्रयत्नवदात्मसंयोगानन्तरं युगपदेव हस्ते प्रयत्नवदात्मसंयुक्ते तत्संयुक्ते चाङ्गदेऽङ्गुलीयके च तल्लग्ने मणौ च कर्मोत्पद्यते, अथैवमादिषु न नोदनात् न

---

न्तुव्यापित्वेनान्येष्वपि तन्तुषु वृत्तित्वादित्यर्थः । तस्माच्छरीरात्मसंयोगः स्वानाश्रयेप्याकाशे संयोगान्तरमारभत इति युक्तमेव तथा चात्मशरीरसंयोगस्यैव कारणत्वोपपत्तेः न संयोगविभागकारणत्वेन क्रियाकल्पनं युक्तमिति भावः ।

असमवायिकारणेन स्वाश्रये स्वाश्रयसमवेत एव वा कार्यमुत्पाद्यत इत्यत्र व्यभिचारोदाहरणान्तरमाह-किं चेति । ज्याशरयोः संयोगाच्छरे क्रियोत्पद्यते सा च क्रिया ज्यासंयुक्तशरावयवेष्विव ज्याऽसंयुक्तशरावयवेष्वऽग्रभागीयेष्वप्युत्पद्यते तस्याश्च क्रियाया असमवायिकारणं ज्याशरसंयोग एव तत्र ज्याशरसंयोगस्याश्रयस्तु शरस्य मूलभाग एव नाग्रभाग इति ज्याशरसंयोगानाश्रयेष्वपि शराग्रीयभागावयवेषु कर्मोत्पद्यत इति व्यभिचारस्तथा शराग्रभागीया अवयवाः स्वाश्रयसमवेता अपि न सन्ति यतः स्वं ज्याशरसंयोगस्तदाश्रयः शरः शरे च न शरावयवाः समवेता शरस्यैव शरावयवेषु समवेतत्वादित्याह- न हीति । अत्र कर्मोत्पत्तिः परमतमाश्रित्योक्ता, एवमग्रेपीति विज्ञेयम् । स्वाश्रयासमवेतेष्वित्यत्र अस्वाश्रयसमवेतेष्वित्यपि पाठः ।

किं च न सर्वत्र तत्संयोगेनैव कर्मोत्पद्यते किं तु तत्संयुक्तसंयोगादपि कर्मोत्पद्यते तथा संयुक्तसंयोगात्संयोगविभागयोरप्युत्पत्तिः संभवतीति न संयोगविभागकारणत्वेन कर्मकल्पना युक्तेत्याह-किं चेत्यादिना । प्रयत्नवदात्मशरीरसंयोगादनन्तरं प्रयत्नवदात्मसंयुक्ते हस्ते, तत्संयुक्ते=हस्तसंयुक्तेऽङ्गदेऽङ्गुलीयके च, तल्लग्ने=अङ्गदाङ्गुलीयकलग्ने मणौ च युगपदेव क्रियोत्पद्यते, अत्र च न प्रयत्नवदात्मशरीरसंयोगान्नोदनाद्वा क्रियोत्पद्यत इत्याह-अथैवमिति ।

प्रयत्नवदात्मसंयोगाद्वा कर्मोत्पत्तिः, किं तु संयुक्तसंयोगादित्युच्यते, ज्यासंयुक्तावयवसंयोगात्तदनन्तरावयवे तत्संयोगाच्च तदनन्तरे। तथात्मसंयोगाद्धस्ते तत्संयोगादङ्गदे तत्संयोगान्मणावपीति। एवं तर्ह्यत्रापि शक्यते वक्तुम्—प्रयत्नवदात्मसंयुक्तशरीराकाशसंयोगाच्छरीराकाशदेशविभागस्तत्संयोगाच्च तदनन्तरदेशसंयोग इति दृष्टेनैव संयोगेन संयोगविभागसिद्धेर्न कर्मकल्पनाऽवकल्पते।

किं च न संयोगस्यैवायं धर्मः, सर्वाण्येवाऽसमवायिकारणानि स्वाश्रये स्वाश्रयसमवेते वा कार्यमारभन्ते नान्यत्र। ततश्च कर्माप्यसमवायिकारणत्वेनानुमी-

---

अपि तु संयुक्तसंयोगादेवात्र क्रियोत्पद्यत इत्याह—किं त्विति। अत्रोदाहरणमाह—ज्यासंयुक्तेति, यथा ज्यासंयुक्तशरावयवसंयोगात् तदनन्तरावयवे=शराग्रभागीयावयवे कर्मोत्पद्यते तत्संयोगाच्च=ज्यासंयुक्तसंयुक्तसंयोगाच्च तदनन्तरेऽवयवे कर्मोत्पद्यते, तथा शरीरात्मसंयोगाद्धस्ते कर्मोत्पद्यते, तत्संयोगात्=शरीरात्मसंयुक्तहस्तसंयोगादङ्गदे, तत्संयोगात्=शरीरात्मसंयुक्तहस्तसंयुक्ताङ्गदसंयोगादङ्गदमणावपि कर्मोत्पद्यत इत्याह—तथात्मेति। प्रकृतोपयोगमाह—एवमिति। यथोक्तोदाहरणेषु संयुक्तसंयोगादिनापि कर्मोत्पद्यते तथा प्रकृतसंयोगविभागपक्षेपि प्रयत्नवदात्मसंयुक्तशरीरस्याकाशाग्रदेशेन संयोगादाकाशीयपूर्वदेशाद्विभाग उत्पद्यत इति प्रयत्नवदात्मसंयुक्तशरीराकाशसंयोगेनैव विभागोत्पत्तिः संभवति, तथा तत्संयोगात्=प्रयत्नवदात्मशरीरसंयोगाच्च तदनन्तरदेशसंयोगोत्पत्तिरपि संभवतीति संयोगेनैव दृष्टेन संयोगविभागसिद्धेः क्रियाकल्पनं न युक्तमित्यन्वयः।

क्रियाकल्पनायां दोषान्तरमाह—किं चेत्यादिना। स्वाश्रये स्वाश्रयसमवेते वा कार्यमुत्पादयतीति न संयोगमात्रस्य धर्मः किं तु सर्वेषामेवाऽसमवायिकारणानामयमेव धर्मः=स्वभावो यत्स्वाश्रये स्वाश्रयसमवेते वा कार्यमुत्पादयन्ति। तत्र संयोगविभागयोः कारणत्वेन या क्रिया कल्प्यते सापि संयोगविभागयोरसमवायिकारणमित्येव वक्तव्यम्, असमवायिकारणत्वेनाऽनुमीयमाना च

यमानं वियति विहङ्गमे चोभयत्रानुमीयेत ? न हि विहगकर्मणा वियति कार्यं संभवति, ततश्च वियत्यपि चलतीति बुद्धिः स्यात्, अतो नानुमेयं कर्म । किमिदानीं नास्त्येव क्रियातत्त्वम् ? । अस्ति प्रत्यक्षावगमात् ।

ननु संयोगविभागातिरिक्तं न किं चिदत्र ? । दृश्यते हि सर्पति सर्पे भूमेः सर्पस्य च द्वयोर्मिथः संयोगविभागाऽविशेषेपि सर्पमेव चलतीति बुद्धिरालम्बते न भूमिम् । अतोऽस्या बुद्धेरालम्बनमस्ति सर्पे चलनं नाम तत्त्वम् । यद्भावाभावाभ्यां सर्पभूम्योश्चलीतिबुद्धेर्भावाभावावित्यङ्गीकार्यम् । न चेयमानुमानिकी संभवतीत्युक्तम् ।

---

क्रिया विहगाकाशसंयोगविभागसमवायिकारणभूताऽऽकाशे विहगे चानुमिता स्यात्, अन्यथा क्रियाया विहगमात्रवृत्तित्वे विहगनिष्ठया क्रियया विहगे एव संयोगविभागावुत्पादितौ स्यातां न त्वाकाशेपि आकाशस्य विहगक्रियाया आश्रयत्वाभावाद् विहगक्रियाश्रये विहगे समवेतत्वाभावाच्च । स्तश्च संयोगविभागौ वियत्यपीति तयोरसमवायिकारणभूता क्रिया वियत्यपीति वक्तव्यमित्याह— न हीति । ततश्च=वियत्यपि क्रियास्वीकाराद् वियत्यपि चलतीति बुद्धिः स्यात् । न चैतद् युक्त तस्मान्नानुमेया क्रियेत्याह—अत इति । संप्रति सिद्धान्तीं साम्ना पृच्छति—किमिति । क्रियातत्त्वं नास्तीति न किं त्वस्त्येवेत्याह सिद्धान्ती—अस्तीति ।

पुनरप्याशङ्कते—नन्विति । अत्र=संयोगविभागाधिकरणे किं चित्=कर्मत्वेन स्वीकृतम् । प्रतीयत इति शेषः । उत्तरमाह—दृश्यते हीति । सर्पति=गच्छति सति सर्पे संयोगविभागौ तु भूमिसर्पयोरुभयोरेव भवतस्तथापि सर्प एव चलतीति ज्ञानं भवति न तु भूमिश्चलतीति, चलतीति बुद्धेश्च विषयः कोपि वक्तव्य एव स च सर्पे चलनात्मिका क्रियैव, तस्मादस्ति क्रियातत्त्वम् । तदाह—अत इति । यद्भावाभावाभ्यामिति—यद्भावेन =चलनक्रियासत्त्वेन सर्पे चलतीतिबुद्धिसत्त्वम् यदभावेन=चलनक्रियाऽभावेन भूमौ चलतीति बुद्धेरसत्त्वमित्यन्वयव्यतिरेकाभ्यामपि सिद्धं क्रियातत्त्वमिति भावः । स्वसिद्धान्तमाह— न चेति, सर्पे चलतीति बुद्धिर्नानुमानिकी क्रियायाः प्र-

**तस्मान्नैवमभिप्रायमिदं भाष्यं किं तु विशेषविषयं सामान्यविषयं चानुमानमित्यनुमानस्य विषयप्रपञ्चार्थम्।**

---

त्यक्षत्वकारास्वीत। उक्तं च श्लोकवार्तिकटीकायाम्—"प्रत्यक्षेणैव हि दृष्टं कर्मस्वरूपं तदनन्तरं च देशान्तरप्राप्तिं देवदत्तादेरुपलभामहे, न हि नित्यानुमेयं कर्मस्वरूपम्, अपरोक्षेणैवाऽवभासात्" इति। यत्तु "तच्च द्विविधम्" इत्यादिभाष्यस्य "दृष्टस्वलक्षणविषयमेवानुमानमिति मन्वानान् निराकर्तुमदृष्टस्वलक्षणविषयमप्यनुमानं क्रियादिविषयमस्तीति दर्शयितुं द्वैविध्याभिधानम्" इत्येवं प्रभाकरमतेनाभिप्रायो वर्णितस्तं पराचष्टे— तस्मान्नैवमिति। प्रत्यक्षाप्रत्यक्षविषयकत्वेनानुमानद्वैविध्ये भाष्याभिप्रायो नास्ति किं तु सामान्यविशेषविषयत्वेनैवानुमानद्वैविध्ये भाष्याभिप्रायोस्तीत्याह— किं त्विति। वार्तिकेप्युक्तम्—

"प्रत्यक्षदृष्टसम्बन्धं ययोरेव विशेषयोः।
गोमयेन्धनतज्जन्यविशेषादिमतिः कृता॥
तद्देशस्थेन तेनैव मत्वा कालान्तरेपि तम्।
यदाग्निं बुध्यते तस्य पूर्वबोधात् पुनः पुनः॥
सन्दिह्यमानसद्भाववस्तुबोधात् प्रमाणता।
विशेषदृष्टमेतच्च लिखितं विन्ध्यवासिना॥"
"अग्निधूमान्तरत्वे च वाच्ये सामान्यतो मितौ।
सामान्यदृष्टमेकान्तादत्रेत्यादित्य उच्यते॥" इति।

उक्तं चात्र पार्थसारथिमिश्रेणानेन— "यदा हि कचिद्देशे गोमयेन्धनजन्यमग्निविशेषं तज्जन्यं च धूमविशेषमुपलभ्य ईदृशो गोमयेन्धनोग्निरीदृशश्च तज्जन्यो धूम इत्येवमभ्यन्तरधूमान्तरेभ्यो विलक्षणस्वरूपे मतिं कृत्वा देशान्तरं गतः कियतापि विलम्बेन तद्देशस्थेन तेनैव धूमविशेषेण तमेव गोमयेन्धनमऽग्निविशेषमनुमिमीते तदा तद्विशेषतोदृष्टसम्बन्धमनुमानं प्रत्यक्षदृष्टसम्बन्धमाचक्षत इति, युक्तं चैतत्— विशेष एव हि सामान्यस्य प्रतियोगी भवति न प्रत्यक्षम्, तद्धि प्रमाणान्तरस्य प्रतियोगि न सामान्यस्य। सम्भववति हि सामान्ययोरपि प्रत्यक्षेण सम्बन्धग्रहणम्। तस्मात् "प्रत्यक्षतोदृष्टसम्बन्धं सामान्यतोदृष्टसम्बन्धम्" इतीदं द्वैविध्यं मिथोऽप्रतिपक्षत्वादनुपप

येपि मन्यन्ते-"विशेषेऽनुगमाभावः सामान्ये सिद्धसाध्यता" इति, तेऽनेन निराक्रियन्ते, उभयोरपि विषयत्वोपपत्तेः। यत्र विशेषस्यैवानुगमस्तत्र विशेषविषयत्वम्, सामान्यानुगमे तु सामान्यविषयत्वम् । न च सिद्धसाध्यत्वम्, देशान्तरकालान्तरसंबन्धस्याऽगृहीतस्य ग्रहणादिति प्रागेव वर्णितम् ॥

॥ इत्यनुमानपरिच्छेदः ॥

"शास्त्रं शब्दविज्ञानादसंनिकृष्टेऽर्थे विज्ञानम्" इति, विज्ञाताच्छब्दात् पदार्थाभिधानद्वारेण यद्वाक्यार्थविज्ञानं तच्छाब्दं नाम प्रमाणम्, तल्लोकसिद्धत्वान्न परी-

---

न्नम्, अतो यत्र विशेषयोरेव प्रत्यक्षेण सम्बन्धो गृह्यते तत् प्रत्यक्षेण दृष्टसम्बन्धमित्युच्यते, यत्र सामान्ययोः प्रत्यक्षेण सम्बन्धो गृह्यते तत्सामान्यतोदृष्ट-( सम्बन्ध ) मित्युच्यत इति " इत्यादि ।

सामान्यविशेषविषयत्वेनैवानुमानद्वैविध्ये भाष्याभिप्राय इति वचनस्य किं प्रयोजनमित्याशङ्काह-येपीति। विशेषेत्यादिपद्यं पूर्वं(२३३पृ)व्याख्यातमेव । अनेन=भाष्यरूपप्रमाणेन । उभयोः=सामान्यविशेषयोः । विषयत्वमिति-अनुमानस्येति शेषः । स्पष्टमन्यत् । गृहीतग्राहित्वं निराचष्टे- न चेति ॥

॥ इत्यनुमानपरिच्छेदः ॥

भाष्यवार्तिकक्रमेणानुमानं निरूप्य संप्रति शब्दं निरूपयितुं भाष्योक्तं शब्दप्रमाणलक्षणमुद्दिशति-शास्त्रमिति । शब्दस्य श्रावणप्रत्यक्षानन्तरं शब्दोपस्थापितविषयविषयकं यज्ज्ञानं तच्छास्त्रम्=शाब्दबोध इत्यर्थः । उक्तं भाष्यवाक्यं व्याचष्टे- विज्ञातादित्यादिना । स्पष्टोयं ग्रन्थः । विज्ञातात्=श्रुतात् । पदार्थाभिधानद्वारेण=पदार्थोपस्थितिद्वारा । पदार्थश्च शब्दोपस्थाप्यो घटादिः । उक्तं च-

" पदज्ञानं तु करणम्, द्वारं तत्र पदार्थधीः ।
शाब्दबोधः फलं, तत्र शक्तिधीः सहकारिणी ॥" इत्यादि ।

शब्दस्य प्रामाण्यं लोके प्रसिद्धमेवेति शाब्दं किमपि प्रमाणमस्ति न वेति न परीक्षणीयमित्याह- तल्लोकसिद्धत्वादिति । एतस्य विभागमाह-

च्चितव्यम्। तच्च द्विविधम्—पौरुषेयमऽपौरुषेयं चेति। तत्र पौरुषेयम्—आप्तवाक्यम्। अपौरुषेयं च—वेदवाक्यम्। उभयमप्यऽनाप्तप्रणीतत्वदोषविरहात् स्वतश्च शब्दस्यादुष्टत्वात् प्रमाणम्।

तच्च पुनर्द्विविधम्— सिद्धार्थं विधायकं चेति। विधायकमपि द्विविधम्—उपदेशकमऽतिदेशकं च। इत्थमिदं कर्तव्यमित्युपदेशः, यथा लोके—दधिघृतसूपशाल्यादिभिर्देवदत्तो भोजयितव्य इति। वेदेपि— प्रयाजावघातादिप्रकारेण दर्शपूर्णमासाभ्यां स्वर्गं कुर्यादिति। तद्वदिदं कर्तव्यमित्यतिदेशः, यथा लोके—देवदत्तवद् यज्ञदत्तो भोजयितव्य इति। वेदेपि सौर्येणकुर्याद् यथाऽऽग्नेयेनेति।

---

तच्चेति। आप्तलक्षणं चोक्तं वात्स्यायनेन—"आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा" इति। आप्तवाक्यस्य वेदस्य च प्रामाण्यहेतुमाह—उभयमपीति। उभयम्=पौरुषेयमपौरुषेयं च वाक्यम्। वाक्यस्य स्वरूपेण दुष्टत्वं तु नैव सम्भवति किं तु वक्तृदोषेणैव दुष्टत्वं भवतीत्याप्तवाक्यस्थले वक्तरि दोषो नास्ति वेदस्य च वक्तैव नास्तीत्यऽनाप्तप्रणीतत्वस्य दोषस्योभयत्रैवाभावात् प्रामाण्यमित्यर्थः।

पुनरपि द्वैविध्यमाह—तच्चेति। सिद्धार्थकं यथा— अस्ति घट इति। विधायकं यथा— घटमानयेति। उक्तं च—

" प्रवृत्तिर्वानिवृत्तिर्वा नित्येन कृतकेन वा।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते॥" इति।

विधायकस्यापि द्वैविध्यमाह—विधायकमपीति। उपदेशस्य प्रधानविधेः स्वरूपमाह—इत्थमिति। लौकिकं वैदिकं चोदाहरणमाह— यथेति। अतिदेशस्वरूपमाह—तद्वदिदमिति। उदाहरणमाह—यथेति। सौर्येणेति—यथाग्नेयं कुर्यात्तथा सौर्यं चरुं कुर्यादित्यर्थः, तदुक्तं माधवेनाष्टमाध्यायप्रथमपादषोडशेधिकरणे—

" षट्सु कस्याप्युताग्नेयस्यैव सौर्ये, ऽग्रिमो यतः—।
अविशेषो, न दैवैक्यादौषधद्रव्यकत्वतः॥" इति।

दर्शपूर्णमासयोः—ऐन्द्राग्न आग्नेय उपांशुयाज आग्नेयोऽग्नीषोमीय उपांशु-

**शब्दान्तरादिभिः श्रुतिलिङ्गादिभिः श्रुत्यर्थादिभिश्च विचित्रोयमुपदेशो भेदविनियोगक्रमानऽवबोधयति। वचननामधेयचोदनालिङ्गैश्चातिदेशोऽन्यत्र वि-**

---

याज इति पट् यागाः सन्ति तेषु कस्येतिकर्तव्यतया सौर्ये कर्तव्यमित्याशङ्कोक्तमाग्नेयस्येत्यतिदेशः।

शब्देति-शब्दान्तरादिभिर्भेदं श्रुतिलिङ्गादिभिर्विनियोगं श्रुत्यर्थादिभिश्च क्रमं बोधयतीत्ययमुपदेशो विचित्रः=अनेकविध इत्यन्वयः। शब्दान्तरादिभिः कर्मभेदो द्वितीयाध्यायद्वितीयपादे द्रष्टव्यस्तथा हि-" शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् " इत्यत्र " सोमेन यजेत " " हिरण्यमात्रेयाय ददाति " " दाक्षिणानि जुहोति " इत्यादौ यजति ददाति जुहोतीत्यादिशब्दभेदात्कर्मभेद उक्तः। तथा-" एकस्यैव पुनः श्रुतिरविशेषादनर्थकं हि स्यात् " " पृथक्त्वनिवेशात्संख्यया कर्मभेदः स्यात् " " संज्ञा चोत्पत्तिसंयोगात् " इत्यादिसूत्रैरपि कर्मभेदः प्रतिपादितः। तृतीयाध्यायतृतीयपादे च " श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् " इत्येवं श्रुत्यादिभिर्विनियोग उक्तः। यथा-" कदाचन स्तरीरसि नेन्द्र " इत्यस्य मन्त्रस्य लिङ्गेनेन्द्रोपस्थानाङ्गत्वं प्राप्तम् " ऐन्द्र्या गार्हपत्यमुपतिष्ठते " इति श्रुत्या गार्हपत्योपस्थाने विनियोगः कृतः, एवं लिङ्गादिभिरपि विनियोगस्तृतीयाध्याये द्रष्टव्यः। पञ्चमाध्याये च श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्यादिभिः कर्मक्रमः प्रतिपादितस्तथा च सूत्रम्-"श्रुतिलक्षणमानुपूर्व्यं तत्प्रधानत्वात् " " अर्थाच्च " " क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात्" "स्थानाच्चोत्पत्तिसंयोगात् " "मुख्यक्रमेण वाङ्गानां तदर्थत्वात् " " प्रवृत्त्या कृतकालानाम्" इत्यादि। उदाहरणं च पञ्चमे द्रष्टव्यम्। अतिदेशलक्षणं चोक्तम्-

" अन्यत्रैव प्रणीतायाः कृत्स्नाया धर्मसन्ततेः।
अन्यत्र कार्यतः प्राप्तिरतिदेशोऽभिधीयते॥ "

" कृतात्कर्मणो यस्मात्तत्समानेषु कर्मसु।
धर्मोपदेशो येन स्यात्सोऽतिदेश इति स्मृतः॥" इति।

अयं चातिदेशः सप्तमाध्यायमारभ्य निरूपितस्तत्रैव द्रष्टव्यः। वचनेनातिदेशो यथा " समानमितरच्छ्येनेन " इति वचनेन श्येने विहितस्य प्र-

**हितस्य नानापदार्थविशिष्टस्य प्रकारस्य तत्प्रतिपादकस्य वा शास्त्रस्य विध्यन्तापरनामधेयस्यान्येन सम्बन्धं विकारं बाधं वा बोधयतीत्यूहनीयम्।**

---

कारस्येषुनामकयागे सम्बन्धस्याऽतिदेशस्तदुक्तं सप्तमाध्यायप्रथमपादीयद्वितीयाधिकरणे–" समाने पूर्ववत्त्वादुत्पन्नाधिकारः स्यात् " इति। नामधेयेनातिदेशस्तु " मासमग्निहोत्रं जुहोति " इति मासाग्निहोत्रे नाम्ना नित्याग्निहोत्रधर्मातिदेशः सप्तमाध्यायतृतीयपादीयप्रथमाधिकरण उक्तः–" उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात् " इति। " सौर्यं चरुं निर्वपेत् " इत्युक्तसौर्यचरौ चोदनालिङ्गेनाऽऽग्नेयधर्मातिदेश उक्तोऽष्टमाध्यायप्रथमपादद्वितीयाधिकरणे माधवेन–" लिङ्गस्मारितोपकारसहितमेव सौर्ययागं तच्छब्दो विदधाति तथा सति प्रणाड्या लिङ्गस्य शब्दे प्रवेशात् 'आग्नेयवत्सौर्योऽनुष्ठेयः' इत्येतादृशं चोदकवाक्यमनुमापयता लिङ्गेन धर्मविशेषा नियम्यन्ते " इति। सूत्रं च " यस्य लिङ्गमर्थसंयोगादभिधानवत् " इति। इत्येवं वचननामधेयचोदनालिङ्गैरतिदेशकृतः विध्यन्तापरनामधेयस्य=इतिकर्तव्यताभूतस्य पदार्थान्तरधर्मस्य पदार्थान्तरे सम्बन्ध उदाहृतः, विस्तरस्तु सप्तमाष्टमाध्याययोरेव द्रष्टव्यः। विकारश्चात्रोह एव ज्ञेयः। उक्तं च–

" प्राकृतस्थानपतितपदार्थान्तरकार्यतः।
ऊहः प्रयोगो विकृत ऊह्यमानतयोदितः॥" (विकृतप्रयोगधर्म एव विकारः)
प्रत्यक्षविधिना भावे विधानेन विकारतः।
स्वशब्दाच्च निषेधानुवादात्तत्कार्यकारिता॥" इति।

स च नवमाध्याये विस्तरेण निरूपितस्तद्भेदाश्च मीमांसाबालप्रकाशेऽपि निरूपिताः। यथा "व्रीहीनवहन्ति" इत्यवघातस्य नीवारेषूहः। बाधश्च निवृत्तिस्तदुक्तम्–"बाधो निवृत्तिरननुष्ठानमिति यावत्। स च द्विविधः–प्राप्तबाधोऽप्राप्तबाधश्च। यत्रातिदेशसामान्यशास्त्रादिजनिते ज्ञानेंऽशे सर्वविषये वा मिथ्येदमिति प्रत्ययान्तरं भवति स प्राप्तबाधः। यत्र तु लिङ्गादौ श्रुतिकल्पनाप्रतिबन्धाज्ज्ञानोत्पत्तिरेव प्रतिबध्यतेऽसावऽप्राप्तबाधः " इति। यथा कृष्णलेष्ववघातस्य बाधः=निवृत्तिः। अयं च बाधो दशमाध्याये निरूपितः। मीमांसाबालप्रकाशे चास्य बहवो भेदाः प्रदर्शिता स्तत्रैव द्रष्टव्या इत्याह–ऊहनीयमिति।

**असंनिकृष्टग्रहणं च पूर्ववत्ताद्रूप्यतद्विपर्ययपरिच्छे-दनिरासार्थम् । एकदेशिनां तु तदनर्थकमेव स्यात् । विपरीतपरिच्छिन्ने तावन्नास्त्येवशब्दाज्ज्ञानम्, यदि स्यात्पुरुषदोषाणां शब्दे संक्रान्त्यनभ्युपगमात्स्वाभा-विकमेव शब्दस्याप्रामाण्यं स्यादितिवेदाप्रामाण्यं स्यात् ।**

---

उक्तं भाष्यवाक्यं व्याचष्टे—असंनिकृष्टेति पूर्ववत्=अनुमानवाक्यवत् । ताद्रूप्येति—ताद्रूप्यपरिच्छेदो नामेदानींज्ञायमानरूपेण ज्ञेयस्य ज्ञानं तस्य निरा-सार्थम्—ज्ञातज्ञापकस्य प्रामाण्यं न भवतीति असंनिकृष्टे=पूर्वमज्ञाते विषये यच्छा-ब्दं तत्प्रमाणमिति संनिकृष्टविषयकस्य परिच्छेदस्य ज्ञानस्य निरासः=व्यवच्छेदः । तत्र न प्रमाणत्वातिप्रसङ्ग इति निष्कर्षः । तद्विपर्ययपरिच्छेदो नाम ज्ञायमाना-कारविपरीतरूपेण ज्ञानं तस्य निरासार्थं तथा च यत्र शब्देन यथार्थ एव विष-यो बोध्यते तत्रैव प्रामाण्यं न तु शुक्तिरजतादिबोधकस्यापीत्यर्थः । एकदेशि-नामिति—ये प्राभाकरा असंनिकृष्टग्रहणं ताद्रूप्यतद्विपर्ययपरिच्छेदनिरासार्थं न मन्यन्ते तेषां मतेऽनर्थकमेव स्यादित्यसंनिकृष्टग्रहणं ताद्रूप्यतद्विपर्ययपरि-च्छेदनिरासार्थमेव मन्तव्यम् । किं च प्रभाकरमतानुसारेणासंनिकृष्टपदस्य सार्थक्यं नैव सम्भवति व्यावर्त्याभावात्, असंनिकृष्टपदस्य हि प्रमाणान्तरेण ज्ञातं विपर्ययेण वा ज्ञातमित्युभयमेव व्यावर्त्यं वक्तव्यं तत्र प्रमाणान्तरज्ञातज्ञा-पकस्य निरासासम्भवम् " यदि परम् " इत्यादिना वक्ष्यति । विपर्ययेण ज्ञा-तज्ञापकत्वमपि प्रभाकरमते शब्दस्य न सम्भवति वेदाप्रामाण्यप्रसङ्गादित्यभि-प्रायेणाह—विपरीतेति । विपरीतपरिच्छिन्ने=विपरीतरूपेण ज्ञाते यथा शुक्ति-रजते विषयत्वं सप्तम्यर्थः । प्रभाकरमते विपरीतरूपेण रजतत्वादिना ज्ञातविषय-विषयकं ज्ञानमेव शब्देन नोत्पद्यते अख्यातिवादस्वीकारेण ज्ञानमात्रस्याऽयथा-र्थत्वाऽस्वीकारादिति भावः । विपक्षे बाधकमाह—यदीति, विपरीतपरिच्छिन्न-विषयकं ज्ञानं यदि शब्देनापि स्यात्तदा त्वया प्रभाकरेण शब्दे पुरुषदोषसं-क्रमस्यानभ्युपगमात्स्वाभाविक एव दोषोऽभ्युपगन्तव्यस्तेन च स्वाभाविकेन दोषेणाऽप्रामाण्यमपि शब्दस्य स्वाभाविकम्=नित्यमेव स्यात्तथा च वेदस्या-प्यऽप्रामाण्यं स्याच्छब्दरूपत्वात्, न चैतत्प्राभाकरस्येष्टमिति विपरीतपरिच्छि-

**यदि परं तद्रूपपरिच्छिन्नविषयस्याऽनुवादस्य निरासः स्यात् ?, तच्चायुक्तम्, तस्यापि शास्त्रत्वात्, न हि कस्याप्यप्रमाण्यम्, अनुभूतित्वात्। प्रत्यक्षाद्यन्तर्भावाऽभावाच्च शास्त्रत्वमेवेत्यास्तां तावत्।**

---

न्नविषयज्ञानमेव न शब्देन जन्यते इति वक्तव्यं तथा च विपरीतपरिच्छिन्नविषयकज्ञानजनकस्य शब्दस्यैवाऽभावादनुवादनिरासासम्भवस्य वक्ष्यमाणत्वाच्चाऽसंनिकृष्टपदेन प्रभाकरमते कस्य निरासः स्यात् ? निरास्याभावाच्चानर्थक्यमेवेत्यर्थः। सिद्धान्ते तु शब्दे पुरुषदोषसंक्रमस्वीकारान्न शब्दस्य स्वाभाविकदुष्टत्वप्रसङ्गो येन वेदाप्रामाण्यं स्यादिति शब्देनापि विपरीतपरिच्छिन्नविषयकं ज्ञानं जन्यते यथा नद्यास्तीरे फलानि सन्तीति फलाभावेपि फलवत्त्वं बोधयतीति विपरीतपरिच्छिन्नविषयकमित्यादिवाक्यं तथा ऽनुवादकमपि वाक्यं प्रमाणान्तरज्ञातज्ञापकत्वादसंनिकृष्टग्रहणस्य व्यावर्त्यमस्तीति नाऽऽनर्थक्यम्। प्रभाकरमते तु अनुभूतिरेव प्रमाणं न त्वगृहीतग्राहित्वमित्यनुवादस्याप्यनुभवजनकत्वेन प्रमाणत्वादऽसंनिकृष्टपदव्यावर्त्यत्वं न सम्भवति। सिद्धान्ते त्वऽगृहीतग्राहि प्रमाणम्, अनुवादस्य च गृहीतग्राहित्वादेव प्रमाणत्वाभावाद् व्यावर्त्यत्वं सम्भवतीत्यनुसन्धेयम्।

नन्वसंनिकृष्टग्रहणेन ज्ञातविषयाविषयकस्यानुवादस्य निरासः क्रियत इति नाऽसंनिकृष्टग्रहणमनर्थकमित्याशङ्क्याह—यदि परमिति। उक्तं चात्रप्राभाकरैः—“ असंनिकृष्ट इति किमिदम् ? प्रमाणान्तरेणाऽप्रतीत इति।” इति। परिहरति—तच्चेति। असंनिकृष्टपदेनानुवादस्य निरसनमयुक्तमित्यर्थः। अनुवादनिरासानौचित्ये हेतुमाह—तस्यापीति। अनुवादपदेन वैदिकानुवादो ग्राह्यः। अनुवादस्यापि शास्त्रत्वादनुभूतित्वाच्च प्रामाण्यमेवेति न तस्यापि निरासो युक्तः। अनुभूतित्वात्=अनुभवजनकत्वात्। शास्त्रत्वे हेतुमाह—प्रत्यक्षादीति। अनुवादस्य प्रत्यक्षादिप्रमाणेष्वन्तर्भावासम्भवाच्छास्त्रत्वमेव स्वीकार्यं तथा चात्रासंनिकृष्टपदेन नानुवादस्यापि निरासो युक्त इत्यसंनिकृष्टपदं प्रभाकरमतेऽनर्थकमेव स्यात्। उक्तं च प्राभाकरैः—“अनुभूतिः प्रमाणम्” इति। तथा—

“ शास्त्रं शब्दविदा यदऽसंनिकृष्टार्थविज्ञानम्” इति।

तथा—“ यथार्थं सर्वमेवेह विज्ञानमिति सिद्धये।” इत्यादि।

इदं च शाब्दम्-'अस्येदं कारणं कार्यं संबन्ध्येकार्थसमवायि विरोधि चेति लैङ्गिकम्' इत्यनुमानलक्षणमभिधाय "एतेन शाब्दं व्याख्यातम्" इति वदन्तः काश्यपीयाः, 'प्रत्यक्षमनुमानं च द्वे एव प्रमाणे' इति ब्रुवाणाः सौगताश्चानुमानादभिन्नमिति मन्यन्ते। तत्र यत्तावत् पदार्थज्ञानं तदऽवगतार्थविषयत्वात् प्रमाणमेव न भवतीति किं तस्य भेदाभेदपरीक्षया। यत्तु वाक्यार्थज्ञानं तदऽगृहीतसम्बन्धैरेव पदार्थैरुपजायमानं ना-

---

सौत्रान्तिका वैशेषिकाश्च न शब्दस्य पृथक् प्रामाण्यमिच्छन्ति किं त्वऽनुमान एवान्तर्भावं वदन्तीत्याह-इदमिति। अस्येदमित्यादिवैशेषिकसूत्रमेव किं तु विकृतं वास्तवं तु " अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम् " इत्येवमुपलभ्यते,। कार्यादिना कारणादीनां यज्ज्ञानं तल्लैङ्गिकम्-आनुमानिकमित्यर्थः। उक्तं च शाङ्करोपस्कारे-" कार्याल्लिङ्गाद्धूमाऽऽलोकादेरग्न्याद्यनुमानम्, कारणादपि यथा- बधिरस्य भेरीदण्डसंयोगविशेषाच्छब्दानुमानम्, संयोगिनः शरीरस्य दर्शनात् त्वगिन्द्रियानुमानम्, विरोधिनो विस्फूर्जतोऽहेर्दर्शनाज्झाटाद्यन्तरितनकुलानुमानम्, समवायिना जलौष्ण्येन तत्संबद्धतेजोऽनुमानम्" इति। काश्यपीयाः=वैशेषिकाः। शब्दप्रामाण्यं प्रतिपादयितुमुपक्रमते- तत्रेति, पदश्रवणात् पदार्थस्य घटादेर्ज्ञानं स्मृतिरुपस्थितिर्भवति सा तु प्रमाणान्तरेणावगतपदार्थविषयैव भवतीति तस्याः प्रामाण्यं नास्त्येवेति, तस्य=पदार्थज्ञानस्य। अनुमानाद्भिन्नमभिन्नं वा तदिति भेदाभेदपरीक्षायाः प्रयोजनं नास्त्येव यदि तस्य प्रामाण्यं स्यात्तदा भेदाभेदपरीक्षापि क्रियेत नैवमस्ति, अत्र च प्रमाणमेव परीक्षणीयमस्ति न तु पदार्थस्मृतिरिति भावः। पदार्थोपस्थित्यनन्तरं वाक्यार्थज्ञानं पदार्थानां संसर्गविषयकं यज् जायते तत्तु प्रमाणमेव पृथक् चानुमानादित्याह- यत्त्विति, येषां पदार्थानां परस्परं सम्बन्धो न गृहीतस्तैः पदेभ्यः स्मृतैः पदार्थैरुपजायमानं वाक्यार्थज्ञानं प्रमाणमेव, अगृहीतस्य पदार्थानां परस्परसंसर्गस्य ग्राहकत्वात्। लिङ्गस्य दर्शनेन ज्ञानेन वाऽजायमानत्वान्नानुमानेऽन्तर्भवितुमर्हति न चापि प्रत्यक्षे विषयेन्द्रियसंनिकर्षाजन्यत्वादिति शब्दस्य पृथगेव प्रामाण्यमित्यर्थः। वाक्या-

नुमानशङ्कामर्हति, न हि सर्वैर्वाक्यार्थविशेषैः सम्ब-न्धग्रहणमस्ति न च सम्भवत्यऽनन्तैः सम्बन्धग्रहणम् । अत्यन्तापूर्वोऽपि वाक्यार्थविशेषः पदार्थैरवगम्यते दूरदेशवार्तास्विति सर्वजनीनमेतत् ।

यत्त्वाऽऽप्तवाक्यत्वादविसंवादानुमानम्, तद्वाक्यार्थावगमोत्तरकालत्वान्न तस्यानुमानत्वमापादयति । वाक्यश्रवणानन्तरमेव ह्याप्ताऽनाप्तज्ञानानपेक्षैरेव पदार्थैर्वाक्यार्थोऽवगम्यते । अत्यन्तादृष्टपुरुषप्रणीतेऽपि वा-

---

र्थज्ञानस्यागृहीतविषयकत्वमाह— नहीति, यदि वाक्यस्य सम्बन्धो गृहीतः स्यात्तदा गृहीतग्राहित्वं स्यात्, सम्बन्धग्रहस्य जातत्वादनुमानेऽन्तर्भावोऽपि शक्येत नैवमस्तीति भावः । वाक्यवाक्यर्थयोः सम्बन्धग्रहस्याशक्यत्वमाह— न चेति । अनन्तैर्वाक्यार्थैः सह । अशक्यत्वे हेत्वन्तरमाह—अत्यन्तेति, दूरदेशीयकथासु वाक्यसमूहेषु पदार्थैरत्यन्तापूर्वोऽपि वाक्यार्थोऽवगम्यते, न ह्यत्यन्तापूर्वेण वाक्यार्थेन वाक्यस्य सम्बन्धग्रहः सम्भवति । प्रमाणान्तरेण ज्ञातेनैवार्थेन सह सम्बन्धग्रहस्य शक्यत्वात् । अपूर्वः=अज्ञातः । उक्तं च वाक्यार्थस्य पदार्थोपस्थितिमूलकत्वम्—

" पदार्थानां च सामर्थ्यं गम्यमानमपन्हुतम् ।
आनन्तर्याद्धि वाक्यार्थस्तद्धेतुत्वं न मुञ्चति ॥"
" पदार्थानां तु मूलत्वं दृष्टं तद्भावभावतः ॥" इत्यादि ।

यत्त्विति— वाक्येन विषयो यथा बोध्यते विषयस्य तत्स्वरूपतैव संवादः सफलप्रवृत्तिमत्त्वमिति यावत्, तत्रानेन वाक्येन यथार्थ एव विषयो बोधित इति संवादस्य फलोपलब्धेः पूर्वं ह्याप्तवाक्यत्वहेतुनैवानुमानं भवति—इदं वाक्यं संवादि आप्तवाक्यत्वादिति, इदं चानुमानं वैशेषिकैरुक्तं वाक्यार्थज्ञानानन्तरमेव जायत इति न तस्य=वाक्यार्थज्ञानस्यानुमानत्वमापादयति, कारणस्य कार्यापेक्षया पूर्वभावित्वनियमादिति न पश्चाद्भाव्यऽविसंवादित्वानुमानं पूर्वभाविनो वाक्यार्थज्ञानस्यानुमानत्वप्राप्तौ कारणमित्याह— तदिति । प्रत्युताविसंवादित्वानुमात्पूर्वमेव वाक्यार्थज्ञानं जायत इत्याह— वाक्यश्रवणेति । आप्तानाप्तज्ञानानपेक्षैः=इदं वाक्यमाप्तोक्तं वाऽनाप्तोक्तं वेति ज्ञानानपेक्षैः पदार्थैः । अत्यन्ता-

क्ये अवगते तु वाक्यार्थे सत्याऽसत्यत्वसंशये प्रणेतुरा-
प्तत्वावगमे सति सत्यत्वमनुमीयमानं न वाक्यार्थाव-
गतेराप्तत्वावधारणानपेक्षजन्मनोऽनुमानत्वमापादयति।
तस्मात्प्रमाणान्तरमेव लोके शाब्दमित्यपौरुषेयस्या-
पि वेदस्य सिद्धं प्रामाण्यम् । एकदेशिनां तु लोक-

---

पूर्ववाक्यस्थलेप्येवमेवेत्याह–अत्यन्तेति । अत्यन्तादृष्टं च पुरुषप्रणीतं च यद् वाक्यं तदत्यन्तादृष्टपुरुषप्रणीतमिति विग्रहः साधुः । अत्यन्तादृष्टपुरुषेण प्रणीतमिति विग्रहे तु अत्यन्तादृष्टपुरुषेण प्रणीतस्यापि वाक्यस्य पूर्वं श्रुतत्वसम्भवाद्वाक्यस्यात्यन्तादृष्टत्वं नियमेन नोपलभ्येतेति प्रकरणतात्पर्ययोर्बाध एव स्यात् । अत्यन्तादृष्टम्=पूर्वमश्रुतम् । पूर्वश्रुतवाक्यस्य तु तदर्थेन सह सम्बन्धग्रहसम्भवादनुमानविधयापि वाक्यार्थबोधः सम्भवति पूर्वाश्रुतवाक्यस्य त्वऽज्ञातत्वेन तदर्थेन सह सम्बन्धग्रहासम्भवादनुमानविधया वाक्यार्थबोधस्य सम्भावनापि नास्तीत्याक्षेपाभिप्रायेणोक्तम्–अत्यन्तादृष्टेति, तथा च यथा पूर्वाश्रुतवाक्यस्थले नानुमानविधया वाक्यार्थबोधः किं तु शाब्दबोधविधयैव तथा पूर्वश्रुतवाक्यस्थलेपि शाब्दबोधविधयैव वाक्यार्थज्ञानमभ्युपगन्तव्यं नानुमानविधया विशेषाभावाद् गौरवप्रसङ्गाद् दृष्टविरोधाच्चेत्यर्थः । "अवगते" इत्यस्य "वाक्यार्थे" इत्यनेनान्वयः । अत्यन्तादृष्टपुरुषप्रणीतवाक्यस्थलेपि ( एतादृशवाक्यश्रवणस्थलेपि ) वाक्यार्थेऽवगतेसति तदनन्तरं वाक्यार्थे सत्यत्वाऽसत्यत्वसंशयो जायते तस्मिन् जाते च प्रणेतुराप्तत्वनिश्चयेन वाक्यार्थस्य सत्यत्वमनुमीयते तत्र सत्यत्वस्यैवानुमानं भवति न वाक्यर्थस्येति सत्यत्वमनुमीयमानं न वाक्यार्थज्ञानस्यानुमानत्वमापादयति । हेतुगर्भविशेषणमाह–आप्तत्वावधारणेति, सत्यत्वं त्वाऽऽप्तत्वावधारणसापेक्षमस्तीति युक्तं तस्यानुमेयत्वं वाक्यार्थज्ञानं तु नाप्तत्वावधारणसापेक्षमिति न तस्यानुमानत्वमित्यन्वयः । सत्यत्वज्ञानं त्वाप्तत्वावधारणसापेक्षमिति युक्तं तस्यानुमानत्वमिति वा वक्तव्यम् । वाक्यार्थे चाज्ञाते तत्र सत्यत्वासत्यत्वसंशय एव नोपपद्यते इत्यवधेयम् ।

उपसंहरति–तस्मादिति । ननु भवतु वेदवाक्यानां प्रामाण्यं लोकवचनानां त्वभिप्रायानुमापकत्वमेवेति न पृथक् प्रामाण्यमिति प्राभाकराभिप्रायमाश-

**वचसामनुमानत्वमङ्गीकुर्वतां यथा वेदप्रामाण्यं न सिध्यति तथोक्तम् ॥**

**" उपमानमपि सादृश्यमसंनिकृष्टेऽर्थे बुद्धिमुत्पादयति यथा गवयदर्शनं गोस्मरणस्य ।" पूर्वदृष्टे स्मर्यमाणार्थे**

---

ङ्क्याह-एकदेशिनामिति । प्राभाकराभिप्रायश्च पूर्वमेव प्रदर्शितः । तथोक्तमिति- न्यायरत्नमालायामितिशेषस्तथाहि- " तस्माल्लोकवचसामनुमानत्वेन प्रामाण्याङ्गीकरणे पदानां वाचकत्वायोगादऽप्रतिपादकत्वेनाप्रामाण्यं वेदस्य स्यादिति तत्प्रामाण्यसिद्ध्यर्थं लोकेपि शब्दतयैव प्रामाण्यमभ्युपगन्तव्यम्" इति, विस्तरस्तु न्यायरत्नमालावाक्यार्थनिर्णय एव द्रष्टव्य इत्युपरम्यते । वार्तिकेप्युक्तम्-

"तेन वक्तुरभिप्राये प्रत्यक्षाद्यनिरूपिते ।
पुरुषोक्तिरपि श्रोतुरागमत्वं प्रपद्यते ॥"
"वाक्यार्थे तु पदार्थेभ्यः सम्बन्धानुभवादृते ।
बुद्धिरुत्पद्यते तेन भिन्नाऽसावऽक्ष बुद्धिवत् ॥"
"भावनायां समस्तायां वाक्यादेवोपजायते ।
प्रवृत्तिर्वा निवृत्तिर्वा तच्छास्त्रं न पदाद्यऽतः ॥" इत्यादि ।

॥ इति शब्दपरिच्छेदः ॥

सङ्क्षेपेण शब्दं निरूप्य संप्रत्युपमानं निरूपयितुं भाष्योक्तं तल्लक्षणं निर्दिशति-उपमानमिति । यथाऽनुपलब्धेरभावविषयकत्वादऽभावं इति नामान्तरं तथोपमानस्यापि सादृश्यविषयकत्वात् सादृश्यमिति नामान्तरम्, तच्च सादृश्यं प्रमाणमऽसंनिकृष्टेर्थे =दृश्यमानव्यक्तिप्रतियोगिकसादृश्यविशिष्टाऽदृश्यमानव्यक्तिविषयां बुद्धिमुत्पादयतीत्यर्थः । उदाहरणमाह-यथेति, हेतुरिति शेषः । यथा गवयदर्शनं गोस्मरणस्य =गवयप्रतियोगिकसादृश्यविशिष्टगोस्मरणस्य हेतुरित्यन्वयः । गवयदर्शने सत्यनेन सदृशी मदीया गौरिति ज्ञानं जायते । मीमांसकमते उपमानस्थले गवयदर्शनस्यैव करणत्वस्वीकारादुक्तम्-"गवयदर्शनम्" इति । तदुक्तं भाट्टचिन्तामणौ" गवयदर्शनं तत्करणम्" इति । उपमानस्य प्रमेयत्वं च सादृश्यस्य वा सादृश्यविशिष्टव्यक्तेर्वास्तीति सादृश्यविशिष्टव्यक्तेरेव प्रमेयत्वाभिप्रायेणात्रोक्तम्-" गोस्मरणस्य" इति । तदुक्तं वार्तिकेपि-

दृश्यमानार्थसादृश्यज्ञानमुपमानम्- याऽसावऽस्माभि-
र्नगरे दृष्टा गौः साऽनेन गवयेन सदृशीति ।

किं पुनः सादृश्यम् ?, अर्थान्तरयोगिभिः सम्बन्धि-
सामान्यैरर्थान्तरस्य तादृशयोगः सादृश्यम्, यथा गो-
जातियोगिभिः कर्णाद्यवयवसामान्यैर्गवयजातेर्योगो
गवयस्य गोसादृश्यम्, गवयसंयोगिभिश्च गोर्योगस्त-
त्सादृश्यम् । अत एव च सामान्यभूयस्त्वाल्पत्ववशे-
न सादृश्यप्रकर्षाप्रकर्षौ-सुसदृशमीषत्सदृशमिति । ये
तु सामान्ययोगातिरिक्तमन्यदेव तत्त्वं सादृश्यं मन्यन्ते
तेषां प्रकर्षाप्रकर्षभेदः किंनिमित्त इति चिन्तनीयम् ।

---

" तस्माद् यत्स्मर्यते तत्स्यात् सादृश्येन विशेषितम् ।
प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम् ॥" इति ।

सादृश्यस्य प्रमेयत्वपक्षेण ग्रन्थकृद् व्याचष्टे-पूर्वेति, पूर्वं दृष्टे गवय-
दर्शनकाले च स्मर्यमाणेऽर्थे=गवि दृश्यमानार्थस्य=गवयस्य सादृश्यज्ञा-
नम्=प्रतियोगित्वं षष्ठ्यर्थः- गवयप्रतियोगिकसादृश्यज्ञानम् उपमानम्=उप-
मानफलमित्यर्थः । फलस्वरूपमाह-यासाविति । असावित्यऽसंनिकृष्टपरा-
मर्शः । न च शक्तिग्रह उपमानफलं तस्य गोसदृशो गवय इत्यऽतिदेशवाक्ये-
नैव जातत्वादित्यादि विस्तरस्तु मदीयाद्वैतचन्द्रिकायां द्रष्टव्यः ।

सादृश्यस्वरूपं पृच्छति-किमिति । सादृश्यस्वरूपमाह-अर्थान्तरेति, त-
द्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वमेव सादृश्यमिति भावः । उदाहरति-यथे-
ति । योगिभिः=सम्बन्धिभिः । गवयस्येत्यनुयोगित्वं षष्ठ्यर्थः । गोसादृश्य-
म्=गोप्रतियोगिकं सादृश्यम् । गवयसंयोगिभिश्चेति-कर्णाद्यवयवसामान्यै-
रिति शेषः । तत्सादृश्यम्=गवयप्रतियोगिकं सादृश्यम् । उक्तस्यार्थान्तर-
गतभूयोधर्मवत्त्वस्य सादृश्यस्वरूपत्वे हेतुमाह-अत एवेति, यतो-व्यक्त्यन्त-
रवर्तिधर्मसदृशधर्मवत्त्वमेव सादृश्यमत एव व्यक्त्यन्तरवर्तिधर्मसदृशधर्मणा-
माधिक्ये सादृश्यप्रकर्षः-सुसदृशमिति, अल्पत्वे चाऽप्रकर्षः-ईषत्सदृशमिति । ये
तु प्राभाकरादयः सादृश्यं तत्त्वान्तरं मन्यन्ते व्यक्त्यन्तरधर्माणां व्यक्त्यन्त-
रेऽसम्भवात् तत्सदृशधर्मस्वीकारे चात्माश्रय इति तेषां मतमाक्षिपति-ये त्विति

**नच तत्त्वान्तरत्वे प्रमाणमपि किंचिदस्तीत्यास्तां तावत्।**

**न चेदमुपमानं प्रत्यक्षान्तर्गतम्, अनिन्द्रियसंनिकृष्टत्वान्नगरस्थस्य गोः। न चानुमानम्, अगृहीतसंबन्धस्याप्युपजायमानत्वात्। एवं किलानुमीयेत—गौर्गवयसदृशो गवयसादृश्यप्रतियोगित्वाद् यद् यत्सादृश्यप्रतियोगि तत् तत्सदृशं दृष्टं यथा यमलयोरन्यतरस्यान्यतरेणापि।**

---

सादृश्यस्य तत्त्वान्तरत्वे बाधकमाह— न चेति। प्रमाणत एव प्रमेयस्य सिद्धिरिति प्रमाणं विना सादृश्यस्य तत्त्वान्तरत्वं न युज्यत इति भावः। वस्तुतस्तु सादृश्यस्य तत्त्वान्तरत्वेपि तद्भूयस्त्वाल्पत्वाभ्यामेव सादृश्यप्रकर्षाप्रकर्षभेदः सम्भवत्येव यथा तत्त्वान्तरस्यैव रूपस्य भूयस्त्वाल्पत्वाभ्यां सौन्दर्यप्रकर्षाप्रकर्षभेद इत्याशङ्क्य सादृश्यस्य तत्त्वान्तरत्वे प्रमाणं नास्तीत्युक्तम्—न चेति।

ननूपमानस्य प्रत्यक्षादिष्वेव किं नान्तर्भावः स्यादित्याशङ्क्याह—न चेदमित्यादिना। अनिन्द्रियसंनिकृष्टत्वात्=इन्द्रियाऽसंनिकृष्टत्वात्। गोरिति—अयं भावः—उपमानस्य प्रमेयं तु गवयप्रतियोगिकसादृश्यविशिष्टा गौर्वा तन्निष्ठं गवयसादृश्यं वा तेनोभयेनैवेन्द्रियसंनिकर्षाभावान्न प्रत्यक्षेऽन्तर्भाव इति, उक्तं चात्र प्रमाणम् " तस्माद् यत्स्मर्यते तत्स्यात् " इति। तथा—

" प्रत्यक्षेणावबुद्धेपि सादृश्ये गवि च स्मृते।
विशिष्टस्यान्यतोऽसिद्धेरुपमानप्रमाणता ॥" इत्युक्तं वार्तिके।

अनुमानज्ञानं तु गृहीतसम्बन्धस्यैव पुरुषस्य भवति, उपमानं त्वऽगृहीतसम्बन्धस्याप्युपजायत इति नानुमानेन्तर्भाव इत्याह—न चेति, व्याप्तिग्रहाभावेपीत्यर्थः। यथा परैरनुमानेऽन्तर्भावः क्रियते तद्दर्शयति निराकर्तुम्—एवमिति, गवयसदृशः=गवयप्रतियोगिकसादृश्यवान्। सादृश्यप्रतियोगित्वादिति—गवयनिष्ठस्वसादृश्यप्रतियोगित्वादित्यर्थः। व्याप्तिस्वरूपमाह—यदिति। यद्=देवदत्तः, यत्सादृश्यप्रतियोगि=यज्ञदत्तनिष्ठसादृश्यप्रतियोगी, तत्=देवदत्तः, तत्सदृशम्=यज्ञदत्तसदृशो दृष्टः, किं वा यद्=गौः, यत्सादृश्यप्रतियोगि=गवयनिष्ठस्वसादृश्यप्रतियोगी, तत्=गौः, तत्सदृशम्=गवयसदृशो दृष्ट इत्यन्वयः। दृष्टान्तमाह—यथेति, यमलयोर्मध्येऽन्यतरस्य सादृश्यमन्यतरेण दृष्टमिति यथा— यमलयोर्देवदत्तयज्ञदत्तयोर्मध्ये देवदत्तो यज्ञद-

**न चेदं युक्तम्-यो हि द्वावर्थौ मिथः सदृशौ युगपन्न दृष्टवानेकमेव तु गामुपलभ्य नगरे वने गवयं पश्यति सोपि गां गवयसादृश्यविशिष्टामुपमिनोत्येव**

---

त्तेन सदृश इति यज्ञदत्तोपि देवदत्तेन सदृशो भवति तथा गवयो यदि गोसदृशस्तदा गौरपि गवयसदृश एवेत्यनुमानमेव। उक्तं परिहरति—न चेदमिति। उपपादयति—यो हीति, यः पुरुषो मिथः=परस्परं सदृशौ द्वावर्थौ गोगवयौ युगपन्न दृष्टवान् किं त्वेकां गामेव नगरे दृष्टवान् तदनन्तरं वने गवयं पश्यति सोपि 'अनेन सदृशी मदीया गौः' इत्येवं गां गवयप्रतियोगिकसादृश्यविशिष्टामुपमिनोत्येव नानुमिनोतीति नानुमानेन्तर्भाव इत्यन्वयः।

अयमत्र ग्रन्थकर्तुरभिप्रायः प्रतीयते—यत्र गोगवयौ युगपद् दृष्टौ तत्र तु गवि गवयनिष्ठसादृश्यप्रतियोगित्वं प्रत्यक्षेण गृहीतमेवेति पुनश्च वने केवलगवयदर्शनेन " एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम् " इति न्यायात् गोस्मरणे जाते गवि गवयनिष्ठसादृश्यप्रतियोगित्वस्यापि स्मरणं सम्भवति तेन च स्मृतेन हेतुभूतेन गवयनिष्ठसादृश्यनिरूपितगोनिष्ठप्रतियोगित्वेन गवि गवयप्रतियोगिकसादृश्यस्यानुमितिः सम्भवति भूतभविष्यल्लिङ्गस्मरणेन भूतभविष्यल्लिङ्ग्यनुमितिरिव। यत्र च गोगवयौ युगपन्न दृष्टौ तत्र तु गवि गवयनिष्ठसादृश्यप्रतियोगित्वस्यानुभवाभावान्न स्मरणं सम्भवति न चापि वने केवलं गवयं पश्यतो हेतुभूतं गवि गवयनिष्ठसादृश्यप्रतियोगित्वं प्रत्यक्षं येनानुमानं स्यात्, तस्मान्नगरे केवलं गामुपलभ्य तदनन्तरं वने केवलं गवयं पश्यतो नोक्तानुमानसम्भवोस्तीति तत्रोपमानेनैव गवयप्रतियोगिकगोनिष्ठसादृश्यस्य प्रमितिर्भवतीति। न चानेन सदृशी मदीया गौरित्येवं गवयप्रतियोगिकगोनिष्ठसादृश्यस्य ज्ञाने जातेऽर्थादेव गवये गोप्रतियोगिकसादृश्यास्यापि ज्ञानं सम्भवत्येवेति गवि गवयनिष्ठगोप्रतियोगिकसादृश्यप्रतियोगित्वस्यापि ज्ञानं जातमिति ज्ञातेन हेतुभूतेन गवयनिष्ठसादृश्यप्रतियोगित्वेन गवि गवयप्रतियोगिकसादृश्यस्योक्तरीत्यानुमितिरेव किं न स्यादिति वाच्यम्, पश्चाज्जातेनापि हेतुज्ञानेन पूर्वभाविज्ञानविषयविषयकानुमितेरसम्भवात् पूर्वज्ञातस्यैवानुमापकत्वनियमात्।

किं च फलभूते गवयप्रतियोगिकगोनिष्ठसादृश्यज्ञाने प्रथममेव जाते सति

तस्मान्नानुमानम्। शाब्दत्वं तु न शङ्क्यमेव, अतः प्रमाणान्तरम्, प्रसिद्धत्वाच्च न परीक्षितव्यम्।

"अर्थापत्तिरपि दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यत

---

तदनन्तरं तदनुमानापेक्षाऽभावात्, अनुमाने कृतेपि तस्य प्रामाण्यं न स्याद् गृहीतस्यैव ग्रहणात्। ननु प्रथमं हेतुज्ञानमेव किं न स्यादिति चेन्न, गवयदर्शनेन गोस्मृतिर्गोस्मरणे च गोप्रतियोगिकसादृश्यस्य गवये ज्ञानं तदनन्तरं च गवि गवयनिष्ठसादृश्यप्रतियोगित्वस्य स्मरणं तेन च स्मृतेनानुमितिरित्येव भवता वक्तव्यम्, तत्र गवयदर्शनेन गोस्मृतौ सादृश्यस्यैव हेतुत्वं वक्तव्यमिति गवि गवयप्रतियोगिकसादृश्यज्ञानं विना गोस्मरणमेव न सम्भवति न तरां गवि गवयनिष्ठसादृश्यप्रतियोगित्वस्येति न हेतुज्ञानं पूर्वं सम्भवति। न चैवं गोस्मरणे सादृश्यस्यैव हेतुत्वाद् गवि गवयप्रतियोगिकसादृश्यज्ञानं विना न गोस्मरणं गोस्मरणं विना च न गवि गवयप्रतियोगिकसादृश्यज्ञानमिति त्वन्मते परस्पराश्रय इति वाच्यम्, मया गवयदर्शनेन गवयप्रतियोगिकसादृश्यविशिष्टगोरेव प्रमितिस्वीकारात्। ननूपमितिकारणीभूते गवयनिष्ठगोसादृश्यज्ञाने जाते हेतुभूतस्य गवि गवयनिष्ठसादृश्यप्रतियोगित्वस्यापि ज्ञानं स्यादेवेति तेनानुमानमेव स्यादिति चेन्न, अद्वैतिभिर्गोनिष्ठगवयसादृश्योपमितिं प्रति गवयनिष्ठगोसादृश्यज्ञानस्य करणत्वस्वीकारेप्यस्माभिस्तस्य करणत्वाऽस्वीकारात् गवयदर्शनस्यैव करणत्वस्वीकारात् तदुक्तं भाट्टचिन्तामणौ—" एवं चारण्यकवाक्यार्थज्ञानवतोऽरण्ये गवयदर्शनं तत्करणं तत्सादृश्यविशिष्टो गौरिति ज्ञानं प्रमा वाक्यार्थस्मरणमवान्तरव्यापारः" इति। लोकप्रतीतिं प्रमाणयति—उपमिनोत्येवेति। उपसंहरति—तस्मादिति। पदज्ञानजन्योपस्थितेस्तदानीमभावाच्छाब्देन्तर्भावस्य त्वाशङ्कापि नास्तीत्याह—शाब्दत्वमिति। उपसंहरति—अत इति॥

॥ इत्युपमानपरिच्छेदः॥

एवमुपमानं निरूप्यार्थापत्तिं निरूपयितुं भाष्योक्तमऽर्थापत्तिलक्षणमतिदिशति—अर्थापत्तिरिति। भाष्ये हि " जीवति देवदत्ते " इत्येवं पाठ उपलभ्यते इत्येव भेदः। दृष्टार्थापत्तिः श्रुतार्थापत्तिरिति द्वयाभिप्रायेणाह—दृष्टः श्रुतो वेति। यथा 'पीनो देवदत्तो दिवा न भुङ्क्ते' अत्र दिवा भोजनस्य नि-

इत्यर्थकल्पना यथा जीवतो देवदत्तस्य गृहाभावदर्श-
नेन बहिर्भावस्यादृष्टस्य परिकल्पना ।" प्रमितस्यार्थ-
स्यार्थान्तरेण विनाऽनुपपत्तिमालोच्य तदुपपत्तये या-
ऽर्थान्तरकल्पना साऽर्थापत्तिः ।

यद्यनुपपन्नादुपपादककल्पनाऽर्थापत्तिः ?, अनुमानमेव
तर्हि, तत्रापि वन्हिमन्तरेणानुपपन्नाद्धूमाद्वन्हिः कल्प्यते ।

स्यादेवम्-यद्यनुपपन्नं गमकं स्यात् ? इह तु यन्नो-
पपद्यते तदेव गम्यम्-गृहाभावेन हि विना बहिर्भावो

---

षेध एव पीनत्वं च दृष्टं भोजनं विना नोपपद्यत इत्युपपादकस्य रात्रिभोज-
नस्य कल्पना, अनुपपन्नं च पीनत्वं कल्पकम् । स्वयमुदाहरति-यथेति ।
गृहाभावदर्शनेन=गृहाभावेन दृष्टेन । उक्तभाष्यवाक्यं व्याचष्टे-प्रमितस्येति ।
अनुपपन्नस्य पीनत्वादेः कल्पकस्य यत्र भ्रान्तिरेव तत्रोपपादककल्पानायां
सत्यामप्यर्थापत्तेः प्रामाण्यं नेष्टं हेत्वाभासेनाऽग्न्यनुमानवदिति प्रमितस्ये-
त्युक्तम् । तार्किकादयस्तु धूमेन तत्कारणस्य वन्हेरनुमानमिवात्रापि पीनत्वेन
तत्कारणस्य रात्रिभोजनस्यानुमानमेव दिवाभोजनस्य च निषेधात्, तथा जीवतो
गृहाभावेन बहिर्भावस्याप्यनुमानमेवेति वदन्ति तेषां मतमनुवदति-यदीति,
यद्यनुपपन्नाद् योपपादकस्य कल्पना सार्थापत्तिरित्युच्यते तर्ह्येषा तु कल्प-
नाऽनुमानमेव तत्रापि=अनुमानस्थलेपि वन्हिं विनाऽनुपपन्नादेव धूमाद् वन्हिः
कल्प्यते तस्मान्नार्थापत्तेः प्रमाणान्तरत्वं किं त्वनुमाने एवान्तर्भाव इत्यर्थः ।

एकदेशी प्रभाकरः प्रथमं मनोभिलषितरीत्या परिहरति-स्यादेवमिति ।
एवम्=अर्थापत्तेरनुमानेन्तर्भावः स्याद् यद्यनुपपन्नं गमकं स्यात्, नैवमस्ति, किं
त्विह=अर्थापत्तिस्थले यदनुपपन्नं तदेव गम्यं भवति, न चानुमानेऽनुपपन्नं ग-
म्यमिति भेदः । जीवन् देवदत्तो गृहे नास्तीत्यत्र बहिर्भाव एव गम्यते स च
जीवतो देवदत्तस्य गृहाभावेन विनाऽनुपपन्न इत्यनुपपन्नमेवाऽर्थापत्तौ गम्य-
मऽनुमाने चोपपादकमेव वन्ह्यादिकं गम्यमित्याशयेनाह-गृहाभावेनेति । त-
स्मादर्थापत्तावऽनुपपन्नस्य गम्यत्वादुपपादकस्यैव गमकत्वात्, अनुमाने चोपपा-
दकस्यैव वन्ह्यादेर्गम्यत्वादनुपपन्नस्य च धूमादेर्गमकत्वात् नार्थापत्तेरऽनुमा-
नेऽन्तर्भाव इति भावः । यद्यपि जीवतो गृहाभावेन बहिर्भाव एव गम्यते=क-

नोपपद्यते। किमिदानीमुपपादकादऽनुपपन्ने बुद्धिरर्थापत्तिः?। को दोषः?। न खलु कश्चिद्दोषः–किं त्वसौ नैवास्ति, नह्युपपादकदर्शनादनुपपन्नार्थे बुद्धिर्भवति, यदि स्यात्, वृक्षत्वदर्शनाच्छिंशपात्वं कल्प्येत, वृक्षत्वेन विना शिंशपात्वस्यानुपपत्तेः, तस्मादनुपपन्नमेव गमकं नोपपादकम्।

---

ल्प्यते जीवतो गृहाभावश्च बहिर्भावं विनाऽनुपपन्नं सत् कल्पकम्, तथाप्यऽनेनैकदेशिनोपपादकस्यैव बहिर्भावस्यानुपपन्नत्वं भ्रान्त्या ज्ञातमित्यनुसन्धेयम्। उक्तं च प्राभाकरैः–

"विनाकल्पनयार्थेन दृष्टेनानुपपन्नताम्।
नयता दृष्टमर्थं या सार्थापत्तिस्तु कल्पना॥
अभावेन गृहे भावो बहिष्कल्पनया विना।
नयताऽनुपपन्नत्वं कल्प्यमाना (नो) बहिर्यथा॥
गम्यस्या ऽनुपपन्नत्वमिह कल्पनया विना।
मानान्तरविरोधेन सन्देहापत्तिलक्षणम्॥" इत्यादि।

सिद्धान्ते त्वनुपपन्नमेव गमकमुपपादकं च गम्यमित्याशयेनाक्षिपति–किमिदानीमिति। पूर्वपक्षी वैयात्येनाह–को दोष इति। उपपादकादनुपपन्नेर्थे या बुद्धिस्तस्या अर्थापत्तित्वे को दोष इत्यर्थः। उपहासेन सिद्धान्त्याह–नेति। न खलु धर्मशास्त्रीयः कोपि दोषः किं त्वर्थापत्तिस्थलेऽसौ=उपपादकादनुपपन्नविषया बुद्धिर्न भवतीत्याह–किं त्विति। एतदेव स्पष्टयति–न हीति। विपक्षे बाधकमाह–यदीति। यद्युपपादकादनुपपन्नेर्थे बुद्धिः (कल्पना) स्यात्तदोपपादकाद् वृक्षत्वाच्छिंशपात्वेपि बुद्धिः स्यादिति वृक्षत्वदर्शनेन शिंशपात्वं कल्प्येत न चैवं युक्तम्–शिंशपात्वेनैव वृक्षत्वस्य कल्प्यमानत्वात्। उपसंहरन् सिद्धान्तमाह–तस्मादिति। अनुपपन्नम्=पीनत्वादिकं दृष्टम्। उपपादकम्=रात्रिभोजनादिकम्। तथा च यथा पीनो देवदत्त इत्यत्र दृष्टस्यैव पीनत्वस्यानुपपन्नत्वं गमकत्वं च, अदृष्टस्यैव रात्रिभोजनस्योपपादकत्वं गम्यत्वं च, तथा जीवन् देवदत्त इत्यत्रापि दृष्टस्यैव जीवतो गृहाभावस्याऽनुपपन्नत्वं गमकत्वं च युक्तम्, अदृष्टे त्वनुपपन्नत्वज्ञानमेवानुपपन्नमित्यऽदृष्टो

अथोच्येत–नाऽविनाभावेनानुपपत्तिरित्युच्यते किं तु संशयापत्तिः, यस्य हि जीवनं गृहसंबन्ध्येव प्रायशोऽवगतं तस्य गृहाभावे दृष्टे जीवनं सांशयिकं भवद् बहिर्भावकल्पनया समाधीयते, ततश्च प्राग् बहिर्भावकल्पनाया जीवनस्य संदिग्धत्वान्न लिङ्गत्वं. न हि संदिग्धं लिङ्गं भवति। जीवनरहितं च गृहाभावमात्रं मृतेपि सद्भावादऽनैकान्तिकं न बहिर्भावमनुमापयितुमलम्, अतोऽनुमानासंभवात्प्रमाणान्तरमेवेदम्।

---

बहिर्भाव एवोपपादको गम्यश्चेति विज्ञेयम्। न च बहिर्भावस्यापि दृष्टत्वमिति वाच्यम्, कल्प्यमानस्यापि दृष्टत्वे कल्पनानुपपत्त्याऽर्थापत्तेः प्रमाणान्तरत्वविलयप्रसङ्गात्।

पराकर्तुं प्रभाकरमतमनुवदति–अथेति। अनेन हि येन प्रकारेणार्थापत्तेरनुमानापेक्षया भिन्नं प्रामाण्यमुपपादितं तद्दर्शयति–नाविनेति। अनुमानस्थले हि या धूमस्याग्निं विनानुपपत्तिः साऽविनाभावनिबन्धना भवति अर्थापत्तिस्थले तु नैवमस्ति येनार्थापत्तेरनुमानेन्तर्भावः स्यात्?, किं तु संशयापत्तिः=संशयापत्तिनिबन्धनाऽनुपपत्तिर्भवतीत्याह–किं त्विति। संशयापत्तिमुपपादयति–यस्येति, बहिर्भावकल्पनाया जीवनसंशयापत्तिरेव हेतुः संशयाभावे जीवनसमाधानमऽनर्थकं स्यादिति भावः। एवं पीनो देवदत्त इत्यत्र पीनस्य पीनत्वे दृष्टे सति संशयितो दिवाभोजनाभावो रात्रिभोजनेन समाधीयत इति ज्ञेयम्। स्वाभिप्रायमाह– ततश्चेति जीवन् देवदत्तो गृहे नास्तीत्यत्र बहिर्भाव एव त्वयानुमानेन साध्यस्तत्र च जीवनस्य वा गृहाभावस्य वा हेतुत्वं वक्तव्यं न च जीवनस्य हेतुत्वं सम्भवति संदिग्धत्वादित्याह–न हीति। न च गृहाभावमात्रस्य हेतुत्वं सम्भवति व्यभिचारित्वाद् यत्र मृते सति पुरुषे तस्य बहिर्भावो नास्त्येव तत्रापि गृहाभावमात्रस्य तु सत्त्वादेवेत्याह–जीवनरहितमिति। तस्मादर्थापत्तिः प्रमाणान्तरमेवेत्याह–अत इति। न च जीवतो गृहाभावेन बहिः सत्त्वानुमानं युक्तम्, पूर्ववदेव विशेषणस्य जीवनस्य संदिग्धत्वादप्रत्यक्षत्वाच्च, जीवनं हि देवदत्ते दृष्टे एवाऽसंदिग्धं प्रत्यक्षं च स्यात्तदा तु देवदत्ते बहिर्दृष्टे बहिस्सत्त्वमपि प्रत्यक्षमेव

**यथा चानुमाने निश्चितं गमकम्, एवमऽर्थापत्तौ संदिग्धं गमकमिति दर्शनबलादभ्युपगम्यते। संशयश्चात्र पूर्वदृष्टरूपविसंवादात्।**

---

स्यादिति नानुमीयेत। गृहे दृष्टे च बहिस्सत्त्वं बाधितमेव स्यादिति ध्येयम्। अनुमानापेक्षयाऽर्थापत्तेर्विशेषमाह–यथेति। संदिग्धस्य जीवनस्य बहिस्सत्त्वगमकत्वं च "यस्य हि" इत्यादिनोपपादितमेव। संशयापत्तिकारणमाह–संशयश्चेति। अत्र=अर्थापत्तिस्थले। पूर्वदृष्टरूपस्य विसंवादात्=वैपरीत्यात् यथा सदा देवदत्तो गृह एव दृष्ट इतीदानीं गृहेऽदर्शनेन संशयो भवति– देवदत्तो जीवति वा न वेति। तदुक्तं प्राभाकरैः—

"देशेन हि विनाभावो न कदाचन दृश्यते।
विनाभावेन सिद्धोपि तेन संदेहमार्च्छति॥"
"तत्सन्देहव्युदासाय कल्पना या प्रवर्तते।
सन्देहापादकादर्थादऽर्थापत्तिरसौ स्मृता॥"

"यस्मिन्नऽकल्पिते योऽर्थः प्रमितोपि दृष्टरूपान्तराभावेन संशयरूपामनुपपत्तिं भजते सोऽर्थः स्वगतसन्देहव्युदासाय तस्याऽर्थान्तरस्य कल्पनां प्रसूते सा चाऽर्थापत्तिः, प्रमाणप्रतीतश्चार्थो दृष्टरूपार्थान्तराभावेन संशयमापन्न एवार्थापत्तेर्जनक इति दर्शनबलादाश्रीयते, यथा ह्यनुमानस्य निश्चितं लिङ्गं जनकं तथाऽर्थापत्तेः सन्देहग्रस्तमिति नास्ति विरोधः, अत एव चानुमानादपि भेदः, निश्चित एव धूमोऽग्नेर्गमको न तस्य किं चिदर्थान्तरमनुपपत्त्याऽऽपादकमस्ति गृहाभावस्तु विद्यमानताया अनुपपत्तिमातनोति तेन गृहाभावेन विद्यमानतैव बहिर्देशसम्बन्धकल्पनायामऽभूतायामऽनुपपत्तिमापादिता स्वात्मनो बहिर्देशसम्बन्धं कल्पयतीति भिन्नाऽनुमानादऽर्थापत्तिः। तदेवं गृहाभावो बहिर्भावकल्पनया अविद्यमानताया अनुपपत्तिमापादयत् बहिर्भावं कल्पयति, अथ वा विद्यमानतैव गृहाभावेनानुपपत्तिमापादिता स्वोपपत्तये बहिर्देशसम्बन्धमुपकल्पयतीति"। "विद्यमानता हि देवदत्तस्य गृहाधिकरणैव येन नाम प्रतीता तस्य बहिर्देशसम्बन्धेऽप्रत्याकलिते गृहाभावदर्शनेन देवदत्तस्य विद्यमानता प्रमाणान्तरप्रतीतापि सन्देहमावहति–गृहे देवदत्तोऽविद्यमानः कथं विद्यमान इति।" इत्यादि।

तदिदमसंबद्धम्– न हि संदिग्धे जीवने बहिर्भावः शक्यते कल्पयितुम्, कथं हि 'जीवति वा मृतो वा देवदत्तः' इति संदिहानस्तस्य बहिर्भावं कल्पयेत्, न हि भावाऽभावसंशयस्य बहिर्भावकल्पनयाऽपनोदः संभवति। सर्वत्र हि संशयस्य निदानोच्छेदादुच्छेदो भवति अन्यतरपक्षावधारणाद्वा ।

न च बहिर्भावकल्पनया तावन्निदानोच्छेदः, जीवनस्य प्रायेण गृहसंबन्धित्वात् तद्विपर्ययोऽत्र संशयहेतुत्वेनोपन्यस्तः, न चासौ बहिर्भावे कल्पिते समुच्छिद्यते, प्रत्युत विपर्यय एव दृढमवस्थाप्यते। न चा-

---

उपपादितं प्रभाकरमतं तर्कमतेन पराचष्टे– तदिदमिति। यथानुमानपक्षे त्वदुक्तरीत्या सदिग्धस्य जीवनस्यानुमापकत्वं न सम्भवति तथा बहिर्भावकल्पकत्वमपि न सम्भवतीत्यभिप्रायेणाह– न हीत्यादिना । स्पष्टप्रायोयं ग्रन्थः। तस्य=देवदत्तस्य । यच्चोक्तम्– " जीवनं सांशयिकं भवद् बहिर्भावकल्पनया समाधीयते " जीवनसंशयो बहिर्भावकल्पनया समुच्छिद्यत इति, तन्निराकरोति– न हि भावेति। भावाभावसंशयस्य=जीवति वा न वेति सत्त्वासत्त्वसंशयस्य। अपनोदः=निरासः। अत्र हेतुमाह–सर्वत्रेति। निदानोच्छेदात्=संशयनिदानोच्छेदात्। अन्यतरेति– यथा स्थाणुर्वापुरुषोवेत्यत्र स्थाणुत्वनिश्चयाद्वा पुरुषत्वनिश्चयाद्वा संशयोच्छेदः।

बहिर्भावकल्पनया जीवनसंशयनिदानस्योच्छेदाऽसम्भवमाह– न चेति। हेतुमाह–जीवनस्येति। तद्विपर्ययः=गृहसम्बन्धविपर्ययः=गृहासत्त्वमेवात्र जीवनसंशयहेतुत्वेनोपन्यस्तो यतो गृहासत्त्वदर्शनेनैव देवदत्तजीवने संशयो जात इत्यर्थः। न चासौ=गृहाभावः=गृहासत्त्वं बहिर्भावे कल्पिते सति समुच्छिद्यते गृहासत्त्वसमुच्छेदस्य गृहसत्त्वाधीनत्वादित्याह– न चासाविति। अनिष्टापत्तिमाह– प्रत्युतेति। प्रत्युत=बहिर्भावे तु कल्पिते संशयनिदानं विपर्ययः=गृहासत्त्वमेव दृढो भवति यतो बहिर्देवदत्तस्ततो गृहे नास्त्येवेति। संशयनिदानस्य च गृहाऽसत्त्वस्य बहिर्भावेन दार्ढ्ये सति कथं निरासः स्यादित्यर्थः। संशयोच्छेदहेतुरन्यतरपक्षावधारणमपि नास्तीत्याह– न चान्यतरेति । अत्र हेतुमाह–जीव-

ऽन्यतरपक्षावधारणमपि विद्यते-जीवनभावाभावौ ह्यत्र संदिह्येते न चानयोरन्यतरस्यापि बहिर्भावकल्पनया निर्णयो भवति, अन्यद्धि जीवनम्, अन्यश्च बहिर्देशसंबन्धः ।

न च गृहाभावनिबन्धनाऽर्थापत्तिर्जीवननिर्णयाया-

---

नभावेति । भावाभावौ=सत्त्वासत्त्वे । अनयोः=जीवनभावाभावयोर्मध्ये । अन्यतरस्य=भावस्य वाऽभावस्य वा ।

न चात्र बहिर्भावकल्पनया जीवनाभावाऽवधारणं सम्भवति जीवनाभावविरोधिनो बहिर्भावस्य कल्पितत्वेन सत्त्वात्, न हि बहिर्वर्तमानस्य जीवनाभावो वक्तुंशक्यते, न चापि जीवनाभावावधारणं युक्तं तथा सति तद्विरोधिनो बहिर्भावस्यैव कल्पना न स्यात्, बहिर्भावकल्पनाया एव चार्थापत्तिफलत्वादिति जीवनाभावावधारणपक्षानुपपत्तिप्रतिपादनमुपेक्ष्य, बहिर्भावावधारणपक्षं पराकरोति-अन्यद्धीति, जीवनबहिर्भावयोः परस्परं भेदात् कथं बहिर्भावावधारणेनापि जीवनभावावधारणं स्यात् ? न हि यज्ञदत्तसत्त्वेन देवदत्तसत्त्वस्यावधारणं सम्भवतीति भावः । प्रत्युत जीवनाभावविरोधिनो बहिस्सत्त्वस्य जीवनविरोधिनश्च गृहासत्त्वस्य प्रतिसन्धानाज्जीवने संशय एव दृढः स्यात् । जीवन् देवदत्तः सदा गृहे एव दृष्ट इति गृहासत्त्वस्य जीवनविरोधित्वम् । न चापि जीवनं बहिर्भावसम्बद्धं येन बहिर्भावकल्पनया तत्सम्बद्धस्य जीवनस्याऽवधारणं स्यात् । न च गृहाभाववतो जीवनं बहिर्भावसम्बद्धमेवेति वाच्यम्, बहिर्भावस्यैव गृहाभाववतो जीवनेन सम्बद्धत्वात्, अत एव सिद्धान्ते जीवतो गृहाभावेन बहिर्भावः कल्प्यते । न च गृहाभाववतो जीवनमेव बहिस्सत्त्वसम्बद्धं किं न स्याद्विनिगमनाविरहादिति वाच्यम्, यथा हि धूम एव व्यापकीभूतवन्हिसम्बद्धो न च वन्हिर्धूमसम्बद्धस्तथा बहिस्सत्त्वमेव जीवनसम्बद्धं न च जीवनं बहिस्सत्त्वसम्बद्धमिति न्यायस्यैव विनिगमनायाः सत्त्वात् । जीवनं हि गृहसत्त्वेपि भवति बहिस्सत्त्वेपि भवति बहिस्सत्त्वं तु गृहसत्त्वे सति न भवतीति बहिस्सत्त्वापेक्षया जीवनस्य व्यापकत्वं ज्ञेयम् ।

अपि च यतो गृहाभावोपि न जीवननिर्णयं कर्तुं शक्नोति ततो गृहाभावमूलकार्थापत्तिरपि न जीवननिर्णयं कर्तुं शक्नोतीत्याह- न चेति । गृहेऽभावं

ऽलं भवति। न ह्येवं संभवति- यस्माद्देवदत्तो गृहे नास्ति तस्माज्जीवतीति । प्रत्युत पूर्वनिश्चितमेव जीवनं गृहाभावादेव संदिग्धं कथं तत एव निर्णीयते। न हि संशयहेतुरेव निर्णयहेतुर्भवति। तस्माज्जीवनं संदिग्धम्, तत्तावदऽन्यतो निश्चित्य पश्चाद्बहिः संबन्धः कल्पयितव्यः-यस्माद्देवदत्तो जीवति गृहे च नास्ति तस्मान्नूनं बहिरवस्थित इति । न तु संदिह्यमाने जीवने तत्कल्पनं संभवति,-यस्मादविद्यमानो गृहे जीवति वा न वा तस्माद्बहिःस्थितः इत्यसंबद्धमेव स्यात्। तस्माद्बहिर्भावनियतं गृहाभावसहितं जीवनं निश्चित्य बहिर्भावः कल्प्यत इत्यनुमानमेवेदं न प्रमाणान्तरमिति ।

---

दृष्ट्वैव यतोऽर्थापत्त्या बहिर्भावः कल्प्यतेऽतोऽर्थापत्तेर्गृहाभावमूलकत्वम्। विपक्षे बाधकमाह-न हीति। अनिष्टापत्तिमाह-प्रत्युतेति। ततः=गृहाभावात्। उपसंहरति-तस्मादिति। तत्=सन्दिग्धं जीवनम् । अन्यतः=आप्तवचनादितः। जीवननिश्चयादनन्तरं निश्चितजीवनविशिष्टेन गृहाभावेन बहिस्सम्बन्धः कल्पयितव्यः। कल्पनाप्रकारमाह-यस्मादिति। विपक्षे बाधकमाह- न त्विति। तत्कल्पनम्=बहिस्सत्त्वकल्पनम्। यस्माज्जीवनसत्त्व एव बहिर्भावः सम्भवति न मृतस्यापीति तस्माज्जीवने निश्चिते सत्येव बहिर्भावकल्पना युक्ता न तु संशयिते जीवने बहिर्भावकल्पनया जीवनसमाधानं युक्तमित्यर्थः । जीवनसन्देहेपि या बहिर्भावकल्पना तस्या असम्बद्धत्वमाह- यस्मादिति, सन्दिग्धे हि जीवने बहिः सत्त्वम्- 'यस्माद् गृहेऽविद्यमानो देवदत्तो जीवति वा न वा तस्माद्बहिरवस्थितः।' इत्येवमेव कल्प्येत, कल्पना चैषाऽसम्बद्धैव न हि सन्दिह्यमानजीवनस्य बहिस्सत्त्वं कल्पयितुं शक्यत इति भावः। स्वाभिप्रायमाह-तस्मादिति । गृहाभावविशिष्टं तु जीवनं बहिर्भावव्याप्यमेवेति निश्चितेन गृहाभावविशिष्टजीवनेन यद्बहिर्भावस्य कल्पनं तदनुमानमेवेत्यर्थः। इदम्=बहिस्सत्त्वकल्पनम्। न प्रमाणान्तरम्=नार्थापत्तिः प्रमाणान्तरम्। तदुक्तम्—

"अर्थापत्तेस्तुनैवेह प्रमाणान्तरतेष्यते।
व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः।" इति।

अत्राभिधीयते—

न तावद् गृहाभावमात्रं लिङ्गं मृतेपि सम्भवात् । न जीवनमात्रं गृहेपि सद्भावात्, अतो जीवनसंसृष्टो गृहाभावो लिङ्गमिति वक्तव्यम्, प्रथमं च लिङ्गमवगम्य पश्चाल्लिङ्गिन्यऽनुमानेन भवितव्यम्, न तु लिङ्गावगमसमय एव लिङ्गिन्यऽवगमः । अत्र च न बहिर्भावावगममन्तरेण गृहाभावो जीवनं च संसृष्टं प्रत्येतुं शक्यते विरोधात् । जीवता ह्यवश्यं गृहे वा बहिर्वा स्थातव्यमित्यऽसंदिग्धम्, अतश्च बहिर्भावमनन्तर्भाव्य जीवनगृहाभावौ समुच्चित्य प्रतिपद्यमानस्येदृशी प्रति-

---

इत्येवं प्रभाकरमतं तार्किकमुखेन निराकृत्य स्वयं तार्किकमतं निराकर्तुमारभते— अत्राभिधीयत इति । गृहेऽभावो गृहाभावः स च मृतेपि देवदत्ते संभवतीति न तेन बहिस्सत्त्वकल्पना युक्तेत्याह— नेति। न जीवनमात्रं वा बहिस्सत्त्वानुमापकं जीवने सति देवदत्तस्य गृहेपि सद्भावसंभवाज्जीवनस्य गृहसत्त्वेनापि संबद्धत्वेन बहिस्सत्त्वव्यभिचारित्वादित्याह— न जीवनमिति । तस्माज्जीवनविशिष्टो गृहाभावो बहिस्सत्त्वानुमापक इति वक्तव्यमित्याह—अत इति। गृहे देवदत्तस्याभावो दृष्ट इति बहिस्सत्त्वनिश्चयं विना लिङ्गैकदेशस्य जीवनस्य निश्चयासम्भवाद् तन्निश्चयं विना च तस्य बहिस्सत्त्वानुमापकत्वासम्भवात् सर्वत्र निश्चितस्य पूर्वभाविन एवानुमापकत्वनियमात्, न चैवमत्र सम्भवतीत्यभिप्रायेणाह— प्रथमं चेत्यादिना । अवगम इत्यत्र सम्भवतीति शेषः । अत्र=अर्थापत्तिस्थले, जीवन् देवदत्त इत्युदाहरणे वा । बहिर्भावज्ञानं विना गृहाभावस्तु प्रत्येतुं शक्यते किं तु गृहेऽविद्यमानस्य बहिर्भावनिश्चयं विना जीवनं न प्रत्येतुं शक्यते इति बहिर्भावज्ञानं विना गृहाभावविशिष्टजीवननिश्चयो न सम्भवति विरोधात्, विरोधश्च—बहिर्भावनिश्चयं विना यदि कोपि गृहाभावविशिष्टं जीवनं प्रत्येतुं प्रवर्तेत तदा तेन " देवदत्तो गृहे नावस्थितो गृहे वा बहिर्वाऽवस्थितः " इत्येवं रीत्यैव प्रत्येतव्यम्, अत्र च 'गृहे नावस्थितो गृहे वावस्थितः' इति प्रतिपत्तेः परस्परं सुस्पष्ट एव विरोध इति ज्ञेयम् । विरोधमेव दर्शयति—अतश्चेत्यादिना । समुच्चित्य प्रतिपद्यमानस्येति—बहिर्भावा-

पत्तिरापद्यते- देवदत्तो गृहे नावस्थितो गृहे वा बहिर्वाऽवस्थित इति, न चैवं सम्भवति-भावाभावयोरेकत्र देशे समुचेतुमशक्यत्वात्। अतोऽवश्यं देशभेदेनैव देवदत्तस्य भावाभावौ समुचेतव्यौ। तेन भावाभावसंसर्गबुद्ध्यैव बहिर्भावस्य बुद्धत्वान्न पश्चात् किं चित् प्रमेयमस्ति, आह च—

" विद्यमानत्वसंसृष्टगेहाभावधियाऽनया।
गेहादुत्कालिता सत्ता बहिरेवावतिष्ठते ॥" इति।

---

वगमेन विना समुचितयोर्गृहाभावजीवनयोर्निश्चयवतः । प्रतिपत्तिः=बोधः। प्रतिपत्तिस्वरूपमाह-देवदत्त इति। गृहे नावस्थितो गृहेऽवस्थित इति वाक्यविरोधादनौचित्यमाह-न चैवमिति । विरोधं स्पष्टयति-भावाभावेति। उपसंहारमाह-अत इति। देशभेदेनेति-यदि गृहेऽभावस्तदा बहिर्भावो यदि बहिरभावस्तदा गृहे भाव इति, न तु " गृहे नावस्थितो गृहे वा ऽवस्थितः " इत्येवं गृहे एव भावा ऽभावौ सम्भवत इति भावः। स्वाभिप्रायमाह- तेनेति। भावाभावसंसर्गबुद्ध्यैव=अनुमानात्पूर्वमेव विशिष्टेन हेतुना भवितव्यमिति हेतुभूतगृहाभावविशेषणस्य जीवनस्य निश्चयाय बहिर्भावोऽवगत एवेति भावसंसर्गो बहिरऽभावसंसर्गश्च गृहेऽवगत इति जीवनविशिष्टगृहाभावरूपहेतुनिश्चयेन सर्वं ज्ञातं न किं चिदवशिष्यते यदत्राऽनुमेयं स्यादिति भावः। अत्र प्रमाणमाह- विद्यमानेति, विद्यमानतासंयुक्तो यो गृहाभावो हेतुस्त्वयोच्यते तस्यैव ज्ञानार्थं बहिस्सत्त्वमऽवगतमिति नाऽनुमानस्य प्रमेयान्तरमवशिष्यत इति भावः। तथा च वार्तिकम्-

" जीवतश्च गृहा ऽभावः पक्षधर्मोत्र कल्प्यते।
तत्संवित्तिर्बहिर्भावं न चाऽबुद्ध्वोपजायते ॥
गेहाभावस्तु यः शुद्धो विद्यमानत्ववर्जितः।
स मृतेष्वपि दृष्टत्वाद् बहिर्वृत्तेर्न साधकः ॥
विद्यमानत्वसंसृष्टगृहाभावधियाऽनया।
गेहादुत्कालितश्चैत्रो विद्यते बहिरेव हि ॥
गेहाभावत्वमात्रं तु यत्स्वतन्त्रं प्रतीयते।

ननु प्रमाणान्तरत्वेपि जीवनमात्रस्य गृहाभावमात्रस्य वाऽवगमकत्वाऽभावात् संसृष्टमुभयं गमकमित्यङ्गीकर्तव्यम्, संसृष्टधियैव च बहिर्भावस्य बुद्धत्वान्न पश्चात् किं चित्प्रमेयमवशिष्यत इति तुल्योयं दोषः।

उच्यते- इयमेव संसृष्टधीरर्थापत्तिरित्यवगम्य शाम्यतु भवान्। किं पुनस्तस्याः कारणम्?, द्वयोर्गृहाभाव-

---

न तावता बहिर्भावश्चैत्रस्यैवाऽवधार्यते ॥
सिद्धे सद्भावविज्ञाने गेहाभावधियात्र तु।
गेहादुत्कालिता सत्ता बहिरेवावतिष्ठते ॥
तेनास्य निरपेक्षस्य व्यभिचारो मृतादिना।
बहिर्देशविशिष्टेर्थे देशे वा तद्विशेषिते।
प्रमेये, यो गृहाऽभावः पक्षधर्मस्त्वसौ कथम् ॥
तदभावविशिष्टं तु गृहं धर्मो न कस्य चित्।
गृहाभावविशिष्टस्तु तदासौ न प्रतीयते ॥
ते न वेश्मन्यऽदृष्टत्वादिति हेतुर्न कल्प्यते ॥
तद्दर्शने तदानीं च प्रत्यक्षादेरसम्भवात्।
अर्थापत्तेः प्रमाणत्वं त्रैलक्षण्याद्विना भवेत् ॥" इत्यादि।

बहिस्सत्त्वादीनामनुमेयत्वे ये दोषाः प्रदर्शितास्ते एव दोषा अर्थापत्तेः प्रमाणान्तरत्वेपि=अर्थापत्त्यापि बहिस्सत्त्वादीनां कल्पने सन्त्येवेत्याशङ्कते—नन्विति। व्याख्यातप्रायोऽयं ग्रन्थः।

तुष्यतु दुर्जन इति न्यायेनोत्तरमाह—उच्यते इत्यादिना। इयं संसृष्टधीः=जीवति चैत्रो गृहे च नास्तीति धीरेवार्थापत्तिः। जीवनविशिष्टगृहाभावाऽवगमस्य बहिस्सत्त्वावगममन्तरेणानुपपत्तेर्जीवनविशिष्टगृहाभावावगमेनैव बहिस्सत्त्वावगमो जात एवेति भावः। शाखाचन्द्रन्यायेनदमुक्तमर्थान्तरकल्पनाया एवार्थापत्तित्वस्वीकारस्य वक्ष्यमाणत्वादुक्तत्वाच्च। किं वा प्रमाकरणं हि प्रमाणम्, अर्थापत्तिरपि बहिस्सत्त्वाद्यवगमलक्षणप्रमायाः करणमेव, बहिस्सत्त्वाद्यवगमं प्रति चोक्ता संसृष्टधीरेव करणमिति सैवार्थापत्तिः प्रमाणमिति भावः। पूर्वपक्षी पृच्छति—किमिति। तस्याः=उक्तायाः संसृष्टधियः।

जीवनयोः परस्परप्रतिघात इति ब्रूमः । यथा खल्वेकेन 'नद्यास्तीरे फलानि सन्ति' इत्युक्ते परेण च 'न सन्ति' इत्युक्ते बलाबलविशेषमजानानः श्रोता मिथः प्रतिहतमुभयं बुध्यते, न चान्यतरदपि त्यक्तुं ग्रहीतुं वा शक्नोति, तथापि तु न सत्त्वासत्त्वे समुच्चिनोति विरोधात् ।

एवमिहापि 'गृहे वा बहिर्वाऽवस्थितो देवदत्तः' इति केन चित्प्रमाणेन प्रतीतम्. अन्येन च 'गृहे नास्ति' इति तदुभयं समुच्चितं परस्परप्रतिघाति प्रतीयते, सोयं प्र-

---

जीवन् देवदत्तो गृह एव नियमेन दृष्ट इति तस्य गृहाभावेनोचितेपि मरणावधारणे यन्नावधार्यते प्रत्युत गृहाभावो जीवनविशिष्ट एवाऽवधार्यते तत्र किं कारणमिति भावः । उत्तरमाह-द्वयोरित्यादिना, यः खलु नियमेन गृहे तिष्ठति तस्य जीवतो गृहेऽभावो न सम्भवतीति तस्य जीवनेन गृहाभावस्य विरोधो गृहाभावेन च जीवनस्य विरोधो गृहेऽसतो जीवनासम्भवादिति प्रतिघातः । प्रतिघातमेव दृष्टान्तेनोपपादयति-यथेति । बालाबलविशेषमजानानः=कस्य वाक्यस्य प्रामाण्यमस्तीत्यजानानः । फलानां भावेना ऽभावः प्रतिहतोऽभावेन च भाव इति प्रतिघातः । प्रतिहतयोरुभयोरपि भावाभावयोर्बोधस्तु भवत्येव वाक्यस्य नियमेन बोधजनकत्वात्-"अत्यन्ता ऽसत्यपि ज्ञानमर्थे शब्दः करोति हि" इति न्यायात्, उक्तवाक्ययोर्मध्ये कस्मिन्नपि प्रामाण्याऽप्रामाण्यलक्षणविशेषस्याऽग्रहणान्न फलानां नद्यास्तीरे भावो वाऽभावो वा निश्चेतुं शक्यते इत्याह-न चेति । भावाभावयोर्बोधेपि न तयोः समुच्चयो निश्चेतुं शक्यते परस्परं विरोधादित्याह-तथापीति । सत्त्वासत्त्वे=भावाभावौ ।

प्रकृतोपयोगमाह-एवमिति । इहापि=अर्थापत्तिस्थलेपि । गृहेति-न चात्र गृहबहिर्देशाभ्यां तात्पर्यं किं त्ववस्थितौ=जीवने तात्पर्यं पूर्वं ग्रन्थकृता गृहाभावजीवनयोरेवात्र परस्परप्रतिघातस्योक्तत्वात्, तथा च जीवति देवदत्तः स च बहिर्वा भवतु गृहे वेति केनचित् प्रमाणेन शाब्दादिनावगतम्, अन्येन=प्रमाणेन प्रत्यक्षेण च गृहे नास्तीत्येतदवगतम्, तत्र नियमेन गृहनिवासिनो देवदत्तस्य जीवतो गृहाभावो न सम्भवति= न बुद्धावारोहतीति तदुभयं=जीवनं गृहाभावश्च समुच्चितं परस्परं विरोधाभावेपि सदादृष्टगृहनिवासनियमेन

तिघातो न फलसद्भावाऽसद्भाववदऽसमाधेयः किं तु बहिर्भावकल्पनया समाधातुं शक्यत इत्येतावान् विशेषः, तेन प्रमाणसिद्धयोर्द्वयोरर्थयोः परस्परं प्रतिघातोऽर्थान्तरकल्पनया समाधेयत्वेनालोच्यमानोऽर्थापत्तेः कारणम्। तत्समाधानाय चार्थान्तरकल्पनाऽर्थापत्तिः प्रमाणान्तरऽमनुमानात्। यश्चायं प्रतीतस्य प्रमाणान्तरेण प्रतिघातः स एवाऽर्थानुपपत्तिरित्युच्यते।

---

विरोधि प्रतीयते। तत्रापि फलानां सद्भावासद्भावयोः प्रतिघातो न समाधातुं शक्यते फलसद्भावाऽसद्भावयोर्द्वयोरेकत्र समुच्चयस्यासम्भवात्, यश्चायं जीवनगृहाभावयोः परस्परं प्रतिघातः स तु बहिस्सत्त्वकल्पनया समाधातुम्=निराकर्तुं शक्यते—गृहाभावेऽपि सति बहिस्सत्त्वेन जीवनमुपपद्यत एव न हि जीवनं गृहसत्त्वव्याप्यमित्याह— सोयमिति। विशेष इति— नद्यास्तीर इत्याद्युदाहरणस्यार्थापत्तिलक्ष्यस्य जीवन्देवदत्त इत्यस्य चायमेव विशेष इत्यर्थः।

निष्कृष्य कारणस्वरूपमाह—तेनेति। अर्थान्तरकल्पनया=बहिस्सत्त्वादिकल्पनया। द्वयोरर्थयोः=जीवनगृहाभावयोः। कारणम्=अर्थापत्तिलक्षण प्रमाणप्रवृत्तेः कारणम्, यत उक्तं प्रतिघातमेवालोच्य पुरुषः प्रमातुं प्रवर्तते। उक्तप्रतिघातस्य समाधानाय याऽर्थान्तरस्य=बहिस्सत्त्वादेः कल्पनार्थं अर्थापत्तिः साऽनुमानाद्भिन्ना प्रमाणान्तरमेवेत्याह—तत्समाधानायेति। प्रमाणसिद्धयोर्द्वयोरर्थयोर्यः परस्परं प्रतिघातस्तत्समाधानायेत्यर्थः, यथा गृहाभावजीवनयोः पीनत्वदिवाभोजनाभावयोश्च समाधानाय याऽर्थान्तरस्य बहिस्सत्त्वस्य रात्रिभोजनस्य च कल्पना सार्थापत्तिः प्रमाणान्तरम्। उक्तस्य प्रतिघातस्य नामान्तरमाह—यश्चेति, प्रतीतस्य पीनत्वस्य भोजनानुपलब्धिप्रमाणेन प्रतिघातो यतो भोजना ऽभावे पीनत्वं न संभवतीति। तथा प्रतीतस्य गृहाभावस्य प्रमाणान्तरेण जीवनप्रत्यायकेन शाब्दादिना प्रतिघातो यतो जीवन् देवदत्तो गृहादन्यत्र न गच्छतीति नियमो दृष्ट इति गृहाभावे सति जीवनं न प्रत्येतुं शक्यते इति। अर्थानुपपत्तिरिति—अर्थस्य पीनत्वस्य भोजनं विनाऽनुपपत्तिः, तथाऽर्थस्य गृहेऽविद्यमानपुरुषजीवनस्य बहिस्सत्त्वं विनाऽनुपपत्तिरित्यर्थः।

भवत्वऽर्थापत्तिः प्रमाणम्, अनुमानं त्वर्थापत्तावेवाऽन्तर्भवति, तथा हि- यत्र यत्र धूमस्तत्राग्निरित्यवगतं पर्वतस्य च धूमवत्ताऽवगता यदि पर्वतेऽग्निर्न स्यात्तदा धूमवत्ता वा मिथ्या स्यात् सर्वधूमवतां वाऽग्निमत्त्वं मिथ्या स्यात्, कथं तदुभयमप्यऽमिथ्यास्यादित्यग्निमत्त्वं कल्प्यत इत्यर्थापत्तिरेषा ।

स्यादेवं यदि सर्वधूमवतामग्निमत्त्वमनुमानादऽन्येनावगतं स्यात् ? न त्वेवमस्ति-दृष्टान्तधर्मिष्वेव हि धूमस्याग्निनियमोऽवगतो न सर्वत्र, अनुमानात्तु सर्वधूम-

---

ननु भवत्वेवमर्थापत्तेरेव प्रामाण्यम्, अनुमानस्य त्वर्थापत्तौ किं नान्तर्भावः स्यादेकेनैव निर्वाहे द्वयोः पृथक् प्रामाण्ये गौरवादित्याशङ्कते-भवत्विति । अनुमानस्यार्थापत्तावन्तर्भावमुपपादयति-तथा हीति । तदुभयम्=पर्वतस्य धूमवत्ता सर्वधूमवतामग्निमत्त्वनियमश्च । यथा जीवन्देवदत्तो गृहे नास्तीत्यत्र जीवनस्य गृहाभावस्य च मिथ्यात्वं न स्यादिति बहिस्सत्त्वकल्पनेऽर्थापत्तिस्तथात्रापि पर्वतस्य धूमवत्ता सर्वधूमवतामग्निमत्त्वं च मिथ्या न स्यादिति पर्वते धूमवत्ताज्ञानेनाऽग्निमत्ताकल्पनेऽर्थापत्तिरेव युक्ता समानविषयत्वादिति भावः ।

परिहरति-स्यादेवमिति । उक्तरीत्याऽर्थापत्त्याऽग्निमत्ताकल्पनं भवेद् यदि सर्वधूमवतामग्निमत्त्वमनुमानादन्येनावगतं स्यात् ? नैवमस्ति, किं त्वनुमानेनैव सर्वधूमवतामग्निमत्त्वावगतिर्भवतीति कथमनुमानस्य तद्विषयापहारेणार्थापत्तावन्तर्भावः स्यात् ? । जीवन् देवदत्त इत्यत्र तु जीवनं गृहाभावश्च द्वावपि प्रमाणान्तरेणावगतौ तत्र गृहेऽविद्यमानस्य जीवनोपपत्तये जीवतो गृहाभावोपपत्तये वाऽर्थादेव बहिस्सत्त्वं कल्प्यत इति युक्ता तत्रार्थापत्तिः, अत्र त्वेवं न सम्भवति सर्वधूमवतामग्निमत्त्वावधारणायैव प्रथमऽनुमानस्याऽऽवश्यकत्वात्, सर्वधूमवतामग्निमत्तावधारणाय स्वीकृते चानुमाने प्रमाणे पर्वतेऽग्निमत्तावधारणमप्यनुमानेनैव स्वीकार्यमिति भावः । एत देवाह-न त्वेवमित्यादिना । यत्र यत्र धूमस्तत्राग्निरिति ज्ञानमप्यानुमानिकमेवेति सर्वधूमवतामग्निमत्तावधारणमनुमानाधीनमेवेत्याह-अनुमानादिति ।

वतामग्निमत्ताऽवगतिरित्युक्तम् । न च दृष्टान्तधर्मिष्वेवावगतस्याग्निनियमस्य सर्वधूमवदग्निमत्तां विना कश्चिद्विरोधो येनार्थापत्तिः स्यात् । तस्माऽदसङ्कीर्णविषयत्वादऽनुमानमपि प्रमाणान्तरमऽर्थापत्तिरपि ।

सिद्धे च द्वयोः प्रामाण्ये येन नाम सर्वधूमवतामग्निमत्त्वमनुमानेनाऽवगतं तस्य पर्वतादिषु धूमदर्शनाद् यदग्निविज्ञानं तद् द्वेधापि सम्भवति—दृष्टान्तपरिदृष्टनियमस्मरणाद्वाऽनुमानम्, प्रतिघातालोचनया वाऽर्थापत्तिः, तस्मादर्थापत्तिः प्रमाणान्तरम् ।

---

पूर्वं(२९९पृ)प्रतिपादितश्चायं विषय इत्याह—उक्तमिति । गृहनिवासनियमवतो जीवनेन गृहाभावस्य विरोध एवेति तद्विरोधनिवृत्त्यर्थं तत्रार्थापत्त्या बहिस्सत्त्वं कल्प्यते न चात्र विरोधोस्ति येनार्थापत्त्याग्निमत्त्वकल्पनं स्यादित्याह—न चेति, सर्वधूमवतामग्निमत्तां विनापि महानसादीनामग्निमत्त्वे विरोधो नास्ति यथा सर्वघटवतां पटवत्तां विनापि देशविशेषस्योभयवत्ता सम्भवति तथा । उपसंहरति—तस्मादिति । असंकीर्णविषयत्वात्=भिन्नविषयत्वात् । तथा च यत्र विरोधप्रतिसंधानं तत्रार्थापत्तिः, अन्यत्र त्वनुमानमेवेति विवेकः ।

सिद्धेति— एवमुक्तरीत्यार्थापत्त्यनुमानयोर्द्वयोरेव प्रामाण्ये सिद्धे पर्वतेऽग्निमत्ताज्ञानमनुमानेनापि सम्भवत्यर्थापत्त्यापि सम्भवतीत्याह— येनेति । अनुमानेनाग्निज्ञानप्रकारमाह—दृष्टान्तेति, व्याप्तिस्मरणपूर्वकं यदग्निज्ञानं तदानुमानिकमित्यर्थः । नियमो व्याप्तिः । अर्थापत्त्याग्निज्ञानप्रकारमाह—प्रतिघातेति, यदि पर्वतेग्निर्न स्यात्तदा धूमवत्ता वा मिथ्या स्यात् सर्वधूमवतामग्निमत्ता वा मिथ्यास्यादिति प्रतिघातालोचनया यदग्निज्ञानं तदर्थापत्तिहेतुकमिति भावः । यद्यप्यर्थापत्त्यनुमानयोरुभयोरप्यत्र फलमग्निज्ञानमेकमेव तथापि कारणभेदात्प्रमाणभेद एव न हि व्याप्तिस्मरणे सत्यऽर्थापत्तिः सम्भवति प्रतिघातालोचनायां चानुमानं सम्भवतीत्यभिप्रायेणार्थापत्तेः प्रमाणान्तरत्वमाह— तस्मादिति । उक्तं च वार्तिके—

" प्रमाणषट्कविज्ञातो यत्रार्थो नान्यथा भवेत् । (उपपद्येत नान्यथा) इत्यर्थः
अदृष्टं कल्पयेदन्यं साऽर्थापत्तिरुदाहृता ॥"

यापि क्वचिदवस्थितस्य देवदत्तस्यान्यत्र सर्वत्रा-ऽभावप्रतिपत्तिः साप्यऽर्थापत्तिः, तथा हि- मूर्तस्यार्थस्य युगपत् कात्स्न्येनाऽनेकदेशसम्बन्धो न घटत इति स्वशरीरेऽवगतं स्वशरीरस्य हि क्वचिदवस्थितस्य ततोऽन्यत्र सर्वत्राभावो दृश्याऽदर्शनेनावगतः, अतोऽन्यस्यापि देवदत्तादेर्युगपदनेकदेशसम्बन्धो नास्तीत्यनुमीयते। ततो देवदत्तं क्वचित्प्रत्यक्षेणावगच्छन् युगपदनेकदेशाऽसम्बन्धं चानुमानेनावधारयन्नुभयोपपत्तये देशान्तरेषु सर्वेष्वभावं कल्पयति।

नन्वनुमानमेवेदं सम्भवति- देवदत्तोऽधुना सर्वत्र नास्ति गृहेऽवस्थितत्वाद् मद्वदिति। सत्यम्, देवदत्तेन

---

"दृष्टः पञ्चभिरप्यस्माद्भेदेनोक्ता श्रुतोद्भवा।(दृष्टार्थापत्तितः श्रुतार्थापत्तिर्भिन्नेत्यर्थः)
पीनो दिवा न भुङ्क्तेचेत्येवमादिवचःश्रुतौ।
रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते॥" इत्यादि।

अर्थापत्तेरुदाहरणान्तरमाह-यापीति। अत्रार्थापत्तिशब्दः प्रमितिपरो ज्ञेयोऽभावप्रतिपत्तेरेवात्र फलत्वात्। कल्पनाप्रकारमाह- तथा हीत्यादिना। मूर्तस्यापि घटस्य स्वकीयखण्डैरनेकदेशसम्बन्धो युगपदपि घटत इत्याह-कात्स्न्येनेति, कात्स्न्येन तु नैव घटते। स्वशरीरेप्यनेकदेशासम्बन्धः कथमवगत इत्याह-स्वशरीरस्येति। दृश्यादर्शनेन=दर्शनयोग्यस्यापि स्वशरीरस्यानेकदेशेष्वनुपलब्ध्या, यदि स्वशरीरमनेकदेशेषु युगपत्स्यात्तदा युगपदनेकदेशेषूपलभ्येत न चोपलभ्यत इति नियमेनेत्यर्थः। प्रकृतोपयोगमाह- अत इति। उभयोपपत्तये=एकत्रस्थितेर्युगपदनेकदेशासम्बन्धस्य चोपपत्तये, यदि देवदत्तस्य देशान्तरेषु सर्वेष्वभावो न स्यात्तदा तेष्वऽसम्बन्धो न स्याद्देशविशेषे च स्थितिरपि नोपपद्येतेति भावः, तस्माद्देशान्तरेषु सर्वेष्वभावं कल्पयति। स्पष्टमन्यत्।

ननूक्ता देशान्तरेष्वभावप्रतिपत्तिस्त्वनुमानेनापि सम्भवतीति नायमर्थापत्तेर्विषयः किं त्वनुमानस्यैवेति शङ्कते- नन्विति। प्रयोगस्वरूपमाह-देवदत्त इति। उत्तरमाह- सत्यमिति। स्वाभिप्रायमुद्घाटयति-देवदत्तेनेति। देवद-

सहैकदेशावस्थितस्य सम्भवति, यस्तु कचिद्गृहेऽव-स्थितस्तदनन्तरगृहमध्यऽतीत्य तृतीये गृहे देवदत्तं केन चित्प्रमाणेनावगतवान् स तद्गृहातिरिक्ते मध्यगृहे देशान्तरेषु च सर्वेष्वभावं देवदत्तस्य केन लिङ्गेन प्र-तीयात्?।

अथ कचिद् देवदत्तं पश्यन् तद्देशव्यतिरिक्ते च प्र-त्यासन्ने देशे तदभावमवगच्छन्नऽन्येषामपि सर्वदेशानां प्रत्यासन्नदेशवत् तद्देशव्यतिरिक्तत्वात् तच्छून्यताम-ऽनुमिमीते?, तत्रापि-

---

त्तस्य देशान्तरेष्वभावप्रतिपत्तिरनुमानेन तत्र स्थितस्यैव यज्ञदत्तस्य सम्भवति ना-न्यत्र स्थितस्यापि। यो वै देवदत्तेन सह स्थितस्तस्य तु देवदत्तवृत्तितद्गृहा-ऽवस्थितत्वं हेतुः प्रत्यक्षमेवेति हेतुप्रत्यक्षात् देशान्तरेष्वभावविषयकमनुमानं सम्भवति यस्तु न तत्र स्थितस्तस्य हेतुरेव न प्रत्यक्ष इति कथं देशान्तरेष्वभा-वस्यानुमानं स्यादिति भावः। एतदेवोपपादयति-यस्त्वित्यादिना। तद्गृहा-तिरिक्ते=यत्र देवदत्तः स्थितस्तद्गृहातिरिक्ते। अभावं देवदत्तस्य=देवदत्त-स्याभावमित्यन्वयः। तस्याभावज्ञानेच्छोर्देवदत्तीयं तद्गृहावस्थितत्वं लिङ्गं न प्रत्यक्षं येनानुमानं स्यादिति वाक्यशेषः।

ननु नहि तद्गृहावस्थितत्वमेवाऽभावानुमाने हेतुः किं तु तद्देशव्यतिरि-क्तत्वमपि हेतुरस्ति तद्देशव्यतिरिक्तत्वस्य च देवदत्तस्थित्यभावेन सह तद्देशव्य-तिरिक्ते=देवदत्ताधिष्ठितदेशभिन्ने स्वप्रत्यासन्ने प्रत्यक्षभूते देशे व्याप्तिर्गृहीता, तथा हि स्वप्रत्यासन्नो देशः प्रत्यक्ष एव तत्र च देशे देवदत्ताधिष्ठितदेश-व्यतिरिक्तत्वमप्यस्त्येव देवदत्तस्यानुपलब्धेश्च तत्र देवदत्तस्थित्यभावोप्य-स्त्येव किं वा देवदत्ताभावोप्यस्त्येवेति कचित्=देशविशेषे देवदत्तं पश्यन्= प्रमाणान्तरेण जानन् प्रत्यासन्नदेशवदऽन्येषामपि तद्व्यतिरिक्तानां देशानां तद्देशव्यतिरिक्तत्वहेतुना तच्छून्यताम्=देवदत्तशून्यतामऽनुमिमीते इत्यनुमान-मेवेदं नार्थापत्तिरित्याशङ्कते-अथेति। तदभावम्=देवदत्ताभावम्। प्रयोग-स्तु-देवदत्ताधिष्ठितदेशव्यतिरिक्ताः सर्वे देशा देवदत्तशून्यास्तद्देशव्यतिरिक्त-त्वात् प्रत्यासन्नदेशवदिति। अत्र वार्तिकोक्तं दूषणमतिदिशति-तत्रापीति,

" विरुद्धाव्यभिचारित्वं तद्वदेव हि गम्यते ।
समीपदेशभिन्नत्वाच्चैत्राधिष्ठितदेशवत् ॥"

इतिवार्तिक एव दूषणमुक्तम् । तस्मादर्थापत्तिरेवेयम् । एतेन बीजादिष्वङ्कुरजननशक्तिकल्पना व्याख्याता ।

किं पुनः शक्तिकल्पनां विना नोपपद्यते ? । बीजादिषु सत्स्वऽङ्कुराद्युत्पत्तिदर्शनात् असत्सु चादर्शनाद्बीजादीनामङ्कुरादिकारणत्वमवगम्यते, सत्स्वपि बीजेषु मूषिकाघ्रातेष्वङ्कुरानुत्पत्तेरकारणत्वं प्रतिभासते, सोयं कारणत्वाकारणत्वयोर्विरोधः शक्तिकल्पनया समाधीयते। नूनमस्त्यऽतीन्द्रियमपि रूपं यद्भावात्

---

अत्रापीत्यर्थः । विरुद्धेति—देशान्तराणि देवदत्तयुक्तानि न वेति संदेहात् तद्देश(तदधिष्ठितदेश)व्यतिरिक्तत्वं हेतुः संदिग्ध इति दोषः । सत्प्रतिपक्षमाह—तद्वदेवेति, देशान्तरं तद्वदेव=चैत्रयुक्तमेव प्रत्यासन्नदेशव्यतिरिक्तत्वाद् देवदत्ताधिष्ठितदेशवदिति सत्प्रतिपक्षेण पूर्वानुमानस्य प्रतिघातात् देशान्तरस्य देवदत्तयुक्तत्वसिद्धिरेव स्यादिति भावः । उपसंहरति—तस्मादिति । अर्थापत्तेस्तु सत्प्रतिपक्षेण प्रतिबन्धो न भवतीति न कोपि दोषः । एवं बीजादिषु याऽङ्कुरजननशक्तिः साप्यर्थापत्त्यैव कल्प्येत्याह—एतेनेति । उक्तं च वार्तिके—

" तेनार्थापत्तिपूर्वत्वमत्र, यत्र च कारणे ।
कार्याऽदर्शनतः शक्तेरस्तित्वं संप्रतीयते ॥" इति ।

कार्येति—यदि कारणे कारणस्वरूपापेक्षया शक्तिः पृथक् न स्यात्तदा सदा कार्यं स्यादेव न चैवमस्ति तस्मात्कार्यादर्शनात् कारणे शक्तिः कल्प्यते कल्पितायां च शक्तिनाशेन हि कार्यादर्शनमुपपद्यत इत्यर्थः ।

अर्थापत्तेः कस्य चिदनुपपत्तिरेव कारणमिति शक्तिं विना कस्यानुपपत्तिरस्ति येन बीजादौ शक्तिः कल्प्यत इत्याशङ्कते—किमिति । बीजात् कदाचिदङ्कुरोत्पत्तिर्दृश्यते कदा चिन्न दृश्यते तत्राङ्कुरं प्रति बीजस्य शक्तिकल्पनां विना कारणत्वं नोपपद्यत इत्येवं शक्तिः कल्प्यत इत्युत्तरमुपपादयति—बीजादिष्विति । विरोध इति—बीजे कदा चित्कारणत्वं प्रतीयते कदा चिदऽकारणत्वं प्रतीयते मूषिकाघ्राणे सतीति विरोधः । विरोधसमाधानप्रकारमाह—नूनमिति ।

**कदा चिदङ्कुरोत्पत्तिः, यस्य च मूषिकाघ्राणेन नाशा-त्कदाचिदनुत्पत्तिरिति कल्प्यते । घ्राणाभावोऽप्य-ङ्कुरस्य कारणं घ्राणे च सति तदभावादेवाऽनुत्पत्त्यु-पपत्तेरलं शक्तिकल्पनयेति चेत्?, न, घ्राणक्रिया-याः क्षणिकत्वात् तदुत्तरकालं तदभावे सत्यप्यङ्कु-रानुत्पत्तेः ।**

**प्रागभावः कारणं न प्रध्वंसाभाव इति चेत्?, न, अभावत्वाविशेषात्, न हि प्रागभावप्रध्वंसाभावयोः**

---

नूनमिति संभावनायाम् । यद्भावात्=अतीन्द्रियायाः शक्तेः सत्त्वात् । यस्य=शक्तिपदार्थस्य । कल्प्यते=इत्येवं शक्तिः कल्प्यत इत्यर्थः । स्पष्टोयं ग्रन्थः । ननु बीजादङ्कुरोत्पत्तिं प्रति मूषिकाघ्राणाभावोपि कारणमस्ति मूषिकाघ्राणे च जाते तदभावादेव=मूषिकाघ्राणाभावस्य कारणस्यैवाभावादङ्कुरानुत्पत्ति-रुपपद्यत एवेति किमर्थं शक्तिः कल्प्यत इत्याशङ्कते–घ्राणाभावेति । परिहर-ति– नेति । हेतुमाह–घ्राणेति, तत्र मते घ्राणाभावः कारणं घ्राणं च क्रियैव क्रिया च तृतीयक्षणवृत्तिध्वंसप्रतियोगिनीति तस्य घ्राणस्य तृतीयक्षणे नष्ट-त्वात्तदुत्तरकाले=घ्राणक्रियानाशोत्तरकाले घ्राणाभावः कारणमस्त्वेवेति किं नाङ्कुरोत्पत्तिर्भवतीति वक्तव्यं, तथा च शक्तिकल्पनाऽऽवश्यकी शक्तेश्च घ्रा-णेन नाशादङ्कुरानुत्पत्तिरुपपद्यत इत्यर्थः ।

ननु न घ्राणक्रियायाः प्रध्वंसाभावः कारणं येनोक्त आक्षेपः स्यात् किं तु घ्राणक्रियायाः प्रागभाव एव कारणमुच्यते तथा च घ्राणे जाते न घ्रा-णप्रागभावोस्ति न च संपत्स्यते येनाङ्कुरोत्पत्तिः स्यादिति न शक्तिकल्पनां विनाप्यङ्कुरानुत्पत्तेरनुपपत्तिरित्याशङ्कते–प्रागभावेति । परिहरति–नेति । अभावेति–प्रागभावोप्यभाव एव प्रध्वंसाभावोप्यभाव एवेति यदि घ्राणप्र-ध्वंसाभावस्य कारणत्वे बीजादङ्कुरानुत्पत्तिर्नोपपद्यते तदा घ्राणप्रागभाव-स्यापि कारणत्वे बीजादङ्कुरानुत्पत्तिर्नैवोपपद्यते उभयोरभावयोरविशेषात् प्रागभावास्वीकारादिति वा भावः । उभयोरविशेषत्वमाह–न हीति, कार्या-त्प्राक्काले योऽभावः स प्रागभावः कार्यादूर्ध्वकाले योऽभावः स प्रध्वंसाभाव इति कालमात्रस्यैव भेदो न त्वभावयोः स्वरूपेपि भेदः येन प्रध्वंसस्य कार-

प्रागूर्ध्वकालभेदं मुक्त्वा किं चिदपि रूपवैलक्षण्यमस्ति, न चाऽविलक्षणे कारणे कार्यवैलक्षण्यं सम्भवति। प्रागभावस्य प्रध्वंसाभावाद्विलक्षणमस्तिरूपमिति चेत् ? कल्प्यमेवं सति किं चित्, तच्चाभावे कल्प्यतां बीजस्वरूपे वेति— बीजस्य साक्षादङ्कुरकारणत्वात् तत्रैव कल्पयितुं युक्तम्। एवं यागादेरपूर्वस्वर्गादिसाधनशक्तिकल्पनमूहनीयम्।

कथं पुनः शक्तिमति यागे विनष्टे निराधारा शक्ति-

---

णत्वे इव प्रागभावस्य कारणत्वेऽनुपपत्तिर्न स्यादित्यर्थः। प्रागभावप्रध्वंसाभावयोः स्वरूपा ऽवैलक्षण्ये च घ्राणप्रागभावस्यैव कारणत्वं न घ्राणप्रध्वंसस्येति नोपपद्यते किं वा घ्राणप्रागभावे सत्येवाङ्कुर उत्पद्यते न घ्राणप्रध्वंसे सतीति कार्यवैलक्षण्यं नोपपद्यत इत्याह—न चेति।

ननु यथा त्वया शक्तिः कल्प्यते तथा मया प्रागभावप्रध्वंसयोर्वैलक्षण्यं कल्प्यते येन घ्राणप्रागभावे सत्यङ्कुर उत्पद्यते न तु घ्राणप्रध्वंसेपीत्युपपद्येतेत्याह—प्रागभावस्येति। उत्तरमाह—कल्प्यमिति, यच्च स्वतस्सिद्धं तत्तु तथैव स्वीकर्तव्यं यच्च कल्प्यं तत् तथा कल्पनीयं येन लाघवादिकं सर्वं समञ्जसं स्यात्, तथा च यदि वैलक्षण्यं कल्प्यमस्ति तदा तत् क्व कल्पनीयमऽभावे वा बीजस्वरूपेवेति विचार्यताम्, तत्राङ्कुरोत्पत्त्यर्थं कल्पनीयं वैलक्षण्यमङ्कुरकारणे बीज एव कल्पनीयं स्यान्नत्वऽभाव इत्याह— तच्चेति। उक्तन्यायमन्यत्रातिदिशति—एवमिति, अपूर्वसाधनशक्तिः स्वर्गसाधनशक्तिश्च यागादौ कल्प्या, अन्यथा यागस्य क्रियारूपत्वेन क्षणविनाशित्वात्कालान्तरे तदभावेपि स्वर्गादिकं तत्फलं न स्यात् शक्तिकल्पनायां तु यागे नष्टेपि तच्छक्तेः सत्त्वात्सम्भवति फलोत्पत्तिः, अग्रिमग्रन्थावलोकनेन तु 'अपूर्वरूपा या स्वर्गादिसाधनानुकूला शक्तिस्तत्कल्पनम्, इत्यर्थः सङ्गतः स्यात्। अत्र शक्तिं विना फलोत्पत्तिर्नोपपद्यत इत्यन्यथानुपपत्तिमूलकार्थापत्त्या शक्तिकल्पनमित्युनुसन्धेयम्।

ननु यथा बीजगता शक्तिर्बीज एव तिष्ठति नान्यत्र अन्यथा बीजादन्येनाप्यङ्कुर उत्पद्येत तथा यागनिष्ठा शक्तिर्यागे एव युक्तेति यागे नष्टे सा-

**रवतिष्ठते ?, न निराधारा भविष्यति–आत्माधारत्वा-त् । कथमन्यशक्तिरन्यत्र स्यात् ?, तथा ऽवगमात्, नावश्यं स्वाश्रयैव शक्तिरिति नियमोऽस्ति, सा हि कार्यतः कल्प्यमाना यत्रैव कार्याय कल्पते गङ्गतैव क-ल्प्या । सा चेयमपूर्वाख्या शक्तिर्यागाश्रया सती यागविनाशान्न स्वर्गनिष्पत्तये पर्याप्नुयादित्यात्माश्रया कल्प्यते । यथाह—**

**"शक्तिः कार्यानुमेयत्वाद् यद्गतैवोपयुज्यते ।**
**तत्रैव साभ्युपेतव्या स्वाश्रयाऽन्याश्रयापि वा ॥" इति ।**

---

पि नश्येतैव न निराधारा स्थातुं शक्नोतीत्याशङ्कते–कथमिति । उत्तरमाह–नेति, सा शक्तिर्निराधारा नास्ति तस्या आत्मन एवा धारत्वादित्यर्थः । ननु तस्य शक्तिस्तस्मिन्नेव युक्ता नाऽन्यत्रेति कथं यागशक्तिरात्मनि ति-ष्ठेदित्याशङ्कते–कथमिति । उत्तरमाह–तथेति, विनष्टे यागे तस्य शक्तिरा-त्मन्येव तिष्ठतीति प्रतीयते अन्यथा यागेन सह तच्छक्तेरपि नाशे स्वर्गादिफलं न स्यादेवेत्यन्यथानुपपत्तिमूलाकार्थापत्त्यैव यागशक्तिरात्मनि तिष्ठतीति क-ल्प्यते न चान्यत्र स्थितिर्युक्ता शरीरादीनां विनाशित्वेन विनाशे पुनरन्यत्र स्थितिकल्पनायां गौरवात् । एतदेवोपपादयति–नावश्यमिति, स्वशक्तिः स्वस्मिन्नेव तिष्ठतीति नियमो नास्ति । यथा प्रभुत्वं राजनि मृते तत्पुत्रे ति-ष्ठति तथैषा शक्तिरपि तदाश्रये यागे विनष्टे आत्मनि तिष्ठति । किं च सा शक्तिः स्वर्गादिफललक्षणकार्यस्योपपत्त्यर्थमेव कल्प्यते तस्माद् यत्रैव स्थिता सा कार्यमुत्पादयेत् तत्रैव तस्याः स्थितिः कल्प्या तथा च यागे नष्टे न तत्र स्थातुं शक्नोति शरीरादीनामपि स्वर्गादिफलप्राप्तेः पूर्वमेव विनाशित्वान्न त-त्रापि तस्याः स्थितिर्युक्तेत्यगत्याऽऽत्मनि तस्याः स्थितिः कल्प्यत इत्या-ह–सा हीत्यादिना । यद्येषा शक्तिर्यागाश्रयैव स्यान्नात्माश्रया तदा यागेन स-ह विनाशान्न स्वर्गादिफलमुत्पादयेदित्याह–यागाश्रयेति । तन्त्रवार्तिकं प्रमा-णयति–शक्तिरित्यादिना । अन्यदप्युक्तं तत्र–

"आत्मैव चाश्रयस्तस्य क्रियाप्यत्रैव च स्थिता । (तस्य = अपूर्वस्य)
आत्मवादे स्थितं ह्येतत् कर्तृत्वं सर्वकर्मसु ॥

**कथमात्माश्रया सती यागशक्तिरिति व्यपदिश्यते ?। तस्य हि फलसाधनत्वमुपपादयितुं सा कल्प्यते तावता तच्छक्तित्वम् । लोकेपि प्रसिद्धमेतत्–तैलपानसामर्थ्याच्चिरवृत्तेपि तस्मिन् बलपुष्ट्यादिकमद्यमे जातमिति लौकिका व्यवहरन्ति । तस्मादनवद्यम् ।**

---

यदि स्वसमवेतैव शक्तिरिष्येत कर्मणाम् । ( तद्विनाशे = कर्मविनाशे )
तद्विनाशे ततो न स्यात् कर्तृस्था तु न नश्यति ॥" इत्यादि ।

ननु यद्येषा शक्तिरात्माश्रयैव तदात्मशक्तिरिति वक्तव्यं न यागशक्तिरिति, व्यपदिश्यते च यागशक्तिरिति तत्कथमित्याशङ्कते–कथमात्माश्रयेति । उत्तरमाह–तस्येति । तस्य=यागस्य । यदि स्वर्गादिसाधिका शक्तिर्यागशक्तिरिति नोच्येत तदा यागस्य स्वर्गादिकं प्रति साधनत्वं नोपपद्येत शक्तिमत एव साधनत्वात् एतदर्थमेव यागशक्तिरित्युच्यते न तु यागसमवेतत्वात् । तच्छक्तित्वम्=यागशक्तित्वम् । ननु यदि यागे नष्टे एव स्वर्गादिफलं भवति तर्हि स्वर्गादीनां कथं यागफलत्वं यागस्य च कथं स्वर्गादिसाधनत्वं तथा च यागशक्तिरिति व्यवहारस्यापि नोक्तं प्रयोजकं सम्भवतीत्याशङ्क्य लोकप्रसिद्ध्या समाधत्ते–लोकेपीति, तैलपानक्रियायां विनष्टायामपि यथा तत्फलं बलादिकं भवति अथ च बलादीनां तैलपानफलत्वं तैलपानस्य च बलादिसाधनत्वं व्यपदिश्यते, तथैवात्रापि यागे विनष्टेपि जायमानस्य स्वर्गादेर्यागफलत्वं यागस्य च स्वर्गसाधनत्वं व्यपदिश्यते । न च तैलस्यैव साधनत्वमिति वाच्यम्, आपणस्थतैलेनापि बलोत्पत्तिप्रसङ्गात् । न चोदरस्थतैलस्य साधनत्वमित्यपि वाच्यम्, उदरगतस्यापि तैलस्य नाशानन्तरमेव बलोत्पत्तेर्दर्शनात् । किं चोदरस्थत्वविशेषणविशिष्टतैलस्य साधनत्वे गौरवेण तैलपानस्यैव लाघवात्साधनत्वं युक्तम् । उक्तं च–

" प्रमाणवन्त्यऽदृष्टानि कल्प्यन्ते सुबहून्यपि ।
अदृष्टशतभागोपि न कल्प्यो ह्यऽप्रमाणकः ॥" इति ।

तस्मिन्=तैलपाने । उपसंहरति–तस्मादिति । अनवद्यम्=न कोपि दोषः । यागस्य स्वर्गसाधनत्वे यागशक्तेश्चात्माश्रयत्वे न कोपि दोष इत्यर्थः ।

दृष्टग्रहणेनैव प्रतीतिमात्रग्रहाच्छ्रौतस्यापि ग्रहणे सिद्धे श्रुतार्थापत्तेः प्रमाणग्राहिणीत्वेन दृष्टार्थापत्तितो वैलक्षण्यमुपपादयितुं श्रुतग्रहणम् । तथा हि- लोके तावद् द्वारं द्वारमित्यादिषु संपूर्णार्थप्रतिपादनाय संव्रियतामित्यादिशब्दान्तरं श्रुतशब्दैकवाक्यत्वेन कल्प्यते।

तथा वेदेपि-"विश्वजिता यजेत" इत्यत्र स्वर्गकाम इति वा स्वर्गार्थमिति वा येनैव शब्देन श्रुतशब्दैकवाक्यभूतेन परिपूर्णार्थाभिधानं संपद्यते वाक्यं तदेव हृदयमानीय श्रुतेन सह मेलयित्वा परिपूर्णाद्वाक्याद्वाक्यार्थः प्रतीयते ।तथा-"सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः"

---

उक्तभाष्यवाक्ये " दृष्टः श्रुतो वार्थोऽन्यथा " इत्येवं दृष्टपदं श्रुतपदं चोक्तं तत्र दृष्टशब्दस्य येन केनापि प्रमाणेन प्रतीतार्थपरत्वाच्छ्रुतार्थस्यापि ग्राहकत्वेन श्रुतशब्दो व्यर्थः स्यादिति श्रुतशब्दसार्थक्यमुपपादयति-दृष्ट ग्रहणेनेति । प्रतीतमात्रेति युक्तः पाठः । श्रौतस्य=श्रुतस्यार्थस्येत्यर्थो नतु वैदिकस्येति । दृष्टपदेन दृष्टार्थापत्तिरुक्ता श्रुतपदेन च श्रुतार्थापत्तिरुक्ता, तत्र दृष्टार्थापत्तिस्तु प्रमेयस्योपपादकस्य रात्रिभोजनादेर्ग्राहिणी भवति श्रुतार्थापत्तिस्तु प्रमाणस्यैवोपपादकस्य ग्राहिणी ( कल्पिका ) भवतीति दृष्टार्थापत्तितः श्रुतार्थापत्तेर्वैलक्षण्यमुपपादयितुं श्रुतशब्दग्रहणं भाष्यकारेण कृतमित्यर्थः । लौकिकं श्रुतार्थापत्तेरुदाहरणमाह-लोकेति । द्वारं द्वारमिति श्रुते श्रोत्रा तदर्थोपपादकं प्रमाणभूतं 'संव्रियताम्' इति शब्द एव कल्प्यते तथा च वाक्यं संपूर्णार्थप्रतिपादकं भवति-'द्वारं संव्रियताम्' इति ।

वैदिकोदाहरणमाह-वेदेति । "स्वर्गार्थमिति वा"इत्यत्र संयोजनीमिति वाऽध्याहार्यमिति वा शेषः । श्रुतशब्दः=" विश्वजिता यजेत " इति वाक्यम् । परिपूर्णार्थेति-वाक्यं परिपूर्णमर्थमभिधत्ते इति परिपूर्णार्थाभिधानम्=संपूर्णार्थप्रतिपादकं सम्पद्यते, तदेव=स्वर्गार्थमिति वा स्वर्गकाम इति वा पदम्, हृदयमानीय=स्मृत्वा अध्याहृत्य, श्रुतेन=विश्वजिता यजेतेत्यनेन सह मेलयित्वा=संमेलनानन्तरं वाक्यं पूर्णं भवति तस्माच्च पूर्णाद्वाक्याद्वाक्यार्थः प्रतीयत इत्यन्वयः । श्रुतार्थापत्तेरुदाहरणान्तरमाह-सौर्यमिति । अस्य विधेरपूर्णत्वे हे-

इत्यादिषु विधिष्वितिकर्तव्यताप्रतिपादकशब्दाऽश्रवणादऽपूर्णेषु तत्प्रतिपादकशब्दापेक्षया चोदनालिङ्गोपस्थापितस्याऽऽग्नेयविधेस्त्र्यंशस्य साध्यसाधनांशप्रतिपादकभागावऽनपेक्षितत्वादऽनादृत्य यस्तृतीयोंश इत्थम्भावोऽग्न्यऽन्वाधानादिर्विध्यन्तत्वेन परिकल्पितस्तस्य वाचको यः शब्दः " आग्नेयादिवत् " इति स वाक्यशेषत्वेन कल्प्यते ।

अथ वा किमऽक्लृप्तेनाऽऽग्नेयादिवच्छब्देन कल्पितेन, किं तु य एवाऽऽग्नेयविध्यन्तस्तस्यैव व्यवहितस्यापि चोदनालिङ्गबलोपस्थापितस्य विकृतिवि-

---

तुमाह-इतिकर्तव्यताप्रतिपादकशब्दाश्रवणादिति, सौर्यचरुनिर्वापस्येतिकर्तव्यता नोक्तेत्यपूर्णत्वम् । तस्मात् तत्प्रतिपादकस्य=इतिकर्तव्यताप्रतिपादकस्य=वाक्यजातस्यापेक्षास्तीति, अपेक्षयेति हेतौ तृतीया, निर्वपेदिति चोदना चेतिकर्तव्यताक्षेपं विना न शाम्यतीति चोदनैवेतिकर्तव्यताक्षेपे लिङ्गमस्ति तेन च चोदनालक्षणलिङ्गेनोपस्थापितस्य साध्यसाधनेतिकर्तव्यतारूपत्र्यंशवत आग्नेयपुरोडाशविधेः साध्यसाधनांशप्रतिपादकभागावऽनपेक्षितत्वात् त्यक्त्वा यस्तृतीयोंश इतिकर्तव्यतारूपो विध्यन्तपदवाच्योऽग्न्यन्वाधानादिराग्नेयपुरोडाशस्थाने क्लृप्तस्तस्य प्रतिपादको यः शब्दः 'आग्नेयवत्' इति सोत्र वाक्यशेषत्वेन कल्प्यते इत्यन्वयः । वाक्यशेषकल्पने च कृते 'सौर्यं चरुमाग्नेयवन्निर्वपेद्ब्रह्मवर्चसकामः' इत्येवं परिपूर्णार्थकं वाक्यं भवति । अत्राग्नेयेतिकर्तव्यतैवाक्षिप्यते नाग्नीषोमीयादीतिकर्तव्यतेति विषयस्त्वष्टमाध्यायप्रथमपादे षोडशाधिकरणे द्रष्टव्यः । अत्र च साध्यं ब्रह्मवर्चसमप्युक्तं तस्य साधनं च सौर्यचरुरप्युक्त इति साध्यसाधनांशयोरुक्तत्वादाक्षेपापेक्षा नास्तीत्युक्तं " साध्यसाधनांशभागावनपेक्षितत्वादनादृत्य. " इति । प्रतिपादितश्चायं विषयो मात्रया शब्दपरिच्छेदेपि ।

पक्षान्तरमाह-अथ वेति । अथ वा 'आग्नेयवत्' इत्यऽक्लृप्तशब्दो न कल्पनीयः किं तु य आग्नेयविध्यन्तः=आग्नेयेतिकर्तव्यताभागस्तस्यैव व्यवहितस्यापि चोदनालिङ्गोपस्थापितस्य विकृतिविधिना=सौर्यचरुनिर्वापवि-

**धिना सहैकवाक्यतामात्रमऽर्थापत्त्या कल्प्यते । न ह्ययमनुषङ्गो येन व्यवहितस्य न स्यादिति । अतिदेशस्त्वयं व्यवहितस्यापि कथं चिदुपस्थानादुपपन्न एव । तथा च वक्ष्यति– " विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेत " इति । " विध्यन्त इति प्रधानविधिवर्जितं समस्तमेव पौरोडाशिकं काण्डमभिधीयते " इति भाष्यकारः ।**

---

धायकेनोक्तेन वाक्येन सहैकवाक्यतामात्रमर्थापत्त्या कल्पनीयं तदेकवाक्यतां विना सौर्यचरुनिर्वापविधेरनुपपत्तेरित्यर्थः । ननु व्यवहितस्य तस्याग्नेयविध्यन्तभागस्य कथमत्र सौर्यचरुवाक्येनैकवाक्यता स्यादित्याशङ्क्याह–न ह्ययमि । सौर्यचरुवाक्येनैकवाक्यतेति शेषः । अनुषङ्गस्तु व्यवधाने सति न भवतीति विषयो द्वितीयाध्यायप्रथमपादान्त्याधिकरणे निरूपितस्तथा च सूत्रम्–" व्यवायान्नानुषज्येत " इति । अतिदेशस्थले तु व्यवहितेनापि सहैकवाक्यता भवत्येवेत्याह–अतिदेशस्त्वयमिति । उपस्थितिश्चात्र निर्वपेदिति चोदनावशादुक्तैव । सौर्यचरुनिर्वापे आग्नेयविध्यन्तस्यान्वये सूत्रं प्रमाणयति–विध्यन्तो वेति, सप्तमाध्यायचतुर्थपादीयं दशमं सूत्रम् । विध्यन्त शब्दस्य चार्थस्तत्रैव भाष्यकारेण प्रदर्शितस्तमाह–विध्यन्त इति ।

ननु शास्त्रातिदेशपक्षे शास्त्रोक्तत्वेन समानत्वात् सर्वैवेतिकर्तव्यता प्राप्नुयात् प्राप्ता चाग्नेयस्य सर्वेतिकर्तव्यता सौर्यचरौ, भाष्ये च दशमाध्यायप्रथमपादाद्याधिकरणे सर्वेतिकर्तव्यताप्राप्तेः प्रतिषेध उक्तस्तथा हि–" एवमवहन्त्याद्यऽप्राकृतार्थं सर्वं कर्तव्यमिति " इत्येवमाशङ्क्य " नैतदस्ति सर्वं प्राकृतं विकृतौ कर्तव्यमिति क्वचिदभिधानसंस्कारद्रव्यं निवर्तितुमर्हति यल्लुप्तार्थम् " " प्राकृतान्यङ्गानि यस्मै प्रयोजनाय प्रकृतौ भवन्ति नाऽसति तस्मिन् प्रयोजने विकृतौ चोदितानि भवन्ति तस्माल्लुप्तप्राकृतप्रयोजनं न चोदकश्चोदयति " इत्येवं समाहितम् । तथा च शास्त्रातिदेशपक्षे दशमाद्यपादविरोधः प्राप्तः । किं चोहोऽप्यन्यत्रोक्तस्यान्यत्र सम्बन्ध एव संप्रत्यतिदेशेनैवान्यत्रोक्तस्यान्यत्र सम्बन्धे ऊहविषयस्यापहारादूहाऽसिद्धिरिति नवमेन विरोधः प्राप्तस्तथा सर्वाया एवेतिकर्तव्यताया अतिदेशेन प्राप्तौ कस्यचिदपि पदार्थस्य बाधाभावाद् बाधविषयस्यापहारेण बाधसिद्धिरपि न स्या-

नन्वेवं शास्त्रातिदेशाङ्गीकरणे दशमाद्यविरोधः स्यात्, ऊहबाधयोश्चासिद्धिः? । भवेदेवम्-यदि यथाश्रुतरूपमेव "व्रीहीनवहन्ति" इति वाक्यं विकृतिं नीत्वा तस्य यथासंभवं विकृतिविधिना सहैकवाक्यता परिकल्प्येत, । यदि तथा क्रियते तत्र कृष्णलचरौ व्रीहिशब्दस्य हविर्लक्षणार्थत्वायोगादऽवघातस्य च दृष्टप्रयोजनाभावाद् व्रीहिसाधनकोऽवघातोऽदृष्टार्थो विधीयेत तत्र नावघातस्य बाधः स्यात् । एवं नी-

---

दिति दशमाध्यायविरोधः प्रसक्त इत्याशङ्कते-नन्विति । उत्तरमाह-भवेदेव मित्यादिना, यदीत्यादिना कृष्णलचरावऽवघातबाधं प्रतिपादयति येना ऽवघातबाधासिद्धिभ्रमो विनश्येत " प्राजापत्यं चरुं निर्वपेच्छतकृष्णलमायुष्कामः " इति श्रूयते, प्राजापत्यचरुश्चायं विकृतिरेव तत्र प्रकृतिगतम्-"व्रीहीनवहन्ति " इति यथाश्रुतमेव वाक्यं विकृतिभूते प्राजापत्यचरावानीय विकृतिविधिना=उक्तेन प्राजापत्यचरुवाक्येन तस्य-"व्रीहीनवहन्ति " इति वाक्यस्य यद्येकवाक्यता कल्प्येत तदा त्यागयोग्यस्याप्यवघातस्याऽत्यागाद् दशमाद्यविरोधः स्यात्तथा च बाधासिद्धिरपि स्यादित्यन्वयः ।

एतदेवोपपादयति-यदि तथेति । यदि तथा क्रियते=यथा श्रुतस्यैव "व्रीहीनवहन्ति" इति वाक्यस्य प्राजापत्यचरुवाक्येन सहैकवाक्यता परिकल्प्येत तत्र प्राजापत्यचरुनिर्वापकर्मणि "व्रीहीनवहन्ति" इति वाक्ये "प्रकृतिवद्विकृतिः कर्तव्या" इति चोदकबलादानीते सति अवघातस्य यद् दृष्टं प्रयोजनं वितुषीकरणं तस्य दृष्टप्रयोजनस्य कृष्णलशब्दस्य सुवर्णशकलवाचित्वेन कृष्णलचरावऽभावाद् व्रीहिसाधनको ऽवघातो ऽदृष्टार्थ एव विधीयेत तत्र=तदाऽवघातस्य बाधो न स्यादपीत्यन्वयः । अदृष्टप्रयोजनकस्य बाधासंभवादिति भावः । कथं न कृष्णलचरावघातस्य दृष्टं प्रयोजनमित्याशङ्क्य दृष्टप्रयोजनाभावे हेतुरुक्तः-व्रीहिशब्दस्य हविर्लक्षणार्थत्वायोगादिति । व्रीहिशब्दस्य हविःप्रतिपादकत्वायोगात्-प्रजापत्यकृष्णलचरौ हविःप्रतिपादनाय व्रीहिशब्दो नोक्तः किं तु कृष्णलशब्द उक्तः इति यावत् । यद्युक्ते प्राजापत्यचरुनिर्वापकर्मणि हविःप्रतिपादनं व्रीहिशब्देन स्यात्=हवि-

वारादिष्वपि='व्रीहय एवाहन्तव्याः' इति न नीवारादिष्ववहन्तिरूह्येत।

नत्वेवमस्माभिरुच्यते, किं तु प्रकृतौ प्रधानेन सहैकवाक्यतयाऽवगतस्यास्य यावान् परिकरो यादृग्रूपं तादृगतिदिश्यते, प्रकृतौ व्रीहीणां हविष्ट्वात् तल्लक्षणार्थो व्रीहिशब्दः, अवघातस्य च तेषु दृष्टं प्रयोजनं तुषवि-

---

रर्थको व्रीहिशब्द उक्तः स्यात्तदा व्रीहिषु वितुषीकरणरूपदृष्टप्रयोजनस्य सत्त्वादवघातो दृष्टप्रयोजनकः स्यात्, नैवमस्ति प्राजापत्यकर्मणि हविरर्थकस्य व्रीहिशब्दस्या ऽभावात्, तत्र तु हविरर्थकः सुवर्णशकलार्थप्रतिपादकः कृष्णलशब्द उक्तः कृष्णलचरौ च वितुषीकरणलक्षणदृष्टप्रयोजनाऽऽभावादवघातोऽदृष्टार्थ एव स्यात्तथा च न बाध्येत। नैवमस्माभिरुच्यते येनावघातस्य बाधाभावाद्बाधासिद्धिः स्यादित्यनुपदमेव वक्ष्यति। ऊहासिद्धिप्रकारमाह—एवमिति। "व्रीहीनवहन्ति" इत्यत्र यदि व्रीहीणां स्वरूपस्य श्रूयमाणस्य विवक्षितत्वात् 'व्रीहय एवावहन्तव्याः' इति नियमः स्यात्तदा "नैवारश्चरुर्भवति" इति श्रुतनीवारेष्ववघातस्योहो न स्यात्तथा चोहाऽसिद्धिरपि स्यात्, नैवमस्ति।

एवं स्वासंमतरीत्या बाधोहयोरसिद्धिप्रकारं प्रदर्श्य परिहरति—न त्वेवमिति, अवघातस्याऽदृष्टार्थत्वमपि नोच्यते व्रीहिष्वेव नियमोपि नोच्यते येन बाधोहयोरसिद्धिः स्यात्, किं त्वऽवघातस्य दृष्टप्रयोजनकत्वादऽवघातप्रयोजनं वितुषीकरणं कृष्णलेषु न सम्भवति तुषाभावादित्यवघातस्य बाध एव भवति, अवघातस्य दृष्टप्रयोजनकत्वादेव च नीवारादिषु वितुषीकरणसम्भवाद् व्रीहिष्वेव नियमाभावाच्च नीवारादिषूहोपि सिद्ध इति प्रतिपादयति—किं त्वित्यादिना। प्रकृतौ प्रधानेन=पुरोडाशयागेन सहैकवाक्यतयाऽवगतस्य=एकवाक्यतां प्राप्तस्यास्य=विध्यन्तपदवाच्येतिकर्तव्यताभागस्य यावान् यादृग्रूपश्च परिकरः=समूहस्तादृगेव विकृतावऽतिदिश्यते। नन्वेवं कथमवघातबाधः स्यात्? इत्याशङ्क्य प्रतिपादयति—प्रकृतौ व्रीहीणामित्यादिना। तथा च प्रकृतौ व्रीहय एव हविःपदार्थ इति प्रकृतौ व्रीहिशब्द एव तल्लक्षणार्थः=हविःप्रतिपादकोस्ति, अवघातस्य च वितुषीकरणं दृष्टं प्रयोजनं व्रीहिषु संभवतीति तद्द्वारेण=वितुषीकरणद्वाराऽस्य= अवघातस्य प्रधानेन=पुरोडा-

मोचनं सम्भवतीति तद्द्वारेणास्य प्रधानैकवाक्यता। ततश्च- 'अवघातवितुषीकृतैर्व्रीहिभिः पुरोडाशं कृत्वा तेन यजेत' इतीदृशः प्रकृतिविधिः, तस्य प्रधानप्रतिपादको योंऽशः "यजेत" इति तद्वर्जं विशेषणांशो विकृतिवाक्येन सम्बध्यते, तस्य च न साक्षादवघातो विशेषणम्, अवघातविशेषितवितुषीकरणविशिष्टं हि हविर्यागस्य विशेषणं प्रकृतौ. अतस्तदेव विकृतावाऽऽकृष्यते। कृष्णलयागे च कृष्णलशब्दस्य हविर्वाचिनः प्रत्यक्षश्रवणात् तद्विरोधात् पुरोडाशब्दो निवर्तते तन्निवृत्त्या च व्रीहीणामपि निवृत्तिः, न हि ते कृष्ण-

---

शयागेनैकवाक्यता भवति, एकवाक्यतास्वरूपमाह-ततश्चेति । तेन=पुरोडाशेन। इदमेव च प्रकृतिविधिस्वरूपमित्याह-इतीदृश इति । तस्य=प्रकृतिविधेः । प्रधानप्रतिपादकः=यागप्रतिपादकः । तद्वर्जम्=यजेतेति यागांशरहितम्। विशेषणांशः=इतिकर्तव्यताभागो विकृतिवाक्येन=" प्राजापत्यं चरुं निर्वपेत् " इत्यादिवाक्येन सम्बन्ध्यते।

नन्वेवमपि प्राकृतयागमात्रस्य त्यागात्कथमवघातस्य त्यागः स्यादित्याशङ्क्यावघातत्यागप्रकारमाह-तस्य चेति । तस्य=प्राकृतयागस्य नावघातः साक्षाद्विशेषणं किं त्ववघातविशिष्टं यद्वितुषीकरणं तद्विशिष्टं यद्धविस्तदेव प्रकृतौ यागस्य विशेषणम्। ततश्च प्राकृतयागविशेषणस्यैव वैकृतयागेन सह सम्बन्धस्य युक्तत्वात् तदेव=अवघातविशेषितवितुषीकरणविशिष्टं हविरेव विकृतावाकृष्यते इत्याह-अत इति । प्राजापत्यकृष्णलयागे च हविःप्रतिपादकस्य कृष्णलशब्दस्य श्रवणात् तद्विरोधात्=कृष्णलद्रव्यविरोधात् पुरोडाशस्य निवृत्तिः पुरोडाशप्रकृतिभूतानां व्रीहीणामपि निवृत्तिः, तद्विशेषणस्य वितुषीकरणस्यापि निवृत्तिः, वितुषीकरणविशेषणस्यावघातस्यापि निवृत्तिरिति सिद्धो बाधः। चोदकेन प्राप्तापेक्षया प्रत्यक्षश्रुतस्य प्राबल्यादुक्तम्-तद्विरोधादिति। ननु भवतु पुरोडाशस्य निवृत्तिर्व्रीहीणां तु कथं निवृत्तिरित्याशङ्क्योक्तम्-न हीति, प्रकृतावपि व्रीहीणां हविःप्रकृतित्वेनैव प्राप्तिरस्ति विकृतौ च हविःकृष्णलचरुरेव न च तस्य प्रकृतिर्व्रीहयो येन व्रीहि-

लानां प्रकृतित्वेन संभवन्ति। वितुषीकरणशब्दोपि यो द्वारप्रतिपादकः सोपि कृष्णलेषु तदसंभवान्निवृत्तः, तद्विशेषणं चावघात इति सोपि निवर्तते इति बाधसिद्धिः। नीवारादिषु तु वितुषीकरणसम्भवादऽनिवृत्तोऽवघात इत्यूहस्यापि सिद्धिः। दशमाद्ये च यावच्छ्रुतानामऽङ्गशास्त्राणामतिदेशमाशङ्क्य प्रकृत्यन्वितानां तेन रूपेणातिदेशः सिद्धान्तित इत्यलमतिप्रसङ्गेन।

नन्वर्थमेवाध्याहृत्य वाक्यं पूर्यतां किं शब्दकल्पन-

---

सम्बन्धः स्यादित्यर्थः। द्वारप्रतिपादकेति—वितुषीकरणद्वारैव प्रकृतावऽवघातस्य सम्बन्ध इत्यनुसन्धेयम्। ऊहसिद्धिमाह—नीवारादिष्विति। नीवाराणां तुषसहितत्वात्तेषु वितुषीकरणसम्भवादवघातस्योहो भवत्येवेत्यर्थः। बाधसिद्धौ भाष्यं प्रमाणयति—दशमाद्येति। "तत्र यथा कृष्णलानां पाकोऽप्राकृतार्थोपि वचनप्रामाण्यात् क्रियते एवमवहन्त्याद्यप्राकृतार्थमपि सर्वं कर्तव्यमिति" इत्यन्तमाशङ्काभाष्यम्। अप्राकृतार्थः=अनुपयोगि' न तु प्रकृतावऽविद्यमानः। ततः—"नैतदस्ति सर्वं प्राकृतं विकृतौ कर्तव्यमिति" इत्यारभ्य "प्राकृतान्यङ्गानि यस्मै प्रयोजनाय प्रकृतौ भवन्ति नाऽसति तस्मिन् प्रयोजने विकृतौ चोदितानि भवन्ति तस्माल्लुप्तप्राकृतप्रयोजनं न चोदकश्चोदयति" इत्यन्तं समाधानभाष्यम्। विस्तरस्तु भाष्यादावेव द्रष्टव्यः। तेन रूपेणेति—प्रकृत्यन्वितानां पदार्थानामवघातादीनां प्रकृतौ येन रूपेण वितुषीकरणादिद्वारा सम्बन्धोस्ति तेनैव रूपेण विकृतावतिदेश उक्तस्तत्र च कृष्णलेष्ववघातस्य वितुषीकरणासम्भवेनाऽसम्भवात् प्राप्तस्यावघातस्य बाध एवेति सिद्धान्तः।

ननु शब्दाध्याहारपक्षे शब्दोच्चारणादिभिः श्रुताध्याहृतयोरेकवाक्यत्वादिकल्पनादिभिर्गौरवम्, अर्थाध्याहारपक्षे तु तत्तदर्थस्यानुसन्धानमात्रं कर्तव्यमिति लाघवादर्थाध्याहारपक्ष एव श्रेयानिति प्राभाकरः शङ्कते—नन्विति। तदुक्तं प्राभाकरैः—"पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्राप्यर्थस्यैव कल्पयितुमुचितत्वात्, यस्मिन् ह्यऽकल्पितेऽनुपपत्तिस्तदर्थापत्त्या प्रतीयते—रात्रिसंबन्धे ह्यनवगते भोजनस्यानुपपत्तिः, कालान्तरसंबन्धाभावेन ह्येषानुपपत्तिः सा का-

**था ? । नार्थमात्रेण पूरणं सम्भवति, एकवाक्यभूतपदप्रतिपादिता हि पदार्था वाक्यार्थं प्रतिपादयन्ति नान्यथा, न हि 'आनय' इत्येतावत्युक्ते 'गाम्' इत्यनुक्ते प्रत्यक्षप्रतिपन्नेपि गवि गवासहाऽऽनयनमन्वीयते । एवं च विकृतिषु सौर्यादिष्वऽसमवेत्रऽहितार्थाग्न्यादिपदनिवृत्तेर्न्यूनसाकाङ्क्षमन्त्रवाक्यपूरणाय सूर्यादिपदप्रक्षेपादूहसिद्धिः ।**

---

लान्तरसंबन्धमेव कल्पयितुमलम् । रात्रिसंबन्धे हि भोजनस्यानवगतेऽनुपपत्तिरापतति सा तावच्छब्दस्वरूपमात्रेऽवगतेपि न शाम्यति यावत् ततः शब्दाद्रात्रिसंबन्धो भोजनस्य नावगम्यते, न हि 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति प्रयुज्य यदा पुनरेवमुच्यते–'यामिन्यामत्ति' इति तदा यामिनीशब्देऽत्तौ चाव्युत्पन्नस्य पूर्ववाक्यार्थविषयाऽनुपपत्तिरुपरमति ?, अतोऽर्थस्यैव साक्षादुपपादकत्वं न शब्दस्य, उपपादकविषया त्वर्थापत्तिर्दृष्टार्थापत्तौ प्रतीतेति न क्वचिदुपपादकावबोधे शब्दः प्रमाणतामर्हति । किं चान्यत्र तावत्सविकल्पके शब्दस्य स्मृतिविषयताऽङ्गीकरणीया एवं चेदत्रापि स्मृतिविषय एव शब्दोस्तु मा भूत्तस्य प्रमाणविषयता, अतः श्रुतार्थापत्तिरपि शब्दग्राहिणी न भवति किं तूपपादकार्थग्राहिण्येवेति स्थितम् । ” इति ।

परिहरति–नार्थेत्यादिना । अध्याहृतेनार्थेन वाक्यं पूर्णं न संभवति "शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यते" इति न्यायात् । हेतुमाह–एकवाक्येति । एकवाक्यतां प्राप्तैरेव पदैः स्मारिताः पदार्थाः वाक्यार्थं प्रतिपादयन्ति तथा च कथमध्याहृतेनार्थेन वाक्यं प्रपूर्येतेति भावः । विपक्षे बाधकमाह–नहीति । प्रकृतोपयोगमाह–एवं चेति । "अग्नये जुष्टं निर्वपामि" इत्येवं निर्वापमन्त्रः श्रुतः तस्यैव च सौर्यादिष्वपि चोदकबलात्प्राप्तिरस्ति सौर्ये च सूर्य एव देवता नाग्निरित्यऽसमवेत्रऽहितार्थस्य=संबन्धानर्हस्याऽप्रयोजकस्य च= अप्रकृताग्निदेवतावाचकस्याग्निपदस्योक्तमन्त्रान्निवृत्तिर्भवति ततश्च "जुष्टं निर्वपामि" इत्येव मन्त्रः शिष्टः स च देवताबोधकपदं यन्न्यूनं तत्र साकाङ्क्ष इति न्यूनसाकाङ्क्षमन्त्रवाक्यस्य "जुष्टं निर्वपामि" इत्यस्य पूरणाय प्रकृतयागस्य सूर्यदेवताकत्वेन चतुर्थ्यन्तं 'सूर्याय' इति पदं तत्र प्रक्षिप्यते तथा च "सूर्याय जुष्टं निर्वपामि" इत्ये-

अर्थाध्याहारवादिनां तु सूर्यार्थेनाध्याहृतेन विशिष्टं निर्वपामिपदमेव प्रकाशयतीति नोहः सिध्येत् । तथा यत्राधिकारवाक्येऽर्थवादमात्रं श्रुतम्—" प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति " इति तत्रापि भवन्मते विध्यर्थ एवाध्याहार्यो न विधिशब्दः, ततश्च प्राकृतस्योपकारस्य पदार्थानां च नाऽपूर्वैदमर्थ्यं सिध्येत् । सत्स्वपि ह्यर्थानामाकाङ्क्षासंनिधियोग्यत्वेषु नाभिधा-

---

वमूहेन वाक्यपूर्तिर्भवतीति शब्दाध्याहारपक्षे एव ऊहः सिद्ध्यति । " असमवेत्रऽहितार्थ " इत्यत्र " असंनिहितार्थ " इत्यपि पाठान्तरम् ।

अर्थाध्याहारपक्षे तु नोहः सिध्यतीत्याह—अर्थाध्याहारेति, अर्थाध्याहारपक्षेपि " अग्नये जुष्टं निर्वपामि " इति मन्त्रगतस्याग्निपदस्य त्वऽप्रकृतार्थत्वान्निवृत्तिरावश्यक्येव ततश्च निर्वपामीतिपदमेवाध्याहृतसूर्यार्थविशिष्टं जुष्टरूपार्थं प्रकाशयिष्यतीति सूर्यपदस्योहो न स्यादेवेत्यूहाऽसिद्धिः । विशिष्टमित्यत्र जुष्टमितिशेषः । अर्थाध्याहारपक्षे दोषान्तरमाह—तथेति, " प्रतितिष्ठन्ति " इत्येवं रात्रिसत्रस्य प्रशंसैव श्रूयते न तु 'प्रतिष्ठाकामो रात्रिसत्रं कुर्यात्' इत्येवं विधिवाक्यम्, तत्र शब्दाध्यारपक्षे तु "रात्रिसत्रं कुर्यात्' इत्येवं विधिवाक्यस्य कल्पनया सर्वं समञ्जसं भवति, अर्थाध्याहारपक्षे तु विध्यर्थस्यैवाध्याहारः स्यात् ततश्च प्रकृतितः प्राप्तस्योपकारस्य विध्यन्तान्तःपातिनां च पदार्थानामपूर्वैदमर्थ्यम्=अपूर्वार्थत्वम्=अपूर्वान्वयित्वं न स्यात् " शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यते " इति न्यायाच्छब्देन प्रतिपादितस्यार्थस्य शब्दप्रतिपादितेनैवार्थेनान्वयो भवति न त्वध्याहृतेनाप्यर्थेनेति शब्देन प्रतिपादितानां पदार्थानामुपकारस्य च शब्दं विना ऽध्याहृतेन विध्यर्थेनान्वयो न स्यात्, विध्यर्थेन चान्वयाभावे तेषामपूर्वार्थत्वमपि न स्यादित्यर्थः ।

नन्वाकाङ्क्षादिवशादऽध्याहृतेनापि विध्यर्थेन प्राकृतपदार्थानामन्वयो भविष्यतीत्याशङ्क्याह—सत्स्वपीति । अभिधानम्=शब्देन प्रतिपादनम् । यथा 'आनय' इत्युक्तेऽङ्गुलिना निर्दिष्टस्यापि च घटस्य नाकाङ्क्षादिसत्त्वेप्यानयनेन सम्बन्धो भवति तत्कस्य हेतोः ? आनयनस्य शाब्दत्वात् घटस्य च शब्देना प्रतिपादनात्, तथात्रापि बोध्यम् । उक्तं च न्यायरत्नमालायाम्—

नमन्तरेणान्वयसिद्धिः । न चेहापूर्वाभिधायी शब्दोऽस्ति योऽपूर्वं प्राकृतैरन्वितमभिदध्यात् । नापि प्राकृताः शब्दा विकृतौ सन्ति ये स्वार्थानऽपूर्वान्वितानऽभिदध्युः । न चार्थवादपदार्थैस्तेषामन्वयः. नाप्युत्पत्त्यपूर्वेणेत्यऽनन्वय एव स्यात् ।

---

" प्रमाणान्तरविज्ञातैः पदार्थैर्न हि दृश्यते । ( शब्दप्रतीतिरित्यायग्रेणान्वयी )
वाक्यार्थवेदनं, शब्दप्रतीतेः कारणं त्वथ ॥" इत्यादि ।

अन्वयाभावे हेत्वन्तरमाह–न चेहेति । इह=" प्रतितिष्ठन्ति ह्वा " इति वाक्ये, यद्यस्मिन् वाक्येऽपूर्वाभिधायी कोपि शब्दः स्यात्तदाऽपूर्वस्य शब्देन प्रतिपत्त्या शब्दप्रतिपादितेनापूर्वेण सह शब्दप्रतिपादितानां प्राकृतपदार्थानामन्वयः स्यादपि न चैवमस्तीत्यर्थः । अन्वयाभावे हेत्वन्तरमाह–नापीति । किं वा ननु प्रकृतिगतैः शब्दैरेव प्राकृतपदार्था अभिधीयन्ते तत्र प्राकृताः शब्दा विकृतिं प्राप्ता विकृत्यपूर्वेणान्वितमेव स्वार्थमभिधास्यन्तीति नापूर्वेणान्वयानुपपत्तिरित्याशङ्क्याह–नापीति । प्राकृतशब्दानां विकृतौ पाठोपि नास्ति तव मते च शब्दस्याध्याहारोपि नास्तीति प्राकृतशब्दानां विकृतौ प्राप्तिरेव नास्ति येन ते विकृत्यपूर्वान्वितं स्वार्थमभिदध्युः । किं चाध्याहृतानां प्राकृतपदार्थानामऽर्थवादपदार्थैरपि शब्देन प्रतिपाद्यमानैर्नान्वयः सम्भवति शाब्दानां शाब्दैरेवान्वयस्य सम्भवादित्याह–न चार्थवादेति । अत एवोत्पत्त्यपूर्वेणाप्यन्वयो न सम्भवतीत्याह–नाप्युत्पत्तीति । तस्मादर्थाध्याहारपक्षेऽनन्वय एव स्यादिति शब्दाध्याहारपक्ष एव श्रेयान् । अस्य च रात्रिसत्रस्य प्रकृतिर्द्वादशाहस्तदुक्तं माधवेन रात्रिसत्राधिकरणे–" द्वादशाहादूर्ध्वं भाविनस्त्रयोदशरात्रचतुर्दशरात्रादयः सर्वे सत्रविशेषाः 'त्रयोदशसङ्ख्याका रात्रयो यस्मिन् सत्रविशेषे सोयं त्रयोदशरात्रः' इति समुदायप्राधान्येनैकवचनान्ततया प्रायेण निर्देशो भवति क चित्तु समुदायिनां रात्रिविशेषाणां प्रत्येकं प्राधान्यमभ्युपेत्यैक एव सत्रविशेषो बहुवचनान्तेन रात्रिशब्देनाम्नायते तद् यथा–" ते एता विंशतिरात्रीरपश्यन् " इति तादृशे रात्रिसत्रे " इति । उत्पत्तिवाक्यं च " ज्योतिर्गौः " इत्यादिकं ज्ञेयं ग्रन्थकृदेव वक्ष्यति–" रात्रिशब्देन ज्योतिर्गौरित्यादिवाक्योत्पादितानि सौत्यानि कर्माण्युच्यन्ते ।" इति ।

एवं प्रकृतावपि "सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ" इत्यत्र विधिशब्दस्याऽनाम्नानादनध्याहाराच्च विध्यर्थस्यैव स्वर्गकामाधिकारापूर्वादाग्नेयाद्युत्पत्त्यपूर्वेभ्यश्च पृथग्भूतस्याध्याहारान्न समिदादीनामैदमर्थ्यं सिध्येत्। नहि समिदादियजतयोऽवघातादिवदधिकारापूर्वान्वितं स्वार्थमभिधातुमलं स्वापूर्वविषयत्वव्याघातात्। तस्मादीदृशेष्वधिकारविधिषु विधिशब्द एवाध्याहार्यो नार्थः।

कथं च विध्यर्थस्यात्यन्ताऽलौकिकतया प्रमाणेन त-

---

विकृतावऽर्थाध्याहारपक्षस्यासम्भवमुक्त्वा प्रकृतावप्यसम्भवमाह—एवं प्रकृतावपीति, दर्शपूर्णमासौ प्रकृतिस्तत्राप्यर्थवाद एव श्रुतः " सर्वेभ्यः कामेभ्यः " इति, न तु विधिशब्दः, तत्र च त्वन्मते शब्दस्याध्याहाराभावेनाऽर्थस्यैवाध्याहारादधिकारापूर्वादुत्पत्त्यपूर्वाच्च पृथग्भूतस्य विध्यर्थस्यैवाध्याहारान्न समिदादीनाम्=" समिधो यजति " इत्यादिवाक्यविहितप्रयाजाख्यसमिदादियागस्यैदमर्थ्यम्=प्रधानापूर्वार्थत्वं सिध्येत्, यतः समिदादिवाक्यगतयजतिशब्दैरुपस्थापितस्याङ्गापूर्वस्य शब्दं विनैवाध्याहृतत्वात् शब्दानुपस्थापितेन प्रधानापूर्वेणान्वयो न सम्भवति "शाब्दी ह्याकाङ्क्षा" इतिन्यायात्।

ननु माभूत्समिदादियागजन्यापूर्वस्य प्रधानापूर्वेणान्वयः अधिकारापूर्वेण त्वन्वयो भविष्यति अधिकारापूर्वस्य " सर्वेभ्यः कामेभ्यः " इति वाक्येनैवोपस्थापितत्वादित्याशङ्क्याह— न हीति। समिदादीनामप्यऽपूर्वमस्त्येवेति तेषां स्वापूर्वेऽन्वयात् कथमधिकारापूर्वेणान्वयः स्यादिति भावः। अवघातादिवदिति—अवघातादीनां दृष्टप्रयोजनकत्वात् स्वकीयमपूर्वमेव नास्तीत्यऽवघातादीनामधिकारापूर्वेणान्वयस्य युक्तत्वात्तत्रावहन्त्यादयोऽधिकारापूर्वान्वितं स्वार्थमभिदधतीति युक्तं न चैवमत्रास्तीत्यर्थः। उपसंहरति—तस्मादिति। ईदृशेषु=" सर्वेभ्यः कामेभ्यः " इत्यादिषु। विधिशब्दस्याध्याहारे तु प्रधानापूर्वस्य शब्देनोपस्थितत्वात्तेन सह शब्देनोपस्थापितस्य समिदाद्यपूर्वस्याऽन्वयः सम्भवत्येव।

विध्यर्थाऽध्याहारासम्भवमप्याह—कथं चेति। अयं भावः—अध्याहारो नामाऽध्याहार्यस्य पदार्थस्य बुद्धावाऽऽरोप एव तदुक्तम्—" कः पुनरय-

**दाभासेन वा बुद्धावारोपयितुमशक्यत्वेनाभिमतस्य बुद्धिसंनिधानात्मकोऽध्याहारोऽश्रुतविधिशब्दकेष्वधिकारवाक्येषु वा. उत्पत्तिवाक्येषु–"यदाग्नेयोऽष्टाकपालोऽमावास्यायाम्" इत्यादिषु वा शक्यते ?, इत्यकामेनापि शब्दाध्याहारोऽङ्गीकर्तव्य इत्यास्तां तावत् ॥**

**"अभावोऽपि प्रमाणाभावो नास्तीत्यस्यार्थस्याऽसं-**

---

मध्याहारो नाम ? अधिकत्वस्य बुद्धौ निवेशनम् " इति । तत्र लोके-प्रमाणेन प्रमाणाभासेन वाऽनुभूतस्य घटादेः शुक्तिरजतादेश्च बुद्धावारोपः सम्भवति न त्वननुभूतस्यापि, विध्यर्थश्च सर्वथाऽलौकिकत्वादननुभूत इति कथं तस्य बुद्धावारोपस्तदात्मकश्चाध्याहारः स्यात् ? । अलौकिकत्वादेव हि विध्यर्थो बुद्धावारोपयितुमशक्य इति राद्धान्तः । तथा चाऽश्रुतविधिशब्दकेष्वधिकारवाक्येषु–" सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ " इत्यादिषु " यदाग्नेयोऽष्टाकपालोऽमावास्यायाम् " इत्यादिषूत्पत्तिवाक्येषु च विध्यर्थस्याध्याहारासम्भवाद् विधिशब्दस्यैवाध्याहारः कर्तव्य इत्यकामेनापि=शब्दाध्याहारमनिच्छतापि प्रभाकरेण शब्दाध्याहारोऽङ्गीकर्तव्यः । उक्तं च वार्तिकेऽपि—

" तामर्थगोचरां केचिदपरे शब्दगोचराम् । (ताम् = अर्थापत्तिम्)
कल्पयन्त्याऽऽगमाच्चैनामभिन्नां प्रतिजानते ॥
(अर्थाध्याहारखण्डनम्) सविकल्पकविज्ञानैः शब्दः पूर्वं प्रतीयते ॥" इत्यादि ।

अन्यत्राप्युक्तम्–"नसोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।" इति ।

॥ इत्यर्थापत्तिपरिच्छेदः समाप्तः ॥

इन्द्रियव्यापारस्याधिकरणग्रहणेनैवोपक्षीणत्वेनेन्द्रियस्याभावाऽग्राहकत्वाद्-ऽभावग्राहकमनुपलब्ध्याख्यं षष्ठं प्रमाणं निरूपयितुं भाष्योक्तं तल्लक्षणं संगृह्णाति–अभावेति । अभावः=अनुपलब्धिः । प्रमाणाभावः=पूर्वोक्तप्रत्यक्षादिपञ्चप्रमाणेभ्यो भिन्नो नास्तीति शब्देन बोध्यस्यार्थस्याभावाख्यस्य ग्राहक इति शेषः । अभावस्येन्द्रियेन संनिकर्षः सम्बन्ध एव नास्तीति नाऽभावस्येन्द्रियग्राह्यत्वमत एव षष्ठप्रमाणस्वीकार इत्यभिप्रायेणाह–असंनिकृष्टस्येति किं वा पूर्ववत्–असंनिकृष्टस्य नाम प्रमाणान्तरेणाऽप्रतीतस्येत्यर्थः। अभावग्राहकत्वात्प्रमाणस्याप्यभाव इति प्रमाणाभाव इति च नाम । उक्तं च वार्तिके—

निकृष्टस्य" इति। कथं पुनः प्रमाणाभावः प्रमाणलक्षणं विपरीतत्वात् ?। पूर्वोक्तसदुपलम्भकप्रत्यक्षादिप्रमाणपञ्चकाभिप्रायोयं प्रमाणशब्दः तदभावश्च षष्ठस्य लक्षणमिति नानुपपत्तिः। किमस्य प्रमेयम् ?, उक्तम्–"नास्तीत्यर्थस्य" इति। सर्वं हि वस्तु सदसदात्मना द्विविधं तद् यदा यत्र सद्रूपेण वर्तते घटादि तत्तदा तत्र प्रत्यक्षादिभिरस्तीति प्रतीयते। यत्र त्वऽसद्रूपेण वर्तते तत्र सद्रूपेण बोधकानां प्रत्यक्षादीनां सद्रूपबोधनायोत्पत्तुं योग्यत्वे सत्यपि योऽनुत्पादो द-

---

" प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता॥" इति।

ननु यथा घटाभावस्य घटत्वं नोपपद्यते तथा प्रमाणाभावस्यापि प्रमाणत्वं नोपपद्यते इति प्रमाणाभावः प्रमाणलक्षणम्=प्रमाणस्वरूपं कथं स्यादित्याशङ्कते–कथमिति। हेतुमाह–विपरीतत्वादिति, प्रमाणप्रमाणाभावयोः परस्परं विरोधादैक्यं न सम्भवतीत्यर्थः। उत्तरमाह–पूर्वोक्तेति, सदुपलम्भकम्=भावपदार्थग्राहकम्। प्रमाणशब्देन भावपदार्थग्राहकं प्रत्यक्षादिप्रमाणपञ्चकमुच्यते तदभावः=प्रत्यक्षादिप्रमाणपञ्चकभिन्नत्वं किं वा भावपदार्थाऽग्राहकत्वं षष्ठस्य=अस्यानुपलब्ध्याख्यस्य प्रमाणस्य लक्षणम्=स्वरूपमितिरीत्या न प्रमाणाभावस्य प्रमाणत्वानुपपत्तिः। प्रमाणाभाव इत्यनुपलब्धेर्नामान्तरमेव न तु प्रमाणत्वावच्छिन्नप्रतियोगिताकाऽभाव इति भावः। अस्य प्रमेयं पूर्वपक्षी पृच्छति–किमस्येति। उत्तरमाह–उक्तमिति, यथा प्रत्यक्षादिना घटादिभावस्य ग्रहो भवति तथाऽनेन षष्ठेन प्रमाणेन घटाद्यऽभावस्य ग्रहो भवतीत्यऽभाव एवास्य प्रमेयः। अनुपलब्धिप्रमाणप्रवृत्तेः प्रकारं कालं चोपपादयति–सर्वमिति, यथा घटः स्वरूपेण सत् स्वाभावरूपेण चाऽसदित्येवं सर्वमेव वस्तु द्विविधं तत्र यदा घटः स्वरूपेण वर्तते तदा प्रत्यक्षादिभिः प्रतीयते यदा च घटः स्वाभावरूपेण वर्तते तदा सद्रूपबोधकानां प्रत्यक्षादीनां तत्तत्कारणकलापसत्त्वेनोत्पत्तेर्योग्यतायाः सत्त्वेपि योऽनुत्पादो दृश्यादर्शनादिपदवाच्यो भाष्ये च प्रमाणाभावशब्देनोक्तस्तेना ऽभावप्रमिति-

दृश्यादर्शन-योग्यानुपलम्भादिपर्यायो भाष्ये प्रमाणा-
भावशब्देनोक्तस्तेनैवेन्द्रियशब्दादिस्थानीयेन नास्ती-
ति प्रमीयते-भूतलेऽत्र घटो नास्तीति ।
यस्तु नास्तित्वमपन्हुत्य प्रमेयाभावात् षष्ठं प्रमाणं

करणभूतेन नास्तीति=घटोनास्तीत्येवं घटाद्यभावः प्रमीयते इत्येवमभावप्रमतये-ऽनुपलब्ध्याख्यं प्रमाणं सावकाशमित्यर्थः । इन्द्रियादिस्थानीयेनेति-यथा प्रत्यक्षे इन्द्रियं करणं शाब्दबोधे च शब्दः शब्दज्ञानं वा करणं तथाऽभावप्रत्यक्षेऽभावप्रमाणमेव करणमित्यर्थः । अभावश्च चतुर्विधो वार्त्तिक एवोक्तः-

"क्षीरे दध्यादि यन्नास्ति प्रागभावः स उच्यते ।
नास्तिता पयसो दध्नि प्रध्वंसाभाव इष्यते ॥
गवि योऽश्वाद्यभावस्तु सोऽन्योन्याभाव उच्यते ।
शिरसोऽवयवा निम्ना वृद्धिकाठिन्यवर्जिताः ॥
शशशृङ्गादिरूपेण सोऽत्यन्ताभाव उच्यते ॥" इति ।

ननु प्रमेयसत्त्वे एव तत्प्रतीत्यर्थं प्रमाणं स्वीक्रियते न चाभावो नाम कोपि पदार्थोस्त्यधिकरणातिरिक्तो यत्प्रतीत्यर्थमिदं षष्ठं प्रमाणं स्वीक्रियेत ? तदुक्तम्-

"तत्र पञ्चविधं मानं प्रत्यक्षमनुमा तथा ।
शास्त्रं तथोपमानार्थापत्ती इति गुरोर्मतम् ॥
अभावाख्यं प्रमाणं ये षष्ठमाहुर्मनीषिणः ।
तेषां प्राभाकरैरेवं प्रत्यादेशोयमुच्यते ॥
प्रमाणं खलु कस्यापि प्रमेयस्यावबोधकम् ।
तस्याऽभावस्य किं तावत् प्रमेयमिति चिन्त्यताम् ॥
ननु नास्तीति बुद्धौ तु बोध्यं यदुपकल्पितम् ।
अभावस्य प्रमाणस्य तत् प्रमेयं भविष्यति ॥
(परिहारमाह-) तत्र तन्मात्रधीर्येयं दृश्ये च प्रतियोगिनि ।
नास्तित्वं सैव भूभागे घटादिप्रतियोगिनः ॥
मेयाभावे ततो मानमभावाख्यं कथं भवेत् ॥
अभावव्यवहारोपि निश्शङ्कगमनादिकः । (कण्टकाभावज्ञानप्रयुक्तः)

१ भाट्टचिन्तामणिकारेण तु प्रागभावो न स्वीकृतः ।

**नास्तीत्याह तस्य दृश्यादर्शनानन्तरं नास्तीह भूतले घट इत्येवमुपजायमानस्य ज्ञानस्य किमालम्बनम् ?। न भूतलम्, सत्यपि घटे प्रसङ्गात् । तथा–गवि घोऽश्वो न भवतीति प्रत्ययो रूपे च रसो न भवतीति तस्य किमालम्बनम् ?। न गोरूपम्, तस्य प्रतियोग्यऽनपेक्षप्रतीतिकत्वात् । अश्वो न भवतीति ज्ञानस्य प्रतियोग्यऽपेक्षत्वात् । गोरूपालम्बनत्वे च सिंहादावऽश्वोयं न भवतीति प्रत्ययो न स्यात् गोरूपस्य तत्राभावात् ।**

---

तन्मात्रानुभवेनैव यथोक्तेन प्रवर्तते ॥
यदा यत्र च दृश्यत्वं सत्यप्यनुपलम्भनम् ।
तदऽभावव्यवहृतिस्तदानीं संप्रवर्तते ॥" इति ।

इत्याशङ्क्याह– यस्त्विति । यः–प्रभाकरादिरभावाऽभाववादी, नास्तित्वम्=अभावपदार्थम्, अपन्हुत्य प्रमेयाभावात् षष्ठं प्रमाणं नास्तीत्याह तस्य मते दृश्यादर्शनानन्तरम्=दर्शनयोग्यस्य घटादेरऽदर्शनानन्तरम्=अनुपलब्ध्यनन्तरं जायमानस्य घटो नास्तीत्याकारस्य ज्ञानस्य किमालम्बनम्=को विषयः ? इत्युच्यताम् । न च तस्मिन् ज्ञाने भूतलस्य विषयत्वं सम्भवति सत्यपि घटे भूतलस्य विद्यमानत्वेन घटो नास्तीति ज्ञानस्य प्रसङ्गादित्याह–नेति । अन्योन्याभावस्य विषयं पृच्छति– तथेति, गौरश्वो न भवतीति ज्ञानं भवत्येव यद्यभावो न कोपि पदार्थस्तर्ह्यस्य ज्ञानस्य को विषय इत्युच्यताम् । ननूक्तज्ञाने गोरूपस्यैव विषयत्वमस्त्वित्याशङ्क्याह– न गोरूपमिति, गोरूपज्ञानं तु प्रतियोगिज्ञानस्यापेक्षां न करोति, गौरश्वो न भवतीति ज्ञानं तु प्रतियोगिनोऽश्वस्य ज्ञानापेक्षां करोत्यऽभावज्ञानस्य प्रतियोगिज्ञानसापेक्षत्वादिति नात्रगोरूपस्य विषयत्वम्, गोरूपस्यैव विषयत्वे त्वश्वज्ञानं विनापि गौरश्वो न भवतीति ज्ञानं स्यान्न चैवमस्तीत्यर्थः । एवं रूपं रसो न भवतीत्यत्रापि ज्ञेयम् । गौरश्वो न भवतीत्यत्र गोरूपस्य विषयत्वे दोषान्तरमाह– गोरूपेति, अश्वो न भवतीत्यस्य ज्ञानस्य गोरूपालम्बनत्वे=गोरूपविषयकत्वे सिंहादौ गोरूपस्याभावेन विषयस्याऽभावात् सिंहोऽश्वो न भवतीति प्रतीतिर्न स्यात्, गोरूपस्य=गवाकृतेः । तत्र=सिंहादावऽभावात् ।

अथ योऽश्वाद्भेदो गवादिष्वनुस्यूतः सोऽस्यालम्बनमित्युच्यते ? । कोऽयं भेदो नाम ?, यदीतरेतराभावः ? समाश्रितस्तर्ह्यभावः । अथ पृथक्त्वं नाम गुणविशेषो भेद इत्युच्यते ?, ततस्तस्य द्रव्यगतत्वाद् गुणेषु रूपादिषु 'रसो न भवति रूपम्' 'रूपं न भवति रसः' इतीतरेतराभावप्रत्ययो न स्यात् ।

यस्तु वैयात्याद् 'भूतलप्रतीतिव्यतिरेकेण घटो नास्तीत्येवंविधा प्रतीतिरेव नास्ति' इति वदति, स भू-

---

ननु गौरश्वो न भवतीति ज्ञानस्याश्वभिन्नेषु सर्वेषु गवादिष्वनुस्यूतः=वर्तमानो योऽश्वप्रतियोगिको भेदः स एव विषय इत्याशङ्कते—अथेति । अत्र यदि भेदपदार्थ इतरेतराभाव एव तर्ह्यभावस्वीकार्यापत्तेरिष्टापत्तिरेवेत्याह—यदीति । ननु नेतरेतराभावो भेदो येनाभावस्वीकारापत्तिः स्यात् किं तु गुणविशेषरूपं पृथक्त्वमेव भेद इत्युच्यत इत्याशङ्क्याह—अथेति । परिहारमाह—तत इति गुणस्तु द्रव्यमात्रवृत्तिर्भवति न गुणादिवृत्तिरपि तत्र पृथक्त्वस्यैव गुणविशेषस्य भेदस्वरूपत्वस्वीकारे 'रूपं रसो न भवति' इत्यादिः प्रतीतिर्न स्यादेव न चैवमस्तीत्यर्थः ।

ननु यदि घटो नास्तीत्यत्र भूतलप्रतीतिभिन्ना काप्यऽभावविषया प्रतीतिः स्यात्तदा तदुपपत्त्यर्थमऽभावः स्वीक्रियेतापि नैवमस्तीत्याशङ्क्याह—यस्त्विति । वैयात्यात्=धार्ष्ट्यात् । घटो नास्तीति शब्देन घटाभावो ग्राह्यः । घटो नास्तीत्येवंविधा प्रतीतिरिति—घटाभावविषयकं ज्ञानमित्यर्थः । उक्तं च प्राभाकरैः—" न भावातिरिक्तोऽभावोङ्गीक्रियते भाव एव त्वेकाकी सद्वितीयश्चेति द्वयीमवस्थामनुभवते, तत्रैकाकी भावः स्वरूपमात्रमुच्यते । भूतलादिभावानामवगतिः—एका तावद् भावान्तरसंसृष्टविषया, अपरा च तदेकविषया, यापि च सा तदेकविषया बुद्धिः सा च द्वेधा—तदन्येषु प्रतियोगिषु बुद्धिः सैव तेषां प्रतियोगिनामऽभाव इत्युच्यते । अतो दृश्यप्रतियोगिविषया तदेकोपलब्धिरेव वरमभावोस्तु ।" इत्यादि । उक्तं प्रतिबन्द्या परिहरति—स इत्यादिना । यदि सकललोकप्रसिद्धाया अप्यभावप्रतीतेरपन्हवः क्रियते तदा भूतलादिप्रतीतेरपि किं नापन्हवः क्रियते ? इति कटाक्षः । अविशेषात्=लोक-

तलादिप्रतीतिमप्यऽपन्हुवीत, अविशेषात् । घटोत्र भूतले नास्तीति व्यवहारस्य किं कारणम् ?, दृश्ये घटे यद्भूतलमात्रविषयं ज्ञानं तदस्य कारणमिति चेत् ?, तथा सति पटवद्भूतलोपलम्भे घटो नास्तीतिव्यवहारो न स्याद् भूतलमात्रोपलम्भाभावात् । घटविविक्तभूतलोपलम्भ इति चेत् ?, कोयं घटविवेकः ?, यदि भूतलरूपमेव, घटवत्यपि प्रसङ्गः। घटसंयोगाभावश्चेत् ?, अङ्गीकृतस्तर्ह्यऽभावः ।

---

प्रसिद्धत्वाप्रसिद्धत्वादीनामुभयत्रैवाऽविशेषात् ।

सिद्धान्ती पृच्छति–घटोत्रेति । यत्रऽभावः कोपि पदार्थो नास्ति तदा घटो नास्तीति व्यवहारस्य किं कारणमित्युच्यताम् । भूतलमात्रविषयकं ज्ञानं वा घटविविक्तभूतलज्ञानं वा कारणमिति विकल्प्य प्रथममनुवदति–दृश्येति, घटस्य दृश्यत्वमस्ति तथापि यद् घटस्य दर्शनं ज्ञानं न भवति किं तु भूतलमात्रज्ञानं भवति तदेव ज्ञानं अस्य=घटो नास्तीति व्यवहारस्य कारणमित्यर्थः । अत्र दोषमाह–तथासतीति, यदि घटो नास्तीति व्यवहारस्य भूतलमात्रज्ञानमेव कारणं तदा पटविशिष्टभूतलज्ञानकाले भूतलमात्रज्ञानाभावाद् घटो नास्तीति व्यवहारो न स्यादेव, न चैवमस्ति पटविशिष्टभूतलोपलम्भेपि घटो नास्तीति व्यवहारस्य संभवादित्यर्थः । द्वितीयमनुवदति–घटविविक्तेति । उक्तं च–“ न तदेकविषयबुद्धिमात्रमभावोऽभिधीयते किं तु दृश्ये प्रतियोगिनि या तदेकविषया बुद्धिः सा तदभावो व्यपदिश्यते तेन यस्मिन् प्रतियोगिनि दृश्ये या तदेकविषया बुद्धिः सा तदभाव इति विशेषव्यपदेशः प्रवर्तते, तेन 'इहभूतले घटो नास्ति' इति किमुक्तं भवति ? दृश्येपि घटे भूतलमात्रमुपलभ्यत इति ।” इत्यादि । अत्रापि को नाम घटविवेकः ? किं भूतलरूपं वा ? घटसंयोगाभावो वेति विकल्प्य प्रथम आह–यदीति, यदि भूतलरूपमेव घटविवेकस्तदा घटवत्यपि भूतले भूतलरूपसत्त्वेन घटविवेकसत्त्वाद् घटो नास्तीति व्यवहारः स्यादेव न चैवं भवति । द्वितीय आह–घटसंयोगेति, घटसंयोगाभावोप्यभाव एवेति तस्याङ्गीकारेऽङ्गीकृतोऽभावपदार्थ इत्यर्थः ।

स्यान्मतम्-यद्ऽभाववादिनोऽभावज्ञानस्य कारणं तदेवास्माकं व्यवहारकारणं भवतु? इति, नैवं वक्तुं शक्यम्-मम हि दृश्यादर्शनमऽभावज्ञानकारणम्, अदर्शनं च दर्शनाभावो न चासौ भवताऽङ्गीकृतः, अभावाभ्युपगमप्रसङ्गात् । प्रमाणाभावाङ्गीकारे वा किमऽपराद्धं प्रमेयाभावेन ? ।

ननु प्रथमं प्रत्यक्षेण भूतलं गृहीत्वा पश्चादभावो बोद्धव्यस्तत्राऽभावज्ञानात् प्राग् यादृशं भूतलज्ञानं तादृशादेव व्यवहारो भवतु ? । तदिदमुक्तोत्तरम्, तथा हि-यस्यामवस्थायां भूतलस्वरूपज्ञानं घटतदभावयोश्चाऽज्ञानम्=ज्ञानाभावस्तेन घटतदभावज्ञानशून्यं भूतलज्ञानं तस्यामवस्थायामस्माभिरुपेयते तदेव च भू-

---

ननु तवाऽभाववादिनोऽभावज्ञानस्य यदेव कारणं तदेवास्माकमपि घटो नास्तीति व्यवहारस्य कारणमस्तु किमऽतिरिक्तकारणकल्पनयेत्याशङ्कते-स्यान्मतमिति । परिहरति- नैवमिति । अत्र हेतुमाह-ममेति, मम मतेऽदर्शनमेवाभावज्ञानकारणं न चासौ भवता स्वीक्रियते अदर्शनस्य दर्शनाभावरूपत्वादित्यर्थः । यदि च दर्शनाभावः प्रमाणाभावस्वरूपस्त्वया घटो नास्तीति व्यवहारकारणत्वेन स्वीकृतस्तदा प्रमेयाभावस्वीकारे को दोषो यत् प्रमेयाभावो न स्वीक्रियत इत्याह-प्रमाणाभावेति ।

ननु त्वया यद् भूतलवृत्तेर्घटाभावस्य ज्ञानं स्वीकृतं तत्राधिकरणज्ञानानन्तरमेवाधेयज्ञानं भवतीति घटाभावज्ञानात्प्रथमं भूतलज्ञानं जायते इति स्वीकार्यं ततश्च तव मतेऽभावज्ञानात्पूर्वं यादृशं भूतलज्ञानं भवति तादृशमेव भूतलज्ञानं मन्मते घटोनास्तीति व्यवहारस्य कारणमस्तीति न काचिदनुपपत्तिरित्याशङ्कते-नन्विति । अस्योत्तरमनुपदमेव प्रदत्तम् "मम हि दृश्यादर्शनम्" इत्यादिनेत्याह-तदिदमिति । उक्तमेव विशदयति-तथा हीत्यादिना । स्पष्टोयं ग्रन्थः । अज्ञानपदार्थमाह ज्ञानाभाव इति । तेन=घटतदभावयोरज्ञानेन, अयं च घटतदभावज्ञानशून्यत्वे हेतुः, यतो घटतदभावयोर्ज्ञानं नास्त्यऽतो घटतदभावज्ञानशून्यं भूतलज्ञानमुपेयते=स्वीक्रियते । यस्यामवस्थयां भूतलस्वरूप-

तलमात्रवेदनमित्युच्यते ।

"स्वरूपमात्रं दृष्ट्वा च" इत्यादिषु मात्रशब्देन हि घट-तदभाववेदनयोरभाव उच्यते,—भूतलमात्रं ज्ञायते न घटस्तदभावो वेत्यर्थः । तेन यदि भवानपि घटादिज्ञानाभावयुक्तं भूतलज्ञानमङ्गीकुर्यात् ततो ज्ञानाभावाङ्गीकाराद् घटाभावोप्यङ्गीकर्तव्य इत्युक्तमेव । तेन नैवं भ्रमितव्यम्—'अभाववादिनापि "स्वरूपमात्रं दृष्ट्वा च (ऽपि) पश्चात् किं चित्स्मरन्नपि" इति वदताऽभावज्ञानातिरेकेण तन्मात्रवेदनमङ्गीकृतम्, तदेव दृश्ये प्रतियोगिनि नास्तीतिव्यवहारकारणत्वान्नास्तीतिश-

---

ज्ञानं घटतदभावयोश्च ज्ञानाभावस्तस्यामऽवस्थायां भूतलज्ञानमित्युपेयते इत्यन्वयः । तदेव=घटतदभावज्ञानशून्यं यद् भूतलज्ञानं तदेव भूतलमात्रज्ञानमित्युच्यते ।

घटतदभावज्ञानशून्यमेव यद् भूतलज्ञानं तदेव भूतलमात्रवेदनमित्यत्र वार्तिकं प्रमाणयति—स्वरूपमात्रमिति । वार्तिकोक्तमात्रपदव्यावर्त्यमाह—मात्रशब्देनेति । वार्तिकाभिप्रायमाह—भूतलमात्रमिति । प्रकृतोपयोगमुपसंहारं वाह—यदीति । उक्तमेवेति—" प्रमाणाभावाङ्गीकारे वा किमपराद्धं प्रमेयाभावेन " इति(३२८)। किं चाऽभावनिषेधस्याभावाऽभाव एव विषय इत्यभावस्वीकार आवश्यक एव, अन्यथाऽभावाभावस्याप्यऽस्वीकारेऽभावस्वीकार एव प्राप्त इत्युभयतः पाशारज्जुः ।

ननु " स्वरूपमात्रं दृष्ट्वापि " इति वदतो वार्तिककारस्य त्वऽयमेवाभिप्रायः प्रतीयते यत्—अभावज्ञानं विनैव भूतलस्वरूपं प्रथमं प्रतीयत इति, तथा चाभावज्ञानातिरेकेण यद् भूतलस्वरूपज्ञानं वार्तिककृदभिमतं तदेव घटो नास्तीति व्यवहारस्य कारणमस्तु तदेव च नास्तीति शब्दस्य वाच्यमिति प्रतिवादिन इत्येवं जातं भ्रमं निराकर्तुमाह— तेन नैवमिति । भ्रमविषयमाह—अभाववादिनेत्यारभ्य, अभिधेयमित्यन्तेन । प्रतियोगिनीति विषयत्वं सप्तम्यर्थः—दृश्यघटलक्षणप्रतियोगिविषयको यो नास्तीतिव्यहारस्तत्कारणत्वाद् यद् भूतलस्वरूपमात्रविज्ञानं तदेव नास्तीतिशब्दाभिधेयमित्यन्वयः । उक्ताभिप्रा-

ब्दस्याभिधेयम्' इति, तस्य हि ज्ञानाभावाभिप्रायो मात्रशब्दः, न चासौ भवतोऽस्ति, अतो मात्रशब्दस्या-ऽर्थाभावाद् भूतलवेदनमेव कारणमिति वक्तव्यं ततश्च घटवत्यपि प्रसङ्ग इति स्थितं दूषणम् ।

अथ 'भावे देशान्तरस्थे देशान्तरग्रहणं कारणम्'

---

यस्य भ्रमत्वमुपपादयन्नाह-तस्येत्यादिना । तस्य=अभाववादिनो वार्तिककारस्य " स्वरूपमात्रं दृष्ट्वापि " इत्यत्रत्यो मात्रशब्दो ज्ञानाभावपरोऽस्ति-तथा च " स्वरूपमात्रं दृष्ट्वा " इत्यस्य 'घटतदभावयोर्ज्ञानाभावपूर्वकं यद् भूतलस्वरूपज्ञानं तद् भूतलस्वरूपमात्रज्ञानम्' इत्यर्थो ज्ञेयः, न चासौ=अभावो भवता स्वीकृतोऽस्ति येन तव मते मात्रशब्दस्य सार्थक्यं स्यात्, तथा च तव मते मात्रशब्दस्याऽऽनर्थक्याद् भूतलस्वरूपज्ञानमेव नास्तीतिव्यवहारस्य करणं वक्तव्यं भूतलस्वरूपज्ञानं तु घटे सत्यपि भवत्येवेति घटे सत्यपि घटोनास्तीतिव्यवहारः स्याचत्कारणस्य भूतलस्वरूपज्ञानस्य सत्त्वादित्याह-न चेत्यादिना । वार्तिके यथा—

" गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् ।
मानसं नास्तिताज्ञानं जायतेऽक्षाऽनपेक्षणात् ॥
स्वरूपमात्रं दृष्ट्वापि पश्चात् किंचित्स्मरन्नपि ।
तत्रान्यनास्तितां पृष्टस्तदैव प्रतिपद्यते ॥" इति ।

व्याख्या चास्य-" स्वरूपेति-यदा हि कश्चित्प्रातःकाले कंचिद्देशमऽध्यासीनस्तत्र व्याघ्रादिकमदृष्ट्वा तदस्मरणाच्च तदभावमप्यऽगृहीत्वा देशमात्रं दृष्ट्वा देशान्तरगतो मध्यन्दिने पृच्छ्यते-'कश्चित्तस्मिन् देशे प्रातःकाले व्याघ्रो गजः सिंहः पार्थिवो वा समागतः ?' इति स तदा तं देशमवगतत्वात् स्मरन्नपि तत्र देशेऽन्येषां व्यघ्रादीनामभावं प्रागऽगृहीतं तदैव गृह्णाति, न च मध्यन्दिने समये प्रातःकालिकस्याभावस्यानिन्द्रियसंनिकृष्टस्य सम्भवति प्रत्यक्षेण ग्रहणं तस्येन्द्रियसंनिकृष्टवर्तमानविषयत्वात् " इत्यादि, विस्तरस्तु तत्रैव द्रष्टव्यः । तस्य=प्रत्यक्षस्य ।

ननु भावे=प्रतियोगिनि घटे देशान्तरस्थे सति यद्देशान्तारस्य=भूतलस्वरूपस्य ज्ञानं तदेव नास्तीतिव्यवहारस्य कारणमस्त्वित्याशङ्कते-अथेति ।

इति मतम् ?, ततः शाबलेयस्थितं गोत्वं धावलेये नास्तीति व्यवह्रियेत, । स्थूणान्तरस्थितश्च वंशः स्थूणान्तरेऽनुस्यूतोपि तत्र नास्तीति व्यवहर्तव्यः स्यात्, अतोऽत्राभाव एव नास्तीतिव्यवहारकारणम्, नान्यत्र सद्भावः।

स्मर्यमाणे घटे भूतलवेदनं नास्तीतिव्यवहारकारणमिति चेत् ?, न, गृह्यमाणस्यापि पार्श्वदेशेष्वभावव्यवहारात्। संप्रत्यानीतस्य च घटस्य गृह्यमाणस्यैव 'प्रागयमिह नासीत्' इति प्राक्कालीनाभावव्यवहारात्।

ननु भवन्मते प्रमीयमाणस्य घटस्य कथं प्राक्काली-

---

अतिव्याप्त्या परिहरति—तत इति। यद्यपि गोत्वं गोव्यक्तिमात्रेऽस्ति तथापि तत्रानेनानुगमेन भावे=गोत्वे देशान्तरस्थे=शाबलेयस्थे सति देशान्तरस्य=गोत्वाधिकरणरूपधावलेयस्य ग्रहणकाले धावलेये गोत्वं नास्तीतिव्यवहारः स्यात्, न चैवं सम्भवति। तथैकस्थूणायां वंशस्य ग्रहणे द्वितीयस्थूणायां वंशो नास्तीति व्यवहारः स्यान्न चैवं युक्तं तदाह—स्थूणान्तरेति। स्वमतमाह—अत इति। नास्तीतिव्यवहारस्याऽभाव एव तत्रस्थः कारणं न तु प्रतियोगिनोऽन्यत्र सद्भावः, अन्यथा शशशृङ्गे नास्तीतिव्यवहारो न स्याच्छशशृङ्गस्यान्यत्र सद्भावस्यैवाभावात्।

ननु घटस्मरणकालिकं यद् भूतलज्ञानं तदेव घटो नास्तीतिव्यवहारस्य कारणं तथा च नोक्तदोषो गोत्वादीनां धावलेयादिज्ञानकाले प्रत्यक्षत्वेन स्मर्यमाणत्वाभावादित्याशङ्कते— स्मर्यमाणेति। परिहरति—नेति। यत्र भूतले घटो गृह्यते तत्पार्श्वदेशेषु तु तस्य गृह्यमाणस्यापि घटस्य नास्तीति व्यवहारो भवति न च तदानीं घटस्य स्मर्यमाणत्वमस्तीत्यऽव्याप्तिदोषमाह—गृह्येति। दोषान्तरमाह—संप्रतीति, घटे इदानीमानीते सति तत्र गृह्यमाणेपि च सति प्राक्कालिको नास्तीति व्यवहारो भवत्येव—प्रागत्र घटो नासीदिति, तथा च स्मर्यमाणत्वाभावेप्यऽभावव्यवहारो भवत्येवेति दोषस्तदवस्थ एवेत्यर्थः।

ननु कथं भवन्मते प्रमीयमाणस्य=प्रमाविषयस्य घटस्य प्राक्कालिको योऽभावस्तस्य ज्ञानं स्यादित्याशङ्कते— नन्विति। घटस्येति प्रतियोगित्वं षष्ठ्यर्थः। प्रत्यक्षविषयस्य पदार्थस्याऽभावज्ञानं न संभवतीति स्थूलोऽभिप्रायः।

**नाभावज्ञानम् ? भावप्रमाणाभावो ह्यभावज्ञानकारणं न च प्रमीयमाणे प्रमाणाभावः सम्भवति। संप्रति प्रमीयमाणोपि घटः प्राक्कालसम्बन्धितया न प्रमीयते अतः प्राक्कालसम्बन्धगोचरप्रमाणानुदयात् तत्कालीनाभावज्ञानं युक्तमेवेति चेत् ?, न, अयोग्यत्वात्- न हि प्राक्कालसम्बन्धोऽधुना प्रमातुं योग्यः, योग्यप्रमाणाभावश्चाभावज्ञानकारणं न प्रमाणाभावमात्रम्। प्राक्काले तु योग्यस्यैव प्रमाणस्यानुदय आसीत्, न हि तदानीं घटाभावः सन्नपि प्रमितः प्रतियोगिनो घटस्याऽपरामर्शात् तदपेक्षत्वाच्चाऽभावज्ञानस्य, अत एव घटाभा-**

---

अत्र च नन्वित्यारभ्य वक्तव्यमिति पर्यन्तं पूर्वपक्षग्रन्थस्तत्र परिहारपक्षाः पूर्वपक्षिणो ज्ञेयाः । प्रमीयमाणघटप्रतियोगिकाभावज्ञानानुपपत्तावुक्तायां हेतुमाह-भावप्रमाणेति। भावस्य=घटादेर्यः प्रमाणाभावः=अनुपलब्धिः, स एव भवन्मतेऽभावज्ञानस्य कारणं न च घटे प्रमीयमाणे सति तद्विषयकप्रमाणाभावः संभवति, अन्यथा घटसत्त्वमेव न सिध्येतेत्याह- न चेति। ननु यद्यपीदानीं घटः प्रमीयते तथापीदानींतनकालसम्बन्धितयैव प्रमीयते- इदानीमत्र घटोऽस्तीति, न तु प्राक्कालसम्बन्धितया प्रमीयते तथा च प्राक्कालिकघटसम्बन्धविषयकस्य प्रमाणस्याऽजातत्वाद् युक्तं प्राक्कालिकाभावज्ञानमित्याह भाट्टमीमांसकः-संप्रतीति। पूर्वपक्षीप्राभाकरः परिहरति-नेति। हेतुमाह- अयोग्यत्वादिति। उपपादयति- नहीति। योग्यानुपलब्धिरेवाभावज्ञाने कारणं न त्वऽनुपलब्धिमात्रं प्राक्कालिकसम्बन्धश्च नेदानीं प्रमातुं योग्यो येनेदानीं तदभावो गृह्येतेत्यर्थः।

ननु प्राक्काले तु योग्यस्य=योग्यभूतस्य प्रमाणस्योदयो नासीदेवेति यद्यपि प्राक्काले घटाभावः प्रमितः स्यात्, तथापि न प्राक्काले घटाभावः सन्नपि प्रमितोऽभावज्ञानस्य प्रतियोगिज्ञानसापेक्षत्वात् प्रतियोगिनो घटस्य च प्राक्कालेऽपरामर्शात्=तद्विषयकप्रमाणस्यानुदयात् । अत एव=प्राक्कालिकघटाभावस्येदानीं प्रमातुमयोग्यत्वादेवेदानीं प्राक्कालिको घटाभावः स्मर्येत इत्याह-प्राक्काले त्विति । इत्येवं सिद्धान्तमतमनूद्य पूर्वपक्षी परिहरति-

वोऽधुना स्मर्यते, इति न युक्तम्—अप्रमितस्य स्मरणाऽयोगात्। यश्चायं प्राक्कालीनः प्रमाणानुदयः सोऽधुना प्रमाणोदयेन नष्टो नाऽभावज्ञानमुत्पादयितुमर्हति, उद्धृतमिव नेत्रं रूपबुद्धिम्।

अथ नष्टोपि प्रमाणानुदयः संप्रति परामृश्यमानोऽभावज्ञानं जनयेत्, ह्यस्तन इव धूमो विनष्टोपि संप्रति स्मर्यमाणो ह्यस्तनाग्निज्ञानम्?। स्यादेवं यदि प्रमाणाभावो ज्ञायमानतया मेयाभावं बोधयेत् लिङ्गमिव लिङ्गिनम्, न च तथा सम्भवति—अनवस्थाप्रसङ्गात्, प्रमेयाभावं हि ज्ञातुं प्रमाणाभावो ज्ञातव्यः

---

न युक्तमिति। अनुभूतस्यैव स्मरणं भवतीति प्राक्काले घटाभावस्यानुभूतत्वाभावान्न तत्स्मरणमिदानीमुपपद्यत इत्याह—अप्रमितस्येति। यच्चोक्तम्— "प्राक्कालसम्बन्धगोचरप्रमाणानुदयात्तत्कालीनाभावज्ञानं युक्तम्" इति तत् पुनरपि पराचष्टे—यश्चायमिति। सता हि प्रमाणानुदयेनाऽभावज्ञानं तव मते युक्तं न चेदानीं प्रमाणानुदयो वर्तते तस्य प्रमाणोदयेन नष्टत्वादेवेति कथं नष्टोप्यऽभावज्ञानमुत्पादयेदित्यर्थः। अत्रोदाहरणमाह—उद्धृतमिति। यथोद्धृतम्=उत्पाटितं नेत्रं न रूपज्ञानमुत्पादयतुमर्हति तथा प्रमाणानुदयोपि नष्टो नाभावज्ञानमुत्पादयितुमर्हति।

ननु यथा ह्यस्तनः=गतदिवसीयो नष्टोपि धूम इदानीं स्मर्यमाणः सन् गतदिवसीयवन्हिज्ञानमुत्पादयति तथा नष्टोपि प्रमाणानुदयः संप्रति स्मर्यमाणः सन्नऽभावज्ञानमुत्पादयितुमर्हति—यतोत्र पूर्वं घटो नासीदतोत्र पूर्वं घटाभाव आसीदित्याशङ्कते—अथेति। परिहरति—स्यादेवमिति, लिङ्गं तु ज्ञायमानमेव लिङ्गिनं बोधयति न स्वसत्तयैवेति युक्तं नष्टेनापि स्मर्यमाणेन धूमेनाग्निज्ञानमुत्पाद्यत इति, प्रमाणाभावस्तु न ज्ञायमान एव मेयाभावं बोधयति किंतु स्वसत्तयैव तथा चेदानीं प्रमाणानुदयस्यासत्त्वान्नाऽसता तेन स्मर्यमाणेन घटाभावज्ञानं सम्भवतीत्याह— न चेति। तथा= ज्ञायमानतया बोधकत्वम्। प्रमाणाभावस्य ज्ञायमानतया बोधकत्वेऽनवस्थास्यादित्यर्थः। अनवस्थामेवोपपादयति— प्रमेयाभावमिति। सः=प्रमाणाभावः। स्वाभिप्रा-

सोपि चाऽभावत्वादन्येनाभावज्ञानेन ज्ञातव्यः सोऽप्यन्येनेति न जन्मसहस्रेणापि घटाभावोऽवधार्येत। तस्मात् सत्तामात्रेणैव प्रमाणाभावोऽभावज्ञानमुत्पादयति नेत्रादिवदित्यङ्गीकर्तव्यम्, अतः प्रमीयमाणस्य घटस्य कथं प्राक्कालीनाभावप्रमितिरिति वक्तव्यम्।

उच्यते-सत्तामात्रेण ज्ञानाभावो ज्ञेयाभावं बोधयतीति सम्यगुक्तम्, अस्त्येव त्वऽधुना दृश्यमानस्यापि घटस्य प्राक्कालसंबन्धगोचरयोग्यज्ञानानुदयः, स हि प्राक्कालसंबन्धितया स्मर्तुं योग्यः सन्नपि न स्मर्यते, न चावश्यं प्रमाणाभाव एवाभावस्य बोधकः स्मरणज्ञानस्यापि योग्यत्वे सत्यऽनुदयोऽभावं बोधयत्येव, तेन संप्रति दृश्यमानोपि घटो यदि प्रागप्यासीत् ततोऽवश्यं

---

यमुद्घाटयति- तस्मादिति, यथा नेत्रादिकं न ज्ञायमानतयैव ज्ञानमुत्पादयति किं तु स्वसत्तयैव तथा प्रमाणाभावोपि स्वसत्तयैवाऽभावज्ञानमुत्पादयतीति स्वीकार्यं येनानवस्था न स्यात्, तथा च घटे प्रमीयमाणे प्रमाणाभावसत्त्वैव नास्ति तस्य प्रमाणोदयेन नष्टत्वादिति कथं तस्य प्रमीयमाणस्य घटस्य प्राक्कालीनोऽभावः प्रमीयेतेत्यर्थः। स्वचोद्यं समापयति-इति वक्तव्यमिति।

संप्रति सिद्धान्त्युत्तरमारभते-उच्यते इत्यादिना। पूर्वपक्षिणोक्तं किं चित्स्वीकरोति-सत्तामात्रेणेति। प्राक्कालिकज्ञेयाभावज्ञानोपपादयनाय ज्ञानाभावसत्तामुपपादयति-अस्त्येवेत्यादिना। घटस्येदानीं दृश्यमानत्वेपि प्राक्काले तु संबन्धो नासीदेवेति प्राक्कालसंबन्धगोचरो यद् योग्यं ज्ञानं तस्यानुदयोस्त्येव-इदानीं प्रमाणोदयसत्त्वेपि प्राक्कालिकस्य ज्ञानानुदयस्यापि सत्त्वे विरोधाभावात् कालभेदेन सर्वत्रैव भावाभावयोरुपपत्तेरिति भावः। ज्ञानानुदयसत्त्वे हेतुमाह-सहीति, सः=घटः प्राक्कालसम्बन्धितया स्मर्तुं योग्योपि यन्न स्मर्यते तस्माद् घटविषयकस्मरणस्यानुदयः संप्रत्यस्त्येवेत्यर्थः। ननु भवतु स्मरणानुदयस्तेन किं प्रयोजनमित्याशङ्क्याह- न चेति। स्मरणानुदयस्याप्यऽभावबोधकत्वात् तस्य च विद्यमानत्वात्तेनाभावज्ञानोत्पत्तिरुपपद्यते इति प्रयोजनमित्यर्थः। स्वाभिप्रायमाह-तेनेति। आसीत्=भवेत्। एवं सत्यपि=

तत्र स्थितेन प्रमितः स्यात् प्रमितश्चाधुना स्मर्तव्यः स्यात्, एवं सत्यपि न स्मर्यते–सोयं स्मर्तव्यविषयस्मरणानुदयः संप्रति विद्यमानः संप्रतितनं प्राक्कालीनाभावविषयं विज्ञानं जनयतीति न किंचिदनुपपन्नम्। भाष्ये च प्रमाणाभावशब्दः स्मरणाभावस्याप्युपलक्षणार्थः, तथा वार्तिकेपि। यद्वा प्रमाणस्य स्मरणफलत्वात् तदभावोपि फलतः प्रमाणाभाव एवेति शक्यते वक्तुम्।

ननु न सत्तामात्रेण योग्यानुपलब्धेरभावबोधकत्वं यु-

---

स्मर्तुंयोग्ये सत्यपि। स्मर्तव्येति–स्मर्तव्यो यो घटस्तद्विषयस्य स्मरणस्यानुदयो वर्तमान एवास्तीति तेनाभावज्ञानमुपपद्यत एवेत्यर्थः। ननु स्मरणाभावेनाप्यऽभावज्ञानं जायत इत्यत्र किं प्रमाणमित्याशङ्क्याह–भाष्येति। ननु भाष्ये तु "प्रमाणाभावः" इत्येवोक्तं तत्कथं स्मरणाभावोपि भाष्यकाराभिप्रेत इति ज्ञातमित्याशङ्क्याह–वार्तिकेति। ननु वार्तिकेपि न शब्देन स्मरणाभावस्याऽभावज्ञानं प्रति कारणत्वमुक्तं किं तु व्यञ्जनयेति वक्तव्यं न च तत्र प्रमाणमस्तीत्याशङ्क्याह– यद्वेति, प्रमाणाभावस्याऽभावज्ञानकारणत्वे सिद्धे प्रमाणस्य यत्कार्यं स्मरणं तदभावस्याप्यऽभावज्ञानकारणत्वं फलतः=कार्यकारणयोरभेदाद् युक्तमेव यतः तदभावः=स्मरणाभावः प्रमाणाभाव एव। स्मरणस्य च संस्कारद्वारा प्रमाणपदवाच्यानुभूतिफलत्वं (जन्यत्वम्) प्रसिद्धमेव।

ननु भवेत्स्मरणाभावस्याप्यभावग्राहकत्वं यद्यऽभावः किमपि पदार्थान्तरं स्यात् न चैवमस्ति किं तु दृश्यस्य प्रतियोगिनो घटस्य योऽभावः स तन्मात्रसंविदेव=भूतलमात्रज्ञानमेव न तदतिरिक्तं तत्त्वान्तरमित्याशङ्क्ते– नन्विति। एतदेवोपपादयितुं प्रथमं प्रमाणाभावस्य=योग्यानुपलब्धेर्न स्वरूपसत्या न वा ज्ञाताया अभावग्राहकत्वं सम्भवति येन तद्ग्राह्यस्याभावस्य तत्त्वान्तरत्वं स्यादिति व्युत्पादयति– न सत्तामात्रेणेत्यादिना। किं वा– भवेत्स्मरणाभावस्याभावबोधकत्वं यदि प्रथमं प्रमाणाभावस्याऽभावबोधकत्वं भवेत् न चैवं सम्भवतीत्याशङ्क्ते– नन्विति। प्रमाणाभावो योग्यानुपलब्धिरेव तस्याश्च स्वरूपसत्या अभावबोधकत्वमुच्यते किं वा ज्ञातायाः ?, न तावत्स्वरूपसत्या अन्वयव्यतिरेकविरोधादित्याह– नेति। अन्वयव्यतिरेकाभ्यामेव हि कार्य-

कम्—सत्यामपि तस्यां कदाचिदभावबुद्ध्यऽनुदयात्. असत्यामपि कदाचिदुदयात्। तथा हि— योऽङ्गुलीयकबुभुत्सया ससन्तमसापवरकदेशं हस्ताभ्यां सर्वतः परामृष्टवान् तस्य तावत् सर्वदेशपरामर्शाद् वस्तुतो योग्यानुपलब्धिर्जातैव, अथ च किं सर्वो देशः परामृष्टः किं वा कश्चिद्देशो न परामृष्टोऽपि स्यादिति सन्दिहानो योग्यानुपलब्धेरनिश्चयात् सत्यामपि तस्यां नाऽङ्गुलीयकस्याऽभावमवधारयति। कदा चित्तु सर्वतोऽपरामृश्यापि सर्वतः परामृष्टमिति भ्रान्त्या योग्यानुपलब्धिं निश्चित्याऽसत्यामेव तस्यां भ्रान्त्याऽङ्गुलीयकस्याऽभावमवधारयति। तस्माज्ज्ञाततयैव योग्यानुपलब्धिरभावज्ञानकारणमित्यभ्युपगन्तव्यं तथा चा-

---

कारणभावनिश्चयो भवति न चात्र तौ स्तः। अन्वयाभावमाह—सत्यामपीति। तस्याम्=योग्यानुपलब्धौ। व्यतिरेकाभावमाह— असत्यामपीति। उदयात्= अभावज्ञानस्योदयात्। नाऽभावबोधकत्वं युक्तमित्यनेनान्वयः। अन्वयाभावं व्युत्पादयति—योऽङ्गुलीयकेति। अङ्गुलीयकबोधेच्छया, सन्तमसं च तदपवरकं च सन्तमसापवरकं तेन सहितो योदेशः स ससन्तमसापवरकदेशस्तम्=गाढान्धकारयुतं देशम्। तस्य पुरुषस्य। जातैवेति—तेनाङ्गुलीयकान्वेषिणा हस्ताभ्यां तत्राङ्गुलीयकं नोपलब्धमिति योग्यानुपलब्धिर्जातैव तथापि नाङ्गुलीयकस्याभावमवधारयतीति योग्यानुपलब्धेः सत्त्वेप्यऽभावज्ञानाभावादन्वयाभावस्तदाह— अथ चेति। व्यतिरेकाभावमुपपादयति— कदाचिदिति। अपरामृश्येति—तस्मिन् सकले देशेऽन्वेषणस्याभावाद्वस्तुतो योग्यानुपलब्धिर्नास्त्येव तथापि सर्वान्वेषणभ्रान्त्याऽङ्गुलीयकाभावमवधारयतीति योग्यानुपलब्धेरसत्त्वेप्यभावज्ञानस्य जायमानत्वाद् व्यतिरेकाभावः। अन्वयव्यतिरेकौ च तदा स्यातां यद्यनुपलब्धिसत्त्वे एवाभावज्ञानं स्यात् अनुपलब्ध्यभावे चाभावज्ञानं न स्यात् न चैवमस्तीत्यर्थः। ज्ञाताया अपि योग्यानुपलब्धेरभावबोधकत्वं न सम्भवत्युक्ताऽनवस्थादोषप्रसङ्गादित्याह— तस्मादिति। अनवस्था च "प्रमेयाभावं हि ज्ञातुं प्रमाणाभावो ज्ञातव्यः" इत्येवमनुपदमेव प्रदर्शिता। स्वाभि-

ऽनवस्थाप्रसङ्गः। तस्मात्स्वसंवेद्या तन्मात्रसंविदेव दृश्यस्य प्रतियोगिनोऽभावो न तत्त्वान्तरम्।

ननु चाऽभावानङ्गीकारे तन्मात्रधीरपि न कदा चिन्निरूपयितुं शक्यते– न च भूतलधीरेव तन्मात्रधीः संसृष्टधियोपि तन्मात्रतापातात् तत्रापि भूतलावभासात्, अतो घटादिवेदनाभावे सति या भूतलधीः

---

प्रायमाह–तस्मात्स्वसंवेद्येति। स्वसंवेद्या=स्वयंप्रकाशा।

उक्तं च प्राभाकरैः–"प्रमाणान्तरवादिनापि प्रमाणान्तराभावः सत्त्वमात्रेणाऽभावबुद्धिजनको नाभ्युपगमनीयः किं तु विदितत्वेन तथा हि– कस्य चिद्वस्तुनः क्व चिददृष्टस्य पुनस्तस्मिन्नेव दृश्यमानस्य दर्शनकालभाविनमऽभावं प्रतिपद्यते– नासीदयमिहेति, तदा च तत्र दर्शनाभावो निवृत्तः (प्रतियोगिदर्शनात्) कथमभावावगमं जनयेत् ?। एवं चातिपतितस्यापि प्रमाणाभावस्याऽभावावगमकत्वाद् बुद्ध्यारूढस्य जनकत्वमङ्गीकरणीयम्, तत्र यदि प्रमाणाभावो यः सोऽभावरूपस्तदा तस्याप्यवगतिर्विदितादेव कारणादङ्गीकर्तव्येत्यनवस्था, यदि तु भावान्तरसंवित्तिरेव प्रमाणाभावोभ्युपगम्यते ततस्तस्याः स्वयं प्रकाशाया नाऽनवस्थाऽऽपद्यते, तथा च सति भावान्तरसंवित्तिरेव स्वयंप्रकाशा प्रमाणाभावरूपा प्रमेयाभावोस्तु किमपरेण प्रमेयाभावेन ?, नास्तीत्यादिशब्दप्रयोगोपि तस्यामेव स्वयंप्रकाशायां भावान्तरोपलब्धौ युज्यते, न पुनर्नास्तीत्यादिबुद्धिराविर्भवति बोध्यान्तरानवभासात्। अभावस्य तु स्वरूपावगतिर्नास्तीति न प्रमाणाभावादन्यः प्रमेयाभावः, प्रमाणाभावोपि च स्वरूपान्तराऽनवगमादेव न भावान्तरप्रमितेर्भिद्यते भावान्तरप्रमितिश्च स्वयंप्रकाशरूपा न प्रमेयतामनुभवतीति प्रमेयमऽभावाख्यस्य प्रमाणस्य नोपपद्यते प्रमेयाऽसद्भावाच्च न प्रमाणान्तरमवकल्पते इति स्थितम्।" इत्यादि।

ननु भूतेत्तन्मात्रधियैवाऽभावनिर्वाहो यदि चाभावस्यानङ्गीकारपक्षे तन्मात्रधीर्निरूपयितुं शक्येत न चैवं सम्भवतीति सिद्धन्ती शङ्कते– नन्वित्यादिना। उक्तमुपपादयति– न चेति। यदि भूतलधीरेव तन्मात्रधीस्तदा घटसंसृष्टभूतलज्ञानस्थलेपि भूतलावभासात्=भूतलप्रकाशस्य सत्त्वाद् भूतलधीरस्त्येवेति तत्रापि भूतलमात्रधीत्वं स्यात् न चैवं युक्तमित्यर्थः। अत इति–

सा तन्मात्रधीः, एवं च ज्ञानाभावाङ्गीकारादऽभावापन्हवोऽनर्थकः। कथं तर्ह्येतन्निरूपयितव्यम् ?, तदभिधीयते-घटाद्यभावोस्ति प्रमेयम्, योग्यप्रमाणानुदयश्च तस्य सत्तामात्रेणैव नेत्रादिवद् बोधको न ज्ञाततया यतोऽनवस्था स्यात्।

यत्तु सत्यामपि योग्यानुपलब्धावऽभावानवधारणम्, असत्यां चावधारणमिति, तत्तु योग्यत्वाऽज्ञानकृतम्-योग्यानुपलम्भो हि कारणं तत्र योग्यत्वं ज्ञाततयैव कारणं न सत्तामात्रेण, ततः सदेव योग्यत्वं कदा चिदऽज्ञातं नाभावमवधारयति. कदा चित्वऽविद्यमानमेव योग्यत्वं भ्रान्त्या निश्चित्याऽभावमवधारयति। उपलब्ध्यऽभावस्तु सन्मात्रतया कारणं न ज्ञाततया तेन

---

यस्माद् भूतलधीरेव तन्मात्रधीर्न सम्भवति तस्माद् घटादिज्ञानाभावे सति या भूतलधीः सा तन्मात्रधीरिति वक्तव्यं तथा च ज्ञानाभावः स्वीकृत इति ज्ञेयाभावनिराकरणमपार्थकमेवेत्यर्थः। नन्वऽनुपलब्धेर्न स्वरूपसत्या न वा ज्ञातायाश्चाभावग्राहकत्वं सम्भवत्युक्तदोषादित्यनुपलब्धेरभावग्राहकत्वं कथं निरूपणीयमित्युच्यतामित्याशङ्कते पूर्वपक्षी-कथमिति। अनुपलब्धेरभावग्राहकत्वनिरूपणमारभते- तदभिधीयते इति। तत्=अभावग्राहकतानिरूपणप्रकारः। योग्यप्रमाणानुदयः= घटादिविषयकाया योग्यभूतायाः प्रमितेर्योऽनुदयः सोऽनुपलब्धिशब्दाभिधेयः। तस्य=अभावस्य। स्पष्टमन्यत्।

यश्चान्वयव्यतिरेकाभावः प्रदर्शितस्तं परिहर्तुमुदिशति-यत्त्विति। परिहारमारभते-तत्त्वित्यादिना। यत्त्वान्वयव्यतिरेकाभावकथनं तद् योग्यत्वाऽज्ञानकृतम्=योग्यानुपलब्धिघटकयोग्यत्वाऽज्ञानकृतम्। एतदेवोपपादयति-योग्यानुपलम्भेति। योग्यानुपलब्धेश्च सत्तामात्रेणैवाभावज्ञानकारणत्वेपि तद्घटकयोग्यत्वस्य तु ज्ञाततयैव कारणत्वं न सत्तामात्रेणेत्यर्थः, तथा च यदा सदपि योग्यत्वं न ज्ञातं तदा पुरुषो नाऽभावमवधारयति, यदा चाऽसदपि योग्यत्वं भ्रान्त्या ज्ञातं निश्चितं तदा पुरुषोऽभावमवधारयतीत्याह-तत इति। विशदीकृतश्चायमर्थो वेदान्तपरिभाषायां तथा हि-

नाऽनवस्थापत्तिरिति सर्वमवदातम्। अतोऽस्त्यऽभावाख्यं प्रमेयम्।

न च तदैन्द्रियकम्, इन्द्रियव्यापाराभावेऽपि तज्ज्ञानोत्पत्तिदर्शनात्—योऽहनि प्रातःकाले गृहे ऽवस्थितो मध्यन्दिनसमये पृच्छ्यते—'किमस्मिन् गृहे प्रातःकाले माथुरः कश्चित् पुरुषः शुक्लावासा दीर्घतमो लोहितवर्णः समागतः?' इति स तदानीमेव योग्यस्मरणानुदयात् तस्याभावं प्रातःकालीनमऽवधारयति विनैवेन्द्रियव्यापारेण। न च प्रातरवगतोऽभावस्तदा स्मर्यत इति वाच्यम्, प्रतियोगिनो माथुरस्य तदानीं कथं चिदपि बुद्धावऽनारोहात्, अबुद्धिस्थे च प्रतियोगिनि

"योग्यानुपलब्धेर्योग्यता च तर्कितप्रतियोगिसत्त्वप्रसंजितप्रतियोगिकत्वम्, यस्याभावो गृह्यते तस्य यः प्रतियोगी तस्य सत्त्वेनाधिकरणे तर्कितेन प्रसञ्जनयोग्यमापादनयोग्यं यत् प्रतियोग्युपलब्धिस्वरूपं यस्यानुपलम्भस्य तदनुपलब्धेर्योग्यत्वमित्यर्थः, तथा हि—स्फीतालोकवति भूतले यदि घटः स्यात्तदा घटोपलम्भः स्यादित्यापादनसम्भवात् तादृशभूतले घटाभावोऽनुपलब्धिगम्यः, अन्धकारे तु तादृशापादना ऽसम्भवान्नानुपलब्धिगम्यता।" इति। ततश्च योग्यत्वं यत्र प्रमया वा भ्रान्त्या वा ज्ञातं तत्राभावज्ञानं जायते योग्यानुपलब्धिस्तु स्वरूपसत्येव कारणं इति न काचिदनुपपत्तिः। उपसंहरति—अतोस्तीति।

नन्वस्त्व ऽभावाख्यं प्रमेयं तस्येन्द्रियेणैव ग्रहणं भवतु कृतमनुपलब्धिप्रमाणेन षष्ठेनेत्याशङ्क्याह— न च तदैन्द्रियकमिति। तत्=अभावाख्यं प्रमेयम्। अनैन्द्रियकत्वमुपपादयति—योऽहनीति। प्रातः कालिकस्याभावस्य कालभेदेन मध्यन्दिनेऽसत्त्वादेव नेन्द्रियेण ग्रहणं सम्भवति तदाह—विनैवेति। तत्र हि योग्यस्मरणानुदयस्यैवा ऽभावग्राहकत्वमित्युक्तम्—योग्यस्मरणेति। ननु प्रातरवगतस्य माथुराभावस्य मध्यान्हे स्मरणमेव किं नोच्यते तथा च न मध्यान्हे प्रातःकालिकाभावज्ञानार्थमऽनुपलब्धिप्रमाणापेक्षेत्याशङ्क्याह—न चेति। परिहारहेतुमाह—प्रतियोगिन इति। अभावज्ञानस्य प्रतियोगिज्ञानसापेक्षत्वात् तदानीम्=प्रातःकाले च प्रतियोगिनो माथुरस्य बुद्धावनारोहात्=माथुरविषयकं

**भावे तदभावज्ञानाऽसम्भवात् । एवं च यत्रापीदानी-मेवाऽनुपरतेन्द्रियव्यापारेणैव संनिहितदेशकालवर्त्य-ऽभावः प्रतीयते तत्रापि योग्यज्ञानानुदयस्यैव क्लृप्त-सामर्थ्यस्य कारणत्वसम्भवान्नेन्द्रियस्य कारणत्वं कल्प-यितुं शक्यम् । तस्मान्न प्रत्यक्षोऽभावः । नाप्यनुमेयः, अज्ञातेन तेन कस्य चिल्लिङ्गस्य संबन्धग्रहणासंभवात् ।**

---

ज्ञानमेव नासीत् तत्र स्थितस्येति प्रातःकालेऽभावावगतिरेव न सम्भवति येन तस्य मध्यान्हे स्मरणं स्यात्, अनुभूतस्यैव स्मृतिनियमादित्यर्थः । अ-बुद्धिस्थे=अज्ञाते । ननु भवतु तत्रा ऽभावस्यानुपलब्धिगम्यत्वं तथाप्यत्र भूतले घटो नास्तीत्यादौ सेन्द्रियव्यापारस्य पुरुषस्येन्द्रियेणैवा ऽभावज्ञानं जायता-मिन्द्रियव्यापारस्यापि सत्त्वादेवेत्याशङ्क्याह–एवं चेति । अनुपरतेन्द्रियव्या-पारेण=अनिवृत्तेन्द्रियव्यापारेण पुरुषेण=अभावाधिकरणं निरीक्षतेत्यर्थः । योग्यज्ञानानुदयस्य=योग्यानुपलब्धेरेव । क्लृप्तसामर्थ्यस्य=अन्यत्राभावग्रहणे निश्चितं सामर्थ्यं यस्य तस्य । उपसंहरति–तस्मादिति । नन्वभावस्य प्रत्य-क्षग्राह्यत्वाभावेप्यनुमानग्राह्यत्वं भविष्यतीत्याशङ्क्याह– नानुमेय इति । अ-नुमेयत्वाभावे हेतुमाह–अज्ञातेनेति, यद्यऽभावः प्रत्यक्षः स्यात्तदा तेन कस्य चित्पदार्थस्य व्याप्तिग्रहः स्यात्तदा च तेन पदार्थेन लिङ्गभूतेनाभावस्यानुमानं स्यादपि नैवं सम्भवत्यऽभावस्याऽप्रत्यक्षत्वादित्यर्थः । तदुक्तं वार्तिके—

“ न चाप्यत्रानुमानत्वं लिङ्गाभावात् प्रतीयते ।
भावांशो ननु लिङ्गं स्यात्तदानीम् ?, नाऽजिघृक्षणात् ॥
अभावावगतेर्जन्म भावांशे ह्यऽजिघृक्षिते ।
तस्मिन् प्रतीयमाने तु नाभावे जायते मतिः ॥
कस्यचिद् यदि भावस्य स्यादभावेन केनचित् ।
सम्बन्धदर्शनं तत्र सर्वमानं प्रसज्यते ॥
गृहीतेपि च भावांशे नैवाभावेऽन्यवस्तुनः ।
सर्वस्य मतिरित्येवं व्यभिचारादलिङ्गता ॥
सम्बन्धे गृह्यमाणे च सम्बन्धिग्रहणं ध्रुवम् ।
तत्राभावमतिः केन प्रमाणेनोपजायते ॥

यदत्र कैश्चिदुच्यते-'दृश्यस्य सत्ता दर्शनव्याप्ता तेन व्यापकभूतदर्शननिवृत्त्या व्याप्यस्य दृश्यस्य निवृत्ति-रवसीयते' इति तन्निरस्तम्। व्यापकनिवृत्त्या व्याप्य-

---

तदानीं न हि लिङ्गेन सम्बन्धिग्रहणं भवेत्।
तत्रावश्यमभावस्य प्रमाणान्तरतो गतिः॥
न चाऽनवगतं लिङ्गं गृह्यते चेदसावपि।
अभावत्वादभावेन गृह्येतान्येन हेतुना॥
स चाऽन्येन ग्रहीतव्यो नाऽगृहीते हि लिङ्गता।
तद्गृहीतिर्हि लिङ्गेन स्यादन्येनेत्यनन्तता॥
लिङ्गाभावे तथैव स्यादनवस्थेयमित्यतः।
व्याप्यस्य स्यात्प्रमाणत्वं लिङ्गत्वेन विना ध्रुवम्॥
नास्तीतिधीः फलं चैषा प्रत्यक्षादेरजन्मनः।
तस्यैव च प्रमाणत्वमानन्तर्यात् प्रतीयते॥" इत्यादि।

ननु यत्र दृश्यस्य=विषयस्य सत्ता भवति तत्र दर्शनम्=दृश्यज्ञानं भवत्येवेति दर्शनं व्यापकं दृश्यसत्ता च व्याप्या ज्ञानं विना विषयसत्तानुपपत्तेः, तेन=तथा च यथा वन्ह्यभावेन धूमाभावानुमानं भवति तथात्रापि व्यापकीभूतस्य दर्शनस्य निवृत्त्या=अभावेन व्याप्यस्य दृश्यस्याऽभावानुमानं सम्भवतीति कृतमनुपलब्धिप्रमाणेनेत्यभिप्रायवतः सौगतस्य मतमनुवदति-यदत्रेति। तदुक्तं न्यायरत्नाकरे- "संप्रत्यनुपलब्धिलिङ्गवादी सौगतश्चोदयति-प्रत्यक्षेति, दृश्यं सद् यद् यत्र नोपलभ्यते तत्तत्र नास्ति यथा बुद्धिसत्त्वे पुरुषः, अतोनुपलब्धिसमाख्या प्रत्यक्षाद्यनुत्पत्तिरऽभावस्य लिङ्गम्, वीतहेतुर्वाऽयम्- दृश्यस्य सत्ता दर्शनव्याप्ता तद्दर्शनं व्यापकं निवर्तमानं दृश्यस्य सत्तां व्याप्यां निवर्तयति।" इति। अन्यत्राप्युक्तम्- "भवतु प्रत्यक्षात् प्रमाणान्तरमऽनुमानात्तु भेदो नास्ति-दृश्यस्य हि सत्ता दर्शनेन व्याप्ता दर्शनं निवर्तमानं दृश्यमपि निवर्तयति व्यापकनिवृत्तिर्हि व्याप्यनिवृत्त्या व्याप्ता व्याप्याच्च व्यापकावगतिरनुमानमेव भवति।" इति। परिहरति- तन्निरस्तमिति। वेदितव्यमिति शेषः। निरस्तत्वमुपपादयति-व्यापकेत्यादिना, सपक्षे व्याप्तिग्रहे जाते यदा पक्षे लिङ्गज्ञानं भवति तदाऽनुमानं भवति तथा चात्रापि व्या-

निवृत्तिमऽनुमिमानेनाऽवश्यं दृष्टान्तधर्मिषु निवृत्तिद्वयमवगम्य तयोश्च नियममवधार्य साध्यधर्मिणि पक्षे च साधनभूतां दर्शननिवृत्तिं केनचित् प्रमाणेनावगम्य ततो दृश्यनिवृत्तिरनुमातव्या, निवृत्तेश्चाऽभावात्मिकाया न प्रत्यक्षेण ग्रहणं सम्भवति, निवृत्त्यन्तरेण तदनुमाने तदपि निवृत्तिरूपत्वान्निवृत्त्यन्तरेणाऽनुमातव्यं तदपि तथेत्यनवस्थापत्तिः। अतोऽवश्यं क्वचित् प्रमाणान्तरभूतयाऽनुपलब्ध्याऽभावः प्रत्येतव्यः, प्रमिते च तस्मिन् पश्चाद् भवत्वनुमानम्। सिद्धं तावदभावस्य प्रमाणान्तरत्वम्। शब्दोपमानार्थापत्तयस्तु नाशङ्कनीया एव। अतः सिद्धं षष्ठं प्रमाणम्। एतावन्त्येव च प्रमाणानि।

---

प्यव्यापकयोर्ज्ञानाभावविषयाऽभावयोर्दृष्टान्तधर्मिषु=सपक्षेष्ववगतयोः, नियमम्=व्याप्तिमऽवधार्य साध्यधर्मिणि पक्षे च साधनभूतां दर्शननिवृत्तिम्=ज्ञानाभावं केनचिदनुमानभिन्नेन प्रमाणेनावगम्य दृश्याभावोऽनुमातव्यः, अन्यथा साधनभूतज्ञानाभावावगतेरप्यभावलिङ्गकानुमानाधीनत्वेऽनवस्थैव स्यादित्याह–निवृत्त्यन्तरेणेति। तव मते चाभावान्तरेणाभावस्यानुमेयत्वादनवस्था प्राप्तैव लिङ्गभूतस्याप्यभावस्याभावान्तरेणानुमेयत्वात्तस्यापि तथेति भावः। स्वाभिप्रायमाह– अत इति। अनवस्थापरिहारायानुमानभिन्नयानुपलब्ध्यैव साधनीभूतज्ञानाभावोऽवगन्तव्यो येन दृश्याभावोनुमीयेत तथा च साधनभूतज्ञानाभावावगत्यर्थमवश्यमनुपलब्धेः प्रामाण्यं स्वीकार्यमित्याह–सिद्धमिति। अभावस्य=अनुपलब्धेः। शब्दोपमानार्थापत्तिभिरपि साधनीभूतज्ञानाभावावगतिर्नैव सम्भवतीत्याह–शब्दोपमानेति। साध्यभूतस्याभावस्य तु क्वचिच्छब्दादिभिरपि बोधो भवत्येवेत्यनुसन्धेयम्। वैशद्यं च मदीयाऽद्वैतचन्द्रिकायां द्रष्टव्यम्। षडेव च प्रमाणानि वाद्यन्तरैरुक्तानामन्येषां प्रमाणानामेष्वेवान्तर्भावादित्याह– एतावन्त्येवेति।

॥ इत्यनुपलब्धिप्रमाणपरिच्छेदः समाप्तः ॥

यत्त्वधिकं सम्भवाख्यं प्रमाणम्—सहस्रादिसङ्ख्ययाऽवयवभूतशतादिसङ्ख्याऽवगतिः, आढकप्रमाणेनाऽवयवकुडवपरिमाणावगतिःकैश्चिदिष्यते, तदऽविनाभावनिमित्तत्वादनुमानमेव । 'वटे वटे वैश्रवणः' इत्यादिकं चैतिह्यं प्रमाणमेव न भवति निर्णयाभावात् । प्रामाण्येपि वाऽऽगमेऽन्तर्गतत्वान्न प्रमाणान्तरम् । प्रा-

---

ननु सहस्रसङ्ख्यया तदवयवभूतशतसङ्ख्यायाः प्रतीतिर्भवति, आढकप्रमाणेन तदवयवकुडवपरिमाणप्रतीतिर्भवति सा च प्रतीतिर्न प्रत्यक्षादिभिरुपपद्यत इति तदर्थं सम्भवाख्यं प्रमाणं स्वीकार्यं तथा च यत्र सहस्रसंख्या वर्तते तत्र शतसंख्यासम्भवोस्तीति सम्भवति सम्भवरूपप्रमाणेन शतादिसंख्याप्रतीतिरित्याशङ्क्याह—यत्त्विति। अधिकं षड्प्रमाणेभ्यो भिन्नम् । परिहरति— तदविनेति । यत्र सहस्रसङ्ख्या तत्र नियमेन शतसङ्ख्या वर्तत इति सहस्रसङ्ख्या शतसङ्ख्यां विना न भवतीत्यनुमानविषयैवात्र शतादिसङ्ख्याबोधः । व्याप्येन व्यापकबोधस्यानुमितिरूपत्वात् । एवमेवाढकेन कुडवकपरिमाणबोधोप्यनुमानविषयैवेत्यर्थः । ननु या वटे वटे यक्षप्रतीतिः सा तूक्तप्रत्यक्षादिषु केनापि न सम्भवति तत्तत्कारणानामिन्द्रियसंयोगलिङ्गज्ञानादीनामभावादित्यैतिह्यं प्रमाणान्तरं स्वीकार्यं तथा चैतिह्यप्रमाणेन प्रत्येकवटे यक्षप्रतीतिः सम्भवतीत्याशङ्क्याह—वटेति, ऐतिह्यं न प्रमाणं तेन प्रत्येकवटे यक्षस्य निर्णयाभावात्=निश्चयासम्भवात् किं वा ऐतिह्यस्य निर्णायकत्वाभावादित्यर्थः । "इतिह" इतिनिपातसमुदाय उपदेशपारम्पर्ये वर्तते तस्मात् "अनन्तावसथेतिहभेपजाञ्ञ्यः" इतिसूत्रेण स्वार्थे ञ्यस्तथा च 'इतिह' एव ऐतिह्यम्=उपदेशपरम्परेत्यर्थः, अनिर्दिष्टप्रवक्तृकं वाक्यमिति यावत् । उक्तं च—"इतिहोचुर्वृद्धा इति ऐतिह्यम्" "पुरुषवचनपरम्परा ऐतिह्यं वटे वटे वैश्रवण इत्यादि तच्चाऽनिर्णायकत्वात् प्रमाणमेव न भवति" इति । निर्दिष्टप्रवक्तृकं तु वाक्यं प्रमाणमेव । यदि निश्चयेनैव प्रत्येकवटे उक्तवाक्याद् यक्षप्रतीतिर्भवति तदा ऐतिह्यस्यागमे=शब्दे एवान्तर्भाव इति न पृथक् प्रामाण्यमित्याह—प्रामाण्येपीति । वार्तिककृताप्युक्तम्—

तिभाख्यमपि प्रमाणं कैश्चिदिष्टम्-" श्वस्ते भ्राता-ऽऽगन्ता " इत्यादिकम्, तत्तु लिङ्गाद्याभासजम्. अनिश्चायकत्वादेवाऽप्रमाणम् । अतो यत्काश्यपीयैः प्रतिभागम्यमृषीणां धर्माधर्मत्वमाश्रितं तदऽसारम् । लोकप्रसिद्धिरपि प्रत्यक्षाद्यन्तर्गतैवेति न प्रमाणान्तरम् । अतः षडेव प्रमाणानि, तथा च भगवद्रामायणे—
"राम षड्युक्तयो लोके याभिःसर्वोऽनुदृश्यते " इति ॥

॥ इत्यभाववादः ॥

---

"इह भवति शतादौ संभवाद् याऽऽसहस्रान्
मतिरवियुतभावात् साऽनुमानादभिन्ना ।
जगति बहु न तथ्यं नित्यमैतिह्यमुक्तं
भवति तु यदि सत्यं नाऽऽगमाद् भिद्यते तत् ॥" इति ।

ननु " श्वस्ते भ्राताऽऽगन्ता" इत्यादौ श्वो भ्रातुरागमनप्रतीतिः प्रत्यक्षादिना न संभवति तत्कारणाभावादिति तदर्थं प्रातिभाख्यं प्रमाणं पृथक् स्वीकार्यं तदुक्तं शाङ्करोपस्कारे-"आम्नायविधातॄणामृषीणामतीताऽनागतवर्तमानेष्वऽतीन्द्रियेष्वर्थेषु धर्मादिषु ग्रन्थोपनिबद्धेषु वा लिङ्गाद्यनपेक्षादाऽऽत्ममनसोः संयोगाद्धर्मविशेषाच्च प्रातिभं ज्ञानं यदुत्पद्यते तदार्षमिति, तच्च कदाचिल्लौकिकानामपि भवति यथा कन्यका वदति 'श्वो मे भ्राताऽऽगन्तेति हृदयं मे कथयति' इति ।" इत्याशङ्क्याह-तत्त्विति । अस्याभासजत्वान्न प्रामाण्यम्, किं च प्रमाणस्य निश्चयफलत्वादस्य चानिश्चायकत्वान्न प्रामाण्यं युज्यते । उक्तमन्यत्रातिदिशति- अत इति । अयं धर्मोऽयं चाधर्म इति ऋषीणां प्रतिभागम्यामिति यदुक्तं वैशेषिकैस्तदसारं प्रातिभस्य प्रामाण्यासम्भवात्, चोदनैकगम्यत्वाच्च धर्मस्येत्यर्थः । लोकप्रसिद्धिरपि न प्रमाणान्तरमित्याह- लोकेति । उपसंहरति-अत इति । स्वाभिमतप्रमाणसंख्यायां श्रीरामायणारण्यकाण्डद्विसप्ततिसंख्याकसर्गीयं साक्षात्परब्रह्मश्रीरामचन्द्रकृतदाहेन दिव्यरूपं प्राप्तस्य कबन्धस्य वचनं प्रमाणयति-रामेति, श्रीरामायणपुस्तके तु " सर्वो ऽनुदृश्यते " इत्यत्र " सर्वं विमृश्यते " इत्येवं पाठ उपलभ्यते । युक्तयः=ज्ञानोपायाः प्रमाणानीति यावत् याभिः=युक्तिभिर्यथाधिकारं सर्वो

लोकप्रसिद्धस्वतःप्रामाण्यदर्शनेन तदन्तर्गतस्यापि च शास्त्रस्य स्वतः प्रामाण्यात्– "चोदनालक्षणोर्थो धर्मः" इति प्रतिज्ञातेऽर्थे साधिते, संप्रति– "अनिमित्तं विद्यमानोपलम्भनत्वात्" इत्यनेन चित्रादिचोद-

---

विषयोऽनुदृश्यते=प्रमीयते, यथा–योग्यमिन्द्रियसंनिकृष्टं प्रत्यक्षेण, इन्द्रियसंनिकृष्टव्यापकमनुमानेन, सादृश्यं तद्विशिष्टं चोपमानेन, पदोपस्थापितं शाब्देन, दृष्टानुपपन्नोपपादकमऽर्थापत्त्या, अभावश्चानुपलब्ध्या प्रमीयते, इति श्रीरामायणप्रमाणेनापि षडेव प्रमाणानीति सिद्धम् । श्रीरामायणटीकाकारेण त्वत्र युक्तिपदस्य षड्गुणपरत्वमाश्रित्य "षड्युक्तयः=सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाख्या लोके सन्ति याभिर्युक्तिभिः सर्वं वस्तुजातं राज्ञा विमृश्य प्राप्यते" इत्येवमिदं वचनं व्याख्यातम् ।

॥ इति प्रमाणनिरूपणं समाप्तम् ॥

ननु "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादिका पारलौकिकफलचोदना श्रूयते, तथा "चित्रया यजेत पशुकामः" इत्यादिका ऐहिकफलचोदना श्रूयते, तत्र पारलौकिकफलचोदनासु त्वाक्षेपो न युज्यते– को हि जानाति स्वर्गो न भविष्यतीति । ऐहिकफलासु चित्रादिचोदनासु त्वाक्षेपः सम्भवति–चित्रादिफलानां पश्वादीनामप्राप्तौ चित्रादिचोदनानामऽप्रामाण्यौचित्यात्, दृष्टश्च चित्रादिषु फलव्यभिचारः–चित्रादीष्टौ कृतायामपि तत्फलानुपलम्भादित्याशङ्क्य तत्समाधानायेदानीं ग्रन्थमारभते– लोकप्रसिद्धेति, प्रत्यक्षादीनां लोकप्रसिद्धस्वतःप्रामाण्यप्रदर्शनेन तदन्तर्गतस्य=प्रत्यक्षादिप्रमाणवृन्दान्तर्गतत्वाच्छास्त्रस्यापि च स्वतःप्रामाण्यात्, चोदनाश्च शास्त्रमेवेति तासां धर्मे स्वतःप्रमाण्यं सिद्धमिति प्रतिज्ञातेऽर्थे साधिते सति । स्वतः प्रामाण्यं च पूर्वमेवोक्तम्–"तस्मात्स्वतः प्रामाण्यं प्राप्तमर्थान्यथात्वकारणदोषज्ञानाभ्यामपोद्यत इत्यवश्यमङ्गीकरणीयम्" इति द्वितीयसूत्रे । "न च प्रसिद्धस्य प्रमाणस्य प्रामाण्यमन्येन परीक्षितव्यम्" इत्यादि चात्र पञ्चमसूत्रे । "साधिते" इत्यत्र "सिद्धे" इत्यपि क्वचित्पाठः । संप्रतीति– संप्रति "अनिमित्तं विद्यमानोपलम्भनत्वात्" इत्युक्तप्रत्यक्षविरोधाच्चित्रादिचोदनानां प्रामाण्यमाक्षिप्यते–विद्यमानस्य प्रत्यक्षं ग्राहकमित्युक्तं

नानामैहिकफलानां प्रत्यक्षादिभिरऽसंवादेन विसंवादे-
न च प्रामाण्यमाक्षिप्यते । पूर्वोक्तस्तु " नन्वतथाभूत-
म् " इत्याक्षेपः परलोकफलस्वर्गकामादिचोदनाविषय
इति विषयभेदादऽपौनरुक्त्यम् ।

ननु च " नन्वऽतथाभूतमप्यर्थं ब्रूयाच्चोदना" इति

---

यद्यैहिकफलानां चित्रादीनामिह फलमुत्पद्येत तदा प्रत्यक्षेण गृह्येत नैवमस्ति, प्रत्यक्षादिभिरसंवादेन=प्रत्यक्षादिना फलानुपलम्भात् प्रत्युत क्व चिद्विसंवादे-न=विपरीतफलोपलम्भाद ऽप्रमाणं चित्रादिचोदनेत्येवं प्रामाण्यमाक्षिप्यते ।

किं वा " अनिमित्तम् " इत्यादि भाष्यप्रतीकं तथा च भाष्यम्- " ननु प्रत्यक्षादीन्यऽन्यानि भवन्तु नाम प्रमाणानि शब्दस्तु न प्रमाणम्, कुतः ? " अनिमित्तं विद्यमानोपलम्भनत्वात् " अनिमित्तम्=अप्रमाणं शब्दः, यो ह्युपलम्भनविषयो नोपलभ्यते स नास्ति यथा-शशस्य विषाणम्, उप-लम्भकानि चेन्द्रियाणि पश्वादीनां न च पशुकामेष्ट्यनन्तरं पशव उपलभ्य-न्ते अतो नेष्टिः पशुफला । कर्मकाले च फलेन भवितव्यम्, यत्काले हि म-र्दनं तत्काले मर्दनसुखम्, । कालान्तरे फलं दास्यतीति चेत् ?, न, न काला-न्तरे फलमिष्टेरित्यवगच्छामः' कुतः ! यदा तावदसौ विद्यमानाऽऽसीत् तदा फलं न दत्तवती यदा फलमुत्पद्यते तदासौ नास्ति असती कथं दास्यति" । इत्यादि । नन्वित्यादिराक्षेपस्तु द्वितीयसूत्र एव भाष्यकारेण " नन्वऽतथाभूतम-प्यर्थं ब्रूयाच्चोदना यथा यत् किं चन लौकिकं वचनम् ' नद्यास्तीरे फलानि सन्ति' इति तत् तथ्यमपि भवति वितथमपि भवतीति " इत्यनेन प्रदर्श्य प-रिहृत इति पुनरत्र " ननु प्रत्यक्षादीन्यन्यानि भवन्तु नाम प्रमाणानि " इ-त्यारभ्य परिहारे पौनरुक्त्यं भाष्ये स्यादित्याशङ्क्याह-पूर्वोक्तास्त्विति । पू-र्वोक्तस्तु-" नन्वतथाभूतमपि " इत्यादिराक्षेपस्तत्परिहारश्च परलोके प्राप्तव्य-फलचोदनाविषयोऽस्ति । " ननु प्रत्यक्षादीनि " इत्ययमत्रत्यस्त्वाऽऽक्षेप ऐ-हिकफलचोदनाविषय इति न पौनरुक्त्यम् । वार्तिकेऽप्युक्तम्-

" परलोकफलाः पूर्वमाक्षिप्ताश्चोदनाः परैः ।
इदानीमैहिकाक्षेपः सूत्रकारेण चोद्यते ॥" इति ।

भाष्ये पौनरुक्त्यदोषप्रदानाय भाष्योक्ताक्षेपयोरुभयत्रत्ययोर्विषयै-

चोदनामात्रपरिग्रहादऽविशेषेणैवाऽसावाऽऽक्षेपः, तथेहापि "यदा तावदसौ विद्यमानाऽऽसीत् तदा फलं न दत्तवती यदा फलमुत्पद्यते तदाऽसौ नास्ति कथमसती फलं दास्यति ?" इत्याक्षेपस्य स्वर्गकामचोदनास्वपि तुल्यत्वादऽविशेषत्वमिति नास्ति विषयभेदः ?।

उच्यते—पूर्वाक्षेपस्तावत् परलोकफलविषय एव, तत्र हि 'प्रमाणान्तरापेक्षः शब्दो न स्वातन्त्र्येण प्रमाणम्, न च चोदनार्थे प्रमाणान्तरमस्ति, अतोऽप्रमाणं चोदना' इत्ययमाक्षेपः—स चायं परलोकफलविषय एव भवति।

---

क्यमाशङ्कते— नन्विति। द्वितीयसूत्रभाष्यस्थः "नन्वतथाभूतमपि" इत्याद्याक्षेपोपि सामान्यतश्चोदनामात्रविषय एव न पारलौकिकफलचोदनाविशेषविषयस्तथात्र पञ्चमसूत्रभाष्येपि "यदा तावदसौ" इत्याद्याक्षेपः सामान्यतश्चोदनामात्रविषय एव न लौहिकफलचोदनाविशेषविषय इति कथं विषयभेदः स्यात् ? तस्मात् पौनरुक्त्यं दोषोऽस्त्येव भाष्ये इत्यर्थः।

विषयभेदं प्रतिपादयितुमारभते—उच्यत इत्यादिना। पूर्वाक्षेपः=द्वितीयसूत्रस्थः "नन्वतथाभूतमप्यर्थम्" इत्याक्षेपः परलोकफलकचोदनाप्रामाण्यविषयक एवेत्यर्थः। अथैत आक्षेपस्वरूपमाह—तत्र हीत्यादिना। तत्र=द्वितीयसूत्रभाष्ये, विषयस्य प्रत्यक्षे सति तत्र शब्दस्य शक्तिग्रहो भवति तदनन्तरमेव हि शब्दः स्वविषयं प्रतिपादयितुमर्हतीति स्वविषयप्रतिपादनमूलशक्तिग्रहार्थं तद्विषयप्रत्यक्षमपेक्षत इति प्रमाणान्तरापेक्ष एव शब्दः, अत एव न स्वातन्त्र्येण प्रमाणम्, चोदनार्थे=चोदनाफले स्वर्गादौ च प्रमाणान्तरस्य प्रवृत्तिरेव नास्ति येन तदभिधायकत्वं चोदनानां स्यादित्यऽप्रमाणं चोदनेत्यर्थः, अयं चाक्षेपः परलोकफलकास्वेव चोदनासूपपद्यते नैहिकफलास्वपि तासां फलस्येह प्राप्त्या प्रत्यक्षादिगम्यत्वादेवेत्याह—स चायमिति। किं चोत्तरेणापि पूर्वपक्षाभिप्रायः प्रतीयते तथा चात्र भष्यकारेण "यदि च चोदनायां सत्यामग्निहोत्रात्स्वर्गो भवतीति गम्यते" "न च "स्वर्गकामो यजेत" इत्यतो वचनात् संदिग्धमवगम्यते" इत्येवं परलोकफलानामेव चोदनानां प्रामाण्यं समाहितमिति ज्ञायतेऽयमाक्षेपः परलोकफलचोदनाप्रामाण्यविषय एव।

**पशुकामचोदनासु हि यदि तावत् कर्मानन्तरमेव पश्वादीन्युपलभ्यन्ते ततोऽपेक्षितमूलप्रमाणलाभात् सिद्ध्यति चोदनायाः प्रामाण्यम्, अथ नोपलभ्यन्ते ततः प्रमाणान्तरबाधेनैव सुखमप्रामाण्यमभिधातुं शक्यत इति किमाक्षेपसारूप्यप्रतिपादनव्यसनेन । तस्मात् स तावत् परलोकफलविषय एव, अयं त्वैहिकफलविषयः, न हि पारलौकिकस्य फलस्याऽनन्तरकालानुपलब्ध्या निरासः सम्भवति, न हि तेनाऽनन्तरं भवितव्यम्-जन्मान्तरभावित्वात् ।**

---

पशुकामेति-पशुकामपदघटितासु "चित्रया पशुकामो यजेत" इत्यादिचोदनासु यद्यऽव्यवधानेन कर्मानन्तरम्=चित्रेष्टिसम्पादनानन्तरं पशव उपलभ्यन्ते तदाऽपेक्षितमूलप्रमाणस्य=पशुप्राप्तिप्रत्यक्षस्य लाभात्=जायमानत्वाच्चोदनानां प्रामाण्यं सिद्ध्यति, यदि च कर्मानन्तरमेव पशवो नोपलभ्यन्ते तदा प्रमाणान्तरबाधेन=प्रत्यक्षकृतबाधेनैव सुखम्=सुखेन चोदनाया अप्रामाण्यमभिधातुं शक्यते-कर्मानन्तरमेव चोदनया पशुप्राप्तिरुक्ता न च पशुप्राप्तिर्जातेत्यऽप्रमाणं चोदनेत्यर्थस्तदाह- अथेति, । न चैवं परलोकफलचोदनास्वाक्षेपः सम्भवति ताभिर्मरणानन्तरमेव फलप्राप्तेर्बोधनादिति नाक्षेपयोः स्वरूपैक्यं येन भाष्ये पौनरुक्त्यं स्यादित्याह-किमाक्षेपेति । सारूप्यम्=तुल्यता । उपसंहरति-तस्मादिति । सः=द्वितीयसूत्रभाष्यस्थ आक्षेपः । अयम्=पञ्चमसूत्रभाष्यस्थ आक्षेपः । किं चास्य पञ्चमसूत्रभाष्यस्थाक्षेपस्य- "न च पशुकामेष्ट्यनन्तरं पशव उपलभ्यन्ते अतो नेष्टिः पशुफला" इत्येवमैहिकफलचोदनाप्रामाण्यविषयत्वेनोपक्रमान्न परलोकफलचोदनाप्रामाण्यविषयत्वम् । विपक्षे बाधकमाह- न हीति । पारलौकिकफलस्य=स्वर्गादेः । अनन्तरकालानुपलब्ध्या=यागानन्तरकालेऽनुपलब्ध्या, जन्मान्तरलभ्यं स्वर्गादिकं यागानन्तरमेव नोपलभ्यते इति हेतोर्न तस्य स्वर्गादेर्निरासः=प्रत्याख्यानं सम्भवति । अत्र हेतुमाह-न हीति । तेन=पारलौकिकफलेन स्वर्गादिना । अनन्तरम्=यागानन्तरमिहैव । यदि स्वर्गादिकं तच्चोदनया यागानन्तरमिहैव भावित्वेन बोधितं स्यात्तदा यागानन्तरमेवेह तदनुपलब्ध्या

ननु " असती कथं फलं दास्यति " इतीदं तुल्यम् ?। नेति ब्रूमः–अपूर्वद्वारेण सम्भवात्, स्वर्गो हि स्वभावाद् देहान्तरानुभवनीयत्वादऽनन्तराऽसम्भवित्वेन शास्त्रार्थावधारणवेलायामेव निश्चीयत इत्यऽपूर्वमन्तर्भाव्यैव तत्र शास्त्रार्थोऽवधार्यते, तच्च चिरस्थायीति कारणस्याविनाशात् सम्भवति कालान्तरे स्वर्गस्योत्पत्तिः। पश्वादयस्त्वनन्तरमपि सम्भवन्तीति तत्साधनत्वेन चोद्यमानानां चित्रादीनां शास्त्रार्थावधारण-

---

तच्चोदनाया अप्रामाण्यं स्यादपि, नैवमस्तीत्यर्थः।

ननु मा भवतु सकलेनाऽऽक्षेपेण पौनरुक्त्यं तथाप्याक्षेपैकदेशस्य "असती कथं दास्यति" इत्यस्य तु पूर्वोक्तद्वितीयसूत्रभाष्यस्थाक्षेपेण समानविषयत्वात् पौनरुक्त्यं भविष्यति " असती " इत्यस्य वाक्यस्यैहिकचित्रादिष्विव परलोकफलचोदनास्वपि समन्वयादित्याशङ्कते– नन्विति। परिहरति– नेति। उपपादयति–अपूर्वेति, असत्या अपि स्वर्गादिफलेष्टेरपूर्वद्वारेण फलप्रदत्वसम्भवात्। इष्ट्याऽपूर्वमुत्पद्यते तच्च फलप्राप्तिपर्यन्तं तिष्ठत्येवेति " असती " इत्यस्याक्षेपस्य स्वर्गादिफलचोदनासु नास्त्यवकाश इत्युक्तम्–नेति, नेदं तुल्यमित्यर्थः। स्वर्गादिफलानामपूर्वद्वारोत्पत्तिमुपपादयति– स्वर्गो हीत्यादिना। शास्त्रार्थावधारणवेलायाम्=" ज्योतिष्टोमेन स्वर्गकामो यजेत " इत्यादिचोदनानां वाक्यार्थबोधकाले एव स्वर्गस्य=स्वर्गपदवाच्यस्य लोकान्तरत्वेन प्रतीत्या तस्मिन् लोके चानेन शरीरेण गन्तुमशक्यत्वाद् देहान्तरानुभवनीयत्वं निश्चीयते अत एवानन्तरासम्भवित्वम्=यागानन्तरमेवाऽप्राप्यत्वं निश्चीयते कारणं विना च कार्यं न भवतीति यागस्य नष्टत्वेन कारणत्वासंभवात्तत्र यागजन्यमपूर्वं कल्प्यते तच्च=अपूर्वं चिरस्थायीति तस्याऽविनाशात् तद्द्वारा कालान्तरेपि स्वर्गोत्पत्तिः सम्भवतीत्यऽपूर्वमन्तर्भाव्यैव=कारणत्वेन कल्पयित्वैव तत्र=स्वर्गादिचोदनासु शास्त्रार्थः=स्वर्गादिफलप्राप्तिरवधार्यत इति " असती " इत्यस्याक्षेपस्य न तत्रावकाश इत्यर्थः। फलप्रदस्यापूर्वस्य सत्त्वादेव। चित्रादिचोदनासु तु नैवमस्तीत्याह–पश्वादय इति, पश्वादीनामेतच्छरीरेणापि प्राप्यत्वाच्चित्रादीष्टिसमनन्तरमेव फलप्राप्तिसम्भवात् न

समयेऽपूर्वप्रणाडीसमाश्रयणे कारणं न किं चिदस्तीति स्वरूपेणैव फलसाधनत्वं शास्त्रार्थोऽवधार्यते, तथा चानन्तरमेव फलेन भवितव्यं कालान्तरे कर्मस्वरूपस्य विनष्टत्वात् कारणत्वाभावात्, अनन्तरं च फलमनुपलब्ध्यैव निरस्तमित्यप्रामाण्यं चित्रादिचोदनानाम् ।

न चानुष्ठानानन्तरं फलानुपलब्ध्यैव शास्त्रार्थेऽपूर्वमन्तर्भावयितुं शक्यते–शास्त्रार्थावधारणपूर्वकं ह्यनुष्ठा-

---

तत्रापूर्वकल्पना युज्यते तथा च चित्रादीनां स्वरूपेणैव=अपूर्वमनन्तरर्भाव्यैव फलसाधनत्वमस्तीति शास्त्रार्थोऽवधार्यते । उक्तं च वार्तिकेपि—

" कालान्तरानुपादानात् कर्मस्वाभाव्यतोपि च ।
चोद्यमानस्य चित्रादेरानन्तर्यं विशेषणम् " इति ।

तथा च कर्मानन्तरमेव फलानुपलब्धौ कालान्तरे फलं दास्यतीत्युक्ते सम्भवत्ययमाक्षेपः– " असतीकथं दास्यति " इति तस्मादयमाक्षेप ऐहिकफलचोदनाप्रामाण्यविषयक एवेत्याह– तथा चेति, तथा च=कर्मस्वरूपस्यैव फलसाधनत्वात् । कालान्तरे च कर्मस्वरूपस्य विनष्टत्वेन कारणत्वाभावात्=कारणत्वासम्भवात्, अत्र हेतुरुक्तो विनष्टत्वादिति। विनष्टस्येति युक्तः पाठः। यदा हि चित्रादीष्टिसमनन्तरमेव फलं नोपलब्धं तदा फलं प्रत्यक्षेणैव निरस्तमिति निष्फलैवेष्टिरित्यवधार्यते तस्माच्चित्रादिचोदनानामप्रामाण्यमेवेत्याह–अनन्तरमिति ।

ननु पश्वादिफलं प्रत्यपि चित्रादिजन्यापूर्वमेव कारणमस्तु तथा चानन्तरं फलेऽनुपलब्धेपि कालान्तरभाविफलेनैव चित्रादिचोदनानां प्रामाण्यं भविष्यति, स्वजन्यापूर्वद्वारेण फलसाधनत्वावगतिसम्भवादित्याशङ्क्याह– न चेति । शास्त्रार्थे=फलसाधनत्वे । परिहारे हेतुमाह–शास्त्रार्थावधारणेति । यद्यनुष्ठानपूर्वकं शास्त्रार्थावधारणं स्यात्तदा चित्रादियागानुष्ठानसमनन्तरमेव फलप्राप्त्यभावावगमात् तत्प्रामाण्यार्थं तज्जन्यमपूर्वं कल्प्येत येन कालान्तरभाविफलं प्रत्यप्यपूर्वद्वारा चित्रायाः साधनत्वं स्यात्, न चैवमस्ति, किं तु शास्त्रार्थावधारणपूर्वकमेवानुष्ठानं भवति तथा च पश्वादीनामिहापि प्राप्तेः सम्भवात्समनन्तरफलप्रदत्वमेव चित्रादीनां वाक्यार्थबोधसमयेऽवधार्यते, समनन्तरफलप्रदस्य च स्वरूपेणैव साधनत्वसम्भवान्न तत्रापूर्वकल्पना युक्ता, एवं च यत्र

नं नानुष्ठानपूर्वकं शास्त्रम्, तस्मादैहिकानामत्राक्षेप इति युक्तो विषयभेदः । विषयभेदाच्च न्यायोपि भिद्यते- परलोकफलासु प्रमाणापेक्षितत्वमाक्षेपन्यायः, अत्र तु प्रमाणान्तरविरोध इति न्यायभेदादऽपौनरुक्त्यम् । अथ वा पूर्वोक्तं स्वमते सूत्राणि व्याचक्षाणोऽसूत्रितमेवाक्षेपं दर्शितवान्, इदानीं तु वृत्तिकारमतेन सूत्रेणैवाक्षेपः क्रियते ।

तदिह चित्रादिवाक्यानि प्रमाणान्यप्रमाणानि वेति विचार्यते, तदर्थं च किं तेषां प्रमाणान्तरविरोधोस्ति

---

न समनन्तरमेव फलमुपलभ्यते तत्राप्रामाण्यं प्राप्तमेवेत्यैहिकफलचोदनाविषयोऽयमाक्षेप इत्याह—तस्मादिति । पूर्वस्त्वाक्षेपः परलोकफलचोदनाविषय एवेत्याह—युक्तो विषयभेद इति । विषयभेदस्य फलमाह—विषयभेदादिति । इदं च न्यायद्वयं न सूत्रमूलकं किं तु भाष्यमूलकमेवेत्यनुसन्धेयम् । तत्र प्रथमाक्षेपन्यायाभिप्रायमाह—परलोकेति । तत्र स्वर्गादिचोदना प्रमाणं वाऽप्रमाणं वा तदर्थं च तासां प्रमाणान्तरापेक्षास्ति न वेति विचार्यते तत्र प्रमाणान्तरेणावगते पदार्थे शक्तिग्रहानन्तरमेव शब्दस्य बोधकत्वनियमात् प्रमाणान्तरेणावगतस्यैव शब्दो बोधको भवति न च स्वर्गादीनां प्रमाणान्तरेणाऽवगमः सम्भवतीति प्रमाणान्तरापेक्षित्वेन स्वर्गचोदनानामऽबोधकत्वाद ऽप्रामाण्यम् ' इत्येवं प्रथमाक्षेपन्याय ऊहनीयः । द्वितीयाक्षेपन्यायाभिप्रायमाह—अत्रेति । स्वरूपं चास्य स्वयमेव वक्ति—तदिहेत्यादिनाग्रे । पौनरुक्त्यं परिहरति- न्यायभेदादिति ।

वर्णकान्तरमाह—अथ वेति, स्वमतेन सूत्राणि व्याचक्षाणो भाष्यकारः पूर्वोक्तम्=द्वितीयसूत्रभाष्यस्थमाक्षेपमऽसूत्रितम्=सूत्रकाराऽनभिप्रेतमेव दर्शितवान् । इदानीम्=पञ्चमसूत्रव्याख्यानसमये वृत्तिकारमतेन सूत्रेण=चतुर्थसूत्रमूलक आक्षेपः क्रियते । चतुर्थसूत्रे प्रत्यक्षस्य विद्यमानग्राहकत्वमुक्तं तत्र यदि चित्रादीष्टीनां फलं भवेत्तदोपलभ्येत प्रत्यक्षस्य विद्यमानग्राहकत्वनियमात् न च प्रत्यक्षेणोपलभ्यत इत्येवं चतुर्थसूत्रमूलकोयमाक्षेपः ।

एतदाक्षेपस्वरूपं विशदयति—तदिहेत्यादिना । तदर्थम्=प्रामाण्याप्रामा-

न वेति। तत्र फलानामनन्तरमुपलब्ध्यानामनुपलम्भा-
दऽतत्साधनत्वं चित्रादीनामवगम्यते, तदिदं प्रत्यक्षा-
विसंवादेऽवश्यम्भाविनि सति तदभावादप्रामाण्यम्।

क्वचित्तु प्रत्यक्षविरोधादऽप्रामाण्यम्- "स एष य-
ज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति" इति, यज्ञा-
युधीति हि यज्ञायुधसंयोगाच्छरीरमुच्यते यजमानश-
ब्दोपि कर्तृवचनस्तस्यैव वाचको नात्मनः, तस्य सर्व-

---

ण्ययोरन्यतरनिश्चयाय। तेषाम्=चित्रादिवाक्यानाम्। "न वेति" इत्यत्र "वि-
चार्यते" इत्यध्याहार्यम्। प्रमाणान्तरविरोधे त्वप्रामाण्यं स्यादऽविरोधे च प्रा-
माण्यमित्याभिप्रायः। आक्षेपाभिप्रायं किं वोक्तन्यायस्वरूपाभिप्रायेण पूर्वप-
क्षमाह- तत्रेति। अतत्साधनत्वम्=पश्वादिफलाऽसाधनत्वं चित्रादीनामवग-
म्यते। तदिदमिति-प्रत्यक्षेण विरोधो न युक्तस्तथापि प्रत्यक्षविरोधोस्ति,
प्रत्यक्षविरोधस्त्वत्र फलानुपलम्भरूपो विसंवाद एव ज्ञेयः। तदभावात्=आ-
वश्यकप्रत्यक्षाऽविसंवादाऽभावात्-प्रत्यक्षविसंवादादप्रामाण्यं चित्रादिवाक्या-
नामित्यर्थः। चित्रादिवाक्यैश्चित्रादीनां पश्वादिफलसाधनत्वं प्रतिपाद्यते
तत्र पश्वादिसाधनत्वप्रतिपत्तावेव चित्रादिवाक्यानां प्रामाण्यमुपपद्यते न चै
वमस्ति विसंवादतः प्रत्यक्षानुकूल्याभावेन पश्वादिफलसाधनत्वाऽनिश्चयात्
किं वा पश्वादिफलाऽसाधनत्वापत्तेरिति भावः।

एवं प्रत्यक्षानुकूल्या ऽभावेना ऽप्रामाण्यमुक्त्वा संप्रति प्रत्यक्षविरोधेना-
प्यऽप्रामाण्यं प्रदर्शयति-क्वचिदिति। यागकर्तुर्मृतस्य शरीरदाहसमये चि-
तायां शरीरेण सह यज्ञपात्राणां चयनं भवति तदुद्दिश्य श्रुतिर्वदति-" स
एष यज्ञायुधी " इत्यादि। अञ्जसा=शीघ्रमवश्यं वा। यज्ञायुधानि=यज्ञ-
पात्राणि स्रुवादीनि। यज्ञायुधिनः श्रुत्या स्वर्गलोकगमनमत्रोक्तं यज्ञायुधि-
त्वं च यज्ञायुधसंयोगादत्र शरीरस्यैव युक्तम्, आत्मनस्तु विभुत्ववादे सर्वे-
षामेवात्मनां यज्ञायुधसंयोगोस्तीति सर्वेषां स्वर्गप्राप्तिः स्यात्. अणुत्ववादे
च यजमानात्मनोपि तदा यज्ञायुधसंयोगो नास्तीति यज्ञायुधी शरीरमेव, य-
जमानत्वं च यागकर्तृत्वं तदपि शरीरस्यैव सम्भवतीत्याह-यजमानेति। ना-
त्मन इत्यत्र हेतुमाह-तस्येति। तस्य=आत्मनः। व्यापकस्यात्मनः क्रियासम-

गन्तृत्वेनाभिमतस्य क्रियाविरहिणः कर्तृत्वायोगाद् यज्ञायुधसंयोगाभावाच्च, संयोगाभिप्रायश्चायं यज्ञायुधीति शब्दः पात्रचयनस्तुत्यर्थत्वात्, न स्वस्वामिसंबन्धाभिप्रायः प्रागपि पात्रचयनात् तत्सम्भवात्। शरीरस्य च प्रत्यक्षविरुद्धं स्वर्गगमनम्। न च कालान्तरेपि संभवति यातीतिवर्तमानापदेशात्, भस्मीभूतस्य च कालान्तरेपि तदसंभवात्। न च शरीरव्यतिरिक्तः कश्चिदात्मास्ति, तस्मादप्रमाणम्। एवमपौरुषेयस्याप्य-

---

वायित्वाभावात् कर्तृत्वं न सम्भवतीत्यर्थः। ननु यज्ञायुधीति शब्दः स्वस्वामिभावसम्बन्धाभिप्रायः किं न स्यात्? स्वस्वामिभावसम्बन्धस्तु यज्ञायुधानामाऽऽत्मनापि सम्भवतीत्याशङ्क्याह–संयोगाभिप्राय इति, एतद्वचनं हि 'पात्रचयनमेतावत् प्रशस्तमस्ति यदनेन स्वर्गो लोको भवति' इत्येवं पात्रचयनं स्तौति, पात्रचयनस्तुतिश्च यज्ञायुधीति शब्दस्य यज्ञायुधसंयोगाभिप्रायत्व एवोपपद्यते अन्यथा स्वस्वामिभावसम्बन्धस्य पात्रचयनात् प्रागपि सत्त्वात् पात्रचयनप्रशंसा न निष्पद्येत, प्रत्युत मृते यजमाने तदात्मनो यज्ञायुधेषु स्वामित्वमेव नोपपद्यते जीवत एव स्वामित्वसम्भवादिति यज्ञायुधीति शब्दो यज्ञायुधसंयोगाभिप्राय एव यज्ञायुधसंयोगश्च पात्रचयने कृते मृतयजमानशरीरेणैव दृश्यते न च शरीरस्य स्वर्गगमनं सम्भवतीति प्रत्यक्षविरोधादेवास्य वचनस्याऽप्रामाण्यमित्यर्थः।

ननु यदि तस्मिन् काले शरीरं न स्वर्गं याति तदा कालान्तरे यास्यतीति नाऽप्रामाण्यमित्याशङ्क्याह– न चेति, यातीति वर्तमानकालिकप्रयोगात् कालान्तरे स्वर्गगमनकल्पना न युज्यत इत्यर्थः। ननु यातीति " वर्तमानसामीप्ये वर्तमानवद्वा " इति सूत्रेण वर्तमानसमीपे भविष्यत्काले लट् वक्तव्य इत्याशङ्क्याह– भस्मीभूतस्येति, स्यादेवं यदि भस्मीभूतस्य शरीरस्य कालान्तरेपि गमनं सम्भवेत् न चैवं सम्भवतीत्यर्थः। ननु शरीरस्य गमनासम्भवात् तत्सम्बन्ध्यात्मा स्वर्गं यातीत्युच्यते आत्मनश्च स्वर्गगमनाभावो न निश्चेतुं शक्य आत्मनोऽप्रत्यक्षत्वादित्यात्मनः स्वर्गगमनसम्भवान्नाऽप्रामाण्यमित्याशङ्क्याह– न च शरीरव्यतिरिक्त इति। उपसंहरति–तस्मादिति। यस्मादात्मा

ऽप्रामाण्ये स्वर्गकामचोदनायामपि नाश्वसितुं युक्त-मित्यऽप्रामाण्यमेवायातम् ।

एवं प्रत्यक्षानुपलब्धिविरोधेन प्रत्यक्षविरोधेन चाऽऽक्षिप्ते प्रामाण्ये विरोधपरिहारमुपेक्ष्यैव कारणदोष-निराकरणेन पूर्वोक्तमेव स्वतः प्रामाण्यं स्वपक्षसाधन-त्वेन सिद्धान्तवादी दर्शयति—"औत्पत्तिकस्तु शब्द-स्यार्थेन संबन्धस्तस्य ज्ञानम्" इति । पूर्वं हि प्रत्यक्षा-दीनां स्वतःप्रामाण्यस्य लोकसिद्धत्वात् तदन्तर्गतत्वा-च्च शास्त्रमपि प्रमाणमित्येतावदुक्तं न तु कारणदोष-

---

शरीरव्यतिरिक्तो नास्त्येव शरीरस्य चात्रैव भस्मीभावेन स्वर्गगमनासंभवस्त-स्मान्मिथ्याभूतस्वर्गगमनप्रतिपादनेन प्रत्यक्षविरोधादप्रामाण्यम् । उक्तन्या-यमन्यत्रातिदिशति—एवमिति, स्वर्गकामचोदनायाम्=स्वर्गकामपदघटितचो-दनायाम् "स्वर्गकामो यजेत" इत्यादिवाक्येष्वपि न प्रामाण्यविश्वासो युक्तो यतो विश्वासस्य हेतुरपौरुषेयत्वमेव वक्तव्यं तत्रोक्तवचनस्याऽपौरुषेय-त्वेप्यऽप्रामाण्ये प्राप्ते स्वर्गकामचोदनानामप्यऽप्रामाण्यमेव प्राप्तमऽपौरुषेयत्वस्यो-भयत्राविशेषात् । "अप्रामाण्यंत्रिधाभिन्नंमिथ्यात्वाज्ञानसंशयैः" इत्युक्तत्वात् ।

एवमिति—चित्रादिचोदनानां प्रत्यक्षानुपलब्धिविरोधेन=फलविषयक-प्रत्यक्षाभावविरोधेन प्रत्यक्षभूतानुपलब्धिविरोधेन वा प्रामाण्ये आक्षिप्ते, "स एष यज्ञायुधी" "ग्रावाणः प्लवन्ते" इत्यादीनां च प्रत्यक्षविरोधेन प्रामा-ण्ये पूर्वपक्षिणाऽऽक्षिप्ते सति यद्यपि विरोधपरिहारमुखेनैव प्रामाण्यं स्थापनी-यमासीत् तथापि विरोधपरिहारमुपेक्ष्य पूर्वोक्तमेव स्वतः प्रामाण्यं स्वपक्ष-स्थापनाय कारणदोषनिराकरणमुखेन सिद्धान्ती दर्शयति— औत्पत्तिकेति, इत्यन्वयः । स्वपक्षसाधनत्वेनेत्यस्य स्वपक्षसाधकत्वेनेति वाऽर्थः पूर्वप्रदर्शि-तस्वतःप्रामाण्यस्यापि स्वपक्षसाधकत्वात् । "अनिमित्तं विद्यमानोपलम्भ-नत्वात्" इतिसूत्रमाश्रित्य पूर्वपक्षिणा चोदनानामप्रामाण्यमुक्तं तस्य परि-हाराय सूत्रकृद्वदति—औत्पत्तिकेति, इति भावः । ननु स्वतः प्रामाण्यस्य पू-र्वमुक्तस्यैवात्र कथनात् भाष्ये पौनरुक्त्यं स्यादित्याशङ्क्याह—पूर्वं हीति । त-दुक्तं वार्तिके—

निराकरणं कृतम्, इह तु शब्दार्थसंबन्धस्यौत्पत्तिकत्वात् तद्द्वारा पुरुषानुप्रवेशाभावात् पुरुषाश्रयत्वाच्च शब्ददोषस्याऽदुष्टमेव शास्त्रमतः प्रमाणमित्युक्तम्।

एवं संबन्धनित्यतयाऽप्रामाण्यं निराकृत्य स्वतः प्रामाण्ये स्थापिते, परः पुनराह—"स्यादेतत्. नैव शब्दस्यार्थेनास्ति संबन्धः कुतोऽस्य पौरुषेयताऽपौरुषेयता वेति" तथा हि— न तावत्संयोगोस्ति तद्भावे हि क्षुरादिशब्दोच्चारणे मुखस्य पाटनादि स्यात्। न च का-

---

"स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम्।
न हि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते॥
तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते॥" इत्यादि।

इहेति—शब्दस्य स्वरूपेण तु दुष्टत्वं न सम्भवति किं तु वक्तृपुरुषगतदोषद्वारैव, तत्र लौकिकवाक्यानां पौरुषेयत्वाद्वक्तृपुरुषगतदोषेण दुष्टत्वं सम्भवति वैदिकवाक्यानामऽपौरुषेयत्वात् तत्र पुरुषप्रवेश एव नास्ति येन पुरुषदोषेण वेदवाक्यानां दुष्टत्वं स्यादित्यऽदुष्टं शास्त्रं तस्मात् प्रमाणमेव, दोषस्यैव प्रामाण्यापहारकत्वादित्यर्थः। तदुक्तं भाष्ये—" अपौरुषेयः शब्दस्यार्थेन सम्बन्धः, तस्याग्निहोत्रादिलक्षणस्यार्थस्य ज्ञानं प्रत्यक्षादिभिरनवगम्यमानस्य तथा च चोदनालक्षणः सम्यक् प्रत्यय इति, पौरुषेये हि शब्दे यः प्रत्ययस्तस्य मिथ्याभाव आशङ्क्येत परप्रत्ययो हि तथा स्यात्।" इत्यादि। इह=अस्मिन् भाष्ये तु। तद्द्वारा=नित्यसम्बन्धद्वारा। अनित्यसम्बन्धद्वारैव शब्दे पुरुषप्रवेशसम्भवात्।

भाष्योक्तं पूर्वपक्षान्तरमुपस्थापयति—एवमिति। स्यादेतदित्यादि भाष्यम्। अस्य=शब्दस्य। यदि शब्दस्यार्थेन सम्बन्धः स्यत्तदा सम्बन्धस्य नित्यत्वं तेन च समाहितं प्रामाण्यमऽपौरुषेयत्वं च युज्येतापि नैवमस्तीति भावः। भाष्योक्तं पूर्वपक्षं स्वयमुपपादयति—तथा हीत्यादिना। शब्दार्थयोः परस्परं संयोगसम्बन्धो नोपपद्यते यदि संयोग एव स्यात्तदा क्षुरशब्दे मुखं प्राप्ते क्षुरोपि क्षुरशब्दसंयुक्तो मुखं प्राप्नुयादिति मुखपाटनमेव स्यादित्याह—तद्भा-

र्थकारणभावः ?, द्वयोरपि नित्यत्वात् ।

नतु वर्णस्फोटजात्यादिविकल्पेन व्यक्त्याकृतिसंबन्धादिविकल्पेन च बाह्ययोः शब्दार्थयोर्दुर्निरूपत्वाद् गकाराद्याकारं विज्ञानमेव शब्दः, तज्जनितं च गवाद्याकारविज्ञानमेवार्थ इति कार्यकारणत्वमेव शब्दार्थयोः सम्बन्धः । नैवम्- निरालम्बनज्ञानानुत्पत्तेः, सम्बन्धान्तरं तु नाऽऽशङ्कनीयमेव ।

प्रत्याय्यप्रत्यायकत्वं सम्बन्ध इति चेत् ?, न, असति

---

वेति । कार्यकारणभावसम्बन्धं पराचष्टे-न चेति । द्वयोः=शब्दार्थयोः । संबन्धनित्यता हि सम्बन्धिनित्यताधीना भवति त्वया च शब्दार्थयोः सम्बन्धस्य नित्यत्वमुक्तमिति शब्दार्थयोरपि नित्यत्वमुक्तमेव, अन्यथा यदाऽर्थ उत्पद्येत तदैव तेन शब्दसम्बन्ध उत्पद्येतेति सम्बन्धोऽनित्य एव स्यात्, उत्पत्तिपूर्वमसता चार्थेन सम्बन्धो नोपपद्यत इत्यभिप्रायेणाह पूर्वपक्षी-नित्यत्वादिति, सम्बन्धिनोः शब्दार्थयोर्नित्यत्वे तयोः कार्यकारणभावोपि सम्बन्धो नोपपद्यते ।

ननु बाह्यशब्दस्य वाचकत्वस्वीकारे वर्णस्फोटस्य वाचकत्वं वा स्यात् जातिस्फोटस्य वा पदस्फोटस्य वेत्यादिविनिगमनाविरहः तथा बाह्यर्थस्य वाच्यत्वे व्यक्तेर्वाच्यत्वं वाऽऽकृतेर्वेति विनिगमनाविरहः, तस्माद् बाह्ययोः शब्दार्थयोर्दुर्निरूपत्वादान्तरं विज्ञानमेव शब्दरूपेणार्थरूपेण च परिणमत इति स्वीकार्यं तत्र शब्दपदवाच्यगकाराद्याकारविज्ञानजन्यमेवार्थपदवाच्यगवाद्याकारविज्ञानं भवति गोशब्दश्रवणादनन्तरमेव गोपदार्थप्रतीतेरिति कार्यकारणभाव एव शब्दार्थयोः सम्बन्ध इत्येवं विज्ञानवाद्याशङ्कते-नन्विति । कश्चित् पूर्वपक्षी सौत्रान्तिको वा परिहरति- नैवमिति । हेतुमाह-निरालम्बनेति, बाह्यपदार्थलक्षणालम्बनं विना विज्ञानस्योत्पत्तिरेव न संभवति येन त्वयोक्तं युक्तं स्यादित्यर्थः । संयोगस्य कार्यकारणभावस्य च सम्भावनाऽऽसीत् तावेव न सम्भवतः सम्बन्धान्तरस्य तु सम्भावनापि नास्तीत्याह पूर्वपक्षी-सम्बन्धान्तरमिति । अनुत्पत्तेरित्यत्रा ऽनुपपत्तेरिति पाठान्तरम् ।

ननु शब्दार्थयोः प्रत्याय्यप्रत्यायकत्वमेव संबन्धोऽस्तु शब्दस्य प्रत्यायकत्वादर्थस्य प्रत्याय्यत्वादित्याशङ्कते-प्रत्याय्येति । पूर्वपक्षी परिहरति- नेति । संबन्धे

सम्बन्धे प्रत्यायकत्वाऽसम्भवात्, केन सम्बन्धेन श-ब्दोर्थं प्रत्याययतीत्येतदेव हि निरूप्यते तत्र प्रत्याय-कत्वादेव प्रत्यायकत्वमित्यात्माश्रयदोषापत्तिः, तस्मा-न्नास्ति सम्बन्धः । असति च सम्बन्धे वस्त्वन्तरस्य वस्त्वन्तरबोधकत्वासम्भवादऽनिरूपितहेतुविशेषं स्व-प्नज्ञानवद् यादृच्छिकं शब्दार्थज्ञानं न प्रमाणं भवितु-मर्हति । लौकिकस्तु व्यवहारोऽसत्यपि शब्दप्रामाण्ये प्रमाणान्तरवशात् कथंचित् सङ्गच्छेतापि वैदिकस्तु व्य-वहारः शब्दैकशरणत्वादऽनादर्तव्यः स्यान्निर्मूलत्वात् ।

---

सत्येव शब्दस्यार्थप्रत्यायकत्वं स्यात, केन सम्बन्धेन प्रत्यायकत्वमित्येव नि-रूपयितुमारब्धं तत्र प्रत्यायकत्वेन प्रत्यायकत्वमित्युक्त आत्माश्रयो दोषः, तथा च निरूपयितुमशक्यत्वान्नास्त्येव शब्दार्थयोः सम्बन्धो येन तस्य नि-त्यत्वेन वेदस्य प्रामाण्यं स्यादित्याशयेनाह–असतीति । ननु मा भवतु स-म्बन्धः सम्बन्धं विनैव शब्दस्यार्थप्रत्यायकत्वं भविष्यतीत्याशङ्क्याह– अस-ति चेति । अर्थाद्भिन्नस्य शब्दस्य स्वभिन्नार्थबोधकत्वं सम्बन्धं विना न स-म्भवति सम्बन्धश्च नास्त्येवेति यथा स्वप्नज्ञानं यादृच्छिकं सन्न प्रमाणं भ-वति तथा शब्दार्थज्ञानम्=शब्दजन्यमर्थज्ञानमपि न प्रमाणम्, अत्र हेतुगर्भ-विशेषणमाह– अनिरूपितहेतुविशेषमिति, अनिरूपितो हेतुविशेषो यस्य त-दनिरूपितहेतुविशेषं शब्दार्थज्ञानम्, शब्देन यदर्थज्ञानं भवति तत्र किं कार-णमिदङ्कारणमिति वा निरूपयितुं न शक्यत इति हेतोर्यादृच्छिकम्, अत ए-वाप्रमाणमित्यर्थः । नन्वेवं शब्दार्थज्ञानस्याऽप्रामाण्ये लोकव्यवहारोपि न-श्येत्, घटानयनादिलोकव्यवहारोपि घटमानयेत्यादिशब्दजन्यार्थज्ञानस्य प्रा-माण्य एवोपपद्यते, अन्यथा घटमानयेति श्रुत्वापि न कोपि घटमानयेदित्या-शङ्क्याह– लौकिकेति । प्रमाणान्तरवशात्=प्रत्यक्षवशादनुमानवशाद्वा, तत्र घटमानयेति वक्तुर्घटविषयकेच्छामनुमाय प्रयोज्यो घटमानयिष्यतीति लोक-व्यवहारस्यास्ति निर्वाहः, वैदिकस्तु व्यवहारः शब्दैकगम्य इति शब्दार्थज्ञा-नस्याप्रामाण्ये सति नोपपद्यते न च शब्दार्थज्ञानस्य प्रामाण्यमुपपद्यत इति नि-र्मूलत्वाद्वैदिकव्यवहारो यागादिर्नाऽऽदर्तव्य इत्यर्थः ।

**स्यादेवम्- यद्यऽसम्बन्धः शब्दार्थयोः, अस्ति तु सम्बन्धः प्रत्याय्यप्रत्यायकत्वलक्षणः, असत्येव सम्बन्धान्तरे स्वभावत एव शब्दोऽर्थस्य प्रत्यायकोऽर्थश्च प्रत्याय्य इत्ययमेव सम्बन्धो भविष्यति । यच्चेदमिन्द्रियलिङ्गादिवत् संनिकर्षव्याप्त्यादिसम्बन्धानपेक्षमऽर्थप्रतिपादनम्-इदमेवाभिधानमित्युच्यते, तदेव च सञ्ज्ञासञ्ज्ञित्वम्, तेनोच्यते- सञ्ज्ञासञ्ज्ञिलक्षणः सम्बन्ध इति ।**

---

निराकरोति सिद्धान्तीऽस्यादेवमित्यादिना, यदि शब्दार्थयोः सम्बन्धो न स्यात्तदा स्यादप्येवम्=वेदस्याऽप्रामाण्यम्, नैवमस्ति प्रत्याय्यप्रत्यायकत्वरूपसम्बन्धस्य सत्त्वादेवेत्यर्थः । नन्वसति सम्बन्धे प्रत्यायकत्वासम्भवोऽप्युक्त इत्याशङ्क्याह- असत्येवेति । अयम्=प्रत्याय्यप्रत्यायकत्वरूपः । न च प्रत्यायकत्वादेव प्रत्यायकत्वमित्यात्माश्रय इति वाच्यम्, प्रत्यायकत्वस्य स्वभावसिद्धत्वात्, असिद्धसाधने ह्यात्माश्रयः स्यान्नैवमस्तीत्युक्तम्-स्वभावत इति । इन्द्रियादिभ्योऽर्थबोधकेभ्यः शब्दस्य विशेषमाह- यच्चेदमिति, इन्द्रियस्यार्थबोधनेऽर्थसंयोगापेक्षास्ति, लिङ्गस्यार्थबोधने व्याप्तिसम्बन्धापेक्षास्ति, एवं शब्दस्य स्वाभाविकप्रत्यायकत्वादन्यस्य सम्बन्धान्तरस्यापेक्षा नास्ति तथा च सम्बन्धान्तरमनपेक्ष्यैव यदर्थप्रतिपादनं तदेवाभिधानपदवाच्यम् । इन्द्रियलिङ्गादिवदिति व्यतिरेकीदृष्टान्तः-यथेन्द्रियलिङ्गादीनां सन्निकर्षव्याप्त्यादिसम्बन्धापेक्षमेवार्थप्रतिपादकत्वं तथा शब्दस्यार्थप्रतिपादकत्वं सम्बन्धान्तरापेक्षं नास्ति स्वभावत एवार्थप्रतिपादकत्वादित्यर्थः । तदेव=प्रत्याय्यप्रत्यायकत्वमेव सञ्ज्ञासञ्ज्ञिशब्देनोच्यते । उपसंहरति-तेनेति । वार्तिकेऽप्युक्तम्-

"वाच्यवाचकसम्बन्धनिषेधे लोकबाधनम् ।
विरोधश्च स्ववाक्येन, न हि सम्बन्धवर्जितैः- ॥
प्रतिज्ञार्थं पदैः शक्यः प्रतिपादयितुं परः ।
अभिधानक्रियायां हि कर्मत्वं वाच्यसंश्रयम् ।
शब्दानां करणत्वं वा कर्तृत्वं वा निरूपितम् ॥" इत्यादि ।

**किं पुनः शब्दस्यार्थप्रतिपादने प्रमाणम् ?, शब्दानन्तरमऽर्थप्रतिपत्तिरेव । नन्वियमऽभिप्रायानुमानद्वारेणैवोपपन्ना ?, नेति ब्रूमः—अर्थाभिप्रायशून्येनापि स्वापाद्यवस्थायां परवशप्रयुक्तैरपि शब्दैरर्थप्रतिपत्तिदर्शनात् । तथा पुरुषान्तरकृतमऽपौरुषेयं वा वेदवाक्यमनर्थज्ञैरपि प्रयुज्यमानं व्युत्पन्नानामर्थबुद्धिं जनयत्येव, तस्मात् प्रत्यायकः शब्दः । किमिति तर्हि प्रथमश्रवणे न प्रत्याययति ?, सहकारिविरहात्—सञ्ज्ञात्वग्रहण-**

---

शब्दस्यार्थप्रतिपादने प्रमाणं पृच्छति— किं पुनरिति । उत्तरमाह— शब्दानन्तरमिति, शब्दश्रवणादनन्तरमेवार्थप्रतीतिर्भवतीति नियम एवात्र प्रमाणम् । अर्थप्रतिपत्तिः = पदार्थोपस्थितिः, शाब्दबोधो वा । नन्वियम् =अर्थप्रतीतिस्तु वक्तुरभिप्रायलिङ्गकानुमानेनापि सम्भवतीति किमर्थमधिकं शब्दलक्षणं प्रमाणमभ्युपगम्यत इत्याशङ्कते— नन्विति । परिहरति— नेति । अव्याप्तिदोषमाह—अर्थाभिप्रायेति, यदा स्वापावस्थायां देवदत्तेन स्वप्नपरवशेन किं चिद्वाक्यमुच्चारितं तदा देवदत्तस्य तद्वाक्यार्थेऽभिप्रायो नैव भवत्यऽथ च श्रोत्राऽर्थो बुध्यत एवेति तत्राभिप्रायानुमानं विनैवार्थबोधो भवति । उदाहरणान्तरमाह— तथेति । पुरुषान्तरकृतम् =रघुवंशादिवाक्यम् । अपौरुषेयं वेदवाक्यम् । अर्थज्ञा न भवन्तीत्यनर्थज्ञास्तैर्यदोच्चार्यते वेदादिवाक्यं तदापि विद्वान् तस्यार्थमवधारयति न च तस्मिन्नर्थे वक्तुरभिप्रायस्तस्यार्थाऽनभिज्ञत्वादित्यव्याप्तिः । उक्तवेदादिवाक्येष्वप्युच्चारयितुरेवाभिप्रायं पूर्वपक्षी कदा चिद्वच्यादित्याशङ्क्योक्तम्— अनर्थज्ञैरिति, तदर्थानभिज्ञस्योच्चारयितुस्तदर्थे कथमप्यभिप्रायाऽसम्भवादिति भावः । उपसंहरति—तस्मादिति । ननु यदि शब्दस्यार्थप्रत्यायकत्वमस्त्येव तदा शब्दः प्रथमश्रवणे =प्रथमश्रवणवेलायाम् =शक्तिग्रहात्पूर्वमेव किं नार्थं प्रत्याययतीत्याशङ्कते— किमितीति । उत्तरमाह—सहकारीति, कारणस्यापि सहकार्यऽभावे कार्यकरत्वं न भवति, शब्दस्य चार्थं प्रतिपादयतः सञ्ज्ञात्वग्रहणम् = शक्तिग्रहणं सहकारिकारणमस्ति यथाऽर्थं पश्यतो नेत्रस्याऽऽलोक इति प्रथमश्रवणवेलायां शक्तिग्रहरूपसहकारिविरहान्नार्थं प्रत्याययति शब्द इत्यर्थः । उक्तं च—" शक्तिधीः सहकारिणी "

मपि शब्दस्यार्थं प्रत्याययतोऽङ्गं नेत्रस्येवाऽऽलोकः, तेन यः पुरुषान्तरेभ्यः 'अयं शब्दोऽस्य सञ्ज्ञा' इति ज्ञातवान् तस्यैव प्रत्याययति नान्यस्येति न दोषः।

नन्वेवमस्तु नाम सम्बन्धः स तु पौरुषेय इति त्वदुक्त्यैवापन्नम्, तथा हि- न हि शब्दस्यार्थेन संयोगतादात्म्यादिसम्बन्धः किं तु प्रत्यायकत्वं तच्च पुरुषाधीनमित्युक्तम्, अतो देवदत्तादिशब्दस्येव 'अस्यार्थस्येयं सञ्ज्ञा' इत्येवं सम्बन्धे कृते पश्चाच्छब्दस्यार्थप्रतिपादनमिति सिद्धं पौरुषेयत्वम्।

पूर्वाक्षिप्तं सम्बन्धनित्यत्वमऽसमाधायेदानीम्-"अथ गौरित्यत्र कः शब्दः" इति कया सङ्गत्या केन वा प्रयोजनेन शब्दस्वरूपं निरूप्यते ?। सङ्गतिस्तावत्प्रासङ्गिकी-सम्बन्धप्रस्तावात् सम्बन्धिनोरपि शब्दार्थ-

---

इति। स्वाभिप्रायमाह-तेनेति।

नन्वेवं यः शब्दार्थयोः सम्बन्धः स पौरुषेय एव स्याद् यथा देवदत्तशब्दस्य देवदत्तव्यक्त्या तत्पित्रा सम्बन्धः क्रियते तथा घटशब्दस्यापि घटव्यक्त्या केनचित् पुरुषेण गृह्यमाणः सम्बन्धः क्रियत इति त्वदुक्त्या प्राप्तं तथा च सम्बन्धस्य पौरुषेयत्वान्नित्यत्वं त्वदुक्तं न स्यादित्याशङ्कते-नन्वेवमिति। एवम्=उक्तरीत्या। संबन्धस्य पौरुषेयत्वमुपपादयति-तथा हीति।

पूर्वाक्षिप्तेति, भाष्ये "रूपभेदोपि भवति- गौरितीमं शब्दमुच्चारयन्ति सास्नादिमन्तमर्थमवबुध्यन्त इति पृथग्भूतयोश्च यः सम्बन्धः स कृतको दृष्टो यथा रज्जुघटयोरिति" इत्येवमन्तं शब्दार्थसम्बन्धनित्यत्वमाक्षिप्तम्, अतोग्रे सम्बन्धनित्यत्वसमाधानमेवोचितमासीत् तदुपेक्ष्य शब्दस्वरूपनिरूपणं कृतम्- "अथ गौरित्यत्र कः शब्दः ? गकारौकारविसर्जनीया इति भगवानुपवर्षः" इत्येवम्। तत्र पूर्वपक्षी पृच्छति-सम्बन्धनित्यत्वसमाधानमात्रकं विहाय यद्भाष्यकारेण शब्दस्वरूपं निरूप्यते तत्र का सङ्गतिः किं च प्रयोजनमिति, एतदेव ग्रन्थकृद्विशदयति-पूर्वाक्षिप्तमित्यादिना। उत्तरमाह-सङ्गतिस्तावदित्यादिना। प्रसङ्गमाह-सम्बन्धप्रस्तावादिति, उक्तं च-"अन्योद्देशेनान्यदी-

योः प्रस्तुतत्वात् तत्स्वरूपं निरूप्यते । प्रयोजनमपि-तदवयवाश्रितानामूहादीनां सत्यत्वम्, निरवयवे हि वाक्ये पदे वा वाचकेऽवयवानां मृषात्वात् तदाश्रितान्यपि कार्याणि मृषा भवेयुः ।

---

यस्यापि सहानुष्ठानं प्रसङ्गः ।" इति तथा च सम्बन्धप्रस्तावात् सम्बन्धिनोः शब्दार्थयोरपि प्रस्तुतत्वात् तत्स्वरूपम्=शब्दार्थयोः स्वरूपं निरूप्यते इति प्रसङ्गसङ्गतिः । तथा च भाष्यम्-" अथ गौरित्यत्र कः शब्दः " " अथ गौरित्यस्य शब्दस्य कोऽर्थः " इत्यादि । प्रयोजनमाह-प्रयोजनमपीति । तदवयवाश्रितानाम्=शब्दावयवाश्रितानाम् । ऊहो नवमाध्याये द्रष्टव्यः । आदिपदाद्बाधादिर्ज्ञेयः । बाधश्च दशमे द्रष्टव्यः । विपक्षे बाधकमाह-निरवयवेति, वाक्यस्य निरवयवत्वे " अग्नये जुष्टं निर्वपामि " इत्यत्र " अग्नये " इति वाक्यावयवस्थाने " सूर्याय" इति वाक्यावयवस्योहो न स्यादित्युक्तम्-वाक्ये इति । पदस्य च निरवयवत्वे " छागस्य वपाया मेदसः " इत्यत्र प्राजापत्येषु " छागस्य " इत्यत्र पदावयवैकवचनस्थाने पदावयवबहुवचनस्योहो न स्यादित्युक्तम्-पदे वेति । सावयवत्वे तूहसम्भवात् प्रथमे " सूर्याय जुष्टम् " इति, द्वितीये " छागानां वपायाः " इत्यूहो भवतीति ज्ञेयम् । यद्यपि मीमांसकमते वर्णा एव पदं वर्णानां च निरवयवत्वं वर्णावयवी तु पृथक् नास्त्येव तथापि वाक्यस्यावयवाः पदानि पदानां च वर्णा एवाऽवयवभूता इति प्रतीयते, अन्यथा "अवयवानां मृषात्वात्" इत्यादिर्निर्देशः सिद्धान्तविरुद्धः स्यात् । वाचके=बोधके-वाक्यस्य वाचकत्वानभ्युपगमात् । तदाश्रितानि=पदवाक्ययोरवयवाश्रितानि । इदमैदम्पर्यम्-वैयाकरणैर्बोधकत्वेनाऽखण्डपदवाक्ययोः स्वीकृतत्वात्तत्र पक्षे उक्तोहादयो न सम्भवन्ति, उक्तं च तैः—

" पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ।
वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन ॥"

पदानामपि वाक्याद्विवेकः=भेदो नास्ति वाक्यं पदं चाखण्डमेव न तु वर्णसमूहः ।" इति । अत्र च शब्दस्वरूपनिरूपणव्याजेन पदवाक्ययोः सावयवत्वे साधिते तूहादयः सम्भवन्तीत्यूहादीनां सत्यत्वं शब्दस्वरूपनिरूपणस्य प्रयोजनमिति । अपिर्भिन्नक्रमः कार्याण्यपीत्यर्थः । कार्याणि=ऊहादीनि ।

किं च सम्बन्धसिद्ध्यर्थमवश्यं वर्णानां वाचकत्वं समर्थनीयम्, अन्यथा हि तेषां प्रत्येकं सङ्गत्यऽभावाद् वाचकत्वानुपपत्तिमाकलयतां स्फोटस्य च शशविषाणायमानस्य दूरनिरस्तं वाचकत्वमिति सम्बन्ध एव वाच्यवाचकभावो निराधारत्वान्न स्यान्नतरां नित्यत्वमिति तत्सिद्ध्यर्थं वर्णानां वाचकत्वं समर्थयितुं शब्दस्वरूपं निरूप्यते। किं गौरित्यत्र वर्णा एव शब्दः? उत तेभ्योऽर्थान्तरम्? इत्येतत् प्राधान्येन निरूप्यते। वर्णावयव-गत्व-गोशब्दावयवि-जातिनिराकरणं तु प्रासङ्गिकम्। वर्णा एव शब्द इत्यवधारणसमर्थनार्थम्।

तत्र वर्णानामपि पुद्गलाख्यानऽवयवानाऽऽर्हताः संगिरन्ते, तत्त्वऽवयवानुपलम्भादयुक्तम्। प्रत्यक्षेण ता-

---

सङ्गत्यन्त्यतरमाह-किं चेत्यादिना। वाचकस्यैव शब्दत्वाद्वर्णानामेवात्र दर्शने शब्दत्वेन व्यवहारात्तेषां वाचकत्वं समर्थनाधीनमेव दर्शनान्तरेषु वर्णव्यतिरिक्तस्यैव शब्दत्वेन वाचकत्वेन च व्यवहारादित्यर्थः। विपक्षे बाधकमाह-अन्यथेति। तेषाम्=वर्णानाम्। गकारौकारादीनां प्रत्येकं शक्तिग्रहो न भवति किं तु गकारौकारादिविशिष्टाया आनुपूर्व्याः, तथा च वर्णानां वाचकत्वं न स्यादिति वाच्यवाचकभावः सम्बन्धो न सिद्ध्येत तदर्थं वर्णानां वाचकत्वसमर्थनं तदर्थं च शब्दस्वरूपनिरूपणं युक्तमेवेत्यर्थः। स्पष्टमन्यत्। भाष्याभिप्रायं प्रकटयति- किं गौरित्यत्रेति। तेभ्यः=वर्णेभ्यः। अर्थान्तरम्=वर्णावयविपदम्। दर्शनान्तरेषु वर्णानामप्यऽवयवा उक्तास्तथा गत्वादिजातिरुक्ता गकारौकारादिवर्णानां गौरित्यादयः शब्दा अवयविभूता उक्ता जातिः=गोशब्दत्वादिजातयश्चोक्ता इत्येतेषां पदार्थानां निराकरणं प्रासङ्गिकमित्याह-वर्णावयवेति। वर्णा एवेति- तथा च भाष्यम्- " तस्माद् गौरिति गकारादिविसर्जनीयान्तं पदं अक्षराण्येव, तस्मादक्षराण्येव पदम् " इति।

वर्णावयवमतमुपदर्शयति- तत्रेत्यादिना। आर्हताः=जैनाः। तदुक्तम्- " वर्णपदवाक्यात्मकं वचनम्। अकारादिः पौद्गलिको वर्णः।" इति। पुद्गलानामऽवयवी पौद्गलिक इत्यर्थः। परिहरति-तत्त्ववयवेति। तत्=वर्णानां पु-

वदऽवयवा नोपलभ्यन्ते वर्णेषु साकल्यवैकल्यग्रहणाभावात्। नानुमानेन—तैः सह कस्य चिल्लिङ्गस्य सम्बन्धाऽग्रहणात्। न च सामान्यतोदृष्टम्, न हि यद् यद्वस्तु तस्य तस्याऽवश्यमवयवैर्भवितव्यम्, परमाणूनां निरवयवत्वात्। तेपि सावयवा इति चेत्?, तदवयवा अपि तथा स्युस्ततः परमपि तथेत्येकस्यैव माषावयविनोऽनन्तावयवत्वं स्यात्, ततश्चैकेनैव माषेण तिलेन वा सर्वं जगद् व्याप्येत—अनन्तैरवयवैर्मूर्तैरन्योन्यस्यावकाशमऽप्रयच्छद्भिरनन्तदेशव्याप्तेः। तस्मान्निरवयवाः

---

द्गलाख्यावयवकथनम्। यदि वर्णानामवयवाः स्युस्तदा प्रत्यक्षेणोपलभ्येयुर्न चोपलभ्यन्ते इत्याह—प्रत्यक्षेणेति। सावयवस्य कदा चित्साकल्येन कदा चिद्वैकल्येन ग्रहणं भवति यथा धान्यराशेः, न चैवमत्रास्तीति हेतुमाह—वर्णेष्विति। ननु वर्णावयवानां प्रत्यक्षाग्राह्यत्वादनुमानं भविष्यति तदुक्तम्—" पौद्गलिकः शब्द इन्द्रियार्थत्वाद्रूपादिवत् " इत्याशङ्क्याह—नानुमानेनेति। हेतुमाह—तैरिति। तैः=वर्णावयवैः। समन्यतोनुमानगम्यत्वं प्रतिषिध्य विशेषतः प्रतिषेधमाह—न च सामान्येति। वस्तुत्वहेतौ सावयवत्वव्यभिचारं प्रदर्शयति— न हीति। परमाणुषु वस्तुत्वसत्त्वेपि सावयवत्वं नास्तीति व्यभिचारस्तथा च परमाणुवद्वर्णोपि निरवयव एवेति भावः। ननु ते=परमाणवोपि सावयवा एवेति कथं वस्तुत्वं सावयवत्वव्यभिचारि स्यादित्याशङ्कते—ते पीति। उत्तरमाह—तदवयवेति, तदवयवाः=परमाण्ववयवावयवाः, तथा=सावयवाः। माषावयविनः=माषलक्षणावयविनः। सर्वजगद्व्याप्तौ हेतुमाह—अनन्तैरिति। मूर्तेन हि पदार्थेन स्वाधिकरणं निरुद्ध्यते तत्रान्यस्य स्थितिर्न संभवतीत्यनन्तैरवयवैरनन्तदेशव्याप्तौ सर्वं जगद् व्याप्तं स्यादेवेत्यर्थः। वार्तिकं यथा—

'पृथङ् न चोपलभ्यन्ते वर्णस्यावयवाः क्व चित्।
न च वर्णेष्वनुस्यूता दृश्यन्ते तन्तुवत्पटे॥
प्रत्यक्षेणावबुद्धश्च वर्णोऽवयववर्जितः।
किं न स्यात्, व्योमवच्चात्रलिङ्गं तद्रहितामतिः॥" इत्यादि।

परमाणवो वर्णाश्च। तथा गत्वजातिरौत्वजातिश्च नि-
ष्प्रमाणिकैव।

ननु द्रुतविलम्बितमध्येषूदात्तानुदात्तस्वरितेषु सा-
नुनासिकनिरनुनासिकयोर्ह्रस्वदीर्घप्लुतेषु च प्रत्यभि-
ज्ञायमाना जातिः कथं नास्तीति शक्यतेऽभिधातु-
म्?। सत्यम्–अस्ति प्रत्यभिज्ञा सा तु व्यक्त्येकत्वादेवो-
पपन्ना। द्रुतादिभेदावभासस्तु द्रुताद्यवस्थाभेदालम्बनो
न व्यक्तिभेदमापादयितुमलं भवति।

भेदाभेदावभासोपि द्वेधा भवति–क्व चिद्भेदो ध-

---

गत्वादिजातिं पराचष्टे–तथेति, अनेकसमवेतस्यैव धर्मस्य जातित्वस्वीकाराद्
यदि गकारादिवर्णानामनेकत्वं स्यात्तदा तेषु समवेतस्य गत्वादेर्जातित्वं स्या-
दपि नैवमस्ति गकारादीनां वर्णानामेकत्वेनाऽनेकत्वाऽसम्भवात्, एक एव ग-
कारो ध्वनिभिस्तत्र तत्र तत्तद्रूपेण व्यक्तो भवतीति न गत्वादिजातेरवकाश इत्यर्थः।

ननु द्रुतोयं गकारो विलम्बितोयं गकार इत्यादौ द्रुतत्वादिभेदेन गका-
रादिव्यक्तेरपि भेदे गत्वादिजातिमेवावलम्ब्य गकारादिप्रत्यभिज्ञा संभवति स
एवायं गकार इति प्रत्यभिज्ञायमानायाः=प्रत्यभिज्ञाविषयस्य च जातेः कथमभाव
उच्यते? इत्याशङ्कते– नन्विति। ह्रस्वदीर्घप्लुतेष्वित्यत्र गकारादिवर्णेष्विति
शेषः। एकस्य गकारादेर्द्रुतत्वादिविविधरूपेण प्रतीतिर्न सम्भवतीत्यऽनेकत्वं
वक्तव्यं तथा च तत्र समवेतस्य गत्वादेर्जातित्वं प्राप्तमिति भावस्तार्किकस्य।
उत्तरमाह–सत्यमित्यादिना द्रुतविलम्बितह्रस्वदीर्घादिषु गकारेषु स एवायं
गकारइत्येषैव प्रत्यभिज्ञा वक्तव्या सा तु गकारस्यैकत्व एवोपपद्यते प्रत्युत
गकारव्यक्तीनामानन्त्ये एव स एवायं गकार इति न स्यादित्याह–सेति, ग-
कारस्य चैकत्वे गत्वस्य कथं जातित्वं स्यादिति भावः। ननु यद्येक एव ग-
कारस्तदा द्रुतोयं गकारो विलम्बितोयं गकार इत्यादि भेदप्रतीतिर्न स्या-
दित्याशङ्क्याह–द्रुतादीति। द्रुतत्वादिकृतो भेदस्तु द्रुतत्वाद्यवस्थामूलक एव न
तु गकारानेकत्वमूलक इति न द्रुतत्वादिभेदप्रतीत्या गकारानेकत्वं संभवति।

नन्वत्र द्रुतत्वाद्यवस्थामूलक एव भेदो न गकारव्यक्तिकृत इत्यत्र किं
प्रमाणमित्याशङ्क्य भेदावभासमऽभेदावभासं च व्याचष्टे–भेदाभेदावभासेति।

र्मिविषयोऽभेदस्तु धर्मविषयो यथा शाबलेयादिष्वयं गौरयं गौरयमपीति जातेरात्मलाभः। क्वचित्तु भेदावभासो धर्माद्ऽभेदावभासश्च धर्मिणमालम्बते–एकस्मिन्नेव देवदत्ते युवायं वृद्धोयं कृशोयमिति. न तत्र जातिरङ्गीक्रियते। तदिह द्रुतादिषु धर्मिविषयोऽभेदो धर्मविषयस्तु भेदः, तथा हि–ईदृशोऽत्रावभासः–'अनेनायमकारो द्रुतमुच्चारितोऽनेन विलम्बितम्' इति न तु

---

किं वा ननु भवन्मते धर्मधर्मिणोर्भेदाभेदावेव न तु सर्वथा भेद एव येन द्रुतत्वादीनां भेदेपि तद्धर्मिणो गकारादेर्भेदो न स्यात्? तस्माद् यथा कृष्णपीतादीनां धर्माणां भेदात् तत्सम्बन्धिनीनां घटव्यक्तीनामपि परस्परं भेदो भवत्येव भेदाच्च घटत्वजातिसिद्धिस्तथा द्रुतत्वविलम्बितत्वादिधर्माणां भेदात् तत्सम्बन्धिनो गकारादेरपि भेदो भेदाच्च गत्वादिजातिसिद्धिः किं न स्यादित्याशङ्क्य स्वीकृतभेदाभेदपक्षेपि द्रुतत्वादिधर्मैर्गकारादिव्यक्तिभेदो न सम्भवति भेदावभासस्यात्र धर्ममात्रविषयकत्वादित्यभिप्रायेण क्व धर्मिभेदो भवति क्व च न भवतीति प्रदर्शनाय भेदाभेदावभासं व्याचष्टे– भेदाभेदावभासेति। भेदाभेदावभासोपि न साङ्कर्येण भवति किं तु क्वचिद् भेदांशो धर्मिणमालम्बतेऽभेदांशश्च धर्मं क्वचिच्च भेदांशो धर्ममालम्बतेऽभेदांशो धर्मिणमित्याह–द्वेधेति। उदाहरति–यथेति, शाबलेयो गौर्मुण्डो गौः खण्डोपि गौरित्यत्र धर्मिणां शाबलेयादीनां परस्परं भेदेनाऽनेकत्वात्तद्वृत्तिधर्मस्य च गोत्वस्याभेदेनैकत्वाद् युक्तं तत्र गोत्वस्य जातित्वम् "एकमनेकसमवेतं सामान्यम्" इति नियमात्। यत्र तु धर्मिणो न भेदः किं तु धर्माणामेव भेदो भवति तत्र जातिकल्पना न युज्यते यथा युवायं वृद्धोयं कृशोयं देवदत्त इत्यत्र धर्मिणो देवदत्तस्यैकत्वान्न देवदत्तत्वं जातिः भेदस्य युवत्वादिधर्ममात्रमूलकत्वादित्याह– क्वचित्त्विति। तथा द्रुतोयं गकरो विलम्बितोयं गकार इत्यत्रापि द्रुतत्वादिधर्माणां भेदेपि धर्मिणो गकारस्याऽभेदेनैकत्वान्न गत्वादेर्जातित्वं युक्तमितिभावस्तदाह–तदिहेति। एतदेवोपपादयति–तथा हीति। अयमकारो प्लुतमुच्चारित इत्यत्र द्रुतत्वधर्मस्योच्चारणक्रियागतत्वान्न गकारधर्मिगतत्वमस्ति येन धर्मभेदकृतोपि धर्मिभेदः स्यात् धर्मिभेदाभावे च न गत्वादिजाति-

'अयमकारो द्रुतोऽयं तु विलम्बितः' इति येन धर्मि-भेदो जातिश्चाङ्गीक्रियेयाताम् ।

ननु कार्श्यादीनां क्रमवर्तित्वादेकस्मिन् देवदत्ते युक्तः समावेशः, अनुनासिकादीनां तु धर्माणां युगपदनेकवक्त्रुच्चारिते वर्णे समवेतानां कथमेकवर्णविषयत्वम् ? न हि विरुद्धधर्मानेको धर्मी युगपद्बिभर्ति ? । सत्यम्– न त्वेते परमार्थतो वर्णधर्मा ध्वनिधर्मास्त्वेते

---

रपि सिध्यतीत्याह–येनेति । स्पष्टमन्यत् । तदुक्तं वार्तिके–

" न तु द्रुतादिभेदेपि निष्पन्ना संप्रतीयते– ।
गव्यक्त्यन्तरविच्छिन्ना गव्यक्तिरपरा स्फुटा ॥
तेनैकत्वेन वर्णस्य बुद्धिरेकोपजायते ॥" इत्यादि ।

ननु युवायं वृद्धोयं स्थूलोयं कृशोयं देवदत्त इत्यत्र यदा देवदत्ते स्थूलत्वं भवति तदा कृशत्वं न भवति यदा च कृशत्वं भवति तदा स्थूलत्वं न भवतीति कार्श्यादीनां क्रमवर्तित्वात्=कालभेदन वृत्तित्वादेकस्मिन्नपि देवदत्ते समावेशः सम्भवति, वर्णस्तु यद्येक एव तदाऽनेकैर्वक्तृभिर्भिन्नभिन्नप्रकारेणाप्युच्चार्यते गकारस्तत्रैकस्मिन्नेव गकारे युगपत्=एकस्मिन्नेव काले सानुनासिकत्वनिरनुनासिकत्वादिधर्माणां परस्परं विरुद्धानां कथं समावेशः स्यादित्याशङ्कते– नन्विति । विपक्षे बाधकमाह– नहीति । कालभेदेन तु विरुद्धधर्मधारणमपि सम्भवति न त्वेकस्मिन्नेव काल एकेनेत्याह–युगपदिति । तस्माद्गकारादिवर्णानामऽनेकत्वमभ्युपगन्तव्यं तथा च कोपि गकारः सानुनासिकः कोपि निरनुनासिक इत्युपपद्यते, गकारादीनामनेकत्वे च गत्वादिर्जातिरापि सिद्धैवेत्यर्थः ।

परिहरति, सत्यमिति–सत्यं न विरुद्धधर्मानेको धर्मी युगपद्बिभर्तीति, अत एव सानुनासिकत्वनिरनुनासिकत्वह्रस्वत्वदीर्घत्वादयो न परमार्थतो वर्णधर्माः सन्ति येनोक्ताक्षेपः स्यात् किं त्वेते ध्वनिधर्मा एव. ध्वनिना वर्णाभिव्यक्तिर्भवतीति यथाऽभिव्यञ्जकदर्पणगतमालिन्यादिकं मुखे भासते तथाऽभिव्यञ्जकध्वनिगताः सानुनासिकत्वादयो धर्मा वर्णेऽवभासन्ते ध्वनीनां चानेकत्वाद् युक्तस्तत्रव्यक्तिभेदेन विरुद्धधर्मसमवायोपीत्यर्थः । यथेति– यथा

वर्णे केवलमाभासन्ते, यथाऽल्पे महति च दर्पणे युगपद् दृश्यमाने मुखेऽल्पत्वं महत्त्वं चेति, तस्माद्वर्णस्य व्यक्त्येकत्वेऽपि न विरोध इत्यऽप्रामाणिकी गत्वादिजातिः।

एवं गोशब्दावयव्यपि, गकारादीनामयौगपद्यात् सर्वगतत्वाच्चाऽवयव्यारम्भाऽसामर्थ्यात्। सर्वत्र हि कारणपरिमाणादधिकं कार्यपरिमाणं तन्तुपटयोरिव,

---

ऽल्पे महति च दर्पणे युगपन्मुखदर्शनसमये मुखे तत्तद्दर्पणगतमऽल्पत्वं महत्त्वंचाऽवभासते न तु तदल्पत्वं महत्त्वं च वास्तवं मुखे भवति तथात्रापि ज्ञेयम्। उपसंहरति—तस्मादिति। यथा मुखस्यैकव्यक्तिकत्वेपि विरुद्धधर्मप्रतीतौ न विरोधो विविधदर्पणगतानामेव परस्परविरुद्धविविधधर्माणां युगपन्मुखेऽवभासमानत्वात् तथा वर्णस्याप्येकव्यक्तिकत्वेपि न विरुद्धधर्मप्रतिभासे विरोधो विविधध्वनिगतानामेव परस्परविरुद्धसानुनासिकत्वादिविविधधर्माणां वर्णे युगपदवभासमानत्वात्। तथा च सिद्धे वर्णस्य गकारादेरेकत्वे न गत्वादेर्जातित्वमिति भावः। वार्तिकेप्युक्तम्—

"विशेषबुद्धिसद्भावो भवेद् व्यञ्जकभेदतः॥
यथैव तव गत्वादि गम्यमानं द्रुतादिभिः—।
विशेषैरपि नानेकमेवं वर्णोपि नो भवेत्॥
त्वयापि व्यञ्जकव्यक्तिभेदाद्भेदोभ्युपेयते।
ममापि व्यञ्जकैर्नादैर्भेदबुद्धिर्भविष्यति॥" इत्यादि।

मीमांसकमते वर्णा एव शब्द इति सिद्धान्तः, दर्शनान्तरेषु च वर्णानां शब्दावयवत्वं शब्दस्य चावयवित्वमुक्तं तन्निराकरोति—एवमित्यादिना। एवम्=गत्वादिजातिवत् निष्प्रमाणकत्वादवयविभूतो गोशब्दोपि नास्त्येव किं त्वऽवयवत्वेनोक्ता वर्णा एव शब्द इत्यर्थः। अवयव्यभावे हेतुमाह— गकारादीनामिति। धान्यैः परिच्छिन्नैर्युगपदेकत्रभूतैरवयवी राशिरारभ्यते एवमेव सर्वत्रावयविनिष्पत्तिर्भवति न चात्रैवं सम्भवति— यदा गकारस्तदा नौकारो यदा चौकारस्तदा न गकार इत्येकत्रीभवनाभावे—युगपत्स्थित्यभावे कथमवयवभूतैर्वर्णैरवयव्यारभ्येत तथा वर्णानां सर्वगतत्वात्=व्यापकत्वात्कथं तेषां तेभ्यो महानवयवी स्यादित्यर्थः, एतदेवाह— सर्वत्रेति। कार्यपरिमाणमित्यत्र

न च विभुभ्यो वर्णेभ्यः परिमाणाधिक्यं कस्य चिद्भवति, अतो नास्त्यऽवयवी । तदभावे च तदाधारं गोशब्दत्वं दूरापास्तम् । तस्माद्वर्णा एव शब्दः ।

आह–गृह्णीम एतत्–'अवयवावयविगत्वादिकं नास्ति' इति, न तु 'वर्णा एव शब्दः' इति, अर्थप्रत्ययानुपपत्तेः, तथा हि–

न ह्येकाक्षरविज्ञानादर्थधीरुपजायते ।
वाचश्च क्रमवर्तित्वात् साहित्यं नावकल्पते ॥

---

दृष्टमिति शेषः । व्यापकेभ्यो वर्णेभ्यस्त्वधिकपरिमाणवान्न भवति=सम्भवति व्यापकत्वस्यैव सर्वतोधिकपरिमाणत्वादित्याह– न त्विति । यो वर्णानामवयवी स्यादिति शेषः । उपसंहरति– अत इति । आधाराभावे आधेयाभावस्यावश्यम्भावाद् गोशब्दत्वजातिरपि नास्तीत्याह– तदभावेति । तदभावे=गोशब्दलक्षणावयव्यऽभावे। परमोपसंहारं स्वसिद्धान्तं चाह–तस्मादिति। वार्तिकेप्युक्तम्–

" समुदायोपि तेभ्योऽन्यो वारणीयोऽनया दिशा ॥
यावन्तो यादृशा ये च यदर्थप्रतिपादने ।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवाऽवबोधकाः ॥
तेषां तु गुणभूतानामर्थप्रत्यायनं प्रति ।
साहित्यमेककर्त्रादिक्रमश्चापि विवक्षितः ॥" इत्यादि ।

तार्किकशङ्कां निराकृत्य संप्रति वैयाकरणकृतशङ्कामुद्दिशति– आहेति । अवयवो नास्त्यऽवयवी नास्ति गत्वादिकं च नास्तीति यन्मीमांसकेनोक्तं शब्दविषयकं तदेतत्सर्वं गृह्णीमः किं तु वर्णा एव शब्द इति न गृह्णीमो वर्णेभ्योऽर्थप्रत्ययस्यानुपपत्तेरित्याह इत्यन्वयः । पूर्वपक्षी वर्णेभ्योऽर्थप्रत्ययानुपपत्तौ पद्येन हेतुमाह– न ह्येकाक्षरेति, कम्बुग्रीवादिमत्पदार्थस्य केवलं घकारश्रवणाद्वा टकारश्रवणाद्वा प्रतीतिर्न जायते तस्मान्न वर्णा एव शब्दः । ननु घकारटकारानुपूर्वीतस्त्वर्थप्रतीतिर्भविष्यत्याऽऽनुपूर्वी च वर्णा एवेत्याशङ्क्याह– वाचश्चेति । वाचः=उच्चारणस्य । क्रमवर्तित्वात्=क्रमेणैवोच्चारणं भवतीति घकारसमये टकारो न सम्भवति टकारसमये च घकारो न सम्भवतीति वर्णानां साहित्यमपि नावकल्पते येन साहित्ययुतेभ्यो वर्णेभ्योऽर्थप्रतीतिरुच्येतेत्यर्थः ।

उच्यते—

यथाग्नेयादिकर्माणि क्रमवर्तीनि सन्त्यपि ।
संहत्य कुर्वते कार्यमेकं वर्णास्तथैव नः ॥

ननु क्रमवर्तिनामप्युत्पत्त्यऽपूर्ववशेन युक्तं साहित्यम्, वर्णानां तु कथम् ? । तेषामपि संस्कारेण भविष्यति । तत्सद्भावे किं प्रमाणम् ?, यदेवाग्नेयादिषु, यथा हि तेषां शास्त्रेण संहत्यकारिताऽवगमात् स्वरूपतश्च तदसम्भवादपूर्वं द्वारं कल्प्यते, तथा वर्णानामप्येकैकशोऽभिधानाऽदर्शनात् सकलोच्चारणे चाऽवगमात् संहत्यकारित्वे निश्चिते स्वरूपेणाऽसम्भवात् संस्का-

---

उत्तरमाह–यथाग्नेयादीति, यथाऽऽग्नेयादीनामेककालवृत्तित्वाभावेपि संहत्य फलप्रदानरूपैककार्यकरत्वं फलजनकादृष्टोत्पादकत्वं वा भवति तथा वर्णानामप्येककालवृत्तित्वाभावेपि संहत्यार्थप्रत्यायनरूपैककार्यकरत्वं सम्भवत्येवेत्यर्थः । वार्तिकेप्युक्तम्–

" दृष्टश्च पूर्णमासादेः क्रमः संहत्यकारिणः ।
अभ्यासानां च लोकेपि स्वाध्यायग्रहणादिषु ॥" इति ।

नन्वाग्नेयादीनां तु क्रमवर्तिनामप्यऽपूर्वद्वारा साहित्यं सम्भवति वर्णोच्चारणेन त्वपूर्वं नोत्पद्यते येन तद्द्वारा क्रमवर्तिनामपि वर्णानां साहित्यं स्यात्तेन चार्थप्रत्ययः स्यादित्याशङ्कते– नन्विति । उत्तरमाह–तेषामिति । तेषाम्=वर्णानामपि वर्णोच्चारणजन्यसंस्कारवशेन साहित्यमुपपद्यत इत्यर्थः । ननु वर्णोच्चारणजन्यसंस्कारसद्भावे किं मानमित्याशङ्कते– तत्सद्भावेति । उत्तरमाह– यदेवेति । आग्नेयादिजन्यापूर्वे यन्मानमर्थापत्तिस्ते सैव वर्णजन्यसंस्कारेपि मानम् । उपपादयति– यथा हीति । तेषाम्=आग्नेयादीनाम् । तदसम्भवात्= संहत्यकारिताऽसम्भवात्–आग्नेयादीनां भिन्नकालवृत्तित्वात् । एकैकशः= केवलं घकारेण वा टकारेण वा । अभिधानम्–अर्थप्रत्यायनम् । सकलोच्चारणे= एकपदघटितसकालानां वर्णानामुच्चारणेऽर्थप्रत्यायनस्यावगमात् । तथा च यथाग्नेयादिष्वपूर्वं विना साहित्यानुपपत्तेरर्थापत्त्याऽपूर्वं कल्प्यते तथा वर्णानामपि संस्कारं विना साहित्यानुपपत्तेरर्थापत्त्या वर्णोच्चारणजन्यः सं-

रकल्पनं युक्तमेव । तद्वदेव चैककर्तृकत्वं क्रमविशेष-श्चाद्रियते विपर्ययेणार्थाभिधानादर्शनात् ।

नन्वेवं प्रतिवर्णं संस्कारकल्पनादऽनेककल्पना स्यात् तद्वरमेकमेव शब्दतत्त्वं कल्पितम् । नैवम्—दृश्यादर्शनेन निरस्तत्वात्, शब्दो हि प्रत्यक्षग्राह्योऽभ्युपगम्यते न च प्रत्यक्षेण वर्णातिरिक्तं किं चित् प्रकाशते तेन नास्तीत्यवगच्छामः । त्वयापि हि शब्दतत्त्वं कल्पयित्वा पुनः संस्कारकल्पनाऽवश्यं कर्तव्या, ध्वनयो हि न

---

स्कारः कल्प्यते इति भावः । तद्वदेव=संस्कारवदेव । एकपुरुषेणैवोच्चारणेऽर्थ-प्रत्ययो भवति तथा तत्क्रमेणैवोच्चारणेऽर्थप्रत्ययो भवति न तु 'टघ' इत्येवं विपरीतक्रमेणाप्युच्चारण इत्येककर्तृकत्वं क्रमविशेषश्चाद्रियते=अर्थप्रत्यये हेतु-त्वेन स्वीक्रियत इत्याह– तद्वदेवेति ।

स्फोटवादी शङ्कते– नन्विति । शब्दतत्त्वम्=शब्दस्फोटः । कल्पितमि-त्यत्रास्माभिरिति शेषः । तदुक्तम्–"वाक्यस्फोटोतिनिष्कर्षे तिष्ठतीति म-तस्थितिः ।" इति । परिहरति–नैवमित्यादिना । दृश्यादर्शनेन=योग्यानुप-लब्ध्या । उपपादयति-शब्दो हीति, य एव श्रावणप्रत्यक्षेण गृह्यते स एव श-ब्द इति सर्वजनप्रसिद्धं श्रावणप्रत्यक्षेण च वर्णानामेवग्रहणं भवति न वर्णा-तिरिक्तस्य कस्य चिद् यस्य स्फोटत्वं परिभाष्येतेत्यनुपलब्ध्या ज्ञायते ना-स्ति स्फोटः । किं चित=स्फोटादिकम् । तस्माद्वर्णा एव शब्दः । प्रतिबन्दी-माह–त्वयापीति । त्वया शब्दतत्त्वम्=स्फोटं कल्पयित्वापि स्फोटाभिव्यञ्जक-नादसाहित्यसंपत्त्यर्थं संस्कारकल्पनाऽवश्यं कर्तव्येति संस्कारस्फोटोभयकल्पनया महद्गौरवम् । संस्कारकल्पनायां हेतुमाह–ध्वनयो हीति । प्रत्येकमित्यस्य ध्व-निभिः सहान्वयः । ध्वनयः=नादाः । प्रत्येकध्वनिस्तु स्फोटं नाभिव्यनक्तीति वक्तव्यमऽन्यथैकध्वनिनैव स्फोटाभिव्यक्तावऽन्यध्वनीनां वैयर्थ्यमेव स्यादि-ति सर्वेषां ध्वनीनां व्यञ्जकत्वं वक्तव्यं तत्रापि सर्वेषां साहित्याभावे स्फोटा-भिव्यञ्जकत्वं न सम्भवति सर्वैर्ध्वनिभिः स्वस्वकाले किंचित्किञ्चित्स्फोटा-भिव्यञ्जने स्फोटस्याऽखण्डत्वं न स्यात् सर्वस्फोटाभिव्यञ्जने तदितरध्वनीनां वैयर्थ्यमेवेति सर्वे ध्वनयः संहत्य स्फोटमभिव्यञ्जन्तीति प्राप्तं तत्र क्रमवर्तिना-

प्रत्येकं स्फोटमभिव्यञ्जन्ति, साहित्यं च क्रमवर्तिनां संस्कारद्वारमेवेति तुल्यं तत्कल्पनम्।

स्यान्मतम्!- प्रत्येकमेव नादाः शब्दमभिव्यञ्जन्ति, न चैवमुत्तरनादवैयर्थ्यम्- पूर्वे हि नादा शब्दमस्फुटमभिव्यञ्जन्ति उत्तरोत्तरे स्फुटं स्फुटतरं च व्यञ्जन्तीति नोत्तरेषामानर्थक्यम्। यद्येवम्!-ततो य एवोत्तरे नादाः स्फुटाभिव्यक्तिसमर्थास्तैरेव भवितव्यमऽलं पूर्वैः।

ननु न कश्चिदपि नादः स्वतोऽस्य स्फुटाभिव्यक्तिं करोति किं तु सर्वे ते प्रत्येकं व्यञ्जकाः स तु न द्रागेव स्फुटमवभासते, प्रथममस्फुटावभासितः सन् पुनः पुनः श्रूयमाणः स्फुटो भवति, तद् यथा दूरादवस्थितः सहकारः प्रथमं हस्तिपलालकूटादिसाधारणरूपेण प्रतिभातः पुनरालोच्यमानो वृक्षात्मना प्रकाशते पुनः स-

---

म्=क्रमेणोत्पन्नानां तृतीयक्षणे विनाशिनां च ध्वनीनां साहित्यं संस्कारं विनान सम्भवतीति ध्वनिसाहित्यार्थं तव मतेपि तत्कल्पनम्=संस्कारकल्पनं तुल्यमेव स्फोटकल्पना चाधिका।

ननु प्रत्येकमेव नादाः=ध्वनयः शब्दम्=स्फोटमभिव्यञ्जन्ति तथा च न नादसाहित्यापेक्षा तदर्थं च न संस्कारकल्पनागौरवममित्याशङ्कते- स्यान्मतमिति, उपपादयति-प्रत्येकमिति। नन्वेवमुत्तरेषां नादानाम्=ध्वनीनां वैयर्थ्यं स्यात् प्रथमेनैव नादेनार्थप्रत्यायकस्य स्फोटस्याभिव्यञ्जितत्वादित्याशङ्क्याह पूर्वपक्षी- न चैवमिति। हेतुमाह-पूर्वेति। उत्तरेषां नादानामित्यर्थः। परिहरति- यद्येवमिति, यद्युत्तरेषां नादानां स्फुटाभिव्यञ्जकत्वान्न वैयर्थ्यं तदा पूर्वेषां नादानां स्फुटमेव वैयर्थ्यमित्यर्थः।

ननु यदि केनाप्येकेन नादेनाऽस्य=स्फोटस्य स्फुटाभिव्यक्तिः क्रियेत तदा तद्भिन्नानां सर्वेषामेव नादानां वैयर्थ्यं स्यादपि न चैवमस्ति यतः सर्वैरेवनादैरभिव्यज्यमानस्य शनैः शनैः स्फुटाभिव्यक्तिर्भवतीत्याशङ्कते-नन्विति। अत्र दृष्टान्तमाह- तद्यथेति। प्रतिभातः=प्रतीतः। तद्वदेव=सहकारस्फुटाभिव्यक्तिवदेव स्फोटस्यापि शनैः शनैरेव स्फुटाभिव्यक्तिर्भवतीति न पूर्वनादवैयर्थ्यम्।

ह्कारात्मना स्फुटो भवति, तद्वदेव द्रष्टव्यम् ।

यद्येवम्?-य एव ते पूर्वे नादास्तैरेवाभ्यस्यमानैरी-दृशी स्फुटाभिव्यक्तिः स्यात् उत्तरैर्वा केवलैरभ्यस्य-मानैः, तत्र विजातीयनादाऽऽश्रयणमनर्थकम् ।

तथा प्रत्येकं हि व्यञ्जकत्वे सत्युत्तरैरस्फुटाभिव्यक्तिः पूर्वैश्च स्फुटाभिव्यक्तिः स्यादिति व्युत्क्रमेणाप्युच्चारणं स्यात्, अतोऽपेक्षितक्रमविशेषाऽनेकविजातीयनाद-समुच्चयाऽऽश्रयणादवश्यं पूर्वनादाऽऽहितसंस्कारसहि-ताऽन्तिमनादाभिव्यङ्ग्यः स्फोट इत्यवश्याङ्गीकर्तव्य-मिति तुल्या संस्कारकल्पना । यद्वा तवैवेयं संस्कारा-न्तरकल्पना, मत्पक्षे तु स्मृतिहेतुभिरेव संस्कारैः सि-

---

परिहरति-यद्येवमिति । यद्येकस्य नादस्य स्फोटव्यञ्जकत्वेपि न तेन स्फुटमवभासते स्फोट इति नादान्तरापेक्षास्ति तदा पूर्वेषामेवोत्तरेषा-मेव वा नादानां पुनः पुनरभ्यासे स्फुटाभिव्यक्तिः स्यादिति पूर्वेषामभ्यासे उत्तरेषामुत्तरेषामभ्यासे च पूर्वेषां वैयर्थ्यं स्यादेवेत्यर्थस्तदाह-तत्रेति । विजा-तीयेति-घकारस्यैवानेकवारमुच्चारणेन घटशब्दस्फोटाभिव्यक्तिः स्यादिति टकारोच्चारणमनर्थकमेवस्यादित्यर्थः । आश्रयणमित्यत्राश्रवणमित्यपि पाठः ।

विनिगमनाविरहमूलकं दोषान्तरमाह-तथेति । प्रत्येकनादस्य स्फोटा-भिव्यञ्जकत्वे उत्तरैरेव नादैः स्फुटाभिव्यक्तिर्भवति न पूर्वैरित्यत्र विनिगमना-विरहादुत्तरैरेवाऽस्फुटाभिव्यक्तिः स्यात् पूर्वैरेव च स्फुटाभिव्यक्तिः स्यादिति स्फुटाभिव्यञ्जकनादस्यैव घकाररूपस्य पश्चात्कर्तव्यत्वाद्व्युत्क्रमेण 'टघ' इत्ये-वमुच्चारितेप्यर्थप्रतीतिः स्यादित्यर्थः, न चैवं व्युत्क्रमेणोच्चारणेऽर्थप्रतीतिर्भवती-त्यऽपेक्षितक्रमविशेषस्य 'घटः' इत्यादेः, अनेकविजातीयनादसमूहस्य चाश्रय-णादवश्यं पूर्वनादजन्यसंस्कारसहितेनान्तिमनादेनाभिव्यज्यते स्फोट इत्यङ्गी-कर्तव्यमिति तव मतेपि संस्कारकल्पना प्राप्तैव स्फोटकल्पना चाधिकेति त-वैव गौरवमित्याह-अत इति । किं वाऽपेक्षितक्रमविशेषविशिष्टाऽनेकविजातीय-नादेत्यर्थः । पक्षान्तरेण स्वमतगौरवं परिहरति-यद्वेति । मया घकारः श्रुतो टकारः श्रुत इति स्मृतिकारणत्वेन संस्कारा आवश्यका एव तैरेव स्मृतिहेतुभू-

ध्यत्यऽर्थावगतिरिति न संस्कारान्तरं कल्पयितव्यम् ।

ननु ममापि त एव भविष्यन्ति ? । न, तेषां स्मृतेरन्यत्राव्यापारात् । मत्पक्षे तु स्मृतिमेव जनयन्तोऽर्थप्रतिपत्तिं संस्कारा जनयन्ति । तथा हि– प्रत्येकवर्णानुभवभावितैः संस्कारैः संहृत्य सर्ववर्णगोचरैका स्मृतिर्जन्यते तस्यां च युगपदऽवभासमाना वर्णा विनैव संस्कारान्तरेण संहृत्यार्थप्रत्ययं जनयन्ति ।

त्वत्पक्षे तु नैवं सम्भवति, तथा हि– नादा हि न

---

तैः संस्कारैर्वर्णस्मृत्युत्पादनद्वाराऽर्थप्रतीतिः सम्भवतीति न संस्कारान्तरकल्पनागौरवं मत्पक्षे । तव पक्षे तु वर्णस्मृतिहेतुभूतसंस्कारभिन्ना एव स्फोटाभिव्यञ्जकान्तिमनादसहकारिभूताः पूर्वनादाहिताः संस्काराः कल्पयितव्या इति तवैव गौरवमित्यर्थः । अनुपदमेवायं विषयो विशदी भविष्यति ।

ननु मत्पक्षेपि ते=स्मृतिहेतुत्वेन क्लृप्ता एव संस्काराः स्फोटाभिव्यञ्जनेन्तिमनादसहकारिणो भविष्यन्तीत्याशङ्कते– नन्विति । परिहरति–नेति । हेतुमाह– तेषामिति । तेषाम्=वर्णस्मृतिहेतुभूतसंस्काराणां स्मृतेरन्यत्र=स्फोटाभिव्यञ्जकान्तिमनादसाहाय्ये किं वान्तिमनादेः सह स्फोटाभिव्यञ्जने । अव्यापारात्=व्यापाराऽसम्भवात् । नन्वेवं त्वन्मतेपि स्मृतिहेतूनां संस्काराणां वर्णसाहित्यसम्पादकत्वं कथं स्यात् ? तव मते वर्णानामेव वाचकत्वेनाऽर्थप्रत्यायकत्वात् तेषां च संस्कारं विना साहित्यासम्भवात् साहित्यं च विनार्थप्रत्यायकत्वासम्भवादित्याशङ्क्य स्वमतमुपपादयति–मत्पक्षेत्यादिना । स्मृतिमेवेति–स्मृतिं जनयन्त एव संस्कारा अर्थप्रतिपादने वर्णानां सहकारिणो भवन्तीत्यर्थः । संक्षेपेणोक्तं विशदयति– तथा हीति । वर्णानुभवः=वर्णश्रवणं तेन भावितैः=उत्पादितैः । तस्याम्=स्मृतौ विषयत्वं सप्तम्यर्थस्तथा चोक्तस्मृतिविषयत्वेन युगपदवभासमाना वर्णाः संस्कारान्तरं विनैव संहत्य=स्मृतिहेतुभूतसंस्कारजन्यस्मृतिविषयीभूतत्वेन संहता अर्थप्रतीतिं जनयन्तीति न संस्कारान्तरकल्पनापेक्षेत्यर्थः ।

एवं स्वपक्षमुपपाद्योक्तरीत्या परपक्षोपपादनं न सम्भवतीत्याह– त्वत्पक्षे त्विति । अनुपपत्तिमुपपादयति– तथा हीति । त्वया हि वर्णस्मृतिहेतुभूत

ज्ञायमानतया स्फोटं व्यञ्जयन्ति अश्रावणत्वात्, अ-

---

संस्काराणामपि स्फोटाभिव्यञ्जने नादसहकारित्वमेव वक्तव्यं प्राधान्येन नादानामेव त्वन्मते स्फोटाभिव्यञ्जकत्वात्, तत्र नादानां ज्ञायमानतया वा स्मर्यमाणतया वा सत्तया वा स्फोटाभिव्यञ्जकत्वमुच्यते ? इत्येवं त्रिधा विकल्प्य प्रथमं पराचष्टे- नादा हीति । हेतुमाह-अश्रावणत्वादिति, श्रवणेनैव नादानां ज्ञानं स्यान्न च स्फोटाभिव्यञ्जकत्वेनाभिमतानां नादानां श्रावणप्रत्यक्षविषयत्वमस्ति येन ज्ञायमानतया स्फोटाभिव्यञ्जकत्वं स्यादित्यर्थः । अयं भावः-परापश्यन्तीमध्यमावैखरीभेदात् चतुर्विधा वागस्ति, तत्र परा पश्यन्ती च योगिज्ञानगम्या, वैखरीनादश्च सकलजनश्रोत्रग्राह्यः, मध्यमानादश्च न श्रोत्रग्राह्योऽत एव श्रावणप्रत्यक्षाऽविषय इत्युच्यते तेनैव च मध्यमानादेन वैयाकरणमते स्फोटोभिव्यज्यते । उक्तं च मञ्जूषायाम्-" चतुर्विधा वागस्ति-परा पश्यन्ती मध्यमा वैखरी च, तत्र मूलाधारस्थपवनसंस्कारीभूता मूलाधारस्था शब्दब्रह्मरूपा स्पन्दशून्या बिन्दुरूपिणी परा वागुच्यते, नाभिपर्यन्तमागच्छता तेन वायुनाभिव्यक्ता मनोगोचरीभूता पश्यन्ती वागुच्यते, ततो हृदयपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ततत्तदर्थवाचकशब्दस्फोटरूपा श्रोत्रग्रहणाऽयोग्यत्वेन सूक्ष्मा जपादौ ( मानसजपादौ ) बुद्धिनिर्ग्राह्या मध्यमा वागुच्यते, तत आस्यपर्यन्तमागच्छता तेन वायुनोर्ध्वमाक्रामता च मूर्धानमाहत्य परावृत्त्य च तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्राह्या वैखरी वागुच्यते । तत्र मध्यमानादोऽर्थवाचकस्फोटात्मकशब्दव्यञ्जकः । मध्यमानादश्च सूक्ष्मतरः कर्णपिधाने च जपादौ च सूक्ष्मतरवायुव्यङ्ग्यशब्दब्रह्मरूपस्फोटव्यञ्जकश्च, तादृशमध्यमानादव्यङ्ग्यः शब्दः स्फोटात्मको ब्रह्मरूपो नित्यश्च ।" इति । हरिणाप्युक्तम्—

" परा वाङ् मूलचक्रस्था पश्यन्ती नाभिसंस्थिता ।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा ॥"
" वैखर्या हि कृतो नादः परश्रवणगोचरः ।
मध्यमया कृतो नादः स्फोटव्यञ्जक उच्यते ॥" इति ।

ननु नादानामऽश्रावणत्वेऽपि स्मर्यमाणानामेव किं न स्फोटाभिव्यञ्जकत्वं स्यादिति द्वितीयपक्षमाशङ्क्याह-अगृहीतत्वादिति, नादानामऽगृहीतानाम-

गृहीतत्वादेव च न स्मर्यमाणानां व्यञ्जकत्वम्, येन वर्णवत्स्मर्यमाणाः कार्यं कुर्वन्तीत्युच्येत। सत्तया हि ते श्रोत्रसंस्कारं कुर्वन्तः शब्दं व्यञ्जयन्ति, न च युगपत् सत्तास्ति क्रमवर्तित्वात्, अतः संस्कारद्वारमेव साहित्यमित्यऽवर्जनीयं संस्कारान्तरकल्पनम्।

अथ मतम्?—सत्यं न स्मृतिहेतुभिः स्फोटाभिव्यक्तिः, ये तु वर्णोपलब्धिहेतवो नादजन्याः श्रोत्रगताः संस्कारास्तैरेव वर्णानामिव स्फोटाभिव्यक्तिर्भविष्यति किं संस्कारान्तरकल्पनयेति। तदयुक्तम्—तेषां क्षणि-

---

ऽज्ञातानां स्मरणमपि न सम्भवतीति न स्मर्यमाणानामपि स्फोटाभिव्यञ्जकत्वमज्ञातत्वेन नादस्मरणासम्भवादित्यर्थः। यदि नादानां स्मरणं सम्भवेत्तदा यथा स्मृतानां वर्णानामर्थप्रत्यायकत्वं भवति तथा स्मृतानां नादानां स्फोटाभिव्यञ्जकत्वं स्यादपि न चैवमस्तीत्याह—येनेति। तस्मान्नादानां सत्तयैव स्फोटाभिव्यञ्जकत्वं वक्तव्यमिति तृतीयपक्षमाश्रित्याह—सत्तयेति 'इति वक्तव्यम्' इतिवाक्यशेषः। न च नादानां युगपत्सत्ता सम्भवतीति साहित्यार्थं संस्कारान्तरकल्पनमावश्यकमेवेत्याह— न चेति। अस्ति=सम्भवति।

ननु मा भवतु स्मृतिहेतुभूतैः संस्कारैः स्फोटाभिव्यक्तिः किं तु वर्णोपलब्धिहेतुभूता अन्ये संस्कारास्त्वयापि ये कल्प्यास्तैरेव तव मते वर्णाभिव्यक्तिरिव स्फोटाभिव्यक्तिर्भविष्यतीति न संस्कारान्तरकल्पनापेक्षेत्याशङ्कते—अथ मतमित्यादिना। अयं भावः—वाक्यस्य श्रुतस्य यत्कालान्तरे=वाक्योपलब्ध्यनन्तरं स्मृतिर्भवति तद्धेतुभूता अन्ये संस्कारास्ते च स्थायिनो भवन्ति कालान्तरेपि श्रुतवाक्यविषयकस्मृतिजनकत्वात्, वाक्यप्रत्यक्षकारणभूतास्त्वन्ये संस्कारास्ते च नादैर्जन्यन्ते तैर्नादजन्यैः संस्कारैर्वर्णानां वाक्यस्य वा श्रावणप्रत्यक्षं भवति, ते च संस्कारा न स्थायिनो भवन्ति श्रुतवाक्यस्य कालान्तरे श्रावणप्रत्यक्षाभावादिति पूर्वपक्ष्येतेषां वर्णोपलब्धिहेतूनां संस्काराणां स्फोटाभिव्यञ्जकत्वं वदति। तेषां वर्णोपलब्धिसम्पादनानन्तरमेव सद्यो विनाशित्वात् स्फोटाभिव्यक्तिलक्षणकार्यान्तरकरत्वं न सम्भवतीत्याशयेन निराकरोति— तदयुक्तमित्यादिना। तेषाम्=वर्णोपलब्धिहेतुभूतसंस्काराणाम्।

कत्वात्, न ह्याद्यवर्णोपलब्धिहेतुः संस्कारोऽन्त्यवर्णश्रवणवेलायामवतिष्ठते। यद्यवतिष्ठते? ततो विसर्जनीयश्रवणवेलायामपि गकारश्रवणमनुवर्तेत, तस्मात् क्षणभङ्गिनस्ते, अतो न तेषां संहत्य स्फोटाभिव्यञ्जकत्वं भवति। प्रत्येकाभिव्यक्तौ चोत्तरोत्तरेषामऽनर्थकत्वमित्युक्तम्।

अथ वा ध्वनिसंयोग एव श्रोत्रसंस्कारो नान्यः, तस्य च विस्पष्टमेवभङ्गुरत्वं गत्वरत्वाद् ध्वनीनाम्। तस्मादन्ये स्थायिनः संस्काराः कल्प्याः, तथा वर्णातिरिक्तः शब्दः कल्प्य इति बह्वऽप्रमाणकमापन्नम्। मत्पक्षे तु दृढस्मृतिविपरिवर्तिनां वर्णानां वाचकत्वान्न किं चिद् दूषणम्।

---

अत्र हेतुमाह– नहीति। विपक्षे बाधकमाह–यदीति। अवतिष्ठते=अवतिष्ठेत। तत इत्यत्र गौरित्यत्रेति शेषः। अत इति– तेषां समुच्चय एव न सम्भवति क्षणविनाशित्वात् कुतः स्फोटाभिव्यञ्जकत्वमिति भावः। ननु मा भवतु तेषां समुच्चयः किं तु प्रत्येकमेव संस्कारः स्फोटाभिव्यक्तिं करिष्यतीत्याशङ्क्याह–प्रत्येकेति, प्रत्येकेन स्फोटाभिव्यक्तावुत्तरेषां संस्काराणामानर्थक्यं तज्जनक-(उक्तसंस्कारजनक)नादानामप्यानर्थक्यमित्यादि पूर्वमेव प्रतिपादितमित्यर्थः।

किं वा मत्पक्षे वर्णोपलब्धिहेतुभूतक्षणिकसंस्कारान्तरकल्पनापि नास्ति श्रोत्रध्वनिसंयोगस्यैव वर्णोपलब्धिहेतुत्वादित्याह–अथ वेति। ध्वनिसंयोगश्च तृतीयक्षणवृत्तिध्वंसप्रतियोगिध्वनिनैव सह नष्ट इति न तस्य स्फोटाभिव्यञ्जकत्वं सम्भवति गत्वरत्वात्=क्षणविनाशित्वात् तस्मात् त्वयाऽन्य एव स्फोटाभिव्यञ्जकाः स्थायिनः संस्काराः कल्प्यास्तथा शब्दः=स्फोटोपि कल्प्य इति तव मते महद् गौरवमित्याह–इतीति। स्वमते गौरवाभावमाह–मत्पक्षेति, मत्पक्षे स्फोटकल्पनापि नास्ति स्फोटाभिव्यञ्जकसंस्कारकल्पनापि नास्तीति नास्ति गौरवम्। किं तु स्मृतिविपरिवर्तिनाम्=स्मृतिविषयाणां वर्णानामेव वाचकत्वमिति न कोपि गौरवादिदोषः।

ननु युगपत्स्मर्यमाणानां वाचकत्वे व्युत्क्रमेणाप्युच्चारिता वर्णा वाचकाः स्युः ?, न, तत्क्रमस्याप्यङ्गत्वात्। कः पुनः क्रमोऽङ्गम्?, न हि वर्णानां विभूनां नित्यानां च स्वरूपतः क्रमवत्त्वम्, न प्रतीतिक्रमः—तस्याः स्मृतिरूपाया एकत्वात्। एवं तर्हि ध्वनिक्रमो यो वर्णेष्वारोपितः प्रतिभासते सोऽङ्गमित्यदोषः। तस्माद् व्यञ्जकानां ध्वनीनां क्रमेण व्यङ्ग्येषु वर्णेषु समारोपितेन तद्वन्तः स्मर्यमाणा वर्णा वाचका नान्यः शब्दोऽस्तीति सिद्धम्॥

॥ इति स्फोटवादः॥

---

ननु यदि युगपत्स्मर्यमाणानामेव वर्णानां वाचकत्वं तदा व्युत्क्रमेण 'टोघ' इत्येवमप्युच्चारितानां वर्णानां स्मृतिः सम्भवत्येवेति व्युत्क्रमेणोच्चारणेऽप्यर्थप्रतीतिः स्यादित्याशङ्कते— नन्विति। परिहरति— नेति। तत्क्रमस्य=उच्चारणक्रमस्य। अङ्गत्वात्=अर्थप्रतीत्यङ्गत्वात्। नन्वर्थप्रतीत्यङ्गत्वं वर्णस्वरूपक्रमस्य वा वर्णप्रतीतिक्रमस्य वा ?, नाद्यः—विभूनां वर्णानां स्वरूपक्रमासम्भवात् परिच्छिन्नस्यैव घटादेः स्वरूपक्रमसम्भवात्, न चाप्युत्पत्त्या स्वरूपक्रमो वर्णानां नित्यत्वाभ्युपगमात्। नान्त्यः— प्रतीतेः स्मृतिरूपाया एकत्वादेव क्रमो न सम्भवत्यनेकेष्वेव क्रमसम्भवादित्याशयेनाशङ्कते—कः क्रमोऽङ्गमिति। स्वाभिप्रायमुद्घाटयति— नहीत्यादिना। तस्याः=प्रतीतेः। परिहरति—एवमित्यादिना। यदि वर्णानां स्वरूपक्रमोऽपि न सम्भवति तथा प्रतीतिक्रमोऽपि न सम्भवति तर्हि ध्वनिक्रम एवाङ्गमित्यन्वयः। उपसंहरन् विशदयति—तस्मादिति। व्यङ्ग्येषु वर्णेषु समारोपितेन व्यञ्जकानां ध्वनीनां क्रमेण तद्वन्तः=क्रमवन्तः—क्रमवत्त्वेन स्मर्यमाणा वर्णा एव वाचका नान्यो वर्णातिरिक्तः स्फोटाख्यः शब्दोऽस्तीत्यन्वयः। विशदीकृतश्चायमर्थो वार्तिकेऽपि—

"यद्वा प्रत्यक्षतः पूर्वं क्रमज्ञातेषु यत् परम्।
समस्तवर्णविज्ञानं तदर्थज्ञानकारणम्॥" इत्यादिना।

॥ इति स्फोटवादनिराकरणपरिच्छेदः समाप्तः॥

" अथ गौरित्यस्य शब्दस्य कोऽर्थः " इति वाच्यनिरूपणोपक्रमव्याजेनाऽऽकृतिसद्भावं प्रतिपादयति संबन्धनित्यत्वसिद्धये— न ह्यसत्यामाकृतौ व्यक्तिभिः शब्दस्याऽपौरुषेयः संबन्धः सिध्यति तासामनित्यत्वात्, उपलक्षणस्यापि नित्यस्याऽभावादाकृत्यऽभावे, तस्मादाकृतिरस्ति नास्तीति विचार्यते । साधिते तु तत्सद्भावे सैव शब्दाभिधेयेत्याकृत्यधिकरणे वक्ष्यते ।

---

एवं शब्दनिरूपणं समाप्य संप्रति वाच्यार्थनिरूपणमारभमाणो भाष्यप्रतीकं निर्दिशति—अथेति । अस्य भाष्यस्य सङ्गतिमाह—वाच्येति । प्रयोजनमाह—संबन्धेति । " औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः " इत्यनेन शब्दार्थयोः संबन्धो नित्य इत्युक्तं तत्र संबन्धनित्यता संबन्धिनित्यताधीना भवतीति शब्दनित्यत्वं निरूपितं वर्णा एव शब्दस्ते च ,नित्या इति, शब्दनित्यत्वेप्यर्थस्याऽनित्यत्वे सम्बन्धनित्यता न स्यादित्यर्थस्य नित्यत्वं निरूप्यते । तत्र व्यक्तेः प्रत्यक्षमनित्यत्वादाकृतिरेव नित्या शब्दार्थ इति निरूपयन्नाह—न हीति । अपौरुषेयः=नित्यः । तासाम्=व्यक्तीनाम् । ननु व्यक्तीनामनित्यत्वेपि संबन्धोपलक्षणस्य कस्यचिन्नित्यत्वेनापि सम्बन्धनित्यता भविष्यतीति किमर्थमाकृतिसद्भावे यत्नः क्रियते इत्याशङ्क्याह—उपलक्षणस्येति, जातिरित्यपरनामधेयाया वाच्यत्वेनाभिमताया नित्यभूताया आकृतेरभावे सम्बन्धोपलक्षणस्यापि नित्यत्वं न सम्भवति, अयमर्थः— नित्यभूताकृतेर्वाच्यत्वाभावे व्यक्तीनामेव वाच्यत्वं वक्तव्यं व्यक्तीनां चानित्यत्वं स्पष्टमेव तत्रोपलक्ष्येण सहोपलक्षणस्यापि विनाशनियमाद्वाच्यभूतव्यक्तीनामनित्यत्वेन वाच्योपलक्षणस्याप्यनित्यत्वमेव स्यात् । अधिकरणार्थमाह— तस्मादिति । आकृत्यभावे सम्बन्धाऽनित्यत्वलक्षणमनिष्टमुक्तं संप्रति सिद्धान्तपक्षमाश्रित्याकृतिसद्भावसाधनफलमाह—साधितेति । तत्सद्भावे=आकृतिसद्भावे साधिते त्वाकृतिरेव वाच्या सा च नित्येति शब्दार्थयोर्नित्यत्वात् तत्सम्बन्धस्यापि नित्यत्वं संभवतीत्यर्थः । आकृत्यधिकरणे=प्रथमाध्यायतृतीयपादान्त्ये । वार्तिकेप्युक्तम्—

" आकृतिव्यतिरिक्तेर्थे सम्बन्धो नित्यतास्य च ।
न सिध्येतामिति ज्ञात्वा तद्वाच्यत्वमिहोच्यते ॥

तत्र सौगताः स्वलक्षणमेव परमार्थं मन्यमाना नाऽऽकृतिसद्भावं मन्यन्ते। तथा हि—

पृथक्त्वे व्यक्तितो जातिर्दृश्येत पृथगेव सा।
अभेदे व्यक्तिमात्रं स्याद् द्वेधा चेन्न विरोधतः॥

नहि सैव ततोऽन्या चाऽनन्या च संभवति विरुद्धत्वाद् भेदाभेदयोः। यदि च भिन्ना जातिः? सा सर्वगता व्यक्तिष्वेव वा?, न तावत्सर्वगतत्वम्—अन्तरालेऽनुपलब्धेः। व्यक्तिस्था चेत्? व्यक्तावुत्पन्नायां तस्मिन् देशे प्रागसती कथं तस्यामुपलभ्यते?, न तावत् तत्रोत्पद्यते नित्याया उत्पत्त्ययोगात्। न च व्यक्त्यन्तरादागच्छति. अमूर्तत्वात्, तस्मिंश्च व्यक्त्यन्तरेऽनुपलब्धिप्रसङ्गात्। न चांशेनागतांऽशेन च तत्रैव स्थितेति शक्यं वक्तुम्?

---

जातिमेवाकृतिं प्राहुर्व्यक्तिराक्रियते यया।
सामान्यं तच्च पिण्डानामेकबुद्धिनिबन्धनम्॥" इत्यादि।

अत्र पूर्वपक्षतया सौगतमतमुपस्थापयति—तत्रेति। स्वलक्षणम्=स्वरूपम्, व्यक्तिमात्रमिति यावत्। जात्यभावे हेतुमाह—पृथगिति। यदि जातिर्व्यक्तितः पृथगस्ति तदा पृथगुपलभ्येत न चोपलभ्यते तस्मान्न पृथक्, अभेदे=यद्यऽपृथगस्ति तदा व्यक्तिरेव जातिरिति सिद्धम्, द्वेधा=भिन्नाऽभिन्नेति चेत्? तन्न सम्भवति—भेदाभेदयोः परस्परं विरोधादित्यर्थः। उक्तपद्यं स्वयं व्याचष्टे—न हीति, इत्यनेन भेदाभेदपक्षो निराकृतः। भेदपक्षं निराचष्टे—यदीति। यदि घटत्वजातिः सर्वगता स्यात्तदा द्वयोर्घटयोर्मध्य उपलभ्येत पटादिष्वप्युपलभ्येत न चोपलभ्यते ततो न सर्वगता। यदि व्यक्तिमात्रनिष्ठा जातिस्तदापि तस्मिन् देशे व्यक्त्युत्पत्तेः पूर्वं नासीदेवेत्युत्पन्नायां तस्यां व्यक्तौ कथमुपलभ्यत इतिवक्तव्यमित्याह—व्यक्तिस्थेति। व्यक्तावेव यदुपलभ्यते तत् तत्रोत्पद्यते वा व्यक्त्यन्तरादागच्छति वा? नाद्यः—नित्याया जातेरुत्पत्त्यऽयोगादित्याह—न तावदिति। नान्त्यः—अमूर्ताया आगमनासम्भवादित्याह—न चेति। दोषान्तरमाह—तस्मिन्निति, यस्माद् व्यक्त्यन्तरादागता तस्मात् तत्राऽसती नोपलभ्येतेत्यर्थः। अंशेनात्रायातांऽशेन च तत्र स्थितेत्यपि न सम्भवति

निरंशत्वात् । एवं व्यक्तिनाशे- न च तत्रैव पश्चादव-स्थिता-अनुपलब्धेः । न विनष्टा-नित्यत्वात । न चान्यत्र याति-अमूर्तत्वात् । व्यक्त्यन्तरे च पूर्वमेवावस्थिता जातिरिति पुनः प्रवेशे द्विगुणोपलभ्येत । यथाहुः—

" नायाति न च तत्रासीदस्ति पश्चान्न चांशवत् ।
जहाति पूर्वं नाधारमहो व्यसनसन्ततिः ॥" इति ।

व्यक्तौ च वर्तमाना यद्येकस्यां व्यक्तौ कात्स्न्येन वर्तेत व्यक्त्यन्तरेषु न स्यात् न ह्येका सती युगपदनेकत्र कात्स्न्येन वर्तितुं शक्नोति । न चाऽवयवशो वर्तते-निरवयवत्वात् । कथं च नानाविधास्वऽतीताऽनागतवर्तमानासु व्यक्तिष्वऽवयवशो वृत्तिः सम्भाव्येत । व्यक्तौ च वर्तमानेहप्रत्ययमनुभवेत्, न चेह गोत्वमिति कस्यचित् प्रतीतिरस्ति किं त्वियं गौरिति ।

---

निरंशत्वादित्याह-न चांशेनेति । व्यक्तिनाशेप्येषानुपपत्तिरस्त्येवेत्याह-एवमित्यादिना । यदा व्यक्तिर्नष्टा तदा सा जातिस्तत्रैव स्थिता वा नष्टा वाऽन्यत्र गता वा ? नाद्य इत्याह- न च तत्रैवेति । न द्वितीय इत्याह- न विनष्टेति । न तृतीय इत्याह- न चान्यत्रेति । अन्यत्र गमने दोषान्तरमाह-व्यक्त्यन्तरेति ।

जात्यनुपपत्तौ प्रमाणमाह-नायातीति । जातिर्नाऽऽयाति, न च पूर्वं तत्रासीत्. अथ चोपलभ्यते, पश्चादपि नास्ति, न चांशवती, पूर्वमाधारं तद्विनाशे सत्यपि न जहाति. अथ च नोपलभ्यत इत्येवं जातिवादिनां व्यसनसन्ततिः प्राप्तेत्यर्थः । दोषान्तरमाह-व्यक्ताविति । अत्र हेतुमाह- न हीति । सर्वत्र घटादिष्वऽवयवशः स्थितौ दोषमाह- न चावयवश इति । ननु सावयवैव जातिरस्तु तथा तु सम्भवत्यनेकवृत्तित्वमित्याशङ्क्याह-कथमिति । सावयवस्यापि वर्तमानास्वेव व्यक्तिषु स्थितिः सम्भवति न नानाविधासु घटादिव्यक्तिष्वतीतानागतवर्तमानास्वित्यर्थः । प्रत्युत कस्यामपि व्यक्तौ जातेः स्थितिर्नोपपद्यत इत्याह-व्यक्ताविति । यदि व्यक्तौ जातिः स्यात्तदा 'इह गवि गोत्वम्' इत्येवमनुभूयेत, न चैवमनुभूयते इत्याह- न चेहेति । किं तु 'इयं गौः' इत्येवानुभूयते, अनेन चानुभवेनाऽभेदावलम्बनेन व्यक्तिरेव जातिरि-

अथ व्यक्तेरात्मैव जातिर्न तदाधारं वस्त्वन्तरमिति चेत् ?, नैवं युक्तम्- कथं हि नानाभूतानामनित्यानां व्यावृत्तस्वभावानामेकरूपा नित्याऽनुवृत्तस्वभावा च जातिराऽऽत्मा स्यात् ? त्रैलोक्यसङ्करप्रसङ्गात् ।

न च प्रमाणमपि किंचिदाकृतिसद्भावे सम्भवति, न तावत् प्रत्यक्षम्-न हि जातिः स्वविषयं ज्ञानं जनयति नित्यत्वाभ्युपगमात् नित्यानां च सर्वार्थक्रियास्वऽसामर्थ्यात्, न चाऽजनकस्य विषयत्वं सम्भवति तल्लक्षणत्वाद्विषयत्वस्य तस्माद्विकल्पाकारमात्रं सामान्यम्,

---

ति भाप्यं तस्माद् व्यक्त्यतिरिक्तजातिसाधकप्रमाणाभावाज्जातिर्नास्त्येवेतिसिद्धम्।

ननु यदि व्यक्तिर्जातेराधारः स्यात्तदेह गोत्वमिति प्रतीतिः स्यान्नैवमस्ति किं तु व्यक्तेरात्मैव जातिरित्यभेदेनैव 'इयं गौः' इति प्रतीतिर्भवतीत्याशङ्कते-अथेति । तत् =व्यक्तिराधारो यस्य तत् तदाधारं वस्त्वन्तरं जातिर्नास्ति, जातिर्व्यक्तेराधेया नास्तीत्यर्थः । पूर्वपक्षी परिहरति- नैवमिति । नानाभूतानामित्यादीनि व्यक्तिविशेषणानि । एकरूपेत्यादीनि जातिविशेषणानि । त्रैलोक्येति-यदि परस्परविरुद्धस्वभावयोरपि जातिव्यक्त्योरभेदः स्यात्तदाऽश्वगर्धवयोर्गोमहिषयोरप्यभेदः स्यादिति त्रैलोक्यस्यैवाभेदप्राप्त्या सङ्करः स्यादित्यर्थः।

एवं जातिस्वरूपेऽनुपपत्तिं प्रदर्श्य सौगतो जातौ प्रमाणाभावमाह-न चेत्यादिना । विशेषतः प्रमाणाभावमाह-न तावदिति । प्रत्यक्षाभावे हेतुमाह-न हीति । घटः स्वविषयकं प्रत्यक्षज्ञानं जनयतीति घटे प्रत्यक्षं प्रमाणं भवति विषयस्यापि ज्ञानोत्पत्तौ हेतुत्वात्, जातिश्च नित्यास्तीति यदि स्वविषयकं ज्ञानं जनयेत्तदा नित्यत्वात् सदैव जनयेदिति कदाचिदपि विषयान्तरज्ञानं न स्यादित्यर्थः। सौगतः स्वाभिप्रायमुद्घाटयति-नित्यानामिति। नित्यानां क्रियासामर्थ्ये सर्वदैव सा क्रिया स्यादिति नित्याया जातेर्न स्वविषयकज्ञानजनकत्वं सम्भवतीति भावः। जातेर्ज्ञानाजनकत्वेऽनिष्टापत्तिमाह-न चेति। अजनकस्य =ज्ञानाऽजनकस्य च विषयत्वमेव न भवतीति कथं तद्विषयकज्ञानस्योत्पत्तिःस्यादिति भावः । अत्र हेतुमाह-तल्लक्षणेति, स्वविषयकज्ञानजनकत्वमेव विषयत्वमिति कथं ज्ञानाजनकस्य विषयत्वं स्यादित्यर्थः । उपसंहरति-तस्मादिति । विक-

अलीकं वा ।

ननु यथा ज्ञानवैचित्र्यसिद्ध्यर्थं बाह्यानि स्वलक्षणा-न्यभ्युपगम्यन्ते तथा गवाश्वादिविकल्पवैचित्र्यसिद्धये विचित्राणि सामान्यानि किं नाम नाभ्युपगम्यन्ते ?। न, विचित्र स्वभावस्वलक्षणदर्शनवशादेव विकल्पवैचि-त्र्योपपत्तेः—

---

ल्पाकारमात्रम्—वस्तुशून्यं यज्ज्ञानं तत्स्वरूपमेव सामान्यम्, सामान्यस्य ज्ञा-नमात्रं भवति न सत्तास्तीत्यर्थः । तदुक्तम् " शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः " इति । अलीकम्=मिथ्या ।

सिद्धान्ती पुनरप्याशङ्कते— नन्विति । यदि बाह्यानि स्वलक्षणानि=व्य-क्तिस्वरूपाणि न स्युस्तदा ज्ञानवैचित्र्यं न स्यात्, एवं यदि जातिरपि न स्यात्तदा विकल्पस्य विशेष्यविशेषणभावावगाहिज्ञानस्य वैचित्र्यं न स्यात् गोत्वसत्त्वे एव गोत्वप्रकारकगोविशेष्यकज्ञानसम्भवात्, अन्यथा गवाश्वादि-ष्वेकाकार एव विकल्पः स्यात् तद्वैचित्र्यसम्पादकस्य सामान्यस्याऽस्वी-कारात् तस्मात् स्वलक्षणमिव गोत्वाश्वत्वादिसामान्यमप्यभ्युपगन्तव्यमित्य-र्थः । परिहरति—नेति, स्वलक्षणानां दृश्यमानं यद्वैचित्र्यं तद्वशादेव विकल्प-वैचित्र्योपपत्तेः, किं वा विचित्रस्वभावानां परस्परं भिन्नस्वरूपाणां स्वलक्ष-णानां यद्दर्शनं निर्विकल्पकं प्रत्यक्षं तद्वशादेव विकल्पवैचित्र्योपपत्तेर्न तदर्थं सामान्यापेक्षास्तीत्याह—विचित्रेति । सौगतमते विकल्पपदवाच्यं सविकल्पकं प्रत्यक्षं निर्विकल्पकस्य कार्यमेव कारणवैलक्षण्ये च सति कार्यवैलक्षण्यं भवत्ये-वेति निर्विकल्पकवैचित्र्यादेव सविकल्पकवैचित्र्यं सम्भवतीति न तदर्थं सामा-न्यापेक्षास्ति, निर्विकल्पकानां वैचित्र्ये स्वलक्षणानां वैचित्र्यं हेतुरित्यभिप्रायः ।

ननु विचित्रस्वभावस्वलक्षणानामपि तव मते क्षणिकत्वाद् यत्स्वलक्षणं दृष्टं तस्य तत्क्षणविनष्टत्वात् तत्र प्रवृत्तिर्न संभवति यत्र च प्रवृत्तिर्जाता तस्यापि तत्क्षणविनष्टत्वादुपलब्धिर्न युज्यते, यच्चोपलभ्यते न तत्र प्रवृ-त्तिर्जाता यत्र च प्रवृत्तिर्जाता न तद् दृष्टम्, तथा चाऽन्यद् दृष्टमन्यच्चोपलब्ध-मिति प्रवृत्तेस्तद्विषयाणां विकल्पानां च शुक्तिरजतज्ञानवद् विसंवादित्वात् तव मते कथं लोकयात्राया अपि निर्वाहः स्यात् ? पूर्वदृष्टे एव प्रवृत्तिसंभवादिति

**अर्थशून्या अपि विकल्पा विचित्रार्थक्रियासमर्थस्वलक्षणाभिमानिनो जायमानास्तत्र व्यवहारार्थिनं प्रवर्तयन्तः परम्परया तत्प्रभवतया तत्प्रापयन्तो मणिमिव मणिप्रभाविषयमणिबुद्धिर्व्यवहाराविसंवादिनो भवन्तीति न लोकयात्रास्थितेः कश्चिद्विरोधः, तस्मान्नास्ति जातिः ।**

---

यथा तत्र क्षणिकवादोऽसङ्गतस्तथा निस्सामान्यवादोऽप्यसंगतः, यथैतदनुपपत्तिपरिहाराय स्थिरं स्वलक्षणमभ्युपगन्तव्यं तथा सामान्यमप्यभ्युपगन्तव्यम्, किं च स्थिर वादे तु सामान्यास्वीकारेऽपि कथं चिल्लोकयात्रानिर्वाहः संभवति पदार्थस्य स्थिरत्वेन दृष्टे प्रवृत्त्यादिसंभवात्, क्षणिकवादे तु यद् दृष्टं तत् तत्क्षणे एव नष्टं न च क्षणभेदेन भिन्नेष्वपरापरघटेषु घटत्वसामान्यमप्यस्ति येन घटत्वमेवोद्दिश्यापरापरघटेषु प्रवृत्तिः स्यात्, सामान्यस्वीकारे तु दृष्टस्य घटस्य तत्क्षणे विनष्टत्वेपि द्वितीयादिक्षणोत्पन्नघटे घटत्वमाश्रित्य प्रवृत्तिः स्यादपीति क्षणिकवादिनाऽवश्यं सामान्यं स्वीकार्यमित्याशङ्क्य लोकयात्राविरोधं परिहरन् समाधत्ते—अर्थशून्येति ।

अर्थेति—यथा मणिप्रभाविषयमणिबुद्धिर्मणिं प्रापयन्ती व्यवहाराऽविसंवादिनी भवति तथा विचित्रार्थक्रियासमर्थस्वलक्षणाभिमानिनो जायमाना विकल्पास्तत्र व्यवहारार्थिनं प्रवर्तयन्तः परम्परया तत्प्रभवतया तत्प्रापयन्तो व्यवहाराविसंवादिनो भवन्तीति न लोकयात्रास्थितिविरोध इत्यन्वयः । यथा मणिप्रभायां मणिबुद्धिर्जाता सा मणिप्रभाविषयापि मणिबुद्धिः परम्परया तत्प्रभवतया=मणिजन्यत्वात्—प्रभामणिसबन्धिन्येवेति प्रभाद्वारा मणिजन्यैव भवतीति हेतोस्तत्प्रापयन्ती=मणिं प्रापयन्ती—मणिलाभं कुर्वती जातिं विनैव व्यवहाराविसंवादिनी=सफलप्रवृत्तिमती भवतीति मणिप्रभां दृष्ट्वा मणिग्रहणार्थं प्रवृत्तस्य पुरुषस्य तत्र स्थितमणेर्लाभो भवति, तथाऽर्थशून्याः=अतद्विषयका अपि विकल्पाः=विशेष्यविशेषणभावावगाहिनः प्रत्ययाः, अभिमानो विषयत्वम्, विचित्रार्थक्रियासमर्थं यत्स्वलक्षणं तदभिमानिनः=तद्विषयकाः—तद्विषयकत्वेन जायमानास्तत्र=स्वलक्षणे व्यवहारार्थिनम्=हानोपादानार्थिनं प्रवर्तयन्तः=प्रवर्तयन्ति, अथ च साक्षात् तत्स्वलक्षणजन्यत्वाभावेपि

**एतेनाऽवयविद्रव्यं प्रत्यूढम्, तस्याप्यऽवयवभेदादि-विकल्पाऽक्षमत्वात् । स्थूलावभासस्तु सञ्चितानेकरूपा-दिपरमाणुवशादेव केशोण्ड्रकाऽवभासवदुपपन्नो ना-ऽवयविकल्पनायालम् । तदभावे च निराधारत्वाद् दूरापास्तं गोत्वादिसामान्यम् ।**

---

परम्परया तत्प्रभवतया=तत्स्वलक्षणजन्यत्वेन तत्प्रापयन्तः=स्वलक्षणं प्रापयन्तो जातिं विनापि व्यवहाराविसंवादिनो भवन्तीति न कश्चिल्लोकयात्राविरोधः । अर्थशून्यत्वं चात्र न शब्दज्ञानानुपातित्वं बाह्यार्थस्य क्षणिकस्य स्वीकारादेव किं तु तदजन्यत्वमेव यथा मणिप्रभाविषयकमणिबुद्धेर्मण्यऽजन्यत्वं तथा ।

अयं भावः—क्षणिकमते बाह्यस्य घटादेः प्रतिक्षणे सरूपपरिणामो भवति तत्र यद् दृश्यते तस्य तत्क्षणे एव विनाशान्न प्राप्तिः किं तु घटान्तरस्य प्राप्तिर्भवतीति प्रवर्तकं ज्ञानं तदजन्यमेव भवति विनष्टघटजन्यत्वादित्यर्थशून्यत्वमुच्यते । एवमुपलभ्यमानो घटो दृष्टविनष्टघटसम्बन्ध्येव भवतीति प्रवर्तकं ज्ञानमुपलभ्यमानघटसम्बन्धिपूर्वदृष्टविनष्टघटद्वारोपलभ्यमानघटजन्यमेव भवतीत्युक्तं परम्परया तत्प्रभवतयेति । तस्माज्जातिं विना लोकव्यवहारविरोधाभावान्नास्त्येव जातिरित्याह—तस्मादिति ।

एवं सामान्यसत्तानिराकृतिं पूर्वपक्षतयोपन्यस्यावयवव्यतिरिक्तावयविद्रव्यनिराकरणं सौगतोक्तं प्रतिपादयति—एतेनेति । प्रत्यूढम्=प्रत्याख्यान्—अवयवसमूहव्यतिरिक्तमऽवयविद्रव्यं नास्तीत्यर्थः । हेतुमाह—तस्येति । तस्य=अवयविद्रव्यस्यावयवेभ्यो भेदोवाऽभेदो वेति निरूपयितुमशक्यत्वात्—भेदे ह्यवयवेभ्यः पृथगुपलभ्येत न चोपलभ्यते इति न भिन्नम् । अभेदेचावयवा एवेति पर्यायत्वमेवं स्यादित्यर्थः । नन्ववयवानां सूक्ष्मत्वात् स्थूलत्वेन प्रतीतिर्न स्यादवयव्यऽभावे इत्याशङ्क्याह—स्थूलेति, यथा केशजूटस्थले त्वयाप्यऽवयव्यन्तरं न स्वीक्रियते तथापि केशसमूहकृतः स्थूलावभासो भवति तथा घटादिस्थलेप्यऽवयवसमूहवशात् स्थूलावभास उपपद्यत एवेति न तदर्थमवयविस्वीकारापेक्षेत्यर्थः । सञ्चिता एकत्रीभूता ये रूपादिपरमाणवः—रूपविशिष्टाः पृथिव्यादिपरमाणवस्तद्वशात् । केशोण्ड्रकः=केशजूटः । यदा ह्यवयव्येव नास्ति तदा तदाधारं गोत्वादिसामान्यं तु सुतरां नास्त्येवेत्याह—तदभावेति ।

कथमसत्येकरूपे सामान्येऽत्यन्तविलक्षणानि स्वलक्षणान्यविलक्षणरूपं विकल्पं जनयन्ति ?। जनयन्ति चेत् ? किमिति कानि चिदेव गोविकल्पं जनयन्ति कानि चिदेवाश्वविकल्पम्, न सर्वाणि सर्वम् ?।

सामान्यवादिनो वा कथं विलक्षणरूपा व्यक्तयोऽविलक्षणसामान्यात्मकत्वं तदाश्रयत्वं तदभिव्यञ्जकत्वं वा भजन्ते ?। भजन्ति चेत् ? किमिति काश्चिदेव व्यक्तयः केनचिदेव सामान्येन संबध्यन्ते न सर्वाः सर्वैः ?। स्वभावादिति चेत् ?, अस्माकमपि तुल्यमिदमुत्तरम् ।

---

सिद्धान्त्याशङ्कते—कथमिति । यदि सर्वासु गोव्यक्तिष्वेकमेकरूपं गोत्वसामान्यं न स्यात्तदा खण्डमुण्डादिस्वलक्षणानां व्यक्तीनां परस्परमत्यन्तविलक्षणानां भिन्नानां ( विषयत्वं षष्ठ्यर्थः ) अविलक्षणरूपं गौर्गौरित्येवमेकाकारं विज्ञानं कथं जायेत ? गोत्वस्वीकारे तु ज्ञानस्य गोत्वविषयकत्वादुपपद्यत एकाकारत्वं गोत्वस्य सकलगोव्यक्तिष्वेकरूपत्वादित्यर्थः। जात्यस्वीकारपक्षे बाधकमाह—जनयन्तीति, यद्येकरूपे सामान्येऽसत्यपि विलक्षणानेकगोव्यक्तिविषयकमप्येकाकारं ज्ञानं जायते तदा क्वचिद् गोज्ञानं जायते क्वचिदश्वज्ञानं जायते इत्यपि कथं स्यात् सर्वत्रैकाकारमेव ज्ञानं किं न स्यात् ? किं चाश्वव्यक्तिरपि गोज्ञानं जनयेत् यथा मुण्डगोव्यक्तिभिन्नापि खण्डव्यक्तिर्गोज्ञानं जनयति तद्वदित्यर्थः ।

पूर्वपक्षी प्रतिवन्द्या परिहरति— सामान्यवादिन इति । तव मतेपि खण्डमुण्डादिव्यक्तयः सर्वथा विलक्षणा अपि कथमेकरूपसामान्यात्मका कथं च तदाश्रयाः कथं च तदभिव्यञ्जकाः सन्तीत्याक्षेपार्थः । स्वीकारपक्षे बाधकमाह—भजन्तीति । किमिति=कस्मात् ?। ननु स्वभाव एवायं नैसर्गिको यद् गोव्यक्तीनामेव गोत्वेन संबन्धो नाश्वव्यक्तीनामित्याशङ्क्याह—स्वभावेति । अस्माकमपीति—यथा तव मते स्वभावादेव काचिदेव व्यक्तिः केनचिदेव सामान्येन संबध्यते न सर्वाः व्यक्तयः सर्वैः सामान्यैः संबध्यन्ते तथा मन्मतेपि स्वभावादेवात्यन्तविलक्षणान्यपि खण्डमुण्डादिस्वलक्षणान्यऽसत्यप्येकरूपे सामान्येऽविलक्षणरूपं गौरयं गौरयमित्याकारं विकल्पं जनयन्तीति न कोपि दोषः।

अथ व्यक्तीनामन्यविलक्षणरूपसामान्यसम्बन्धसिद्ध्यर्थं परमऽविलक्षणरूपमभ्युपगम्यते ?, ततस्तेनापि सम्बन्धसिद्ध्यर्थमऽपरापरसामान्यापेक्षायामनवस्था स्यात् । तस्माद्विकल्पमात्रमेवेदं न परमार्थतः सामान्यं नाम किं चित् ।

अत्राभिधीयते—

प्रत्यक्षबलसिद्धस्य सामान्यस्य कुतर्कतः ।
न शक्योऽपन्हवः कर्तुं सर्वं विजयते हि तत् ॥

सर्वेष्वपि वस्तुषु ‘ इयमपि गौरियमपि गौः, अयमपि वृक्षोयमपि, इति व्यावृत्तानुवृत्ताकारं प्रत्यक्षं दे-

---

ननु न स्वभावादेव काश्चिदेव व्यक्तयः केन चिदेव सामान्येन सम्बध्यन्ते येन स्वभाववशादिति समाधानं स्यात्, किं तु गोव्यक्तीनां गोत्वसामान्येन सम्बन्धसिद्ध्यर्थमन्यदपि परमऽविलक्षणरूपं सामान्यं स्वीक्रियते तथा च परसामान्यवशादेव गोव्यक्तीनां गोत्वेनैव सम्बन्धो नाश्वत्वेनेत्याशङ्कते– अथेति । पूर्वपक्षी परिहरति– तत इति । तेनापि परसामान्येन सम्बन्धसिद्ध्यर्थमपरं सामान्यं स्वीकार्यं तेनापि सम्बन्धसिद्ध्यर्थं ततोप्यपरं सामान्यं स्वीकार्यमित्यनवस्थैव स्यादित्यर्थः । सौगतः स्वमतमुपसंहरति– तस्मादिति । इदम्=सामान्यं विकल्पमात्रम्=असदेवेत्यर्थः ।

उक्तं सौगतमतं निराकर्तुमपक्रमते–अत्रेत्यादिना । प्रत्यक्षेति–प्रत्यक्षप्रमाणबलेन सिद्धस्य सामन्यस्यापन्हवस्तर्काभासैर्न कर्तुं शक्यते, तत्=प्रत्यक्षं प्रमाणं सर्वं विजयते= सर्वप्रमाणेभ्यो बलवदस्तीति तेन सिद्धस्य पदार्थस्य प्रमाणान्तरेण पराभवो न सम्भवतीति संक्षेपार्थः । एवं पद्येन संक्षेपतः स्वमतमुक्त्वा स्वयं विशदयति– सर्वेष्वपीति । सर्वेष्विति विषयत्वं सप्तम्यर्थः, सर्ववस्तुविषयकं प्रत्यक्षं व्यावृत्ताकारमनुवृत्ताकारं च भवति तद्यथा– ‘ अयमपि गौरयमपि गौः ’ इत्येवं विजातीयाऽश्वादिभ्यो व्यावृत्तं सकलगोव्यक्तिषु चानुवृत्तं प्रत्यक्षं भवति गोव्यक्तिमात्रेऽयं गौरिति प्रत्यक्षस्य जायमानत्वात् तस्य च देशकालावस्थान्तरेषु बाधोपि न भवति येन भ्रमत्वापत्त्या तस्य सामान्यसाधकत्वं न स्यादित्याह– देशेति । अविपर्यस्तम्=अबाधितम् ।

शकालाऽवस्थान्तरेष्वविपर्यस्तमुदीयमानं सर्वमेव तर्काभासं विजित्य द्व्याकारं वस्तु व्यवस्थापयत् केनाऽन्येन शक्यते बाधितुम् ?, न हि ततोऽन्यद् बलवत्तरमस्ति प्रमाणम्, तन्मूलत्वात् प्रमाणान्तराणां तद्बाधसामर्थ्याऽभावात् ।

किं चानुमानान्यपि सामान्यापेक्षत्वात् सुतरां सामान्यं समर्थयन्ते, न तु बाधितुं शक्नुवन्ति, न हि यद् यदपेक्षं तत् तस्य बाधं शक्नोति कर्तुं तद्बाधे हि स्वात्मापि न सिध्येत् तदपेक्षत्वात् ।

तथा हि—भेदाभेदविकल्पेन सामान्यं निराकुर्वता-

---

तच्च प्रत्यक्षं द्व्याकारम्=सामान्यविशेषाकारं वस्त्वऽस्तीति व्यवस्थापयति तत्र विशेषाकारस्तु खण्डत्वमुण्डत्वादिरेव सामान्याकारस्तु—गोत्वसामान्यमेवेति प्रत्यक्षविषयत्वादेव गोत्वादिसामान्यं सिद्धमित्यर्थः । न च देशकालावस्थान्तरेष्वऽविपर्यस्तस्य=अबाधितस्य प्रत्यक्षस्य केनापि प्रमाणान्तरेणबाधः सम्भवतीत्याह— केनेति । न केनापीत्यर्थः । अत्र हेतुमाह— नहीत्यादिना । ततः=प्रत्यक्षतः । तन्मूलत्वात्=प्रत्यक्षमूलकत्वात् । तद्बाधे=प्रत्यक्षबाधे सामर्थ्याभावात् ।

प्रत्यक्षेण सामान्यसिद्धिमुक्त्वा संप्रत्यनुमानस्यापि सामान्यसाधकत्वमाह— किं चेत्यादिना । सामान्यापेक्षत्वादिति—अयं भावः—महानसे यदि महानसीयवन्हिधूमयोरेव व्याप्तिग्रहः स्यात्तदा पर्वते महानसीयवन्हिधूमयोरभावान्महानसेपि तत्क्षण एव तद्वन्हिधूमयोः सत्त्वात् पर्वतीयवन्हिधूमयोश्च व्याप्तिग्रहाभावात् पर्वते धूमेन वन्ह्यनुमानं न स्याद् भवति चानुमानमाबालगोपालं गोपालो नाऽवयवप्रयोगेषु कुशल इत्यन्यदेतत् तथा च महानसे वन्हित्वधूमत्वसामान्ययोरेव व्याप्तिग्रहो वक्तव्योऽन्यथानुमानासम्भवादित्यनुमानमपि सामान्यापेक्षमेवेति न सामान्यं बाधितुं शक्नोतीत्यर्थः । बाधस्याशक्यत्वे हेतुमाह— नहीति । यथा यद्=भृत्यो यदपेक्षम्=प्रभ्वपेक्षस्तत्=भृत्यो न तस्य=प्रभोर्बाधं कर्तुं शक्नोति तथाऽनुमानमपि स्वापेक्षितस्य सामान्यस्य न बाधं कर्तुं शक्नोतीत्यर्थः ।

उक्तमेव विशदयति— तथा हीति । भेदाभेदविकल्पेनेति— सामान्यं व्य-

ऽवश्यमेवं वक्तव्यम्—'यद्वस्तु तद् भिन्नमऽभिन्नं वा भवति सामान्यमपि यदि वस्तु स्यात्ततोऽनेनापि भिन्नेनाऽभिन्नेन वा भवितव्यम्, न च द्वेधापि सम्भवति तस्माद्ऽवस्तु' इति, एवं च वदता वस्तुत्वं सामान्यमङ्गीकार्यम्, अन्यथा कथं वस्तुत्वस्य भेदाभेदाभ्यां व्याप्तत्वाद् व्यापकानुपलब्ध्या सामान्यस्य वस्तुत्वं न सम्भवतीति भणितुं शक्यम् ।

नन्वौपाधिको वस्तुशब्दो न जातिनिमित्तकः, तत्कथमनेन जात्यापत्तिः ? ।

---

क्तितो भिन्नं वाऽभिन्नं वा वक्तव्यं प्रकारान्तरस्याभावात् यदि भिन्नं स्यात्ततो भेदेनोपलभ्येत न च भेदेनोपलभ्यते तस्मान्न भिन्नम्, यद्यभिन्नं तदा व्यक्तिरिति सामान्यमिति चानर्थान्तरमेवेति न सामान्यं वस्त्वन्तरमित्येवं सामान्यं निराकुर्वतः सौगतस्याभिप्रेतमनुमानप्रयोगमाह—यद्वस्त्विति, यद्वस्तु तद् भिन्नं वाऽभिन्नं वा भवति वस्तुत्वात्संप्रतिपन्नवदिति । अत्र च घटपटयोर्वस्तुत्वमस्ति तत्र भेदोऽप्यस्तीति दृष्टान्तो ज्ञेयः । सामान्ये च न व्यक्तितो भेदो न वाऽभेद इत्युक्तं तस्माद् व्यापकयोर्भेदाभेदयोर्निवृत्त्या वस्तुत्वमपि निवर्तेत इत्यऽवस्त्वेव सामान्यमित्याह—सामान्यमपीति । अनेन=सामान्येन । द्वेधापि=भिन्नं वाऽभिन्नं वा । इत्येवं सौगताभिप्रायमुपपाद्य तं परिहरन्नाह—एवं चेत्यादिना । वस्तुत्वमिति—यदि किं चिद्वस्तुनो भेदाभेदाभ्यां व्याप्तिर्गृहीता तदात्र तद्वस्तुनोऽभावादेवानुमानं न स्यादिति वस्तुत्वस्यैव भेदाभेदाभ्यां व्याप्तिग्रहस्त्वया वक्तव्यस्तथा च सिद्धं सामान्यं वस्तुत्वस्य सामान्यरूपत्वादेवेत्यर्थः । विपक्षे बाधकमाह—अन्यथेति । यदि वस्तुत्वं किमपि न स्यात्तदा व्यापकानुपलब्ध्या=सामान्ये व्यक्तिनिरूपितभेदाभेदयोरनुपलब्ध्या वस्तुत्वं नास्तीति कथमुच्यते, एवं कथनार्थं च भेदाभेदाभ्यां वस्तुत्वस्य व्याप्यत्वं वक्तव्यं तथा च सिद्धं वस्तुत्वं तच्च सामान्यमेवेत्यर्थः ।

ननूपाधिनिमित्तक एव वस्तुशब्दोऽस्ति न जातिनिमित्तक इति कथं वस्तुत्वं सामान्यं स्यादित्याशङ्कते— नन्विति । अनेन=औपाधिकेन वस्तुशब्देन ।

उच्यते— जातिर्वा भवतूपाधिर्वा सर्वथा तावत् सामान्यरूपमपेक्षितव्यम् । औपाधिकानामपि मूलोपलक्षणमेकमन्तरेणात्मलाभाभावात् । न च व्यावृत्तैकरसं सर्वं वस्तुजातमभ्युपगच्छतः सौगतस्य क्वचिदपि किंचिदप्यनुवृत्तं रूपं सम्भवतीत्यौपाधिको व्यवहारो दुर्घट एव, तस्मात् सर्वप्रमाणसिद्धं सामान्यं न शक्यमपन्होतुम् ।

कः पुनर्विकल्पानां परिहारः ?, न तावदऽपरिहृता अपि शक्नुवन्ति सामान्यमपन्होतुं तेषामपि

---

उतरमुपक्रमते—उच्यते इत्यादिना । जातिरिति— वस्तुत्वं जातिर्वा भवतूपाधिर्वा भवतु सर्वथोक्तानुमाननिष्पत्तये सर्वानुगतस्य हेतुभूतस्य वस्तुत्वस्यापेक्षास्त्येव, तदेव मया जातिरित्युच्यते । अन्यथा सामान्यस्य वस्तुत्वाभावसम्पादनं नोपपद्येत । किं चाभावस्य प्रतियोगिसापेक्षत्वात्सामान्यं विना सामान्याभावोपि कथं सिध्येत । औपाधिकेति—औपाधिकानामपि शब्दानां मूलमेकं यदुपलक्षणं तद्विनाऽऽत्मलाभस्य=वाचकत्वस्यासम्भवात्, शब्दस्य पदार्थप्रत्यायनमेव स्वरूपलाभस्तदेव वाचकत्वं तच्चैकसामान्यं विना न सम्भवति यतः शक्तिग्रहे सत्येवार्थस्य शब्दात् प्रतीतिर्भवति शक्तिग्रहश्चानन्त्यव्यभिचाराभ्यां व्यक्तौ न सम्भवतीति शक्तिग्रहार्थं सामान्यमवश्यं स्वीकार्यमिति भावः । तच्च मूलमुपलक्षणं क्वचिदुपाधिरूपं क्वचिज्जातिरूपमित्यन्यदेतत् । सौगतमत औपाधिकोपि व्यवहारो न सम्भवतीत्याह— न चेति । सौगतमते सर्वं वस्तुजातं व्यावृत्तैकरसम्=भिन्नस्वरूपमेव नानुगतस्वरूपं किं चिदप्यस्ति उपाधिश्चानुगतरूप एव भवति अनुगतं च सामान्यमेवेति सामान्याभावे कथमौपाधिकोपि व्यवहारः स्यात् ? । उपसंहरति—तस्मादिति । प्रत्यक्षानुमानाभ्यां सामान्यसिद्धिः प्रदर्शितैव ।

ननु व्यक्तिभ्यः सामान्यस्य भेदोपि न सम्भवत्यऽभेदोपि न सम्भवतीति मया ये विकल्पाः प्रदर्शितास्तेषां परिहारो वक्तव्यो येन सामान्यसिद्धिः स्यादित्याशङ्कते— कः पुनरिति । परिहरति— न तावदिति । यथा जीवन्नपि शत्रुर्न जीवतः स्वशत्रोरपन्हवं कर्तुं शक्नोति तथा । हेत्वन्तरमाह— तेषामिति ।

तदपेक्षत्वादित्युक्तम् । तथापि परिहारोऽभिधीयते—

भेदाभेदविकल्पे तावत् केचिदाहुः-भिन्नमेव सामान्यं व्यक्तिभ्यः । न च पृथगुपलब्धिप्रसङ्गो व्यक्तिसम्बन्धित्वात् । कः पुनः सम्बन्धः ?, समवायः । कः पुनरसौ ?, अयुतसिद्धानामिहप्रत्ययहेतुः सम्बन्धः इति केचित् । तत्त्वऽयुक्तम्-इहप्रत्ययाऽसिद्धेः, इयं गौरिति हि सर्वदा सर्वेषां प्रतीतिर्नेह गोत्वमिति ।

का चेयमयुतसिद्धिः ?, युतसिद्ध्यभावः । का पुनर्युतसिद्धिः ?, पृथग्गतिमत्त्वं पृथगाश्रयाश्रयित्वं वा, तदऽभावोऽयुतसिद्धिः ।

---

तेषाम्=विकल्पानामपि । विकल्पाश्च- "यद्वस्तु तद् भिन्नमभिन्नं वा" इत्येवमेव वक्तव्यास्तत्र च सामान्यापेक्षानुपदमेव प्रदर्शितेत्यर्थः। अभ्युपगम्याह-तथापीति।

विकल्पपरिहारमारभते- भेदाभेदेति । केचित्=वैशेपिकादयः भाभाकराश्च । भिन्नमेवेत्यवधारणम् । ननु व्यक्तिभ्यः सामान्यस्य भिन्नत्वे भेदेनोपलब्धिः स्याद् घटपटयोरिवेत्याशङ्क्याह- न चेति । व्यक्तिसम्बन्धित्वात्=व्यक्त्यऽयुतसिद्धत्वात् घटपटयोर्युतसिद्धत्वाद्भेदेन प्रतीतिर्भवति नाऽयुतसिद्धयोरपि यथा गुणद्रव्ययोरिति भावः । अयुतेति-अयुतसिद्धानां य इहप्रत्ययहेतुः सम्बन्धः स समवाय इति मतमुद्दिश्य परिहरति- तत्त्वयुक्तमिति । हेतुमाह- इहेति । इयं गौरित्यभेदप्रतीतिरेव सर्वेषां भवति न त्विह गोत्वमित्यपि तथा च यदीह गोत्वमिति प्रतीतिः स्यात्तदाऽयुतसिद्धयोर्गोव्यक्तिगोत्वयोरिहप्रत्ययहेतुः सम्बन्धः समवायः स्याद् गोव्यक्तिगोत्वयोश्च सर्वथा भेदोपि सिद्धः स्यात् न चैवमस्तीति भावः ।

अयुतसिद्धिस्वरूपं पृच्छति-का चेयमिति । युतसिद्धिलक्षणमाह-पृथगिति । पृथग्गतिमत्त्वं यथा गवाश्वयोः, पृथगाश्रयाश्रयित्वं यथा घटपटयोः, तयोरुत्पत्त्यनन्तरं संयोगस्य सम्भवाद् युतसिद्धिरेव । अयुतसिद्धिमाह- तदभावेति । युतसिद्ध्यभावोऽयुतसिद्धिस्तथा च व्यक्तिसामान्ययोः पृथगुत्पन्नयोः सम्बन्धो न भवतीत्यऽयुतसिद्धिः, व्यक्तेः सामान्यसम्बद्धाया एवोत्पत्तिस्वीकारात् तयोश्च यः सम्बन्धः स समवाय इति सिद्धम् । अयुतसि-

**यद्येवम्— अवयवावयविनोः सम्बन्धः समवायो न स्यात्, विनाप्यवयविचलनेनाऽवयवानां चलनात्, अवयविनोऽवयवानां च स्वावयवाश्रयत्वात् । तथा सामान्यस्य व्यक्त्याश्रयत्वाद् व्यक्तेश्च स्वावयवाश्रितत्वादस्ति पृथगाश्रयाश्रयित्वमिति समवायानुपपत्तिः । तस्मादेवं वक्तव्यम्— येन सम्बन्धेनाधेयमाधारे स्वानुरूपां बुद्धिं जनयति स्वाकारेण बोधयतीत्यर्थः स स-**

---

द्धत्वाच्च न सामान्यस्य व्यक्तिभिन्नत्वेपि पृथगुपलब्धिरिति सारः ।

उक्तं परिहरति— यद्येवमिति, यदि पृथग्गतिमत्त्वाभाव एवाऽयुतसिद्धिस्तदाऽवयवावयविनोः पृथग्गतिसम्भवादऽयुतसिद्धिर्न स्यात्तथा च तयोर्यः सम्बन्धः स समवायोपि न स्यात् समवायस्याऽयुतसिद्ध्यधीनत्वेन तन्निवृत्त्या निवृत्तेः । अवयवावयविनोः पृथग्गतिमत्त्वं यथा ऽवयविनः पटस्याऽचलनेपि पटैकदेशस्य चलनं भवत्येवेत्येवं विज्ञेयम् । ननु पृथगाश्रयाश्रयित्वाभावोप्यऽयुतसिद्धेर्लक्षणमुक्तं तत्सम्भवादेवाऽवयवावयविनोरयुतसिद्ध्या समवायः सम्बन्धो भविष्यतीत्याशङ्क्याह—अवयविन इति । अवयवी स्वावयवेष्वाश्रितस्तदवयवाश्च स्वावयवेष्वाश्रिता इत्यवयवावयविनोः पृथगाश्रयाश्रितत्वान्नाऽयुतसिद्धिर्येनाऽवयवावयविनोः सम्बन्धः समवायः स्यादित्यर्थः । उक्तरीत्या जातिव्यक्त्योरपि सम्बन्धस्य समवायत्वं न स्यादित्याह— तथेति, जातिर्व्यक्तौ वर्तते व्यक्तिश्च स्वावयवेष्विति जातिव्यक्त्योः पृथगाश्रयाश्रितत्वान्नाऽयुतसिद्धिर्येन तयोः सम्बन्धः समवायः स्यात् । यद्यपि जातिव्यक्त्योः पृथग्गतिमत्त्वाभावरूपाऽयुतसिद्धिरस्त्येव तथापि लक्षणस्य सर्वत्रैकरूपस्य वक्तव्यात् पृथग्गतिमत्त्वाभावस्याऽवयवावयविनोरभावान्न तल्लक्षणं पृथगाश्रयाश्रयित्वाभावस्तु क्वचिदपि समवायेन सम्बद्धयोर्नास्तीत्युक्तमेव, किं वा पश्चादुक्तत्वेन पृथगाश्रयाश्रयित्वाभाव एवाऽयुतसिद्धेर्लक्षणत्वेन पूर्वपक्षिणः संमतस्तत्र चाऽसम्भव एव दोषः स च प्रदर्शित एवेत्यनुसन्धेयम् । तस्मादुक्तनिरूपणं न सम्यगिति प्रकारान्तरेण समवायनिरूपणं कर्तव्यमित्याह— तस्मादिति । स्ववक्तव्यमाह—येनेति । यथा— येन सम्बन्धेनाधेयं गोत्वमाधारे गोव्यक्तौ स्वानुरूपाम्=गोत्वानुरूपां गौरयमित्याकारां बुद्धिं जनयति स सम्बन्धः समवाय इति वक्तव्यम् । "स्वानु-

म्बन्धः समवाय इति ।

यदि जात्यात्मना व्यक्तिः प्रतीयते ततो जातिव्यक्त्योरभेद एव प्रतीतिबलादापद्यते कथं भेदाभ्युपगमः ? ।

उच्यते— गौरयं शाबलेयो गौरयं बाहुलेय इत्युभयत्र गवाकारोऽनुवर्तमानो दृश्यते, शाबलेयबाहुलेयाकारौ तु व्यावर्तेते, तद् यदि तयोः शाबलेयगवाकारयोरभेदः स्यात् ? एकानुवृत्ताबितरोप्यनुवर्तेत, तद्व्यावृत्तौ वा गवाकारोपि व्यावर्तेत । किं च तस्यामेव व्यक्तावियं गौरिति गवात्मना प्रतीयमानायामपि नेयंबुद्धिगोबुद्ध्योर्गौर्गौरितिवत् पर्यायत्वं प्रतीयते, तस्मान्नाऽभेदः ।

---

रूपाम् " इत्यादिवाक्यस्य स्वयमेवार्थमाह—स्वाकारेणेति ।

अत्र पूर्वपक्ष्याऽऽक्षिपति—यदीति, त्वया हि जातिव्यक्त्योर्भेदाभेदावऽभ्युपगम्येते अनया त्वदुक्तरीत्या चाऽभेदे प्राप्ते भेदो नैव स्यादिति भेदाभेदौ कथं स्याताम् ? किं त्वऽभेद एव स्यादिति भावः ।

उत्तरमारभते— उच्यते इत्यादिना । शाबलेयो गौर्बाहुलेयो गौरित्येवं सकलशाबलेयादिगोव्यक्तिषु गोत्वजातिरनुवर्तमाना प्रतीयते व्यक्तिश्च शाबलेयादिर्नानुवर्तमाना प्रतीयते तद्व्यक्तिप्रतीतिस्तद्व्यक्तिमात्र एव पर्यवसानादिति व्यक्त्याकारो व्यावर्तते इत्याह—गौरयमिति । यदि जातिव्यक्त्योरभेद एव स्यात्तदा जातेरनुवर्तमानत्वं व्यक्तेश्च व्यावर्तमानत्वमिति वैलक्षण्यं न स्याद्, न चैवमस्ति किं त्वनुवर्तमानत्वव्यावर्तमानत्वलक्षणं वैलक्षण्यमस्त्येवेति न जातिव्यक्त्योरभेदः किं तु भेद एवेत्याह—तदिति । शाबलेयगवाकारयोः=व्यक्तिजात्योः । तद्व्यावृत्तौ=शाबलेयादिव्यक्तिव्यावृत्तौ । अभेदे बाधकान्तरमाह— किं चेति, यदि जातिव्यक्त्योरभेद एव स्यात्तदा यथा गौर्गौरिति बुद्ध्योः=पर्यायत्वम्=एकविषयत्वं समानविषयत्वं वा प्रतीयेत तथा इयंगौरिति बुद्ध्योरपि पर्यायत्वं प्रतीयेत, अयं भावः— ' इयं गौः ' इत्येवं व्यक्तेर्गवात्मना प्रतीतिर्भवति तत्र 'इयम्' इति व्यक्तिबोधकं पदम् 'गौः' इति च जातिबोधकं जातिव्यक्त्योश्चाभेदे 'इयं गौः' इत्युभयोः पदयोस्तज्जन्यबुद्ध्योश्च 'गौर्गौः' इति पदबुद्ध्योरिव पर्यायत्वं प्रतीयेत न चैवमस्ति तस्मान्नाऽभेदः ।

कथं तर्हि ताद्रूप्यं व्यक्तेः प्रतीयते ?, इदमेव हि ताद्रूप्यं व्यक्तेर्गत् तत्समवायः सम्बन्धः, तस्यैव महिम्ना येनाधारमाधेयं स्वबुद्ध्याऽनुरञ्जयति, तस्माददोषः। अथ वा तादात्म्यप्रतीतेरभेदोऽप्यस्तु पूर्वोक्तन्यायेन भेदोऽपि, तस्मात् प्रमाणबलेन भिन्नाभिन्नत्वमेव युक्तम्।

ननु विरुद्धौ भेदाभेदौ कथमेकत्र स्याताम् ?, न विरोधः सहदर्शनात्, यदि हि 'इदं रजतं नेदं रजतम्' इतिवत् परस्परोपमर्देन भेदाभेदौ प्रतीयेयातां ततो विरुध्येयातां न तु तयोः परस्परोपमर्देन प्रतीतिः। इयं गौरितिबुद्धिद्वयमऽपर्यायेण प्रतिभासमानमेकं वस्तु द्व-

---

नन्वभिन्नयोरेव ताद्रूप्यं भवति यदि जातिव्यक्त्योर्भेद एव तदा 'इयं गौः' इत्यनेन व्यक्तेस्ताद्रूप्यम्=जातिरूपत्वं कथं प्रतीयत इत्याशङ्कते– कथमिति। उत्तरमाह–इदमेवेति, जातिव्यक्त्योरेकरूपत्वलक्षणं ताद्रूप्यं न प्रतीयते किं तु समवायसम्बन्धलक्षणमेव ताद्रूप्यमस्ति। ननु कथं खलु सम्बन्धविशेषेण समवायेन परमार्थतो भिन्नयोर्जातिव्यक्त्योस्ताद्रूप्यं प्रतीयेतेत्याशङ्क्याह– तस्येति। तस्य=समवायस्य। येन=यस्मात्, समवायमहिम्नेति यावत्। आधेयं गोत्वादिसामान्यम्, आधारं गवादिव्यक्तिं स्वबुद्ध्यानुरञ्जयति=स्वारूप्यं प्रत्याययति, भिन्नयोरपि जातिव्यक्त्योर्यत्ताद्रूप्यं प्रतीयते तत्र तयोः समवाय एव हेतुरित्यर्थः। अत्राधेयमिति कर्तृपदम्, आधारमिति कर्मपदम्। उपसंहरति–तस्मादिति। अदोष इति–भिन्नयोरपि जातिव्यक्त्योस्ताद्रूप्यप्रतीतौ दोषो नास्ति तत्र समवायस्यैव हेतुत्वात्। स्वाभिमतं पक्षान्तरमाह–अथ वेति। जातिव्यक्त्योरिति शेषः। पूर्वोक्तन्यायेन=अनुपदमेव यद् भेदप्रतिपादनं कृतं तेन। उपसंहरति–तस्मादिति।

पुनराशङ्कते– नन्विति। परिहरति– नेति। ययोः सहदर्शनं भवति तयोर्न विरोधो भवति जातिव्यक्त्योस्तुभेदाभेदावपि सह दृष्टाविति न तयोर्विरोध इति युक्तं जातिव्यक्त्योर्भिन्नाभिन्नत्वमित्यर्थः। उपपादयति–यदीत्यादिना। भेदाभेदौ–जातिव्यक्त्योरिति शेषः। तयोः=भेदाभेदयोः। किं तु परस्परानुकूल्येनैव प्रतीतिर्भवतीति शेषः। अपर्यायेण=अपर्यायत्वेन=भिन्न-

यात्मकं व्यवस्थापयति-सामानाधिकरण्यं ह्यभेदमापादयति. अपर्यायत्वं च भेदम्, अतः प्रतीतिबलादविरोधः।

अपेक्षाभेदाच्च, तथा हि- गोरूपेण निरूप्यमाणया जात्या व्यक्तिरभेदेन प्रतीयते 'गौरयं शाबलेयः' इति । यदा तु जातिर्व्यक्त्यन्तरात्मना निरूप्यते तदेयं व्यक्तिस्ततो भिन्नरूपाऽवसीयते-'योऽसौ बाहुलेयो गौः सोयं शाबलेयो न भवति' इति ।

---

विषयकत्वेन प्रतिभासमानम्- इयमिति बुद्धिर्व्यक्तिं विषयीकरोति गौरिति च सामान्यम् । द्व्यात्मकम्=सामान्यविशेषरूपम् । भेदाऽभेदयोः समुच्चये हेतुमाह-सामानाधिकरण्येति, इयङ्गौरिति सामानाधिकरण्यं जातिव्यक्त्योरभेदं बोधयति. अन्यथा घटपटपदयोरिव सामानाधिकरण्यं न स्यात्, इयं बुद्धिगोबुद्ध्योश्चाऽपर्यायत्वं जातिव्यक्त्योर्भेदमापादयति. सर्वथाऽभेदे घटकलशयोरिव पर्यायत्वं स्यादिति प्रतीतिबलादेव जातिव्यक्त्योः किं वा व्यक्तितो जातेर्भिन्नाभिन्नत्वं सिद्धमिति नैकत्र भेदाभेदयोर्विरोध इत्यर्थः ।

भेदाभेदयोर्विरोधाभावे हेत्वन्तरमाह- अपेक्षाभेदादिति निरूपकभेदादिति यावत् । यद्येकेनैव रूपेण भेदाभेदौ स्यातां तदा विरोधः स्यादपि नैवमस्ति किं तु केनचिद्रूपेण भेदः केन चिद्रूपेणचाभेद इति न विरोधः । यथा यज्ञदत्तस्य देवदत्तापेक्षया ह्रस्वत्वेपि विष्णुदत्तापेक्षया दीर्घत्वमपीति परस्परविरुद्धयोरपि ह्रस्वत्वदीर्घत्वयोरेकत्र यज्ञदत्ते न विरोधस्तथात्रापि द्रष्टव्यम् । उपपादयति-तथा हीति । गोरूपेण=तद्व्यक्तिरूपेण निरूप्यमाणा या जातिस्तया सह तद्व्यक्तेरभेद एव प्रतीयते यथा- ' अयं गौः शाबलेयः ' अत्र गोपदवाच्यजातिमुद्दिश्य शाबलेयत्वविधानाद् यो गौः स शाबलेय इत्यभेद एवावभासते। व्यक्त्यन्तररूपेण निरूप्यमाणा तु या जातिस्तया सह व्यक्तेर्भेद एवावभासते यथा- योऽसौ शाबलेयो गौः स बाहुलेयो न भवतीत्यत्र गोपदवाच्यजातेः शाबलेयव्यक्तिरूपेण निरूपणात् शाबलेयबाहुलेयव्यक्त्योश्च परस्परं भेदाज्जातिव्यक्त्योर्भेद एवावभासते इत्याह-यदेति । ततः=व्यक्त्यन्तररूपेण निरूप्यमाणजातितः । एवं च जातिव्यक्त्योर्भेदाभेदौ सप्रमाणकावेवेति भावः ।

एवं धर्मिणो द्रव्यस्य रसादिधर्मान्तररूपेण रूपादिभ्यो भेदो द्रव्यरूपेण चाऽभेदः। तथाऽवयविनः स्वरूपेणावयवैरभेदोऽवयवान्तररूपेण त्वऽवयवान्तरैर्भेद इत्यूहनीयम्। तत्र यथा दीर्घह्रस्वादीनां विरुद्धस्वभावानामप्यपेक्षाभेदादेकत्राप्यविरुद्धत्वं प्रतीतिबलादङ्गीक्रियते तथा भेदाभेदयोरपि द्रष्टव्यं प्रतीत्यविशेषात्।

कश्चित् पुनराह–प्रतीतिरेव भेदाऽभेदावभासिनी न सम्भवति, विलक्षणरूपा प्रतीतिर्हि भेदाऽवभासः, अविलक्षणस्वरूपा प्रतीतिश्चाऽभेदावभासः, तद् येन भेदप्रतिभाससमये जातिरूपं व्यक्तिरूपं च प्रतीतं

---

एवं जातिव्यक्त्योर्भेदाभेदावुपपाद्य गुणगुणिनोरपि भेदाभेदावेवेत्याह–एवमिति। यत्र हि मधुरमिदं द्रव्यमित्येवं द्रव्यस्य मधुरत्वेन रूपेण निरूपणं क्रियते तत्र रूपरसयोः परस्परं भेदान्मधुरत्वेन निरूप्यमाणस्य द्रव्यस्यापि रूपादिभ्यो भेदोऽवभासते, यत्र चाभ्यर्हमिदं द्रव्यमित्येवं द्रव्यत्वेनैव रूपेण निरूपणं क्रियते तत्र रूपादिभ्योऽभेदोऽप्यवभासते केनापि गुणेन सामानाधिकरण्याभावादित्यर्थः। एवमेवावयवाऽवयविनोरपि भेदाभेदावेवेत्याह–तथेति,– यथा वनमित्युक्तेऽवयविनो वनस्य स्वरूपेण स्वावयवैः सर्वैरप्याम्रकदम्बप्लक्षादिभिरभेदोऽवभासतेऽवयविनोऽवयवसमूहरूपत्वात्। अवयवानां च परस्परं भेदादवयवान्तररूपेण निरूपणे तु तद्भिन्नावयवैः सहावयविनो भेदोऽवभासते यथा ऽऽम्रवणमित्युक्तेऽवयविनो वनस्याम्ररूपेण निरूपणात् प्लक्षादिभिर्भेद एव प्रतीयते। विरुद्धयोरपि धर्मयोरेकत्र प्रतीतावऽपेक्षाभेदाद्विरोधाभावे उदाहरणमाह– तत्र यथेति, यथा ह्रस्वत्वदीर्घत्वयोः परस्परं विरोधेऽप्यपेक्षाभेदादेकत्र प्रतीतिर्भवति तथा भेदाभेदयोरप्यपेक्षाभेदादेकत्र प्रतीतिर्भवत्येवेति न कोपि विरोधइत्याह–प्रतीत्यविशेषादिति।

भेदाभेदयोरेकत्र विरोधप्रतिपादकस्य प्राभाकरस्य पूर्वपक्षमुपदर्शयति–कश्चिदिति। यदि भेदाभेदयोरेकत्र प्रतीतिः स्यात्तदा विरोधोपि न स्यान्न चैवमस्तीत्यर्थः। भेदाभेदप्रतीत्योः स्वरूपमाह–विलक्षणेति। स्वाभिप्रायमुद्घाटयति–तद्येनेति। येन पुरुषेण भेदप्रतिभाससमये जातिश्च व्यक्तिश्च भि-

तेनाभेदप्रतीतिवेलायां तयोरन्यतरत् प्रत्येतव्यम्, तत्रैकस्य द्विरवभासोयं भवेत्, न पुनरितरेणाऽभेदः प्रतीतो भवति, तस्मान्नास्ति भेदाभेदयोरेकत्र प्रतीतिः।

---

न्नभिन्नरूपतया प्रतीता तेन पुरुषेणाभेदप्रतिभाससमये तयोः=जातिव्यक्त्योर्मध्येऽन्यतरत्=जातिरेव वा व्यक्तिरेव वा प्रत्येतव्या=प्रत्येतुं योग्यास्ति जातिव्यक्त्योरभेद एवेत्येकप्रतीत्यापि कार्यसिद्धिसम्भवात्, तत्र=यदि जातिव्यक्त्योर्द्वयोरेवाभेदावभाससमये प्रतीतिरुच्येत क्रियेत वा तदाऽयमवभास एकस्यैव द्विरवभासः स्याद् यतो जात्यऽवभासेपि तदेव वस्तु प्रतीतं व्यक्त्यवभासेपि तदेव वस्तु प्रतीतं जातिव्यक्त्योरभेदात्, न चैकरूपेण प्रतीतिर्येन द्विरवभासो न स्यात् ? जातिव्यक्त्योरुभयोरेवाभेदावभाससमयेपि प्रतीयमानत्वान्न चापि द्विरवभास इष्ट इति नाऽभेदः सम्भवतीत्यर्थः, तदाह– न पुनरिति । इतरेण=जातिरूपेण व्यक्तिरूपस्य. व्यक्तिरूपेण वा जातिरूपस्याभेदस्तु नैव प्रतीयते । उपसंहरति–तस्मादिति । भेदाभेदप्रतीतेरेकत्रासम्भवाज्जातिव्यक्त्योः सर्वथा भेद एव नाऽभेदोपीति तात्पर्यम् ।

अन्यत्राप्युक्तम्–" अभिन्नाकारबुद्धिवोध्यं हि वस्त्वऽभिन्नमिति लौकिकाः, विलक्षणाकारबोधविषयश्च भिन्नम्, तत्र यदि विलक्षणाकारप्रतीतिसमये द्वे वस्तुनी विलक्षणेनाकारेणावभातस्तदाऽभेदप्रतीतिदशायामेक आकारोऽनुभवनीयः स जातिभागस्य पिण्डभागस्य वा तत्रैकस्य द्विरवभासोयं स्यान्न तु जातिजातिमतोरभेदावभासः । " इति । प्राभाकरैरप्युक्तम्– " यच्च पिण्डेभ्यो जातेरभिन्नत्वमुभयरूपत्वं च दूषितं तदस्माकं साहायकमेवाचरितम्, को हि नाम सचेतनः पदार्थान्तरमत्यभिन्नामभेदाश्रयेण साधयेत् ? को वा परस्परविरोधिनी एकस्य द्वे रूपे प्रतिजानीते? भेदवादः पुनरस्माकपि सम्मत एव।

जातिराश्रयतो भिन्ना प्रत्यक्षज्ञानगोचरा (रः) ।
पूर्वाकारावमर्शेन प्रभाकरगुरोर्मता ॥

न च तत्रेहप्रत्ययापत्तिर्दोषः ? प्रतीत्य ह्याधारमाधेयं च सम्बन्धं च प्रतीयात् सर्वं च रूपं रूपिग्रहणमन्तरेण न प्रतीयते, अतो न (नः)समानेन्द्रियग्राह्यतया जातिरपि व्यक्तिप्रत्ययानुप्रवेशिनीति नेह प्रत्ययसम्भवः ।" इति । जातिव्यक्त्योरन्यतरस्मिन् प्रत्येतव्ये या द्वयोः प्रतीतिः सा तयोरभेदाद्

तदिदमसारम्– न हि वस्तुद्वयप्रतीतिरेव भेदप्रतीतिः तद्भावेप्यऽभावात् । प्रथमं व्यक्तिदर्शनेपि ह्यऽस्ति जातिव्यक्त्योर्द्वयोः प्रतीतिर्न च तदा तयोर्भेदः प्रतीयते । व्यक्त्यन्तरदर्शनेन तु जातेरन्वयात् पूर्वव्यक्तेश्च व्यतिरेकादऽन्वयव्यतिरेकाभ्यां जातिव्यक्त्योर्भेदोऽवधार्यते इति भवतोपि सिद्धान्तः । तथा देवदत्तमुपलभ्य कालान्तरे तत्सदृशं यज्ञदत्तं दूरात् पश्यन् पूर्वोपलब्धं च देवदत्तं स्मरन् वस्तुतस्तद्विलक्षणमेव पुरुषद्वयं प्रत्येति तथापि न भेदमवधारयति संशेते हि–'किं स एवायं देवदत्तः किं वान्यः' इति । तस्माद्वस्तुद्वयप्रतीतिरेव भेदप्रतीतिरित्यऽयुक्तम् ।

तथा तमेव देवदत्तं कालान्तरे दूरात् पश्यन्नपि 'किं

---

द्विरवभास एव स्यात्, अभेदस्तु न प्रतीतः स्यादिति वा भावः ।

परिहरति–तदिदमसारमिति । तद्भावेप्यभावात्=वस्तुद्वयप्रतीतिसत्त्वेपि भेदप्रतीतेरभावात् । यदि वस्तुद्वयप्रतीतिमात्रेणैव भेदप्रतीतिः स्यात्तदा जातिव्यक्तिरूपवस्तुद्वयप्रतीत्या तयोर्भेदप्रतीतिः स्यात्, न चैवमस्तीत्यर्थः । यथा दूराद् वृक्षद्वयप्रतीतावपि तयोर्भेदो न प्रतीयते तथा । एतदेवोपपादयति–प्रथममिति । अन्वयव्यतिरेकाभ्याम्=जातेरन्वयेन व्यक्तेश्च व्यतिरेकेण, यदि जातिव्यक्त्योरभेद एव स्यात्तदा द्वयोरनुवृत्तिरेव वा स्याद् व्यावृत्तिरेव वा स्यान्नचैवमस्ति किं त्वनुवृत्तिव्यावृत्तिलक्षणवैलक्षण्यवशाद् भेदोऽवधार्यते ।

एवमन्यत्रापि न वस्तुद्वयप्रतीतिमात्रेण भेदप्रतीतिर्भवतीत्याह–तथेति । तद्विलक्षणमेव पुरुषद्वयमित्यत्र तत्पदस्य पुरुषद्वयशब्देन सामानाधिकरण्यं ज्ञेयम्– विलक्षणमेव=भिन्नमेव तत्पुरुषद्वयं=देवदत्तं यज्ञदत्तं च प्रत्येति=अनुसन्धत्ते–यज्ञदत्तस्य प्रत्यक्षविषयत्वाद् देवदत्तस्य च स्मर्यमाणत्वादस्त्येव वस्तुद्वयप्रतीतिस्तथापि न तयोर्भेदमवधारयति किं तु संशेते, संशयस्वरूपमाह–किमिति, सोयं देवदत्त एव किं वान्यः कोपि पुरुषोस्तीत्यर्थः । उपसंहरति–तस्मादिति ।

इत्येवं वस्तुद्वयप्रतीतिसत्त्वे भेदप्रतीतिसत्त्वमित्यन्वयस्य व्यभिचारं प्रदर्श्य वस्तुद्वयप्रतीत्यभावे=अभेदप्रतीतिरेवेति व्यतिरेकस्य व्यभिचा-

स एवायमुतान्यः' इति सन्दिहानो वस्तुगत्यैकमेव प्रतियन्नपि नाऽभेदमवधारयितुमलं भवति, तस्मान्न वस्तुद्वयप्रतीतिरेव भेदप्रतीतिः । नाप्येकवस्तुप्रतीतिरेवाऽभेदप्रतीतिः, किं त्वऽन्योयमिति बुद्धिर्भेदावभासः, अनन्योयमिति चाऽभेदावभासः । अस्ति च शाबलेयबाहुलेयावुपलभमानस्य 'अयं गौरयमपि गौः' इत्यऽभेदावभासः, 'अन्यः शाबलेयाद्बाहुलेयः' इति च भेदावभासः । तस्मादुपपन्नं भिन्नाभिन्नत्वम् ।

---

रं प्रदर्शयति- तथेति । प्रतियन्नपि=जानन्नपि । वस्तुगत्यैकमेव प्रतियन्नपि 'किं स एवायमुतान्यः' इत्येवं सन्दिहानः=कृतसंशयो नाभेदमवधारयतीत्यन्वयः । अत्र वस्तुद्वयप्रतीत्यभावेपि भेदप्रतीत्यभावः=अभेदप्रतीतिर्न भवति । उपसंहरति- तस्मादिति । ननु मा भवतु वस्तुद्वयप्रतीतिरेव भेदप्रतीतिः, किं त्वेकवस्तुप्रतीतिरेवाभेदप्रतीतिस्तथा च जातिरूपस्य व्यक्तिरूपस्य च प्रतीतेरेकवस्तुप्रतीतित्वाभावादभेदप्रतीतिर्न सम्भवतीति भेद एव जातिव्यक्त्योः स्यान्न तु भेदाभेदावित्याशङ्क्याह-नाप्येकेति । अस्य च नियमस्य व्यभिचारः "तथा तमेव देवदत्तम्" इत्यत्र प्रदर्शित एव-एकवस्तुप्रतीतिसत्त्वेप्यभेदप्रतीतेरभावात् । सिद्धान्ती स्वाभिप्रायमाह- किं त्विति । अयं गौरिति-शाबलेयादिषु सर्वेषु गोत्वेन रूपेणाभेदावभासः । भेदावभासमाह-अन्य इति । उपसंहरति-तस्मादिति । जातिव्यक्त्योरिति शेषः । वार्तिकेप्युक्तम्-

" सर्ववस्तुषु बुद्धिश्च व्यावृत्त्यनुगमात्मिका ।
जायते, द्व्यात्मकत्वेन विना सा च न सिध्यति ॥
अन्योन्यापेक्षिता नित्यं स्यात् सामान्यविशेषयोः ।
विशेषाणां च सामान्यं ते च तस्य भवन्ति हि ॥
निर्विशेषं न सामान्यं भवेच्छशविषाणवत् ।
सामान्यरहितत्वाच्च विशेषास्तद्वदेव हि ॥
भिन्ना विशेषशक्तिभ्यः सर्वत्रानुगतापि च ।
प्रत्येकं समवेता च तस्माज्जातिरपीष्यताम् ॥
तेनात्मधर्मो भेदानामेकधीविषयोस्ति नः ।

नन्वऽनुवृत्ता नित्याऽनुत्पत्तिविनाशधर्मा च जातिः, विपरीतस्वभावा च व्यक्तिः, कथं तयोरैक्यम्? न ह्येकमेव वस्तु–अनुवृत्तं व्यावृत्तं नित्यमनित्यमुत्पत्तिविनाशधर्मकमतद्धर्मकं च सम्भवति त्रैलोक्यसङ्करप्रसङ्गात्, जातिरप्येवमनित्यत्वादिधर्मा स्याद् व्यक्तिरपि नित्यत्वादिधर्मा । नैष दोषः– नानाकारं हि तद्वस्तु केन चिदाकारेण नित्यत्वादिकं केन चिच्चाऽनित्यत्वादिकं बिभ्रन्न विरोत्स्यते । जातिरपि व्यक्तिरूपेणऽनित्या व्यक्तिरपि जात्यात्मना नित्येति नात्र काचिदनिष्टापत्तिः ।

---

सामान्यमाकृतिर्जातिः शक्तिर्वा सोऽभिधीयताम् ॥
तस्मादेकस्य भिन्नेषु यावृत्तिस्तन्निबन्धनः ।
सामान्यशब्दः सत्तादावेकधीकरणेन वा ॥
पिण्डेष्वेव च सामान्यं नान्तरा गृह्यते यतः ।
न ह्याकाशवदिच्छन्ति सामान्यं नाम किं चन ॥
यद्वा सर्वगतत्वेऽपि व्यक्तिः शक्त्यनुरोधतः । (व्यक्ति = प्राकट्यंजातेः शक्त्यनुरोधतो व्यक्ताविव नान्तरालेषु)
शक्तिः कार्यानुमेया हि व्यक्तिदर्शनहेतुका ॥" इत्यादि ।

पुनरपि जातिव्यक्त्योः स्वभाववैलक्षण्यं प्रदर्श्याभेदमाक्षिपति–नन्विति। निगदव्याख्यातोयं ग्रन्थः। नास्त्युत्पत्तिर्विनाशश्चधर्मो यस्याः साऽनुत्पत्तिविनाशधर्मा। विपरीतस्वभावा=व्यावृत्ताऽनित्योत्पत्तिविनाशधर्मा च । अनुवृत्तम्=सर्वत्रानुगतम्=सकलतद्व्यक्तिपर्याप्तम्। अतद्धर्मकम् =उत्पत्तिविनाशरहितम्। यद्येकत्र वस्तुनि विरुद्धधर्मसमावेशः स्यात्तदा वन्हौ शैत्यमपि स्यादित्येवं त्रैलोक्यसङ्करः स्यात्। ननु भवतु त्रैलोक्यसङ्करः कास्माकं हानिरित्याशङ्क्याह–जातिरप्येवमिति। किं वा सामान्यतः साङ्कर्यापत्तिमुक्त्वा विशेषतः साङ्कर्यमाह–जातिरप्येवमिति । परिहरति–नैष दोष इति । यद्वस्तु नानाकारं तद्वस्तु । किं वा तद्वस्तु=सांसारिकं वस्तु । आकारभेदेनैकत्रापि विरुद्धधर्मसमावेशो नास्ति विरोधः । यथैकत्रैव देवदत्ते यज्ञदत्तनिरूपितं पितृत्वं विष्णुदत्तनिरूपितं च पुत्रत्वम्, यथा चैकत्रैव घटे ऽवयवात्मनाऽनेकत्वमऽवयव्यात्मना चैकत्वं तथेत्यर्थः । यथा कार्यमपि कारणात्मना सद्भवति कारणमपि कार्यात्मनाऽसत्तथात्रापि ज्ञेय मि-

यत्तु सर्वगता व्यक्तिगता वा जातिरिति विकल्पितम्, तदपि व्यक्त्यात्मत्वाभिधानादेव परिहृतम्—व्यक्तेर्ह्यसावाऽऽत्मा कथमन्यत्र स्यात् ? । नन्वेवं व्यक्तिदेशे व्यक्त्युत्पत्तेः प्रागविद्यमाना जातिः कथं तत्र पश्चाद्भवति ?, स्वकारणान्निष्पद्यमाना व्यक्तिर्जातिविशेषात्मना संबद्धैवोत्पद्यत इति न दोषः ।

तत्राविद्यमाना जातिः कथं व्यक्त्या संबध्यते ? न ह्यसौ तदानीमेवोत्पद्यते नित्यत्वात्, न चान्यत आगच्छति, अमूर्तत्वात् ।

उच्यते—योऽपि देशान्तरादागत्यानेन देशेन संयुज्यते सोऽपि प्रागस्मिन् देशेऽविद्यमान एव कथमनेन देशेन संयोगमनुभवति ? कारणवशादिति वक्तव्यम्, एवं जातिरपि कारणवशादेव व्यक्तिसम्बन्धमनुभवति । इयांस्तु विशेषः—संयुज्यमानः पूर्वत्रावस्थितोऽनन्तरदेशेन

---

त्यभिप्रायेणोपसंहरति—जातिरपीति ।

परिहाराय पूर्वोक्तमाक्षेपान्तरमुद्दिशति—यत्त्विति । परिहरति—तदपीति । जातिर्व्यक्तेरात्मेति व्यक्तिगतैव न सर्वगता । एतदेव स्पष्टयति—व्यक्तेरिति । असौ=जातिः । यथा देवदत्तस्य जीवात्मा देवदत्तशरीरे एव भवति नान्यत्र तथा । पूर्वपक्षी पूर्वमाशङ्कितं पुनराशङ्कते— नन्विति । तत्र=व्यक्तौ । पश्चात्=व्यक्त्युत्पत्तेरनन्तरम् । भवति=संपद्यते । उत्तरमाह—स्वकारणेति । निष्पद्यमाना=जायमाना प्राकट्यं प्राप्नुवती वा । जातीति—गोत्वादिलक्षणजातिविशेष एव य आत्मा तेन । व्यक्तेर्जातिरेवात्मा । व्यक्तिर्जातिसम्बद्धैवोत्पद्यत इति न व्यक्त्युत्पत्तेः पूर्वं व्यक्तिदेशे=समवायिकारणेतज्जातिसत्त्वापेक्षेति भावः ।

पुनराशङ्कते— तत्राविद्यमानेति । तत्र व्यक्तिदेशे । सम्बन्धानुपपत्तिमुपपादयति— न हीति । असौ=जातिः ।

प्रतिवन्द्युत्तरमारभते—उच्यत इति । स्वपक्षे नियोजयति—एवमिति । ननु मूर्तो घटादिर्देशान्तरादत्रागन्तुं शक्नोति न च जातिरप्यमूर्तत्वादित्याशङ्क्य समाधत्ते—इयांस्त्विति । पूर्वेति—पूर्वदेशे यः स्थितो घटादिः स तु क्रमेणैवोत्तरोत्तरदेशेन

प्रथमं संयुज्यते ततस्तदनन्तरदेशेनेतिक्रमेण देशान्तर-संयोगं गच्छति । तादात्म्यसमवाययोस्त्वनन्तरदेशम-नपेक्ष्यैव स्वकारणतो निष्पत्तिः । न हि यः संयोगस्य स्वभावः स एव तादात्म्यस्य समवायस्य वाङ्गीकर्तव्यः प्रमाणाभावात्, विलक्षणस्वभावत्वाद्भावानाम् । त-स्माददोषः ।

यद्वाऽस्तु सर्वगतं सामान्यम्, न च सर्वत्रोपलब्धि-प्रसङ्गः– व्यक्तीनामभिव्यञ्जकत्वात् । सर्वगतमपि सा-मान्यं व्यक्तेरेवात्मा तत्समवेतं वा ।संयुक्तसमवायस-न्निकर्षेण च सामान्यस्योपलम्भः, तेन च संनिकर्षो व्य-

---

संयुज्यते । जातौ विशेषमाह–तादात्म्येति । जातिव्यक्त्योस्तादात्म्यमतेनोक्तं तादात्म्येति, समवायमतेनोक्तं समवायेति । पदार्थान्तरस्य पदार्थान्तरेण संयोगस्त्वनन्तरदेशसंयोगपूर्वक एव भवति, जातिव्यक्त्योस्तु यः समवा-यस्तादात्म्यं वा सम्बन्ध उत्पद्यते न तत्राऽनन्तरदेशसम्बन्धापेक्षेत्यर्थः । स्वकारणेति–संयोगं प्रति तु पूर्वदेशसंयोगनाशस्य पूर्वदेशविभागस्य वा का-रणत्वं युक्तमेव तादात्म्यसमवायौ प्रति तु स्वभावस्यैव कारणत्वं सम्भवत्य-न्यस्यासम्भवादिति स्वभावलक्षणकारणवशादेव जातिव्यक्त्योस्तादात्म्यं सम-वायो वा निष्पद्यते जातितत्समवायसहितैव व्यक्तिरुत्पद्यत इति भावः । वि-पक्षे बाधकमाह–न हीति । उक्ते हेत्वन्तरमाह–विलक्षणेति । उपसंहरति–त-स्मादिति, यस्मात् स्वभावलक्षणकारणवशादेव जातिरपि व्यक्तिसम्बन्धमनु-भवति तस्मान्नोक्तदोषाणामत्रावकाश इत्यर्थः ।

गोत्वस्याऽव्यापकत्वे सकलगोव्यक्तिषु सत्तास्वीकारादनेकत्वं स्यादि-ति दोषापत्त्या सर्वगता जातिरितिपक्षमाह–यद्वेति । ननु सर्वगतस्य सामान्यस्य व्यक्तेरन्यत्राप्युपलब्धिः स्यादित्याशङ्क्याह–न चेति । यथा सर्वगतस्याप्या-त्मनो विभुत्वपक्षे शरीरे एवोपलब्धिर्नान्यत्र तथा सामान्यस्यापि सर्वगतस्या-पि तद्व्यक्तिष्वेवोपलब्धिर्नान्यत्र व्यक्तेरेव सामान्याभिव्यञ्जकत्वात् । तादात्म्य-पक्षेणाह–व्यक्तेरेवात्मेति । समवायपक्षेणाह– तत्समवेतमिति, व्यक्तिसमवेतमि-त्यर्थः । संयुक्तेति–इन्द्रियसंयुक्ता व्यक्तिस्तस्यां समवायः सामान्यस्येति संयु-

क्तिदेशे एव सम्भवति नान्यत्रेति न सर्वत्रोपलब्धिः। अभेदेपि जातिव्यक्त्योर्भेदस्यापि विद्यमानत्वान्नित्यत्वाऽनित्यत्वादिवत् सर्वगतत्वाऽसर्वगतत्वमपि नानुपपन्नम्।

यत्तु कार्त्स्न्येन वा ऽवयवशो वा वृत्तिरिति विकल्पितम्, तदप्ययुक्तम्–भेदापेक्षं हि कार्त्स्न्यं न च सामान्यस्य स्वरूपतोऽवयवतो वा भेदोस्ति एकत्वादनवयवत्वाच्च। निरवयवत्वादेवाऽवयवशोपि वृत्तिरसम्भाव्यैव। तस्माद् व्यक्तिषु जातिर्वर्तत इत्येतावदेवात्र वक्तुं शक्यते प्रमाणतोऽवगमात्, न कार्त्स्न्यभागविभागः प्रमाणाभावादसम्भवाच्च।

तथाऽवयविनोप्यवयवेषु न कार्त्स्न्यं सम्भवति, बहु-

---

क्तसमवायः सन्निकर्षः=सम्बन्धः। तेन=सामान्येन सहेन्द्रियस्य संयुक्तसमवायः सन्निकर्षो व्यक्तिदेशे एव। यथा जातिव्यक्त्योर्भेदाभेदाभ्यां नित्यत्वानित्यत्वमुक्तं जातिरूपेण व्यक्तिरपि नित्या व्यक्तिरूपेण च जातिरप्यनित्येति तथा जातिरूपेण व्यक्तिरपि सर्वगता व्यक्तिरूपेण च जातिरप्यऽसर्वगतेत्याह–अभेदेति।

परिहाराय पूर्वोक्ताक्षेपान्तरं निर्दिशति–यत्त्विति। सामान्यस्य व्यक्तौ कार्त्स्न्येन वृत्तावन्यत्र व्यक्तावुपलब्धिर्न स्यात्, अवयवशो वृत्तावऽनित्यत्वं स्यादित्यर्थः। परिहरति– तदप्ययुक्तमिति। भेदापेक्षमिति–सावयवपदार्थस्यावयवानां परस्परं भेदो भवतीत्यर्थोपि घट आनेतुं शक्यते कृत्स्नोपीति तत्र कृत्स्नाऽकृत्स्नविचारः सम्भवति सामन्यस्य त्ववयवकृतोपि भेदो नास्त्यनवयवत्वात्, तथाऽनेके घटाः स्वरूपतोभिन्नाः सन्तीति तत्रैकघटसत्तापि सम्भवति कृत्स्नघटसत्तापि सम्भवतीति सम्भवति तत्र कृत्स्नाकृत्स्नविचारः सामान्यस्य तु स्वरूपतोपि भेदो नास्तीति नात्र कृत्स्नाकृत्स्नविचारः प्रसरतीत्यर्थः। उपसंहरति–तस्मादिति। प्रतिषेध्यमाह–न कार्त्स्न्यभागविभाग इति–कार्स्न्येन वर्तते किं वा भागशः=अवयवशो वर्त्तत इति विभागो नास्ति प्रमाणाभावात् निरवयत्वे नाऽसम्भवाच्च किन्तु व्यक्तिषु जातिर्वर्तत इत्येव वक्तुं शक्यत इत्यर्थः।

उक्तन्यायमन्यत्रातिदिशति–तथेति। अवयवेष्ववयविनो वृत्तावपि का-

त्वाभावात्तदपेक्षत्वाच्च कृत्स्नत्वव्यवहारस्य। अवयवशो वृत्तिरप्यवयवान्तराभावादयुक्तैव। किमिदानीमेकरूपैव सामान्यस्य व्यक्तिषु अवयवेषु चावयविनो वृत्तिः?। नेत्युच्यते-सामान्यं प्रत्येकं वर्तते, अवयवी तु व्यासज्येत्येवं विशेषः। व्यक्त्यन्तरमनपेक्ष्यैव व्यक्त्यन्तरे वर्तमाना स्वानुरूपां बुद्धिं जनयन्ती जातिः प्रत्येकं वर्तते इत्युच्यते नतु कार्त्स्न्येन वृत्तिः। अवयवी त्ववय-

---

त्स्न्यां ऽकार्त्स्न्यविचारो न सम्भवतीत्यर्थः। कार्त्स्न्येन वृत्तिपक्षासम्भवमाह-अवयविन इति। बहुत्वाभावादिति-यद्यपि घटादीनामवयविनां स्वरूपतो भेदाद्बहुत्वमस्ति तथापि कपालद्वये वर्तमानघटे तु बहुत्वं नास्त्येव, एवं तन्त्वादिसमूहविशेषे वर्तमाने तत्पटादौ बहुत्वं नास्त्येव येन कार्त्स्न्येन वृत्तिरुच्येतेत्यभिप्रायः। तदपेक्षत्वात्=बहुत्वापेक्षत्वात्। ब्रह्मणि हि सर्वे घटा वर्तन्त इति तत्र कार्त्स्न्येन वृत्तिः न तु स्वावयवेषु, यद्येकघटावयवैः सर्वे घटाः निष्पन्नाःस्युस्तदा सर्वेषां घटानामेष्ववयवेषु वृत्तिसम्भवात् कार्त्स्न्येन वृत्तिः स्यात् न चैवमस्ति सर्वेषां घटानां स्वस्वावयवारब्धत्वेन स्वस्वावयवेषु वृत्तित्वादिति भावः। तस्मान्नाऽवयविनोऽवयवेषु कार्त्स्न्यं सम्भवति।

अवयवशोपि वृत्तिर्न सम्भवति तस्य स्वावयवेषु सर्वात्मना वृत्तित्वादेव यदि तस्य घटस्यैभ्योऽवयवेभ्योऽन्यत्रापि कोप्यऽवयवः स्यात्तदात्र तस्यावयवशो वृत्तिरुच्येत नैवमस्तीत्याह-अवयवश इति। सामान्यस्यावयविनश्च या स्वाधिकरणे वृत्तिस्तत्स्वरूपमाक्षेपेण पृच्छति-किमिदानीमिति। परिहरति-नेति, नैकरूपेत्यर्थः। वृत्तिद्वयं निर्वक्ति-सामान्यमिति। प्रत्येकम्=प्रत्येकपर्याप्तम्। यथाऽवयवी सकलावयवेषु मिलित्वैकरूपेण वर्त्तते नत्वेकस्मिन्नवयवे इति व्यासज्यवृत्तिर्भवति तथा न सामान्यं सकलासु व्यक्तिषु मिलित्वैकरूपेण वर्तते भासते वा येन व्यासज्यवृत्ति स्यात् किन्तु शाबलेयेपि गोत्वं साकल्येन वर्तते बाहुलयेपीति प्रत्येकपर्याप्तं वर्तत इत्युच्यते, एकत्ववत्। पर्याप्तत्वमेवाह-व्यक्त्यन्तरमिति। स्वानुरूपाम्=गौरयं घटोयमित्यादिबुद्धिम्। एकत्रैव व्यक्तौ कार्त्स्न्येन वृत्तावन्यव्यक्तौ नोपलभ्येतेत्याह-न त्विति। अवयवी तु न प्रत्येकावयवे वर्तते येन प्रत्येकावयवे पर्याप्तः स्यादित्याह-अव-

वान्तराण्यपेक्ष्याऽवयवान्तरे वर्तमानः स्वाकारां बुद्धिं जनयन् व्यासज्य वर्तत इति व्यपदिश्यते। न ह्येकस्यामेव व्यक्तौ गोबुद्धिवदेकस्मिन्नेव तन्तौ पटबुद्धिरुत्पद्यते।

संयोगस्येदानीं कथं संयोगिषु वृत्तिः? किं जातिवत्? किं वाऽवयविवत्?। उभयविलक्षणेति ब्रूमः। स हि संयोग्यन्तरमपेक्ष्य संयोग्यन्तरे वर्तते नाऽनपेक्ष्येति न जातितुल्यत्वम्। एकत्रैव च स्वानुरूपां जनयति बुद्धिम्-'इदमनेन संयुक्तमिदमनेन' इति तेनाऽवयविनापि नातीव तुल्यत्वमित्युभयवैलक्षण्यम्।

---

यवीति। स्वाकाराम्=घटोयं पटोयमित्याकारां बुद्धिं जनयन्। अत्र मानमाह-न हीति-शाबलेयेप्येकस्यां गोव्यक्तौ गोत्वबुद्धिर्भवत्येव शाबलेयो गौरिति तस्मात्सामान्यस्यैकस्यामपि व्यक्तौ पर्याप्तिसम्बन्धेनैव वृत्तिरस्ति, एवमेकस्मिन् तन्तौ तु पटबुद्धिर्न भवति किन्तु पटसमवायिकारणेषु सर्वेषु तेषु तन्तुषु पटबुद्धिर्भवतीत्यवयवेष्ववयवी व्यासज्य वर्तते न पर्याप्त्येत्यर्थः।

संयोगस्येदानीं वृत्तिं पृच्छति-संयोगस्येति। स्वाभिप्रायेण विकल्पयति-किमिति। जातिवदिति-यथा जातिर्व्यक्त्यन्तरमनपेक्ष्य व्यक्त्यन्तरे वर्तते तथा संयोगोपि किं संयोग्यन्तरमनपेक्ष्य संयोग्यन्तरे वर्तते ? किं वाऽवयविवत्=यथावयवी न प्रत्येकावयवे पर्याप्तो वर्तते किन्तु सकलावयवेषु व्यासज्य वर्तते तथा संयोगोपि किमुभयोर्व्यासज्य वर्तते? इत्यर्थः। उत्तरमाह-उभयेति। उभयवैलक्षण्यमुपपादयति-स हीति। सः=संयोगः। जातिस्तु न व्यक्त्यन्तरमपेक्ष्य वर्तते संयोगस्तु संयोग्यन्तरम्=द्वितीयसंयोगिनमपेक्ष्यैव संयोग्यन्तरे वर्त्तत इति न जातितुल्यत्वम्। यद्यपि वक्ष्यमाणसिद्धान्तानुसारेण प्रतिसंयोगि संयोगभेदस्वीकाराद् संयोगोपि जातिवद् प्रत्येकपर्याप्त एव वर्तते तथापि जातिर्व्यक्त्यन्तरमनपेक्ष्य वर्तते संयोगस्तु संयोग्यन्तरमपेक्ष्यैव संयोग्यन्तरे वर्तत इत्ययमेव भेदः। संयोगे जात्यपेक्षया वैलक्षण्यमुपपाद्य. अवयव्यपेक्षया वैलक्षण्यमुपपादयति-एकत्रेति। एकत्र=एकस्मिन्नपि स्वसमवायिनि घटादौ 'इदमनेन संयुक्तम्' इत्येवं स्वानुरूपाम्=स्वविषयां बुद्धिं संयोगो जनयत्येव। इदमनेन संयुक्तमित्यत्र धर्मिणि संयुक्तत्वविशेषणसत्त्वेन संयोग-

अथ संयोगः किमेक एव द्वयोः संयोगिनोः ? उत प्रतिसंयोगि भिन्नावेव संयोगौ ?। काश्यपीयास्तावत् संयोगमुभयोर्व्यासक्तमेकं मन्यन्ते । वयं तु यथा 'इदमनेन सदृशमिदमनेन' इति प्रतियोगिनमपेक्ष्येतरत्रेतरस्यावगम्यमानं सादृश्यं प्रतिधर्मि भिन्नं भवति तथा संयोगस्य तादृशबुद्धिविषयत्वाद् भेदमेव रोचयामहे। प्रकृतमनुसरामः—तस्मान्न वृत्तिविकल्पादपि जात्यपन्हवः।

---

स्यापि पर्याप्तस्य स्वीकारावश्यम्भवात्, घटपटौ संयुक्तावित्यत्राप्युभयत्रैव संयुक्तत्वविशेषणसत्त्वेनोभयत्रैव पर्याप्तयोः संयोगयोः स्वीकारावश्यम्भवात्, अन्यथा संयुक्ताविति द्विवचनमनुपपन्नं स्यादिति प्रतिसंयोगि संयोगभेदस्वीकारान्नावयवितुल्यत्वम् । अवयवी तु नैकस्मिन्नवयवे स्वानुरूपाम्=स्वविषयां बुद्धिं जनयति किन्तु सर्वेष्ववयवेषु व्यासज्य स्वविषयां बुद्धिं जनयति वर्तते वा नैवं संयोगेस्तीति नावयवितुल्यत्वमपीत्यर्थः ।

संयोगसंख्यां पृच्छति—अथेति । संयोगिनोरिति सप्तमी । अत्र वैशेषिकमतमाह—काश्यपीयेति । स्वमतमाह— वयमिति । यथा देवदत्तेन सदृशो यज्ञदत्त इत्यत्र देवदत्तप्रतियोगिकं यज्ञदत्तेऽन्यदेव सादृश्यं यज्ञदत्तेन च देवदत्तः सदृश इत्यत्र यज्ञदत्तप्रतियोगिकं देवदत्तेऽन्यदेव सादृश्यमिति प्रतियोगिनमपेक्ष्य=प्रतियोगिभेदाद् भिन्नमेव प्रतिधर्मि सादृश्यम्, अन्यथा 'देवदत्तेन यज्ञदत्तः सदृशो यज्ञदत्तेन देवदत्तः सदृशः' इत्यत्र पौनरुक्त्यं स्यात् एकस्यैव च सादृश्यस्य द्विरवभासः स्यादुभयत्रैकसादृश्यस्वीकारात् तस्मात् प्रतिधर्मि भिन्नमेव सादृश्यम् । तथा संयोगोपि प्रतियोगिभेदात् प्रतिधर्मि भिन्न एव यथा—घटेन पटः संयुक्त इत्यत्र घटप्रतियोगिकोन्य एव पटे संयोगः, पटेन घटः संयुक्त इत्यत्र च पटप्रतियोगिकोन्य एव घटे संयोगः तादृशबुद्धिविषयत्वात्=सादृश्यवत् प्रतिधर्मि भेदज्ञानविषयत्वात् । एवं प्रसङ्गात्संयोगं निरूप्य प्रकृतमनुसरति—प्रकृतेति । वृत्तिविकल्पात्=सामान्यस्य व्यक्तौ कार्त्स्न्येन वा वृत्तिरवयवशो वेति विकल्पेनापि न जात्यपन्हवः सम्भवति, विकल्पानामुत्तराभावेपि न तेषां सत्पदार्थापन्हवे सामर्थ्यमिति भावः ।

यत्तु नित्यत्वाज्जातेः स्वविषयज्ञानजननाऽसामर्थ्यान्न ग्राह्यत्वमिति। तदसत्, नित्यानामप्यर्थक्रियासामर्थ्यं क्षणभङ्गनिराकरणे वक्ष्यामः । न च हेतुलक्षणं ग्राह्यत्वम्, ज्ञानजन्यफलभागित्वलक्षणं हि तदिति शून्यवादे वर्णितम्, तस्मादयमप्यदोषः ।

यत्तु स्वलक्षणैरेव स्वानुभवद्वारेण गवादिविकल्पोदयसम्भवादप्रामाणिकी जातिकल्पनेति, तदप्यऽसारम्-न हि जातिर्न दृश्यते येनैवमुपालम्भः स्यात्, उप-

---

परिहाराय पूर्वपक्षान्तरमुद्दिशति-यत्त्विति । नित्याया जातेः स्वविषयकज्ञानजननसामर्थ्ये सदा तज्ज्ञानमेव स्यान्न विषयान्तरस्येति न जातेः स्वविषयकज्ञानजनकत्वमिति भावः । परिहरति-तदसदिति । विभुविशेषगुणानामुत्तरोत्तरगुणनाश्यत्वेन घटादिविषयान्तरज्ञानेन जातिज्ञानविनाशसम्भवात्, घटादिभिरिन्द्रियसम्बन्धे च घटादिज्ञानोत्पत्तेरवश्यम्भावादिति नोक्तदोषः । उक्तदोषपरिहारं प्रतिजानीते-नित्यानामिति । किं च यदि ज्ञानहेतुत्वमेव ग्राह्यत्वं स्यात्तदा स्वज्ञानहेतुभूताया जातेर्नित्यत्वात्सदैव तद्ग्राह्यत्वमेव स्यान्न विषयान्तरग्रह इति विषयान्तरग्रहसम्पत्त्यर्थं नित्यानां जात्यादिपदार्थानां स्वविषयकज्ञानजननसामर्थ्यं प्रतिषिध्येतापि न चैवमस्ति ग्राह्यत्वस्य ज्ञानहेतुरूपत्वाभावात् किं तु ज्ञानजन्यफलभागित्वमेव ग्राह्यत्वं नित्यानां च ज्ञानजन्यफलभागित्वेपि न सर्वदा तज्ज्ञानधारापत्तिप्रसङ्गो ज्ञानजनकहेतूनां विनाशेन नित्यपदार्थज्ञाननाशस्यापि सम्भवादिति भावेनाह-न चेति । एतत्पूर्वमेव प्रतिपादितमिति स्मारयति-इति शून्यवादे वर्णितमिति । तथा हि-"स्यादिदं ग्राह्यलक्षणम्" "अतो न हेतुत्वं ग्राह्यलक्षणम्" इत्यादि शून्यवादे=शून्यवादनिराकरणस्थले(१८७पृ) प्रतिपादितं तत्रैवानुसन्धेयम् । उपसंहरति-तस्मादिति ।

यच्च "विचित्रस्वभावस्वलक्षणदर्शनवशादेव विकल्पवैचित्र्योपपत्तेः" इत्युक्तं तत्परिहाराय सूचयति-यत्त्विति । स्वलक्षणैरिति करणे तृतीया । स्वलक्षणस्य यन्निर्विकल्पकं प्रत्यक्षं भवति तदनन्तरमेव गवादिविकल्पो भवतीति गवादिविकल्पे स्वलक्षणानुभवस्यैव हेतुत्वं न जातेरिति भावः । परिहरति- तदपीति । वक्रोक्त्योपपादयति- नहीति । ज्ञानम् =गौरयमित्यादिकं जा-

जायमानं तु ज्ञानं स्वविषयभूतां जातिमुपस्थापयतीति नेदृशानां प्रलापानामवसरः।

कथं चाऽत्यन्तविलक्षणानि स्वलक्षणान्येकरूपं विज्ञानं जनयन्ति ?। "तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः।" इति स्थितेः । भवतो वा कथं विलक्षणानां विशेषाणामेकरूपसामान्यसम्बन्धकारणत्वमिति चेत्?, स्वहेतुवशादिति ब्रूमः– कानि चित्स्वलक्षणानि स्वकारणादुत्पद्यमानान्येकेन केन चित्स्वसामान्येन तादात्म्यं समवायं वा भजन्ते।

---

तिविषयकं ज्ञानम् ।

सिद्धान्ती पूर्वपक्षिणं पृच्छति–कथमिति । यदि सकलगोव्यक्तिष्वेकं गोत्वं सामान्यं नास्ति तदा व्यक्तीनां परस्परं भेदात् कथं गौरयं गौरयमित्येवमेकरूपं ज्ञानं जायेत ? गोत्वसामान्यस्वीकारे तु तस्य सर्वत्रैकरूपत्वादेकरूपं ज्ञानं सम्भवतीत्यर्थः । व्यक्तीनां परस्परवैलक्षण्ये प्रमाणमाह–तदतद्रूपिण इति । तद्रूपो नीलघटः, अतद्रूपश्च पीतघट इति भावास्तदतद्रूपिणः परस्परं भिन्ना इति यावत्, इति स्वरूपभेद उक्तः । तद्रूपहेतवो नीलघटहेतवः, अतद्रूपहेतवः पीतघटहेतवस्तत्र नीलघटस्तद्रूपहेतुजः पीतघटश्चाऽतद्रूपहेतुज इति परस्परभिन्नकारणजन्यत्वाद् भावाः परस्परं भिन्ना इत्यर्थः । भावाः परस्परं विलक्षणा विलक्षणकारणजन्यत्वात् सम्प्रतिपन्नवदिति । पूर्वपक्षी पृच्छति–भवतो वा कथमिति । यथा मन्मते विलक्षणानां व्यक्तीनामेकरूपज्ञानजनकत्वं न सम्भवति तथा त्वन्मतेपि विलक्षणानां व्यक्तीनामेकरूपेण सामान्येन सम्बन्धो नोपपद्यते एकरूपस्यैवैकरूपेण सामान्येन सम्बन्धसम्भवादिति भावः। उत्तरमाह–स्वहेतुवशादिति । स्वोत्पत्तिहेतुभूतकारणवशादित्यर्थः, कपालानामेवायं प्रभावो यद् घटमात्रमुत्पद्यमानं घटत्वेन सम्बद्धमेवोत्पद्यत इति भावः। उक्तं विशदयति–कानि चिदिति। यथा–घटा उत्पद्यमाना घटत्वेनैव सह तादात्म्येन वा समवायेन वा सम्बन्धेन सम्बध्यन्ते न गोत्वादिनेति तत्तत्कारणानां नैसर्गिकः स्वभाव एवेति स्वकारणसामर्थ्यवशादेव विलक्षणानामपि स्वलक्षणानामेकरूपसामान्येन सम्बन्ध उपपद्यते एवेति न कोपि दोषः ।

ननु हेतवो विलक्षणाः कथमेकविधसामर्थ्ययुक्तानि स्वलक्षणानि जनयन्ति ? । न जनयेयुर्यदि विलक्षणाः स्युः, तेऽपि त्वेकजातीया एव ।

नन्वेवं तत्सम्बन्धसिद्ध्यर्थमपरापरजात्यपेक्षायामनवस्था ? । नैष दोषः— यथा तालबीजमेकजातीयं परिणामपरम्परया तालजातिसम्बद्धां व्यक्तिमुपजनयति, सापि तथैव स्वकारणभूतबीजसमानजातीयं बीजान्त-

---

ननु नीलघटहेतवः पीतघटहेतुभ्यो विलक्षणा एवेति तेभ्यो विलक्षणकार्योत्पत्तिरेव युक्तेति कथमेकविधं घटत्वेन सम्बद्धत्वरूपं यत्सामर्थ्यं तद्युक्तानि घटादिस्वलक्षणान्युत्पद्यन्ते ? एकविधसामर्थ्ययुक्तत्वं चैकविधहेतुजन्यत्वे सत्येव सम्भवति न विलक्षणहेतुजन्यत्वेऽपि ततश्च यदुक्तम्—"स्वहेतुवशात्" इति तन्नयुक्तमित्याशङ्कते—नन्विति । परिहरति—न जनयेयुरिति । ते=हेतवः ।

नन्वेवमपि घटत्वस्य घटैरेव सम्बन्धो भवति न पटैरिति सिद्ध्यर्थं घटत्वे कोऽपि जात्यन्तररूपो विशेषो वक्तव्यस्तथा तस्यापि घटत्वेनैव नियतसम्बन्धसिद्ध्यर्थं तत्रापि जात्यन्तररूपो विशेषो वक्तव्य इत्यनवस्थैव स्यात्सामान्यस्वीकार इत्याशङ्कते— नन्वेवमिति । परिहरति— नैष दोष इति । पूर्वं यत् कार्याणां कारणानां च वैलक्षण्यमुक्तम्—"ननु हेतवो विलक्षणाः" इति तत्परिहरन्नऽनवस्थां परिहर्तुमुपक्रमते— यथेति । तालबीजेभ्यः समानरूपा एव तालव्यक्तय उत्पद्यन्त इति युक्तं यत्तासां सर्वासां तालत्वेन सम्बन्धो भवतीति, तथा तालव्यक्तिभ्यः समानान्येव तालबीजानि समुत्पद्यन्त इति तेषामेकसामान्यसम्बद्धतालव्यक्तिजनकत्वं युक्तमेव समानेभ्यस्तालबीजेभ्यश्च समुत्पन्नास्तालव्यक्तय इति तासामपि समानकारणजन्यत्वेन समानत्वाद् युक्त एकसामान्येन सम्बन्धः। सा=तालव्यक्तिः। एवमेकजातीयादेव शुक्राद् गोव्यक्तीनामुत्पत्तिर्भवतीति तासामपि समानकारणजन्यत्वेन समानत्वाद् युक्त एव गोत्वेनैकेन सम्बन्धः, तथा समानव्यक्तिषूत्पन्नस्य शुक्रस्यापि गोत्वसम्बद्धत्वेन समानव्यक्तिजनकत्वं युक्तमेवेति गोव्यक्तिजातकारणानि न विलक्षणानि, तथाऽविलक्षणकारणजन्यत्वाद् व्यक्तीनामपि न तथाविधं वैलक्षण्यं यदेकगोत्वसम्बन्धे प्रतिबन्धकं स्यादिति भावः । अनेन वैलक्षण्यं परिहृतम् । अनव-

रम् । तथैकजातीयाच्छुक्राद् गोजातीयव्यक्तिनिष्पत्तिः तस्यां च तज्जातीयशुक्रनिष्पत्तिरिति नाऽत्यन्तं तादात्म्यापत्तिः, तस्मादस्त्येकमाऽऽकृतिजातिसामान्यशब्दाभिलपनीयं शाबलेयादिष्वऽनुगतम् ।

न च सादृश्यमेव सामान्यम्– तद्बुद्ध्यभावात्, स एवायमिति प्रतीतिर्न तत्सदृश इति । न च सर्वसामान्यापन्हववादिनः सादृश्यमपि संभवति भूयोऽवयवसामान्यात्मकत्वात् तस्य ।

न चाऽतद्व्यावृत्तिरूपमपि सामान्यमऽनङ्गीकृत-

---

स्यापरिहारमपि सूचयति–तालजातिसम्बद्धामिति, यद्युत्पन्नायां गोव्यक्तौ गोत्वस्य सम्बन्धः स्यात्तदा गोव्यक्तिमात्रसम्बन्धनियमसिद्ध्यर्थं गोत्वे जात्यन्तरमावश्यकं स्यादपि न चैवमस्ति किं तु सामान्यसम्बद्धैव व्यक्तिरुत्पद्यत इति नाऽपरापरजात्यपेक्षा येनानवस्थास्यादिति भावः । शुक्रादिकारणानां तथा तत्कार्याणां च स्वरूपेण परस्परं भेदात्स्वरूपैक्यमपि नास्ति येन व्यक्त्यऽभेदादपि जातिसिद्धिर्न स्यादित्यभिप्रायेणाह–नात्यन्तमिति।उपसंहरति–तस्मादिति।

ननु यत्सर्वेषां घटानामाकारसादृश्यं तदेवास्तु सामान्यं सादृश्यं च स्वीकृतमेवेत्यलं सामान्यस्य पदार्थान्तरत्वस्वीकारेण अत्र च पक्षे समानानां सदृशानां भावः सामान्यमिति योगोप्यनुकूल इत्याशङ्क्याह– न चेति । तद्बुद्ध्यभावात्=सादृश्यबुद्ध्यभावात्, सादृश्यबुद्ध्यभावमेवाह– स एवायमिति । सामान्याऽनङ्गीकारे सादृश्यमपि स्वीकर्तुं न शक्यते इत्याह– न चेति। भूयोऽवयवसामान्यात्मकत्वात्=भूयोवयवसामान्यरूपत्वात् । तस्य=सादृश्यस्य । भूयोवयवसामान्यमेव सादृश्यं तत्र गोगवययोरवयवास्तु भिन्ना एव परिच्छिन्नानां गवावयवानां गवये वृत्त्यऽसम्भवादिति गोगवययोरवयवेषु तादृशः कोपि धर्मः स्वीकार्यो येन गोगवययोरवयनानां भिन्नत्वेपि सादृश्यं प्रतीयेत स च धर्मः सामान्यमेव पर्यवसन्नं स्यादनेकवृत्तित्वादिति सर्वसामान्यापन्हववादिनो मते सादृश्यमपि नोपपद्यत इति भावः ।

ननु मा भवतु सादृश्यरूपमपि सामान्यं किं त्वऽतद्व्यावृत्तिरूपमेव सामान्यं स्वीकार्यम्, यथा– तत्पदेन गोव्यक्तयो ग्राह्यास्तेभ्योऽश्वादिव्यक्तीनां

विधिरूपसामान्येन शक्यते प्रत्येतुम्, अगोव्यावृत्तिं हि प्रतियताऽवश्यं प्रथममेव गौः प्रत्येतव्यः, न ह्यप्रतीते गवि तद्व्यतिरेकात्मनाऽगवां निरूपणं संभवतीति प्रथममवश्यं विधिरूपेण गौः प्रत्येतव्यः, न हि तेभ्यो व्यतिरेकरूपमपहायाश्वादिव्यक्तीनां प्रातिस्वि-

---

व्यावृत्तिर्भेदोऽस्त्येव तथा च तद्व्यावृत्तिर्गोभिन्नपदार्थमात्रेस्ति तद्भेदश्च गोव्यक्तिष्वऽस्तीति गोव्यक्तिष्वऽतद्व्यावृत्तिरस्ति गवि गोभेदाभावादिति सैव सामान्यमित्यभ्युपगन्तव्यं तस्याः सर्वानुगतत्वात्, एवमश्वव्यक्तिभिन्नपदार्थमात्रेऽश्वव्यावृत्तिरस्ति. अश्वव्यक्तिषु चाऽतद्व्यावृत्तिरस्तीत्याशङ्क्याह—न चेति । विधिरूपेति—तद्व्यावृत्तेरभाव एवातद्व्यावृत्तिरित्यऽतद्व्यावृत्तिरूपं सामान्यमभावरूपमेवास्ति, गोत्वादिरूपं सामान्यं तु विधिरूपम्=भावरूपमस्ति तत्र भावरूपसामान्यं विनाऽतद्व्यावृत्तिरूपसामान्यस्य सिद्धिर्न सम्भवतीत्यर्थः । अभावज्ञानस्य प्रतियोगिज्ञानसापेक्षत्वात्—गोव्यक्तिषु याऽतद्व्यावृत्तिस्तज्ज्ञानाय तद्व्यावृत्तिज्ञानापेक्षा तद्व्यावृत्तिज्ञानं च तद्व्यावृत्तानामश्वादिव्यक्तीनां ज्ञानं विना न सम्भवति तासामपि ज्ञानमऽतद्व्यावृत्त्यैव वक्तव्यं प्रातिस्विकरूपेण सकलव्यक्तीनां ज्ञानासंभवात् तत्रापि तथा तत्रापि तथेति क्वचिदप्यतद्व्यावृत्तिज्ञानं न सम्भवति भावरूपसामान्यास्वीकारे । उक्तानुपपत्तिं स्वयमुपपादयति—अगोव्यावृत्तिमित्यादिना । अतद्व्यावृत्तिरगोव्यावृत्तिरेव तां प्रतियता=प्रमाता=अगोव्यावृत्तिविषयकज्ञानं संपादयता पुरुषेण प्रथमं गौरेवावगन्तव्या, अगोपदेन गोभिन्नमुच्यते गोभिन्नज्ञानं गोभेदज्ञानं वा गोज्ञानं विना न सम्भवतीत्याह— न हीति । तद्व्यतिरेकात्मना=गोभेदात्मना । अगवाम्=गोभिन्नानाम् । विधिरूपेण=भावरूपेण—गोत्वेन रूपेण ।

ननु यद्यऽगवां गोव्यतिरेकेण ज्ञानमुच्येत तदा गोव्यतिरेकस्य प्रतियोगिज्ञानसापेक्षत्वात् प्रथमं विधिरूपेण गोज्ञानमावश्यकं स्यात् न चैवमस्ति प्रातिस्विकरूपेणैवाऽगवां ज्ञानसम्भवान्न प्रथमं गोज्ञानापेक्षेत्याशङ्क्याह— नहि तेभ्य इति । तेभ्यः=गोभ्यः । अश्वादिव्यक्तीनामनन्तत्वान्न तासां प्रातिस्विकेनरूपेण=तत्तद्व्यक्त्या ज्ञानं संभवति किं तु गोव्यतिरेकरूपेणैव ज्ञानं वक्त-

**केन रूपेण ग्रहः संभवति तेषामनन्तानां बुद्धावनारोहात्, अनारूढेषु च तेषु तद्व्यावृत्तिरूपस्य गोः प्रत्येतुमशक्यत्वात्। गौर्गौरिति च विधिरूपं सामान्यमवगम्यमानं कथं निवृत्तिरूपं शक्यमङ्गी कर्तुम्?। तस्मादिदमतिपेलवं दर्शनम्। तस्मादस्ति जातिः।**

**एतेनाऽवयवी व्याख्यातः, तस्याप्यवयवेभ्यो भेदोऽभेदो वेति विकल्पे, भेदं समवायसंबन्धमऽवयवगुणे-**

---

व्यं तत्र च प्रथमं गोज्ञानापेक्षास्त्येवेत्यर्थः। तेषाम्=अश्वादिप्रातिस्विकरूपाणाम्। अनारूढेषु=बुद्धावनारूढेषु=अप्रतीतेषु तेषु=अश्वादिप्रातिस्विकरूपेषु। तद्व्यावृत्तिरूपस्य=अश्वादिव्यावृत्तिरूपस्य। गोरिति- अश्वादिप्रातिस्विकरूपाणामज्ञाने तद्व्यावृत्तिरूपस्य गोर्ज्ञानं न सम्भवति त्वन्मते गोरश्वादिव्यावृत्तिरूपत्वाद् अश्वादिभेदज्ञानस्य प्रतियोगिज्ञानसापेक्षत्वादित्यर्थः। तथा चाऽगोव्यावृत्तिरेव त्वया सामान्यमुक्तं तत्राश्वादिव्यावृत्तिरेवाऽगोव्यावृत्तिरित्यऽगोव्यावृत्तौ अगोज्ञानांशे गोज्ञानापेक्षा गौश्चाश्वादिव्यावृत्तिरूपैवेति गोज्ञानायाश्वादिज्ञानापेक्षेत्यन्योन्याश्रय इति भावः। अगोपदेन अश्वादिव्यक्तयो ग्राह्याः। बाधकान्तरमाह—गौर्गौरिति। विधिरूपम्=भावरूपम्। भावरूपेण प्रतीयमानं गोत्वादि सामान्यमऽतद्व्यावृत्तिरूपेणाभावरूपं कथं स्यात्। निवृत्तिरूपम्=अतद्व्यावृत्तिरूपम्, अभावरूपं वा। अतिपेलवम्=असमञ्जसम्, अतिमृदुलं बालेनापि निराकर्तुं शक्यमिति नादरणीयमित्यर्थः। उपसंहरति—तस्मादिति "ग्रहः" इत्यत्र "अपोहः" इति पाठान्तरम्। वार्तिकेप्युक्तम्—

"अगोव्यावृत्तिः सामान्यं वाच्यं यैः परिकल्पितम्।
गोत्वं वस्त्वेव तैरुक्तमऽगोपोहगिरा स्फुटम्॥
तस्मात् प्रात्यात्मिकै रूपैरगोऽपोहो न युज्यते॥
तस्मात् सर्वेषु यद्रूपं प्रत्येकं परिनिष्ठितम्।
गोबुद्धिस्तन्निमित्ता स्याद् गोत्वादन्यच्च नास्ति तत्॥" इत्यादि।

॥ इति सामान्यवादः समाप्तः ॥

उक्तन्यायमऽवयविन्यतिदिशति— एतेनेति। यथा जातिव्यक्त्योर्भेदाऽभेदौ तथा ऽवयवावयविनोरपि भेदाभेदावेवेत्यर्थः। तस्य=अवयविनः। अत्र

भ्यश्च तत्र विशेषगुणानामुत्पत्तिमाचक्षते वैशेषिकाः। ये च स्वसमवेतविशेषणविशिष्टाः स्वाश्रयस्यैकजातीयस्य परिच्छेदकास्ते विशेषगुणा इत्याहुः। वयं तु भिन्नाभिन्नत्वम्- नहि तन्तुभ्यः शिरःपाण्यादिभ्यो वाऽवयवेभ्यो निष्कृष्टः पटो देवदत्तो वा प्रतीयते, तन्तु-

---

वैशेषिकमतमाह-भेदमिति। अवयवेभ्योऽवयवी भिन्नोऽवयवेष्वेव समवेतस्तत्र=अवयविनि विशेषगुणानां रूपादीनामवयवगुणेभ्य उत्पत्तिरिति वैशेषिकाः। भेदे वैशेषिकसूत्रं यथा-" कार्यकारणयोरेकत्वैकपृथक्त्वाभावादेकत्वैकपृथक्त्वं न विद्यते " इति। समवायोप्यन्यत्रोक्तः-

" घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः।
तेषु जातेश्च सम्बन्धः समवायः प्रकीर्तितः॥" इति।

गुणेभ्यो गुणान्तरोत्पत्तौ वैशेषिकसूत्रं यथा- " द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम् " इति। विशेषगुणलक्षणमाह- ये चेति। स्वाश्रयस्यैकजातीयस्य परिच्छेदका विशेषा ह्यपि भवन्ति तेषामपि परमाणूनां परस्परं भेदकत्वादिति तद्व्यवच्छेदाय स्वसमवेतेत्युक्तम्, विशेषेषु च किमपि समवेतं न भवतीति विशेषाद्व्यवच्छेदः। स्वसमवेतविशेषणविशिष्टा इत्येतावन्मात्रोक्तौ द्रव्ये कर्मणि सामान्यगुणेषु चातिव्याप्तिः स्यादिति तद्व्यवच्छेदायोक्तं स्वाश्रयस्येत्यादि, द्रव्यादीनामेकजातीयस्वाश्रयव्यवच्छेदकत्वाभावात्। विशेषगुणानामेव स्वाश्रयव्यवच्छेदकत्वात्। उक्तं च काव्यप्रकाशे- " वस्तुधर्मो द्विविधः सिद्धः साध्यश्च, सिद्धोपि द्विविधः पदार्थस्य प्राणप्रदो विशेषाधानहेतुश्च, तत्राद्यो जातिः, द्वितीयो गुणः शुक्लादिना हि लब्धसत्ताकं वस्तु विशिष्यते " इति। स्वम्=विशेषगुणो रूपादिस्तत्र समवेतं यद्विशेषणं रूपत्वादि तद्विशिष्टास्तथा स्वाश्रयस्य घटादेरेकजातीयस्य=समानाकारस्य परिच्छिदेकाः=विभेदका ये ते विशेषगुणा यथा नीलघटात् पीतघटस्य भेदो रूपकृत एवेति रूपं विशेषगुण एवमन्यत्रापि ज्ञेयम्। उक्तं च-

" बुद्ध्यादि षट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः।
अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः॥" इति।

स्वमतमाह-वयमिति। स्पष्टोयं ग्रन्थः। निष्कृष्टः=पृथक्कृतः। यद्य-

पाण्यादयोऽवयवा एव पटाद्यात्मना प्रतीयन्ते । विद्यते च देवदत्ते 'अस्य हस्तः शिरः' इत्यादिः कियानपि भेदावभास इत्युपपन्नमुभयात्मकत्वम् । तस्मादवयवानामेवाऽवस्थान्तरमवयवी न द्रव्यान्तरम् । ते एव हि संयोगविशेषवशादेकद्रव्यतामापद्यन्ते, तदात्मना च महत्त्वं पटजातिं च बिभ्रतः पटबुद्ध्या गृह्यन्ते, तेन पटात्मना तेषामेकत्वम्. अवयवात्मना तु नानात्वमुपपन्नम् ।

यदपि कारणगुणाः रूपादयः कार्ये गुणमारभन्ते इत्युक्तम्, तदपि गुणद्वयप्रतीत्यभावान्नातीवास्मभ्यं रोचते, यदि हि द्वौ गुणौ प्रतीयेयातां तन्तुष्वेकः पटे चापरस्ततः कार्यकारणभावं प्रतिपद्येयाताम्, न तु गुणद्वयं प्रतीयते, तन्तुरूपमेव शुक्लं तन्तुषु पटभावमापन्नेषु पटरूपतया प्रतीयते न तु रूपान्तरम् । यत्रापि नानारूपैः शुक्लकृष्णरक्तपीतैस्तन्तुभिरारभ्यते पटस्तत्रापि त एव वर्णाः पटगताः प्रतीयन्ते न रूपान्तरम् ।

---

वयवेभ्योऽवयवी पृथक् प्रतीयेत तदाऽवयवावयविनोर्भेदः सर्वथा स्यादपि नैवमस्तीति भावः । अभेदमुक्त्वा भेदमाह—विद्यत इति । यद्यऽभेद एव स्यात्तदास्य शिर इत्यादिप्रतीतिर्नस्यादिति भेदोप्यस्त्येवेति भावः । उपसंहरन् स्वाभिप्रायमाह—तस्मादिति । ते=अवयवास्तन्त्वादयः । तदात्मना=एकद्रव्यात्मना, अवयविरूपेण । पटजातिम्=पटत्वम् । भिन्नाभिन्नत्ववदेवैकानेकत्वमप्यस्त्येवेत्याह—तेनेति । तेषाम्=तन्त्वाद्यवयवानाम् ।

कारणगुणाः कार्यगुणानारभन्त इति वैशेषिकमतं निराकर्तुमाह—यदपीति । गुणद्वयप्रतीत्यभावं विशदयति—यदीति । यदि तन्तुष्वेकं शुक्लं रूपं प्रतीयेत पटे चापरं तदा कार्यगुणकारणगुणौ कार्यकारणभावं प्रतिपद्येयातामित्यन्वयः, न चैवमस्तीत्याह— न त्विति । स्वमतमाह—तन्तुरूपमेवेति । चित्रस्य यद्रूपान्तरत्वमुक्तं तन्निराकरोति यत्रापीति । रूपान्तरम्=चित्राख्यम् । तत्र शुक्लकृष्णादय एव वर्णाः तन्त्वादिसमवेताः पटेऽव्याप्यवृत्तित्वेन प्रतीयन्ते इति न तत्र चित्राख्यरूपान्तरोत्पत्तिर्युक्ता ।

ननु चित्रः पट इति प्रतीयते न तु शुक्लः पीत इति वा तस्माच्चित्राख्यं रूपान्तरमत्रोत्पन्नम्। नैवम्-चित्रं नानारूपमित्यर्थः, चित्रशब्दो हि नानापर्यायो लौकिकानां प्रसिद्धः, ततश्चित्राख्यमेकमेव रूपं लोकाविरोधादेवाऽयुक्तमङ्गीकर्तुम्। नानारूपाणामपि चावयवभेदद्वारेणैकस्मिन्नपि पटे समवायो नानुपपन्नः।

एतेन संयोगजसंयोगो निरस्तो वेदितव्यः, यथा देवदत्तसंयोग एव तस्मिन् कुण्डलिनि सञ्जाते कुण्डलिसंयोगो भवति, तथा तन्तुतुरीसंयोग एव तन्तौ पटभावमापन्ने पटतुरीसंयोगो भवति न संयोगान्तरं प्रतीत्यऽभावादित्यलमतिविस्तरेण तस्मादस्त्येवाऽवयवी।

---

चित्रस्य रूपान्तरत्वमाशङ्कते- नन्विति। अत्र=नानारूपाधिकरणे द्रव्ये। परिहरति-नैवमिति। परिहारमुपपादयति-चित्रमिति। चित्ररूपशब्दस्य नानारूपमेवार्थः, चित्रशब्दनानाशब्दयोः पर्यायत्वात्, नाना=बहुविधं तथा चानेकरूपसमावेशादेव चित्रत्वमुपपद्यत इति न चित्राख्यं रूपान्तरं मन्तव्यमिति भावः। ननु कथमेकस्मिन् पटे नानारूपाणां समवायः स्यादेकत्र विरुद्धगुणसमावेशस्यासंभवादित्याशङ्क्याह- नानारूपाणामिति। अवयवानामनेकत्वत्वानेकरूपसमवायः संभवत्येवाऽवयवद्वारा च तेषां रूपाणामवयविनि प्रतीतिर्भवतीति न किं चिदनुपपन्नम्।

एतेनेति-यथाऽवयवावयविनोर्भेदो निरस्तस्तथा संयोगजसंयोगोपि निरस्तो वेदितव्य इति भावः। तर्कमते तुरीपटसंयोगस्तन्तुतुरीसंयोगजन्यो भवति तन्निराकर्तुं दृष्टान्तमाह-यथेति। यदि तन्तुपटयोः सर्वथा भेद एव स्यात्तदा तुरीतन्तुसंयोगापेक्षया तुरीपटसंयोगस्य भिन्नत्वात् तयोः कार्यकारणभावः स्यादपि नैवमस्तीति न संयोगजः संयोगः किं तु य एव तुरीतन्तुसंयोगः स एव तुरीपट संयोग इति भावः। स्पष्टमन्यत्। एवं विभागजविभागोपि निरस्तो वेदितव्यः, तथा हि-हस्तपुस्तकविभागानन्तरं कायपुस्तकविभाग इति कायपुस्तकविभागो हस्तपुस्तकविभागजन्य इति तार्किककल्पना तदपि नोपपद्यते, एकस्मिन्नेव क्षण उभयविभागस्य जायमानत्वात्, हस्ताद्यवयवसंघातस्यैव

वृत्तिः स्वावयवेष्वस्य व्यासज्येति प्रदर्शितम्।
तेनास्त्यवयविद्रव्यं सामान्यं चास्ति सर्वगम्॥
वर्णानामभिधातृत्वमाकृतेश्चाभिधेयताम्।
कथयित्वाऽथ संबन्धकथैव प्रकृतोच्यते॥
ज्ञाप्यज्ञापकभावश्च संबन्धः प्रागुदीरितः।
तन्नित्यत्वं यदाक्षिप्तं तत्समाधीयतेऽधुना॥

एवं हि पूर्वमुक्तम्—यस्मात् प्रथमश्रवणे शब्दोऽर्थं न प्रत्याययति तस्मान्नास्य स्वाभाविकमिन्द्रियवत् प्रत्यायकत्वम्। 'अस्यायमर्थः' इति पुरुषेण कथिते प्रत्याययति ततो नूनमस्य पुरुषकृतं प्रत्यायकत्वमिति पौरुषेय एव संबन्ध इति।

---

च कायत्वात्। यदि हस्ताद्यवयवसंघातात् स्यात् पृथक् कायस्तदैवं क्रमकल्पनोपपद्येतापि न चैवमस्त्यवयवावयविनोरभेदस्वीकारात्। विस्तरस्तु मदीयाद्वैतचन्द्रिकायां द्रष्टव्य इत्युपरम्यते। उपसंहरति—तस्मादस्तीति।

इत्येवं प्रसङ्गसङ्गत्या यज्जात्यादीनां प्रतिपादनं कृतं तत्संक्षेपेण पद्यैः संगृह्णाति—वृत्तिरित्यादिना। अस्य=अवयविनः। सामान्यम्=गोत्वादि। संप्रति प्रतिपादनीयमाह—अथ संबन्धेति। भाष्ये हि ह्याक्षिप्तस्य शब्दार्थसंबन्धनित्यत्वस्य समाधानं त्यक्त्वा प्रसङ्गसङ्गत्या जात्यादिनिरूपणं कृतं तथैवात्रापि विस्तरेण ग्रन्थकृता कृतम्, पुनश्च भाष्ये "अथ संबन्धः कः" इत्यादिना शब्दार्थसंबन्धस्य नित्यत्वप्रतिपादनमारब्धं तदेवात्र प्रतिजानीते—अथेति। ज्ञाप्यज्ञापकभावः=प्रत्याय्यप्रत्यायकभावः शब्दार्थयोः संबन्धस्तु पूर्वमेव प्रतिपादितस्तस्य संबन्धस्य पूर्वपक्षिणा नित्यत्वं यत्प्रत्याख्यातं तदधुना समाधीयत इत्यर्थः।

प्रकृतमनुसरन् प्राधान्येन निराकरणीयं पूर्वमुक्तमेव पूर्वपक्षं स्मारयति—एवं हीति। अस्यायमर्थ इति—गोशब्दस्य सास्नादिमान् पिण्डोऽर्थः। इति=इत्येवं पुरुषान्तरेण कथिते सति शब्दोऽर्थं प्रत्याययति तस्माज्ज्ञायते यदस्य शब्दस्य प्रत्यायकत्वं तत्पुरुषकृतमिति शब्दार्थयोर्यः प्रत्याय्यप्रत्यायकत्वं सम्बन्धः स पौरुषेय एव न त्वपौरुषेय इत्यर्थः। पूर्वं व्याख्यातोऽयं ग्रन्थः।

तत्राभिधीयते- न हि 'अस्यायमर्थः' इति सम्बन्धकरणमिदं प्रसिद्धसम्बन्धकथनं ह्येतत् । कथमवगम्यते ?, अर्थान्तरकथने बहुभिर्निवारणात्- यो हि कश्चित् कस्मै चिद् गोशब्दस्याश्वं गवयं वार्थमाह तमन्ये बहवो निवारयन्ति-नायमस्यार्थः, सास्नादिमानस्यार्थ इति । सम्बन्धक्रियापक्षे च देवदत्तादिवद् येनैव सम्बन्धः क्रियते स एवार्थ इति निवारणं नोपपद्यते, तस्मान्न तावदर्वाचीनाः पुरुषा अस्य शब्दस्यायमर्थोऽस्यायमर्थ इति वदन्तोपि तत्सम्बन्धकर्तृत्वेनाशङ्कनीयाः ।

---

परिहर्तुमुपक्रमते-तत्राभिधीयत इत्यादिना । न हीति- अस्यायमर्थः=गोशब्दस्य सास्नादिमानर्थः । इदम्=अस्य शब्दस्यायमर्थ इति कथनम् । अस्यायमर्थ इतीदं सम्बन्धकरणं नास्तीत्यन्वयः । किं तर्ह्येतदित्याशङ्क्याह-प्रसिद्धेति, प्रसिद्धस्य=नित्यस्य सदातनस्य सम्बन्धस्य कथनम्=उपदेश एव न तु नूतनसम्बन्धनिर्माणं येन शब्दार्थसम्बन्धस्य पौरुषेयत्वं स्यादित्यर्थः । इदं न सम्बन्धकरणं किं तु प्रसिद्धसम्बन्धकथनमेवेति कथमवगम्यत इति पृच्छति-कथमिति । उत्तरमाह- अर्थान्तरेति । यदि नूतनसम्बन्धनिर्माणं स्यात्तदा येनैवार्थेनेच्छेत् तेनैव गवादिशब्दानां सम्बन्धं पुरुषः कुर्यात् नैवमस्ति प्रत्युताशुद्धार्थनिर्देशे कृते बहवो व्युत्पन्ना निवारयन्ति- नायमस्यार्थ इति तस्मात्प्रसिद्धसम्बन्धस्य कथनमेवैतत्- अस्यायमर्थ इति । एतदेव विशदयति-यो हीति । विपक्षे बाधकमाह- सम्बन्धक्रियेति । क्रिया=करणं निर्माणम् । देवदत्तादिवदिति- यथा पिता स्वपुत्रपिण्डेन देवदत्तशब्दस्य सम्बन्धं करोति न तत्र कोपि निवारयति तथा गोशब्दस्य गवयेनाश्वेन वापि संबन्धे कृते न कोपि निवारयेद्, न चैवमस्ति किं तु निवारयन्ति निवारणेन ज्ञायते 'अस्यायमर्थः' इति कथनं सम्बन्धकरणं नास्ति किं तु नित्यस्यैव सम्बन्धस्य कथनं तस्मान्नित्यः शब्दार्थयोः सम्बन्धः । येनेति- येनैव पदार्थेन सह । क्रियते=क्रियेत । अर्थ इत्यत्र स्यादिति शेषः । नोपपद्यते=नोपपद्येत । उपसंहरति-तस्मादिति । प्राभाकरैरप्युक्तम्-" वृद्धानां स्वार्थेन व्यवहारप्रमाणमुपशृण्वन्तो बालाः शब्दश्रवणसमनन्तरभाविना चेष्टाविशेषेण विशिष्टार्थविषयां मनीषां कल्पयन्तो वा-

**यदि परमेवं स्यात्?– सर्गादिकाले भगवता प्रजापतिना सर्वमेव स्थावरजङ्गमं धर्माधर्मौ च सृष्ट्वा संव्यवहाराय च शब्दानामर्थैः सम्बन्धं कृत्वा धर्माधर्मप्रतिपादनाय च कृतसम्बन्धैः पदैर्वेदान् कृत्वाऽऽत्मजेभ्यो मरीच्यादिभ्यः शब्दार्थसम्बन्धो वेदाश्च प्रतिपादितास्तैरप्यन्येभ्यस्तैरप्यन्येभ्य इत्येवं पूर्वपूर्वेभ्यः प्रतिपद्योत्तरोत्तरेषां शब्दार्थप्रतिपत्तिर्व्यवहारश्चेति।**

**तदप्ययुक्तम्–इत्थम्भावे प्रमाणाभावात् । प्रथमश्रु-**

---

स्यवाचकतां शब्दस्याध्यवस्यन्ति तेपि वृद्धा यदा बाला आसंस्तदा तेप्यन्यैव दिशा व्युत्पद्यन्तेस्म येभ्यश्च वृद्धेभ्यस्ते व्युत्पत्तिमलभन्त तेप्यन्येभ्यस्तेप्यन्येभ्य इति विनापि संकेतयितारं पुरुषमुपपद्यत एव शब्दार्थयोरनादिवृद्धपरम्पराव्यवहारदर्शनसिद्धः सम्बन्धः।

औत्पत्तिकस्तु सम्बन्धः शब्दस्यार्थेन सम्भवः (वी)।
वृद्धसंव्यवहारस्य प्रवाहानादिता यतः॥

वेदार्थविदामग्रगस्य भगवतः सकलनयनिधेर्जैमिनेरपौरुषेयः शब्दस्यार्थेन सम्बन्धः स हि मेने– यद्यपि देवदत्तादीनां पुरुषसंकेतनिबन्धनं वाचकत्वं तथापि गवादिष्वनुमानं न शक्यते कर्तुम्, तस्मादनादिरेव वृद्धपरम्पराभ्युपगमनीया।" इति।

ननु नाधुनिकैः पुरुषैः शब्दार्थयोः सम्बन्धः कृतो येनाऽर्थान्तरनिर्देशे निवारणं नोपपद्येत किं तु सर्गादौ प्रजापतिना शब्दानामर्थैः सह सम्बन्धः कृतोस्ति तथा च यदा कोपि तद्विरुद्धमुपदिशति तदान्ये निवारयन्तीति न निवारणानुपपत्तिः, प्रजापतिना च कृतत्वेन पौरुषेय एव शब्दार्थयोः सम्बन्धो न नित्य इत्येवमाशङ्कते–यदि परमिति । धर्माधर्मप्रतिपादनाय=धर्माधर्मयोरुपदेशाय। प्रतिपादिताः=उपदिष्टाः। तैः=मरीच्यादिभिरप्यन्येभ्यः पुरुषेभ्यः प्रतिपादिताः। पूर्वपूर्वेभ्यः पुरुषेभ्यः प्रतिपद्य=अवधार्य–ज्ञात्वा। उत्तरोत्तरेषां जनानां व्यवहारादिकं प्रवर्तते भवति वेत्यर्थः।

परिहरति–तदपीति । इत्थम्भावे=प्रजापतिना शब्दार्थयोः सम्बन्धः कृत इति नियमे । ननु यदि सम्बन्धः कृतको न स्यात्तदा प्रथममपि श्रुते-

तावऽप्रतीतिरेव प्रमाणम्-सामयिकत्वे ह्यऽप्रतिपन्नसमयानामप्रतीतिः प्रतिपन्नसमयानां च प्रतीतिर्देवदत्तादिशब्दवदुपपन्ना भवति, स्वाभाविके तु प्रत्यायकत्वे प्रथमश्रवणेपि प्रतीतिः स्यादिति चेत् ?, न, स्वाभाविकमपि प्रत्यायकत्वमवगतं सदऽर्थप्रतिपत्तौ निमित्तं नाऽप्रतिपन्नमिति युक्तैव प्रथमश्रवणेऽर्थस्याऽप्रतीतिः। नच सर्गादिर्नाम कश्चित् कालोस्ति, सर्वदा हीदृशमेव जगदिति दृष्टानुसारादवगन्तुमुचितम्। नतु स कालोभूत् यदा सर्वमिदं नासीदिति, प्रमाणाभावात्।

---

शब्देऽर्थप्रतीतिः स्यादेव शब्दार्थयोः सम्बन्धस्य नित्यत्वात्, न चैवमस्ति तस्मात् प्रथमश्रवणे यार्थस्याऽप्रतीतिः सैव सम्बधस्य कृतकत्वे प्रमाणमित्याशङ्कते-प्रथमश्रुताविति। स्वपक्षे साधकमाह-सामयिकत्वेति। सामयिकत्वे=सांकेतिकत्वे कृतकत्व इति यावत्। शब्दार्थयोः सम्बन्धस्य सामयिकत्वे तु यैः पुरुषैः सङ्केतो न गृहीतः तेषामर्थाप्रतीतिरपि युज्यते, यैश्च सङ्केतः प्रतिपन्नः=ज्ञातस्तेषां प्रतीतिरप्यर्थस्य युज्यते इति न कोपि दोषः। नित्यत्वे च कस्यचित् प्रतीतिः कस्य चिदप्रतीतिरिति नोपपद्यत इति विपक्षे बाधकमाह-स्वाभाविकेति। स्वाभाविके=नित्ये प्रतिबन्धासम्भवादिति भावः।

परिहरति- नेति। प्रत्यायकत्वं न स्वरूपेणोपयोगि किं तु ज्ञातं सदेवेति येन पुरुषेण 'अयं शब्दोऽस्यार्थस्य प्रत्यायकः' इत्येवं प्रत्यायकत्वं ज्ञातं तस्यार्थप्रतीतिर्भवति येन त्वेवं प्रत्यायकत्वं न ज्ञातं तस्यार्थप्रतीतिर्न भवतीति स्वाभाविकत्वेप्युपपद्यत एवार्थाऽप्रतीतिरित्याह-स्वाभाविकमपीति। यदुक्तम्-" सर्गादिकाले " इत्यादि तत्र सर्गादिकालं निराकरोति- न चेति। मीमांसकमते सर्गादिः प्रलयश्च नास्त्येव सदैवैवंरूपेण प्रपञ्चस्य वर्तमानत्वात् प्रयोगश्च-सर्वः सूर्योदयः सूर्योदयपूर्वकः सूर्योदयत्वादद्यतनसूर्योदयवदिति। पदार्था अनित्या विनाशिन उत्पत्तिमन्तश्च सन्तीत्यन्यदेतत्। विपक्षे बाधकमाह-नत्विति। पुस्तकान्तरे तु " न तु " इत्यत्र "ननु सकालोऽभूद् यदा सर्वमिदं नासीदिति, न, प्रमाणाभावात्" इत्येवमपि पाठोस्ति सोपि शोभनः।

सर्गादौ प्रमाणं दर्शयति-मन्त्रेति। " तदैक्षत बहुस्यां प्रजायेय "

मन्त्रार्थवादेतिहासपुराणादि प्रमाणमिति चेत् ?, न, वेदानां पौरुषेयसंबन्धापेक्षिणां स्वयं च पौरुषेयाणां शाक्यादिग्रन्थवदऽतीन्द्रियार्थे प्रामाण्यासंभवात्, तदप्रामाण्ये च तन्मूलानां धर्मशास्त्रादीनां दूरनिरस्तमेव प्रामाण्यम् । सर्वाभावे च सृष्टिरपि न संभवति मृत्तन्त्वाद्युपादानेन हि घटादीन्युपादीयन्ते सर्वाभावे हि केनोपादानेन सर्वमिदमुपादेयम् ?।

स्यान्मतम्—आत्मैवैको जगदादावासीत् स एव

---

" धाता यथापूर्वमकल्पयत् " इत्यादिप्रमाणं सर्गादौ ज्ञेयम् । परिहरति—नेति । सर्गादिकालस्वीकारपूर्वकं प्राप्ते वेदानां शब्दार्थसम्बन्धस्य च पौरुषेयत्वे बाधकमाह—वेदानामिति । अतीन्द्रियार्थे=धर्मस्वर्गादौ । यदि वेदानां पौरुषेयत्वेऽप्यतीन्द्रियार्थे प्रामाण्यं स्यात्तदा शाक्यादिग्रन्थानामप्यतीन्द्रियार्थे प्रामाण्यं स्यात् पौरुषेयत्वाविशेषादिति भावः । नन्वतीन्द्रियार्थे वेदानामप्रामाण्येऽपि धर्मशास्त्रादीनां प्रामाण्यं भविष्यतीत्याशङ्क्याह—तदप्रामाण्येति । तदप्रामाण्ये=वेदाऽप्रामाण्ये । तन्मूलानाम्=वेदमूलानाम् । प्रलयं निराकरोति—सर्वाभावेति । प्रलयो नाम पदार्थमात्राभावस्तथा च पदार्थमात्रस्याभावे जाते पुनः सृष्टिरपि कथं स्यात् ? तत्तत्पदार्थकारणानामभावात् । कार्योत्पत्तिश्च कारणाधीनेति सर्वाभावे केनोपादानेन=कारणेन सर्वमिदं उपादेयम्=जगद्रूपं कार्यं सम्पद्येतेत्यर्थः । वार्तिकेप्युक्तम्—

" तस्मादद्यवदेवात्र सर्गप्रलयकल्पना ।
समस्तक्षयजन्मभ्यां न सिध्यत्यप्रमाणिका ॥
यदा सर्वमिदं नासीत् काऽवस्था तत्र गम्यताम् ।
प्रजापतेः क्व वा स्थानं किं रूपं च प्रतीयताम् ॥
ज्ञाता च कस्तदा तस्य यो जनान् बोधयिष्यति ।
उपलब्धेर्विना चैतत् कथमध्यवसीयताम् ॥" इत्यादि ।

ननु दृश्यत्वात् जडत्वात् परिच्छिन्नत्वाच्च प्रपञ्च एव मिथ्या तदन्तर्गतत्वाच्छब्दार्थयोः सम्बन्धोऽपि मिथ्यैवेति कथं तस्य नित्यत्वं स्यादित्यभिप्रायेणाद्वैतवादमुपस्थापयति— स्यान्मतमित्यादिना । आत्मा=निर्विशेषं ब्रह्म ।

स्वेच्छया व्योमादिप्रपञ्चरूपेण परिणमति बीजमिव वृ-क्षरूपेण । चिदेकरसं ब्रह्म कथं जडरूपेण परिणमतीति चेत् ?, न परमार्थतः परिणामं ब्रूमः किं त्वपरिणतमेव परिणतवत् एकमेव सदनेकधा मुखमिवादर्शादिषु अ-विद्यावशाद् विवर्तमानमात्मैवात्मानं चिद्रूपं जडरू-पमिव अद्वितीयं सद्वितीयमिव पश्यति, सेयमविद्यो-पादाना स्वप्नप्रपञ्चवन्महदादिप्रपञ्चसृष्टिः ।

तथा च-" सर्वं खल्विदं ब्रह्म " "आत्मैवेदं सर्वम्" "नेह नानास्ति किं चन" इत्यादयो बहवोऽद्वैतवादाः । तथा-"इन्द्रो मायाभिः पुररूप ईतये" इति भेदावग-तेर्व्यक्तमेव मायानिबन्धनत्वं दर्शितम् । तथा " लो-

---

परिणामोत्र विवर्तरूपो ज्ञेयः, अद्वैतवादे प्रपञ्चस्य ब्रह्मविवर्तत्वात् । अत्रोदा-हरणमाह-बीजमिवेति । ननु सरूप एव परिणामो दृष्ट इति चेतनस्य ब्रह्मणः कथं जडरूपः परिणामः स्यात् ? प्रपञ्चस्य जडरूपत्वादित्याशङ्कते मीमांस-कः-चिदेकरसमिति, चैतन्यस्वरूपमित्यर्थः । अद्वैत्युत्तरमाह- न परमार्थत इति । यदि परिणामोपि परमार्थः=सत्यः स्यात्तदा चेतनस्य जडरूपेण कथं परिणाम इति चोद्यं स्यादपि नैवमस्तीति स्वाभिप्रायमाह- किं त्वित्यादिना । मुखेति-यथा मुखमात्मानमेव दर्पणेऽन्यथाभूतं पश्यति न तु दर्पणे दृश्यमानं मुखं सत्यं भवति तथा ब्रह्मैवाऽविद्यावशादात्मानं जडादिरूपं पश्यतीत्यन्व-यः । तस्मादस्य प्रपञ्चस्याविद्यैव समवाय्युपादानकारणमित्याह-सेयमिति । ब्रह्म तु विवर्तोपादानमेव ब्रह्माविनाशेपि प्रपञ्चविनाशावश्यम्भावात् । " तरति शोकमात्मवित्" इत्यादावात्मज्ञानेन प्रपञ्चनिवृत्तिः श्रूयते ज्ञानेन चाज्ञानस्यैव नाशः सम्भवति नान्यस्य तथा च ज्ञाननिवर्त्यत्वात् प्रपञ्चस्याऽज्ञानात्मकत्व-मवधार्यते, अविद्या चाज्ञानमेवेत्यविद्याकार्यमयं प्रपञ्च इत्यर्थः ।

स्वपक्षे प्रमाणमाह- तथा चेत्यादिना । इदं दृश्यमानं सर्वं ब्रह्मैव आ-त्मैव । इह नाना=द्वितीयं नास्ति किं त्वेकं ब्रह्मैवास्ति । तथा इन्द्रः=ब्रह्म मा-याभिः=अविद्याभिः पुररूपः=बहुरूपः=प्रपञ्चरूपः ईयते=प्रतीयते । इति श्रुत्या भेदावगतेः=भेदज्ञानस्याविद्यामूलकत्वं दर्शितं तस्माद् भेदो मिथ्या । अ-

कास्तं परादुर्योऽन्यत्रात्मनो लोकान् वेद" इत्यादिना-ऽनात्मदर्शने निन्दा, "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति च नानात्वदर्शननिन्दा सर्वमिदमद्वितीयमेव ब्रह्म पारमार्थिकम्, भेददृष्टिश्चाविद्योपादानेत्येतमर्थं प्रकटयतीति ।

---

नात्मदर्शननिन्दायां श्रुतिं प्रमाणयति—लोकास्तमिति, लोकास्तं परादुः=पराकृतवन्तो यः पुरुषो लोकान्=प्रपञ्चं आत्मनोऽन्यत्र=आत्मभिन्नम्=ब्रह्मसत्तातिरिक्तसत्तावन्तं वेद, इत्यादिना श्रुतिवचनेनाऽनात्मदर्शने=प्रपञ्चस्य ब्रह्मसत्तातिरिक्तसत्तावत्त्वज्ञाने निन्दा प्रतिपाद्यते । प्रपञ्चविषयकज्ञानेऽपरिहार्येऽपि प्रपञ्चे यत् सत्यत्वज्ञानं तदेवात्राऽनात्मदर्शनशब्देनाद्वैतिनोऽभिप्रेतमस्ति । नानात्वदर्शननिन्दायां श्रुतिं प्रमाणयति—मृत्योरिति, यः पुरुषो भेदं पश्यति स मृत्योरपि मृत्युम्=विपुलतरमनिष्टं प्राप्नोतीत्यर्थः । यदि प्रपञ्चः सत्यः स्यात्तदाऽनात्मदर्शने नानात्वदर्शने च निन्दा न श्रूयेत श्रूयते च निन्दा तस्माद् भेदो मिथ्येति भावः । वस्तुतस्तु लोकास्तमिति श्रुतेर्न ब्रह्मसत्तातिरिक्तसत्तावत्त्वज्ञाननिन्दायामैदम्पर्यं किं तु ब्रह्मभिन्नाधिष्ठितत्वज्ञाननिन्दायामेव तथैव शब्दस्वारस्यात् । तथा मृत्योरिति श्रुतिरपि ब्रह्मणि नानात्वदर्शनम्—अनेकब्रह्मज्ञानं निन्दति ब्रह्मप्रकरणपठितत्वात्, न तु ब्रह्मप्रपञ्चयोर्भेदज्ञानं निन्दतीति सुधीभिराकलनीयं नेह प्रतन्यते ।

उक्तश्रुत्योरभिप्रायं स्वयमेवाह— सर्वमिति । इदं सर्वं ब्रह्मैव, न ब्रह्मभिन्नं किमपि पारमार्थिकं किं त्वऽद्वितीयं ब्रह्मैव पारमार्थिकं यच्च भेदज्ञानं तत्राऽविद्यैव कारणमित्येतमर्थमनात्मदर्शननिन्दा नानात्वदर्शननिन्दा च प्रकटयति=बोधयतीत्यर्थः । पञ्चदश्यामप्युक्तम्—

" अनादिमायया भ्रान्ता जीवेशौ सुविलक्षणौ ।
मन्यन्ते तद्व्युदासाय केवलं शोधनं तयोः ॥
अद्वितीयं ब्रह्मतत्त्वमसङ्गं तन्न जानते ॥
आनन्दमयविज्ञानमयावीश्वरजीवकौ ।
मायया कल्पितावेतौ ताभ्यां सर्वं प्रकल्पितम् ॥
अद्वितीयब्रह्मतत्त्वे स्वप्नोयमखिलं जगत् ।

किमिदानीमसन्नेवायं प्रपञ्चः ?, ओमिति चेत् ?, न, प्रत्यक्षविरोधात्, यथा च प्रत्यक्षं प्रपञ्चसद्भावग्राहकं तथोक्तं प्रत्यक्षसूत्रे । न चागमेन प्रत्यक्षबाधः संभवति प्रत्यक्षस्य शीघ्रप्रवृत्तत्वेन सर्वेभ्यो बलीयस्त्वात् ।

---

ईशजीवादिरूपेण चेतनाऽचेतनात्मकम् ॥
एकमेवाद्वितीयं सन्नामरूपविवर्जितम् ।
सृष्टेः पुरा, ऽधुनाप्यस्य तादृक्त्वं तदितीर्यते ॥
इदमग्रे सदेवासीद्बहुत्वाय तदैक्षत ।
तेजोऽबऽन्नाण्डजादीनि ससर्जेति च सामगाः ॥" इत्यादि ।

मीमांसकः साश्चर्यं पृच्छति- किमिदानीमिति । इदानीम्= एवं निरूपिते सति किं मिथ्यैव प्रपञ्चः ? । ननु ओमित्युच्यते-प्रपञ्चस्य मिथ्यात्वं स्वीक्रियते, " ओमेवं परमं मते " इत्यमरः, इत्याह-ओमिति । परिहरति- नेति । हेतुमाह-प्रत्यक्षेति । सर्वप्रमाणप्रबलेन प्रत्यक्षेण प्रपञ्चस्य सत्त्वं प्रतीयत इति न प्रपञ्चमिथ्यात्वं युक्तम् । " प्रपञ्चो मिथ्या दृश्यत्वात् " इत्यत्र तु कार्याऽकारित्वमेवोपाधिरस्तीत्येवं नान्यैरपि प्रमाणैः प्रपञ्चमिथ्यात्वं सम्भवति । प्रपञ्चमिथ्यात्वं पूर्वमेव निराकृतं स्मारयति- यथेति । वार्तिकेप्युक्तम्—

" शून्यवादोत्तराच्चापि यथार्थं बुद्धिशब्दयोः ।
प्रवृत्तिर्न तु तत्तन्त्रमर्थरूपं कदा चन ॥
तस्मात् प्रागपि ये शब्दाद् भिन्नैकत्वादिबुद्धिभिः ।
गृह्यन्ते सर्वदा तेषां परमार्थास्तिता भवेत् ॥"
" पुरुषस्य च शुद्धस्य नाशुद्धा विकृतिर्भवेत् ॥
स्वयं च शुद्धरूपत्वादसत्त्वाच्चान्यवस्तुनः ।
स्वप्नादिवदविद्यायाः प्रवृत्तिस्तस्य किंकृता ॥
अन्योपप्लवेऽभीष्टे द्वैतवादः प्रसज्यते ।
स्वाभाविकीमविद्यां तु नोच्छेत्तुं कश्चिदर्हति ॥" इत्यादि ।

ननु स्वतः प्रमाणेनागमेन प्रपञ्चसत्यत्वग्राहकप्रत्यक्षस्य बाधो भविष्यतीत्याशङ्क्याह- न चेति । प्रत्यक्षस्य प्रमाणान्तरानधीनत्वाच्छीघ्रमेव प्रवृत्तिः प्रवृत्तस्य च न बाधः सम्भवतीत्यर्थः । किं च " सर्वं खल्विदं ब्रह्म " " आ-

**न च पौर्वापर्यन्यायेन प्रवृत्तमेव प्रत्यक्षमागमेन प-श्चाद्बाध्यत इति वाच्यम्, आगमस्य प्रत्यक्षेण प्रवृत्ति-**

---

त्मैवेदं सर्वम्" इत्यादिश्रुतिभिर्न प्रपञ्चमिथ्यात्वमुच्यते किं तु ब्रह्मणो व्यापकत्वेन प्रपञ्चस्य तेन व्याप्तत्वं वाऽधिष्ठितत्वं वा प्रतिपाद्यते। "नेह नानास्ति" इति श्रुतिश्च प्रपञ्चकारणमेकं ब्रह्मेति वदन्ती कारणस्य नानात्वं निराकरोति तत्प्रकरणपठितत्वान्न तु कार्यस्य। "लोकास्तं परादुः" इति श्रुतिस्तु यः प्रपञ्चं परमात्माधिकरणकं न वेद किं तु साङ्ख्यादिवत्स्वरूपस्थं वा प्रधानस्थं वान्यस्थं वा वेद तस्य निन्दां वदति, अन्यथा "अन्यत्रात्मनः" इति सप्तमी नोपपद्येत, त्वदीयाभिप्रायसत्यत्वे तु 'अन्यानाऽऽत्मनः' इत्येवं वदेत्। "मृत्योः स मृत्युम्" इत्यपि कारणनानात्वज्ञानं निन्दति, अन्यथा प्रपञ्चस्य मिथ्यात्वेन मृत्युप्राप्तेरसम्भवात्" मृत्योः स मृत्युमाप्नोति" इति नोपपद्येत। न चैकस्यामेव श्रुतौ व्यावहारिकपारमार्थिकवस्तुप्रतिपादनं युक्तमित्याद्यनुसन्धेयम्। विस्तरस्त्वाकरेषु द्रष्टव्यः। मयापि विशिष्टाद्वैताधिकरणमालायां विस्तरेणाद्वैतवादो निराकृतः।

न चेति, अयं भावः—" यद्युद्गाताऽपच्छिद्येताऽदक्षिणो यज्ञः संस्थाप्यः, अथान्य आहृत्यस्तत्र तद्द्यात्, यत्पूर्वस्मिन् दास्यन् स्यात्, यदि प्रतिहर्ताऽपच्छिद्येत सर्वस्वं दद्यात्" इति श्रुतिस्तत्र प्रातःसवने परस्परं गृहीतकच्छा ऋत्विजः शालाया बहिः प्रसर्पन्ति, तत्र यद्युद्गाताऽपच्छिद्येत तदा स यज्ञः समापनीयः किं तु दक्षिणा न दातव्या द्वितीयं यज्ञं कृत्वा तत्र शेषा दक्षिणा दातव्या, यदि प्रतिहर्ताऽपच्छिद्येत तदा तस्मिन्नेव यागे सर्वस्वं दक्षिणा दातव्या, इति प्रायश्चित्तद्वयमुक्तम्। युगपदुभयापच्छेदे च विकल्पः। क्रमेणोभयापच्छेदे चोत्तरापच्छेदनिमित्तकं प्रायश्चित्तं कार्यं तत्र यद्यनन्तरमुद्गाताऽपच्छिद्येत तदा द्वितीयप्रयोगे सर्वस्वं दातव्यं प्रथमेन प्रतिहर्त्रऽपच्छेदेन प्रथमप्रयोगे सर्वस्वदानस्य प्रतिज्ञातत्वात्। यद्यनन्तरं प्रतिहर्ताऽपच्छिद्येत तदा तस्मिन्नेव प्रयोगे सर्वस्वं दातव्यमितिसिद्धान्तः षष्ठाध्यायपञ्चमपादीयैकोनविंशत्यधिकरणेऽधिकरणमालायां द्रष्टव्यः। अत्र यथोत्तरस्यापच्छेदस्य प्राबल्यं पूर्वस्य च बाधो भवति तथा प्रथमं प्रवृत्तस्यापि प्रत्यक्षस्योत्तरेणागमेन बाधो भविष्यतीति पूर्वपक्षाभिप्रायः। परिहारमाह— आगमस्येति।

निरोधात्=आगमप्रवृत्तिसमयेपि हि भेदप्रपञ्चमुपदर्शयत् प्रत्यक्षमागमप्रवृत्तिमेव निरुणद्धि, यथा खलूत्पत्तुमुपक्रममाण एव घटो दण्डेनाऽऽहन्यमानो नोत्पत्तुं प्रभवति तथाऽऽगमोपि । किं च प्रपञ्चाभावं प्रतियताऽवश्यमागमोपि प्रपञ्चान्तर्गतत्वादऽसद्रूपतया प्रत्येतव्यः कथं चागमेनैवागमस्याभावः प्रतीयेत ? । असद्रूपतया हि प्रतीयमानो न कस्य चिदप्यर्थस्य प्रमाणं स्यात्. प्रामाण्ये वा नाऽसत्त्वम् ।

कश्चित् पुनराह—नासत्त्वं प्रपञ्चस्य ब्रूमः प्रत्यक्षादिप्रमाणतः सिद्धत्वात्, नापि परमार्थतः सत्त्वम्. आत्मज्ञानेन बाध्यमानत्वात्, तस्मात् सदसद्भ्यामनिर्वाच्योयं प्रपञ्च इति ।

---

तत्र प्रथमापच्छेदेनोत्तरापच्छेदस्य प्रवृत्तिनिरोधो न सम्भवतीति युक्तमुत्तरस्य प्राबल्यमत्र तु प्रत्यक्षेण प्रपञ्चमिथ्यात्वविषये आगमस्य प्रवृत्तिरेव निरुद्ध्यते का वार्ता पुनः प्राबल्यस्येत्यर्थः । एतदेव विशदयति— आगमेति । " उपदर्शयत् " इत्यत्र " उपनयत् " इत्यपि पाठान्तरम् । अत्रोदाहरणमाह—यथेति । आगमोपीति—प्रत्यक्षेण बाधितो नोत्पत्तुं प्रभवतीति शेषः । दोषान्तरमाह— किं चेति । कथमिति—तेनैव तदभावस्तु न प्रत्येतुं शक्यत इति भावः । उभयतः पाशारज्जुमाह— असद्रूपतयेति । अर्थस्येति विषयत्वं षष्ठ्यर्थः—असद्रूपतया प्रतीयमान आगमो न किंचिदर्थविषयकं प्रमाणं स्यादित्यर्थः । अन्यथाऽसत्त्वाऽविशेषादनुत्पन्नास्यापि कस्यचित् शास्त्रस्य प्रामाण्यं स्यात् । प्रामाण्ये च नाऽसत्त्वम् । प्रामाण्यार्थं शास्त्रस्य सत्त्वे स्वीकृते तेनैव द्वैतापत्तिरितिभावः ।

प्राक्तनाद्वैतपक्षमुपस्थापयति— कश्चिदिति, चित्सुखाचार्यप्रभृतिः । स्पष्टोयं ग्रन्थः । आत्मज्ञानेनेति—" तरति शोकमात्मवित् " " नान्यः पन्था विद्यतेऽयनाय " इत्यादिश्रुतिभिः शोकपदवाच्यस्य संसारस्यात्मज्ञानेन निवृत्तिः प्रतिपाद्यते । सदसद्भ्यामिति—सत्त्वासत्त्वाभ्यामनिर्वाच्यः=वक्तुमयोग्यः सदऽसद्विलक्षण एव प्रपञ्चः प्रतीयमानत्वाद्बाध्यमानत्वाच्चेत्यर्थः । तदुक्तं चित्सुखाचार्यैः—

तदिदमसारम्—सतोऽन्यत्वमेवा ऽसत्त्वम्, तद् यदि प्रपञ्चः सन्न भवति व्यक्तमऽसन्नेवायम्, असत्त्वाभावे वा सत्त्वापत्तिः, सदसत्त्वयोरेकनिषेधस्येतरविधिनान्तरीयकत्वात्। न च विधाद्वयरहिते विधान्तरं संभवति।

अथापि यन्न कदाचित्प्रतीयते तदऽसद् यथा शशविषाणम्, यत् प्रतीतं न बाध्यते तत्सद् यथात्मतत्त्वम्, प्रपञ्चस्तु प्रतीयमानत्वाद्बाध्यमानत्वाच्च भावाभावाभ्यामनिर्वाच्य इति मतम्?। तदनुपपन्नम्— लोकविरोधात्, यद्धि प्रतीतं बाध्यते मृगतोयरज्जुसर्पादि तद-

---

" प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं न यत्।
गाहते तदनिर्वाच्यमाहुर्वेदान्तवेदिनः॥" इति।

परिहरति—तदिदमिति। " परस्परविरोधे हि न प्रकारान्तरस्थितिः" इति न्यायात्सत्त्वमेव वा स्यादसत्त्वमेव वा स्यान्न प्रकारान्तरं सम्भवतीत्याह— सदसत्त्वयोरिति। एकनिषेधस्य इतरविधिना नान्तरीयकत्वम्=अविनाभावोऽस्ति यथा यत्र सत्त्वं नास्ति किं तु सत्त्वनिषेधोस्ति तत्रेतरस्याऽसत्त्वस्य विधिर्भावोस्ति यत्र चाऽसत्त्वनिषेधोस्ति तत्रेतरस्य सत्त्वस्य विधिर्भवति न तु सत्त्वासत्त्वयोरुभयोरेव समुच्चयो वा प्रतिषेधो वा सम्भवतीति भावः। विधाद्वयरहिते= सत्त्वासत्त्वप्रकारद्वयरहिते विधान्तरं प्रकारान्तरं न सम्भवति सदसद्भ्यां वैलक्षण्यं कस्यचिदपि न सम्भवति पदार्थमात्रस्य सत्त्वासत्त्वयोरन्यतरेण व्याप्यत्वादिति भावः। किं च तत्र मतेपि सदसद्भ्यां विलक्षणत्वेन निरुक्तिसम्भवान्नाऽनिर्वचनीयत्वमुपपद्यते। किं च ब्रह्मापि सदसद्भ्यां विचारपदवीं न गाहते निर्विशेषत्वादिति तस्याप्यनिर्वचनीयत्वं स्यात्, यच्च सत्त्वेन प्रतीयते तत्तु भवन्मते मिथ्यैव सविशेषत्वादित्यसारमिदं मतम्।

नन्वसत्त्वेन शशविषाणादीनां प्रतीतिर्भवति सत्त्वेन चात्मनः प्रपञ्चस्तूभयविलक्षण एव प्रतीयमानत्वाद्बाध्यमानत्वाच्चेति भावाभावाभ्याम्=सत्त्वासत्त्वाभ्यामनिर्वाच्य एवेत्याशङ्कते—अथेति। परिहरति—तदनुपपन्नमिति। भवन्मते शुक्तिरजतरज्जुसर्पादिकमेवानिर्वचनीयत्वेन संप्रतिपन्नं तदपि लोकेऽसत्त्वेनैव संप्रतिपन्नं नोभयविलक्षणाऽनिर्वचनीयत्वेन येन तद्दृष्टान्तेन प्र-

ऽसदेवेति लौकिकी प्रसिद्धिः, न हि शशविषाणादीनां मृगतोयादीनां च कश्चिद्विशेषो लोके। सोयं प्रपञ्चोपि बाध्यते चेत् ? असन्नेवेति नाऽनिर्वाच्यत्वम्।

अथापि लोकप्रसिद्धिमनादृत्य वृद्ध्यादिवत् परिभाषारूपेणानिर्वाच्य इत्युच्यते ? । तथाप्ययुक्तम्-प्रपञ्चस्य बाधाभावात्, न तावत्संसारावस्थायामाऽऽगमेन बा-

---

पञ्चस्याऽनिर्वचनीयत्वं स्यादित्याह-यद्धीति । न च शुक्तिरजतं प्रतीयते शशविषाणं च न प्रतीयते इति विशेष इति वाच्यम्, शुक्तिरजतस्यापि प्रमाविषयत्वाभावाद् भ्रान्तिविषयत्वेनाऽसत्त्वापहारासंभवात् । न च शुक्तौ रजतोत्पत्तिरपि सम्भवति रजतकारणाभावात्, यदि चोत्पन्नमेव रजतं ज्ञायते तदा शुक्तिरजतस्य मिथ्यात्वं तज्ज्ञानस्य च भ्रान्तित्वं न स्यात्। न च प्रातिभासिकमेव रजतमुत्पद्यते तत्कारणस्य शुक्त्यज्ञानस्य सत्त्वादिति वाच्यम्, प्रातिभासिकपदार्थस्यैवा ऽप्रसिद्धत्वात् । न चाभावरूपस्य शुक्त्यज्ञानस्य भावरूपरजतोत्पादकत्वमपि संभवति । न च शुक्त्यज्ञानं भावरूपं शुक्तिज्ञानाभावरूपत्वादेव । इदंत्वेन शुक्तिप्रत्यक्षं रजतस्य च स्मरणं नेदं रजतमिति बाधज्ञानाभावादेव तत्र रजतार्थिनः प्रवृत्तिसंभवादऽनिर्वचनीयरजतोत्पत्तिस्वीकारे महद्गौरवमित्यनुसन्धेयम् । सोयमिति-यदि शशविषाणमृगतोयादीनां लोके कश्चिद्विशेषः स्यात्तदा शशविषाणादीनाम ऽसत्त्वं मृगतोयादीनां चानिर्वचनीयत्वमित्ययमपि विशेषः स्यात् न चैवमस्त्यविशेषादिति मृगतोयादीनामपि बाध्यमानत्वेनाऽसत्त्वमेव प्राप्तं तत्र प्रपञ्चोपि यदि बाध्यते तदाऽसन्नेव स्यात् नाऽनिर्वनीयः, बाध्यमानत्वासत्त्वयोर्व्याप्तिव्यभिचारासंभवादित्यर्थः।

यदि " वृद्धिरादैच् " इत्यत्र यथाऽऽदैचोः वृद्धित्वाभावेपि वृद्धिसञ्ज्ञा स्वशास्त्रनिर्वाहाय भगवता पाणिनिना कृता तथा त्वयापि परिभाषारूपेणैव प्रपञ्चस्यानिर्वाच्यत्वमुच्यते लोकसिद्धं च सत्त्वं नादृयते तथापि न युक्तं तवमतमित्याशयेनाशङ्कते-अथेति । यदि प्रपञ्चस्य बाधः स्यात्तदा त्वदुक्तमनिर्वाच्यत्वं स्यान्नैवमस्तीत्याह-प्रपञ्चस्येति । प्रपञ्चबाध्यत्वज्ञानं किं संसारिजीवस्य भवति किं वा मुक्तस्य ? नाद्यः संसारावस्थायां त्वयापि प्रपञ्चसत्त्वस्वीकारात्, अन्यथा संसारावस्थैव न स्यात्, न चापि संसारावस्थायामेव सं-

धः सम्भवतीत्युक्तम्, । मुक्तस्य तु बाधकज्ञानं नाशङ्कनीयमेव प्रलीनसर्वकरणत्वात् करणाभावे च ज्ञानाऽसम्भवात्, । न चास्मर्यमाणस्य प्रपञ्चस्याभावः शक्यते प्रत्येतुम्, न च तस्यामवस्थायां सम्भवति स्मरणम्, सर्वसंस्काराणामुच्छिन्नत्वात्, तस्मान्न बाधसम्भवः ।

यच्चाऽविद्याकृतोयं प्रपञ्च इति, कापुनरियमविद्या ? किं भ्रान्तिज्ञानम् ? किं वा भ्रान्तिज्ञानकारणभूतं वस्त्वन्तरम् ? । यदि भ्रान्तिः, सा कस्य ? न ब्रह्मणस्तस्य स्वच्छविद्यारूपत्वात्. न हि भास्करे तिमिरस्यावकाशः सम्भवति । न च जीवानाम्– तेषां ब्रह्मातिरेकेणाभा-

---

सारबाधः संभवति वदतो व्याघातादित्याह– न तावदिति । न द्वितीयः–ज्ञानं हि ज्ञानकरणजन्यं मुक्ते च ज्ञानकरणसंबन्धासंभवादऽन्यथा मुक्तत्वमेव न स्यात्संसारसंबन्धादित्याह–मुक्तस्येति । करणाभावे=ज्ञानकरणाभावे । किं च मुक्तसंसारस्य विनष्टत्वात् स्मर्यमाणस्यैव मुक्तसंसारस्य मुक्ते बाधज्ञानं वक्तव्यं न चैवमपि संभवति तस्यामवस्थायाम्=मुक्तावस्थायां स्मरणकारणीभूतानां संस्काराणामपि विनष्टत्वेन स्मरणासंभवात्, न चाप्यस्मर्यमाणस्याभावः प्रत्येतुं शक्यते अभावज्ञानस्य प्रतियोगिज्ञानसापेक्षत्वात्, न च तदानीं तत्संसारो वर्तते मुक्तत्वाभावप्रसङ्गादित्यभिप्रायेणाय– न चेति ।

प्रपञ्चस्याऽऽविद्यकत्वं परिहरति–यच्चेति । उक्तमिति शेषः । अविद्यास्वरूपं पृच्छति–केति । भ्रान्तिज्ञानम्=भ्रान्त्यात्मकं ज्ञानम् । यदि भ्रान्तिरेवाविद्या तदापि सा किं ब्रह्मसमवेता किं वा जीवसमवेतेति विकल्प्य प्रथमं परिहरति–यदीति । यथा सूर्ये नान्धकारस्तिष्ठति तथा ब्रह्मण्यपि ज्ञानस्वरूपे नाऽविद्याऽवस्थातुं शक्नोति विद्याऽविद्ययोर्विरोधात्, यदि भावरूपा साऽविद्या ब्रह्मणि तिष्ठत्येव तदा विद्याविरुद्धा न स्यात्तथा च विद्ययाऽऽविद्यकप्रपञ्चस्य निवृत्तिरपि न स्यादित्यनुसन्धेयम् । द्वितीयं परिहरति– न चेति । तेषाम्=जीवानाम् । यदि ब्रह्मातिरिक्ता जीवाः स्युस्तदा तत्राविद्यासम्बन्धः स्यादपि न चैवमस्ति त्वन्मते जीवानां ब्रह्मातिरिक्तत्वाभावाद् वस्तुतो मिथ्यात्वादेव, ब्रह्मातिरिक्तत्वे च द्वैतापत्तिः, ब्रह्मणि च नाविद्यासम्बन्धः

**वात् । भ्रान्त्यऽभावादेव च तत्कारणभूतं वस्त्वन्तरम-प्यनुपपन्नमेव । ब्रह्मातिरेकेण भ्रान्तिज्ञानं तत्कारणं चाभ्युपगच्छतामद्वैतहानिः ।**

**किंकृता च ब्रह्मणोऽविद्या ?, न हि कारणान्तरम-**

---

सम्भवतीति ब्रह्माभिन्नजीवेष्वप्यऽविद्यासम्बन्धाऽसम्भव एवेत्यर्थः । प्रथमोक्तं द्वितीयविकल्पं परिहरति- भ्रान्त्यभावादिति, यदा हि भ्रान्तिरेव न स्वरूपेण सम्भवति तदा तत्कारणभूतं वस्त्वन्तरमनुपपन्नमेव कार्याभावे कारणस्वीकारस्य वैयर्थ्यात्, भ्रान्त्यभावे तत्कारणानुमापकान्तरस्याप्यभावात् कार्येणैवादृश्यं कारणमनुमीयते तत्र कार्यस्य भ्रान्तेरेवाभावात् तत्कारणानुमानं केन स्यात् ? । न च भ्रान्तिकारणं प्रत्यक्षं दार्शनिकानां तत्र विवादाऽप्रसङ्गात् प्रत्यक्षेणानुपलम्भाच्च, तस्मादविद्या न भ्रान्तित्वेन न वा भ्रान्तिकारणत्वेनोपपद्यते इत्यऽद्वैतमताभिमता नास्त्येवाविद्येति न प्रपञ्च आविद्यकः=अविद्याकारणक इति भावः । तदुक्तम्—

" ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम् ।
अज्ञानं चेत्तिरस्कुर्यात् कः प्रभुस्तन्निवर्तने ॥"
" ज्ञानं ब्रह्मेति चेज्ज्ञानमज्ञानस्य निवर्तकम् ।
ब्रह्मवत्तत्प्रकाशत्वात् तदपि ह्यनिवर्तकम् ॥" इत्यादि ।

उक्तं चात्र श्रीश्रीभाष्येपि-" ज्ञानस्वरूपं ब्रह्मेति ज्ञानं तस्या अविद्याया बाधकं न स्वरूपभूतं ज्ञानमिति चेत् ?, न, उभयोरपि ब्रह्मस्वरूपप्रकाशत्वे सत्यऽन्यतरस्य विरोधित्वमन्यतरस्य नेति विशेषानवगमात् । " एतदेवोक्तम्- " ज्ञानं ब्रह्मेति " इति । तथा- " सा हि किमाश्रित्य भ्रमं जनयतीति वक्तव्यम्, न तावज्जीवमाश्रित्य अविद्यापरिकल्पितत्वाज्जीवभावस्य, नापि ब्रह्माश्रित्य तस्य स्वयं प्रकाशज्ञानरूपत्वेनाऽविद्याविरोधित्वात्, सा हि ज्ञानबाध्याभिमता " इत्यादि । विस्तरस्तु श्रीश्रीभाष्य एव द्रष्टव्यः । विपक्षे बाधकमाह-ब्रह्मातिरेकेणेति, ब्रह्मातिरिक्तयोर्भ्रान्तिज्ञानतत्कारणयोः स्वीकारे ताभ्यामेव द्वैतापत्तिः स्यादित्यर्थः ।

द्वैतापत्तिभयादविद्याकारणास्वीकारे च किंकृता=किंकारणका स्यादऽविद्येत्याक्षिपति-किंकृतेति, स्यादिति शेषः । यदा हि ब्रह्माभिन्नं किमपि ना-

स्ति। स्वाभाविकीति चेत्? कथं विद्यास्वभावमऽवि-
द्यास्वभावं स्यात्। स्वाभाविकत्वे चास्याः केन विना-
शः स्यात्?। आगमिकं ध्यानादि तज्जन्यं वा स्वरूप-

---

स्ति तदा कारणान्तराभावादेवानुपपन्नाऽविद्या कारणं च विना न कार्यमुपप-
द्यते इत्यभिप्रायेणाह– न हीति, अविद्याया इति शेषः। ननु स्वाभाविक्ये-
वाविद्येति न तत्कारणापेक्षेत्याशङ्कते–स्वाभाविकीति। आक्षेपेण परिहरति–
कथमिति, विद्यास्वरूपं ब्रह्माऽविद्याधिष्ठानं कथं स्यात्? न हि प्रकाशस्व-
रूपो रविरन्धकाराश्रयो भवतीत्यर्थः। किं वा स्वाभाविकीत्यनेन ब्रह्मणः
स्वभावसिद्धैवाविद्येति प्राप्तमिति ब्रह्माऽविद्यास्वभावं स्यात् तत्र विद्यास्वभा-
वस्य ब्रह्मणोऽविद्यास्वभावत्वम्=अविद्यास्वरूपत्वं न सम्भवति विद्याऽविद्य-
योः परस्परं विरोधादित्यर्थः। यदि सहावस्थानविरोधपरिहाय भावरूपाऽवि-
द्योच्यते विद्यायाः स्वाभावेनैव विरोधात्तदा विद्यया एतस्या अविद्याया विना-
शो न स्याद्विरोधाभावादित्युभयतः पाशारज्जुः। स्वाभाविकत्वे दोषान्तर-
माह–स्वाभाविकत्वे चेति, कारणविनाशेनैव पदार्थविनाशो भवति अविद्या-
याश्च कारणमेव नास्ति स्वाभाविकत्वादिति कथमविद्याया विनाशः स्यात्?
किं चाविद्याया ब्रह्मस्वभावत्वे ब्रह्मविनाशं विनाऽविद्याविनाशो न स्यात्
तत्पदार्थस्वभावविनाशस्य तत्पदार्थविनाशं विनाऽसम्भवाद् ब्रह्म च नित्यमे-
वाऽविनाशीति तत्स्वभावभूताऽविद्यापि नित्यैव स्यादिति न कथमपि विनश्येत।

ननु न सर्वत्र कारणविनाशादेव पदार्थविनाशनियमो रूपादिविनाशे
व्यभिचाराद् यथा हि श्यामरूपसमवायिकारणस्याश्रयभूतस्य घटस्याविना-
शेपि रक्तरूपोत्पत्त्या वा वन्हिसंयोगाद्वा श्यामरूपविनाशो भवति तथाऽवि-
द्याश्रयस्य ब्रह्मणो नित्यत्वेनाऽविनाशित्वेपि अविद्यायाश्च स्वाभाविकत्वेपि
तां ब्रह्माविद्यामाऽऽगमिकम्=आगमबोध्यं तत्त्वमस्यादिवाक्यजन्यं ध्याना-
दिकं ज्ञानस्वरूपमऽविद्याविरुद्धं स्वविरुद्धामविद्यां नाशयिष्यति श्रूयतेपि–"त-
रति शोकमात्मवित्" "ब्रह्मविद् ब्रह्मैव भवति" "आत्मा वारे द्रष्टव्यः श्रो-
तव्यो मन्तव्यो निदिध्यासितव्यः" इति, अन्यथा श्रुतश्रवणादीनां वैयर्थ्य-
मेव स्यात्, यदि ध्यानादेरविद्याविरोधित्वाभावात्तैरविद्याविनाशो न संभ-
वति तदा ध्यानादिजन्यं स्वरूपज्ञानमेव नाशयिष्यतीत्याशङ्कते–आगमिकमिति।

**ज्ञानं ब्रह्माऽविद्यां नाशयतीति चेत् ?, न, न ह्यागमो वा ध्यानादयो वा तज्जन्यं वा ज्ञानं नित्यज्ञानात्मकब्रह्मातिरिक्तमस्ति यदऽविद्यां नाशयेत् । तद्वरमस्मान्मायावादान्माहायानिकवादः, यत्र नीलपीतादिवैचित्र्यं कार्यकारणभावो बद्धमुक्तादिव्यवस्था च सन्तानभेदेन समर्थ्यते । नित्यमेकरसं निष्प्रपञ्चमात्मानमुपेयुषां तु समस्तलोकवेदव्यवहारोच्छित्तिरेव स्यात् ।**

---

उत्तरमाह- न हीति । यदि ब्रह्मातिरिक्तं ध्यानादिकं तव मते स्यात्तदा तेनाऽविद्याविनाशः संभाव्येतापि न चैवमस्ति ब्रह्ममात्रस्वीकारात्, अन्यथाऽद्वैतहानेः, ब्रह्मणि चाविद्या स्थितैवेति न तेन विनष्टा स्यात् । न च सविशेषे ब्रह्मण्यविद्या सा च निर्विशेषब्रह्मस्वरूपेण नश्यतीति वाच्यम्, अविद्यां विना सविशेषत्वस्यैवाभावात् । अविद्याधिकरणत्वाच्च जीववद् ब्रह्मापि मिथ्या स्यादित्याद्यनुसन्धेयम् । परमाक्षेपमाह-तद्वरमिति उक्तं च "मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव वा" इति । माहायानिकवादः=बौद्धवादः । यत्र=माहायानिकवादे । सन्तानभेदेन=अवस्थाभेदेन क्षणभेदेन वा । सन्तानभेदेन किञ्चिज्ज्ञानं नीलं किञ्चित् पीतं भासते, एवं किञ्चित्कार्यतया किञ्चित् कारणतया भासते, नीलपीतादिरूपेण परिणामावस्थायां बद्धत्वम्, परिणामनिवृत्तौ च मुक्तत्वमिति भावः । उक्तं च तैः—

"नान्योनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः ।
ग्राह्यग्राहकवैधुर्यात् स्वयं सैव प्रकाशते ॥
सहोपलम्भनियमादभेदो नीलतद्धियोः ।
भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाऽद्वये ॥
तत्स्यादालयविज्ञानं यद् भवेदहमास्पदम् ।
तत्स्यात् प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेत् ॥" इत्यादि ।

अयं भावः-बौद्धैस्तु सर्वं क्षणिकविज्ञानमात्रेण समर्थ्यते । अद्वैतवादे तु श्रुतेरसत्त्वं प्रामाण्यं च, ब्रह्मणो ज्ञानैकरूपत्वमविद्याश्रयत्वं च, प्रपञ्चस्याऽसत्त्वं तन्निवृत्त्यर्थमुपायाश्च कर्तव्याः, इत्येवमनैकान्तिकवत् सर्वं परस्परविरुद्धमेवोच्यते तस्मात्ततो वरं बौद्धवाद इति । एतमेव स्वाभिप्रायमुद्घाटयति-नि-

यदप्याहुः- अज्ञानजन्यः प्रपञ्चो ज्ञानेन विनाश्यते मृगतोयवत् स्वप्नप्रपञ्चवच्चेति। तदप्ययुक्तम्-यदि कुलालादिव्यापारस्थानीयेनाऽज्ञानेन घटवदुत्पन्नः प्रपञ्चो मुसलस्थानीयेन ज्ञानेन नाश्यते, तथापि नाऽसत्त्वं प्रपञ्चस्य स्यात्, उत्पत्तिविनाशयोगादनित्यतामात्रं स्यान्नाऽत्यन्ताभावः।

केन च ज्ञानेन नाशः?, नात्मज्ञानेन विरोधाभावात्। निष्प्रपञ्चात्मज्ञानेनेति चेत्?, न, तत्रात्मज्ञानांशस्या-

---

त्यमेकरसमिति- यदा ह्येकं ब्रह्मैव तदा लोकवेदादिव्यवहारः किंविषयकः स्यादिति भावः।

प्रपञ्चस्याज्ञानकार्यत्वं निराकर्तुमुपस्थापयति- यदप्याहुरिति। यथा मृगतोयम्=मरुमरीचिकासु प्रतीयमानं जलं नात्रजलं नेदं जलं वेति बाधकज्ञानेन बाध्यते, स्वाप्नप्रपञ्चस्य च प्रबोधेन बाधो भवति तथा निर्विशेषात्मज्ञानेन प्रपञ्चबाधो भवति ब्रह्मज्ञानेन मोक्षश्रवणात् मोक्षश्च प्रपञ्चनिवृत्तिरेव, अत एव प्रपञ्चस्याज्ञानजन्यत्वमुच्यते, अन्यथा तस्य ब्रह्मज्ञानेन निवृत्तिर्न स्यात्, ज्ञानस्याऽज्ञानतत्कार्यनिवर्तकत्वादेवेत्यभिप्रायः। परिहरति-तदप्ययुक्तमिति। ज्ञानेन प्रपञ्चस्य बाधेपि नाऽसत्त्वं सम्भवति, असत्वे च कस्य बाधः स्यात्। असत्त्वाभावाच्च नाऽज्ञानजन्यत्वमपि सम्भवति त्वयाप्यसत्त्वादेवाज्ञानजन्यत्वस्य स्वीकारात्, तत्रासत्त्वनिवृत्त्याऽज्ञानजन्यत्वमपि निवर्तत एवेत्यर्थः। कस्य चाज्ञानेन जन्यः प्रपञ्च इत्यनुपपत्तिस्तु पूर्वमेव प्रतिपादिता। स्वाभिप्रायमाह-उत्पत्तीति।

नाशोपि प्रपञ्चस्य त्वया केन ज्ञानेनोच्यते? किमात्मज्ञानेन किं वा निष्प्रपञ्चात्मज्ञानेनेत्यभिप्रायेण पृच्छति-केनेति। प्रथमपक्षं पराकरोति-नात्मेति, विरोधे सत्येव बाध्यबाधकभावो भवति यद्यात्मज्ञानस्य प्रपञ्चेन विरोधः स्यात्तदा ज्ञानस्वरूपे आत्मनि प्रपञ्चप्रतीतिरेव न स्यात्, अस्ति च प्रतीतिरिति न विरोधः किं वात्मज्ञाने सत्यपि प्रपञ्चानुवृत्तेः सत्त्वान्नात्मज्ञानेन सह प्रपञ्चस्य विरोधस्तथा च नात्मज्ञानेन प्रपञ्चबाधः सम्भवति। द्वितीयपक्षमुपस्थापयति-निष्प्रपञ्चेति। परिहरति- नेति। उपपादयति-तत्रेति। तत्र=निष्प्र-

विरोधात्। निष्प्रपञ्चत्वज्ञानं विनाशकमिति पारिशेष्यादापन्नम्-प्रपञ्चाभावश्च निष्प्रपञ्चत्वं न च विद्यमाने प्रपञ्चे तदभावज्ञानमुत्पत्तुमर्हति। ज्ञानेन ह्युत्पन्नेन प्रपञ्चो नाशयितव्यः प्राक् च ज्ञानात् सद्रूप एव प्रपञ्चस्तस्मिन् सद्रूपेऽवस्थिते कथं तदभावविषयस्य ज्ञानस्योत्पत्तिः। तत्र ज्ञानोत्पत्तौ सत्यां प्रपञ्चस्य नाशः, तद्विनाशे च सति तदभावविषयज्ञानोत्पत्तिरितीतरेतराश्रयत्वम्।

एतेन मृगतृष्णिकाजलस्य ज्ञानविनाश्यत्वं प्रत्यूढम्, न हि तज्जलं सत् पश्चान्नाश्यते? प्रागपि हि तत्र नैव

---

पञ्चात्मज्ञाने द्वावंशौ-निष्प्रपञ्चत्वमाऽऽत्मज्ञानत्वं च तत्रात्मज्ञानांशस्य तु प्रपञ्चेन विरोधाभावादबाधकत्वमुक्तमेवेत्याह-आत्मेति। परिशेषान्निष्प्रपञ्चत्वज्ञानस्य बाधकत्वं वक्तव्यं तदपि न सम्भवति यतो निष्प्रपञ्चत्वं नाम प्रपञ्चाभाव एव विद्यमाने च प्रपञ्चे तदभावज्ञानम्=प्रपञ्चाभावज्ञानं न सम्भवति ज्ञानस्य विषयाधीनत्वात्, न च "अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि" इति वाच्यम्, एवं ह्यत्यन्तासति प्रपञ्चाभावस्यासत्त्वे तु प्रपञ्चसत्त्वमेव प्राप्नुयात्, एतदभिप्रायेणाह-निष्प्रपञ्चत्वज्ञानमित्यादिना। उक्तमेव विशदयति-ज्ञानेनेत्यादिना। तस्मिन्=प्रपञ्चे। सद्रूपेऽवस्थिते=सद्रूपेणावस्थिते। तदभावविषयस्य=प्रपञ्चाभावविषयस्य। अत्रान्योन्याश्रयदोषमाह-तत्रेति। प्रपञ्चस्य ज्ञाननाश्यत्वाज्ज्ञानोत्पत्तौ=प्रपञ्चाभावविषयकज्ञानोत्पत्तौ सत्यामेव प्रपञ्चनाशः स्यात्, ज्ञानस्य च विषयाधीनत्वात् प्रपञ्चनाशे जाते एव प्रपञ्चाभावविषयकज्ञानस्योत्पत्तिः स्यादित्यन्योन्याश्रयः। तस्मान्न प्रपञ्चस्य ज्ञानविनाश्यत्वं न वाऽज्ञानजन्यत्वम्। प्रत्युत सत्त्वमेव, श्रूयते च- "यदिदं किं च तत् सत्यमित्याचक्षते" इति।

उक्तन्यायमन्यत्रातिदिशति- एतेनेति। यदुक्तं मृगतोयवत् प्रपञ्चस्य ज्ञाननाश्यत्वमिति तत्र मृगतोयस्यापि ज्ञाननाश्यत्वं नास्ति येन तद्दृष्टान्तात् प्रपञ्चस्य ज्ञाननाश्यत्वं स्यादित्याह-मृगतृष्णिकेति। प्रत्यूढम्=प्रत्याख्यातम्। ज्ञाननाश्यत्वाभावमुपपादयति- न हीति। यदि मरुमरीचिकायां प्रथमं जल-

**जलम्, अजलमेव हि रश्मिप्रतप्तमूषरं भ्रान्त्या जलात्मनाऽवगतं पश्चाद्बाधकेन यथावस्थितरूपमवगम्यत इत्यलमनेन बालजल्पितेन।**

---

मुत्पद्येत पश्चात्तस्य ज्ञानेन नाशः स्यात्तदा तस्य ज्ञाननाश्यत्वं स्यादपि न चैवमस्ति प्रथमत एव तत्र जलाभावात्। किं त्वऽजलम्=जलभिन्नं जलरहितं वा रश्मिप्रतप्तमूषरं भ्रान्त्या जलात्मना ज्ञातं पश्चाद्बाधकज्ञानेन यथावस्थितरूपम्=रश्मिप्रतप्तोषरत्वेन रूपेणावगम्यते इति न तत्र जलस्योत्पत्तिबाधौ किं तु जलज्ञानस्यैव बाधो भवतीति युक्तम्। उपसंहरति– इत्यलमिति।

प्राभाकरैरपि प्रत्याख्यातोयमद्वैतवादस्तथा ह्युक्तम्– "अद्वितीयमसंसृष्टं सकलोपाधिपरिशुद्धं ब्रह्म, तदनाद्यऽविद्यावशेन शरीरादिसद्वितीयमिवोपाधिकलुषितावभासमानं लब्धजीवव्यपदेशं सद् बद्धमिव कल्प्यते, अतोऽनाद्यविद्यैव संसारो निखिलविकल्पातीतपरिशुद्धविद्योदयात् तदस्तमय एव मोक्षः। तदिदं श्रद्धाविजृम्भितमिति प्रमाणपरतन्त्राः–न खल्वऽद्वैतं कस्य चित् प्रमाणस्य गोचरः। स्यान्मतम्–प्रत्यक्षमेव विधिमात्रोपक्षीणव्यापारमऽपरिस्पृष्टान्योन्यभेदं तदेकमेव तत्त्वं साक्षात्करोतीति ? तदसत्–सत्यं विधायकमेव प्रत्यक्षं तत्तु विदधदपि रूपं रूपतया रसं च रसतया विदधाति न पुनः सर्वमेकरूपमेव। अथागमादेवाऽद्वैतं सिध्यति ? तन्न–आगमस्य कार्यैकविषयतया सिद्धे तत्त्वे प्रामाण्यानुपपत्तेः। आपि च वाक्यार्थे आगमः प्रमाणमिष्यते तच्चानेकपदार्थात्मनि वाक्यार्थे धियमुपजनयत् कथमद्वैतमवभासयेत् ?। अथेदमुच्यते– "स एष नेति नेति" इति सकलोपाधिनिषेधेन नानाभूतवस्त्वन्तराऽपाकरणादद्वैतमागमेन साध्यते ? इति। तदप्यसारम्–यः खलु एष इति सद्रूपतया प्रत्यवमृष्टः पदार्थः सोऽसत्त्वापादकेन नञर्थेन सह संबद्धुमऽयोग्योऽस्तिनास्तीतिवत्। अन्वयाऽयोग्ययोश्च पदार्थयोरन्वयाभावान्न वाक्यार्थीभवनम्। तर्हि निराकृतान्येव सर्वाणि निषेधवाक्यानि ?, मन्द मैवं परिभाषय–नहि निषेधवाक्येषु कस्य चिदात्यन्तिको निषेधः किंतु क्वाचिन्निषिध्यते, अद्वैताभिमानी तु भवानात्यन्तिकमेव निषेधमभिलषति सोयमात्मीय एव बाणो भवन्तं प्रहरति। अथोच्येत–वित्तेर्भिन्नस्याऽप्रकाशात्मनः प्रकाश एवानुपपन्न इति यद् यत् प्रकाशते तत्तत् प्रकाशादभिन्नं प्रकाशात्मकं हि ब्रह्म. अतो ब्रह्मा-

केचित्त्वौपनिषदाः-परमार्थत एवात्मा प्रपञ्चरूपेण स्वेच्छया परिणमतीति मन्यन्ते तथा च "सदेव सोम्येदमग्र आसीत्" "एकमेवाद्वितीयम्" "तदैक्षत बहु स्यां प्रजायेय" इत्येकस्यैव सन्मात्ररूपतया प्रागवस्थितस्यात्मनोऽनेकव्योमादिभेदाभिन्नप्रपञ्चरूपेण बीजस्येव वृक्षरूपेण परिणामो दर्शितः, "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यौपनिषदा वादा पुराणवादाश्चा-

---

त्मकं जगदिति सिद्धमद्वैतमिति ? तदिदं स्वपक्षविरुद्धम्- एवं हि नानाभूतानामाकाराणां प्रकाशाभेदे प्रकाशस्यापि नानाभावापत्तेरद्वैतं दूरपरास्तम् । अपि चाऽप्रकाशात्मन एव प्रकाशः सम्भवति । अपि चात्यन्तमऽसन्तं प्रपञ्चं कथमऽविद्या प्रकाशयितुमलम् ? । अतो नाऽविद्यास्तमयो मोक्षः । आत्यन्तिकस्तु देहोच्छेदो निःशेषधर्माधर्मपरिक्षयनिबन्धनो मोक्ष इतिसिद्धम् ।" इत्यादि ।

संप्रति परिहारायाऽर्धजरतीयाद्वैतवादमुपस्थापयति-केचित्त्विति । औपनिषदाः=उपनिषत्प्रतिपाद्यपुरुषोपासनापराः । निगदव्याख्यातोयं ग्रन्थः । परिणमतीति, तदुक्तम्—

" वासुदेवः परं ब्रह्म कल्याणगुणसंयुतः ।
भुवनानामुपादानं कर्ता जीवनियामकः ॥
प्रकृतिं पुरुषं चैव प्रविश्यात्मच्छेया हरिः ।
क्षोभयामास संप्राप्ते सर्गकाले व्ययाऽव्ययौ ॥
परस्य ब्रह्मणो रूपं पुरुषः प्रथमं द्विज ।
व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथा परः ॥" इत्यादि ।

सर्ववेदज्ञानैकनिधिर्जैमिनिगुरुः श्रीव्यासदेवोपि " उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि" इति सूत्रे क्षीरदृष्टान्तेन परिणामवादमेवाभिप्रैति । प्रमाणमाह-तथा चेति । उक्तश्रुत्यभिप्रायमाह-इत्येकस्येति । परिणामे दृष्टान्तमाह-बीजेति । अस्मिन्नर्थे=परिणामवादे । श्रीविठ्ठलनाथैरप्युक्तं विद्वन्मण्डने-" विकृतत्वादिधर्माश्च लोके समवायिषु दृश्यन्ते तथा चोभयरक्षायै ब्रह्माऽविकृतमेव समवायि लोके तादृशमेव समवायित्वमिति व्यवस्था मन्तव्या ।" इति । ननु यदि भेद एव वास्तवस्तदा " पुरुष एवेदं सर्वम् " इत्यादिवाक्यानामभेदबोध-

ऽस्मिन्नर्थे शतशो दृश्यन्ते। "पुरुष एवेदं सर्वम्" "नेह नानास्ति किंचन" इत्यादि तु धर्मिभेदाभावाभिप्रायम्, तद्यथैको वृक्षः प्रादेशमात्रदूर्ध्वं नानाशाखोऽवस्थितो दूरस्थैर्नाना वृक्षा इति गम्यते तद्वेदिनश्चान्ये तेभ्यः कथयन्ति–'नेमे नानावृक्षाः किं त्वेक एवायं वृक्षो नानाशाखोऽवस्थितः' इति तथा नामरूपप्रपञ्चं नानारूपं पश्यताम्, मूलकारणस्यैकस्यात्मनोऽयं नानारूपः परिणाम इत्येवमजानतां तत्त्वकथनार्था एवंविधा वादाः– सर्वमेकस्यैव विस्तारो न किं चिदत्र नानास्तीति।

ये च पुनरसत्त्ववादाः प्रपञ्चविषया अविद्यावादा भ्रान्तिवादा मायावादाश्च ते सर्वे प्रपञ्चस्यानित्यत्वा-

---

कानां कागतिरित्याशङ्क्याह– पुरुषेति। धर्मिभेदेति– धर्मि=कारणभूतं यत् ब्रह्म तदऽभेदप्रतिपादकान्येतानि वाक्यानि प्रपञ्चकारणभूतमेकमेव ब्रह्मेति प्रतिपादकानि न त्वद्वैतप्रतिपादकानीत्यर्थः। एतदेव दृष्टान्तविन्यासेन विशदयति–तद्यथेति। अत्र=प्रपञ्चकारणत्वेनाभिमते वस्तुनि नानात्वं नास्ति।

प्रपञ्चासत्त्वादिवादानां गतिमाह– ये चेति, ये पुनरसत्त्वादिवादा न तेषां प्रपञ्चस्यासत्त्वप्रतिपादने तात्पर्यं किं त्वनित्यत्वप्रतिपादन एव लक्षणावृत्त्या तात्पर्यम्, असत्पदार्थवदनुपादेयोयं प्रपञ्च इत्यर्थः। असत्त्ववादा यथा—

"परमार्थस्त्वमेवैको नान्योस्ति जगतः पते।"

"तस्मान्न विज्ञानमृतेस्ति किं चित् क्वचित् कदाचिद् द्विजव स्तुजातम्।"

अविद्यावादा यथा—

"भवत्यभेदी, भेदश्च तस्याऽज्ञानकृतो भवेत्।"

"चतुर्विधो विभेदोयं मिथ्याज्ञाननिबन्धनः।" (चतुर्विधत्वं देवातिर्यङ्मनुष्यस्थावरभेदेन ज्ञेयम्)

भ्रान्तिवादा यथा—

"भ्रातिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः।"

"ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः।
तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्॥"

मायावादा यथा—

**दौपचारिकाः । यथा मृगतोयरज्जुसर्पस्वप्नप्रपञ्चादयः किं चित्कालमाविर्भूय पश्चाद्विलीयन्ते तथा भेदप्रपञ्च-रूपोब्रह्मपरिणामोप्याविर्भवति विलीयते चेत्याऽऽवि-र्भावतिरोभावधर्मकत्वसाम्यादऽसन्नित्युपचर्यते, तस्य चाऽसत्कल्पत्वे तद्विषयस्य ज्ञानस्यापि सिध्यत्यौपचा-रिकं भ्रान्तित्वम् । मायानिबन्धनत्वं च-" इन्द्रो माया-भिः पुरुरूप ईयते" इत्यादिषु युक्तमुपचारेण वक्तुम् । " आत्मैवैकः सत्यः " इति च तस्यैव नित्यत्वादुच्यते, यथा " गो अश्वा एव पशवोऽन्ये त्वऽपशवः " इति, तथेदं द्रष्टव्यम् ।**

---

" मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । "

" अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः । " इत्यादयो ज्ञेयाः । दृष्टान्तपुरस्सरमसत्त्वादिवादानामौपचारिकत्वं विशदयति-यथेति । 'यतश्चैतत्' इत्यनुक्त्वा "जन्माद्यस्य यतः" इति वदतः सूत्रकार-स्यापि प्रपञ्चसत्त्वमेवाभिप्रेतम् । प्रपञ्चस्यौपचारिकाऽसत्त्वे तद्विषयकज्ञानस्या-प्युपचारेण भ्रान्तित्वं युक्तमेवेत्याह-तस्येति । तस्य=प्रपञ्चस्य । असत्कल्पत्वे= असत्तुल्यत्वे । ननु मा भवतु प्रपञ्चस्यासत्त्वं तथापि "इन्द्रो मायाभिः" इति वच-नेन मायिकत्वं तु भविष्यतीत्याशङ्क्याह-मायानिबन्धनत्वमिति, प्रपञ्चस्य मा-यिकत्वमप्याविर्भावतिरोभावधर्मकत्वादौपचारिकमेव न त्वऽसत्त्वाद्वास्तवं मायि-कत्वमित्यर्थः । ननु प्रपञ्चसत्त्वे स्वीकृते "आत्मैवैकः सत्यः"इति वचनेन विरोधः स्यात्, अनेन वचनेनात्ममात्रस्य सत्यत्वकथनात् प्रपञ्चासत्त्वं विना तदनुपपत्ते-रित्याशङ्क्याह- आत्मैवैकेति, आत्मा=परमात्मा । तस्य=परमात्मनः । सत्यश-ब्दोत्र नित्यत्ववाचक एव नित्यस्तु परमात्मैव प्रपञ्चस्यानित्यत्वस्वीकारादिति नैतद्वचनविरोधः । किं चैवकारोत्राऽयोगव्यवच्छेदपरो नऽत्वन्ययोगव्यवच्छेदपरो येनात्र प्रपञ्चस्यासत्त्वमुक्तं स्यात् तथा च ' आत्मा सत्य एव स चैकः' इत्य-र्थः किं वा 'आत्मा एक एव स च सत्यः' इत्यर्थः ।

किं वात्र सत्यशब्दस्यात्मप्रशंसापरत्वं ज्ञेयम् । सत्यशब्दस्य प्रशं-सापरत्वमाश्रित्यात्र दृष्टान्तमाह-यथेति, यथा प्रथमाध्यायचतुर्थपादीयषोड-

यस्त्वेवं विधान् वादान् यथाश्रुतार्थान् गृह्णाति स पश्वन्तरेष्वऽपशुत्ववादम् "आदित्यो यूपः" इत्यादि च यथाश्रुतं गृह्णीयात् । अथ तत्र प्रमाणान्तरविरोधः ?, सोऽत्रापि समानः । अथार्थवादत्वात्तत्र न यथाश्रुतार्थग्रहणम् ?, तदपि समानम्—प्रपञ्चस्याप्यऽस-

---

शाधिकरणे "प्रशंसा" इति सूत्रे "अपशवो वा अन्ये गोऽश्वेभ्यः पशवो गो अश्वाः" इति श्रुत्या गवाश्वयोः प्रशंसा प्रतिपाद्यते 'अन्येभ्यः पशुभ्यो गवाश्वौ प्रशस्तौ' इति न तु गवाश्वभिन्नानामऽजादीनामपशुत्वं प्रतिपाद्यते तथात्रापि "आत्मैवैकः सत्यः" इति श्रुत्या परमात्मनो नित्यत्वात् प्रशंसा प्रतिपाद्यते न तु तद्भिन्नस्य प्रपञ्चस्यासत्त्वमित्यर्थः, तदाह—तथेति । किं वा सत्यशब्दो नित्यत्वसमानाधिकरणसत्यत्वप्रतिपादको ऽप्यस्त्यऽनित्यत्वसमानाधिकरणसत्यत्वप्रतिपादकोप्यस्ति तत्रात्मशब्दगृहीतजीवात्मपरमात्मनोर्नित्यत्वसमानाधिकरणसत्यत्वप्रतिपादकसत्यशब्दवाच्यत्वमस्तीति "सत्यः" इति श्रुतिर्वदति, प्रपञ्चस्यानित्यत्वसमानाधिकरणसत्यत्वप्रतिपादकसत्यशब्दाभिधेयत्वात् ।

विपक्षे बाधकमाह—यस्त्वेवमिति । यः=अद्वैती, एवंविधान्=उपचारेण प्रपञ्चस्यासत्त्वप्रतिपादकान् वादान् यथाश्रुतार्थान् गृह्णाति=तेषामर्थवादत्वमनालोच्य प्रपञ्चासत्त्वं गृह्णाति तेन "अपशवो वा अन्ये गोऽश्वेभ्यः" इति वचनाद् गवाश्वयोः प्रशंसां परित्यज्याऽजादीनामपशुत्वमेवावधार्येत, तथा "आदित्यो वै यूपः" इत्यत्रापि यूपप्रशंसां त्यक्त्वा यूपस्यादित्यत्वमवधार्येत, उभयोस्तुल्यत्वात्, न चैवं संभवति, तस्मात् प्रपञ्चासत्त्ववादानामपि हेयत्वे तात्पर्यमस्तीति ज्ञेयं नाऽसत्त्वे उपचारेणानित्यत्वप्रतिपादकत्वादेव । नन्वजादीनामपशुत्वग्रहे यूपस्य चादित्यत्वग्रहे प्रत्यक्षविरोधादेव तत्र प्रशंसार्थवादत्वमाश्रीयते न चैवं प्रपञ्चासत्त्वे प्रत्यक्षादिप्रमाणान्तरविरोधो येनात्रार्थवादत्वं स्वीक्रियेतेत्याशङ्कते—अथेति । परिहरति—सोत्रेति । प्रपञ्चासत्त्वेपि प्रत्यक्षविरोधोस्त्येव प्रत्यक्षेण प्रपञ्चस्य सत्यत्वेन ग्रहणात् । ननु तत्र त्वर्थवादत्वं निश्चितमस्तीति न तत्र यथाश्रुतार्थग्रहणं क्रियते किं तु प्रशंसापरत्वं ज्ञायते प्रपञ्चासत्त्वप्रतिपादकवाक्यानां तु नार्थवादत्वं निश्चितं येन यथाश्रुतार्थपरित्यागः स्यादित्याशङ्कते—अथार्थवादेति । उत्तरमाह—तदपीति, अर्थवादत्वं तु प्रपञ्चा-

त्यत्वं वैराग्यजननार्थम्, आत्मनश्च परमार्थत्वं मुमुक्षूणामुत्साहजननार्थम्।

विस्पष्टं चैतन्मृत्पिण्डविकारदृष्टान्तदर्शनात्– सर्वत्र हि दृष्टान्तोपादानं साध्यप्रतिपादकस्य तात्पर्याभिव्यक्त्यर्थम्, ततश्च यथा कारणभूतमृत्पिण्डविज्ञानेन मृ-

---

सत्त्वप्रतिपादकवाक्येष्वप्यस्त्येवेत्यर्थः। किमर्थमर्थवादत्वमाश्रीयत इत्याशङ्क्य तत्प्रयोजनमाह–प्रपञ्चस्येति, उक्तमित्युभयत्र शेषः, यतः प्रपञ्चोऽनित्यस्ततस्त्याज्य एव. आत्मा च यतः परमार्थनित्यस्ततः प्राप्तव्य आत्मप्राप्तिश्च मोक्ष एवेत्यर्थः।

ननु प्रपञ्चासत्त्वप्रतिपादकवाक्यानामर्थवादत्वे किं मानमित्यशङ्क्याऽर्थापत्तिं प्रमाणयति–विस्पष्टमिति। प्रपञ्चब्रह्मणोः कार्यकारणभावप्रतिपादनाय ब्रह्मविज्ञानेन सर्वविज्ञानप्रतिपादनाय च श्रुत्या मृत्तिकैव दृष्टान्तत्वेनोक्ता तस्माद् यथा मृत्तिकायाः परिणाम एव घटादिः सत्यश्च तथा ब्रह्मणोपि परिणाम एव प्रपञ्चः सत्यश्चेत्यर्थापत्त्या विज्ञायते, अन्यथा ब्रह्मज्ञानेन सर्वविज्ञानप्राप्तौ दृष्टान्ततया मृत्तिका नोपादीयेत, ब्रह्मपरिणामाभावे ब्रह्मज्ञानेन प्रप्रपञ्चज्ञानासंभवात्। नहि विवर्तोपादानज्ञानेन कार्यज्ञानं संभवति यथा हि शुक्तिरजतस्य तव मते शुक्तिरेव विवर्तोपादानं तत्र न शुक्तिज्ञानेन शुक्तिरजतज्ञानं संभवति प्रत्युत शुक्तिज्ञानेन शुक्तिरजततज्ज्ञानयोर्निवृत्तिरेव भवति तथात्रापि यदि प्रपञ्चो ब्रह्मविवर्तः स्यात्तदा न ब्रह्मज्ञानेन ज्ञातः स्यात् किंतु ब्रह्म ज्ञानेन प्रपञ्चतज्ज्ञानयोर्निवृत्तिरेव स्यात् तथा च "येनाऽश्रुतं श्रुतं भवत्यऽमतं मतमऽविज्ञातं विज्ञातमिति?" इति ब्रह्मज्ञानेन सर्वविज्ञानप्रतिज्ञाव्याघात एव स्याद् विवर्तत्वाभावच्च प्राप्तं प्रपञ्चसत्त्वमित्यभिसन्धिः। स्वाभिप्रायमाह–सर्वत्रेति, सर्वत्रैव दृष्टान्तोपादानं साध्यप्रतिपादकस्य वाक्यस्य तात्पर्याभिव्यक्त्यर्थं भवति–यथा पर्वतो वन्हिमानिति वाक्यस्य तात्पर्याभिव्यक्त्यर्थं महानसवदित्युच्यते तत्र ज्ञायते यथा महानसे धूमसत्त्वे वन्हिः संयोगसंबन्धेन भवत्येव तथा पर्वतेपि धूमसत्त्वाद्वन्हिः संयोगसंबन्धेनास्त्येवेत्यादि, तथात्रापि मृत्तिकादृष्टान्तेन विज्ञायते यथा मृत्तिकायाः शरावादिकं परिणाम एव अत एव मृत्तिकाज्ञानेन सामान्यरूपतः शरावादिविज्ञानं संभवति तथा प्रपञ्चो ब्रह्मणः परिणाम एव अत एव ब्रह्मज्ञानेन सामान्यरूपतः प्रपञ्चज्ञानं संभवतीति।

न्मयो विकारः सर्वो विज्ञातो भवति—शरावादिविकारो हि वाचारम्भणं नामधेयमात्रं मृत्तिकेत्येव सत्यम्, एवं प्रपञ्चोऽपि सद्विज्ञानेन विज्ञातो भवति विकारो हि वाचारम्भणं नामधेयमात्रं सदित्येव सत्यम्, इत्युक्ते ज्ञायत एतत्— यथाऽऽविर्भावतिरोभावधर्मा नानाविधो विकारः शरावादिः प्रपञ्चो मृत्तिका च सर्वत्राऽनपायिनी तेषां कारणम्. कार्यकारणयोश्चावस्थामात्रभेदात् स्वरूपभेदाभावात् कारणज्ञानेन तत्सर्वं कार्यमवस्थाभेदेनाऽज्ञातमपि स्वरूपेण ज्ञातं भवति, तथा प्रपञ्चोऽप्याविर्भावतिरोभावधर्माऽनवस्थायी तत्कारणं चात्मा सद्रूपः सर्वानुयायी नाऽपायधर्मा. तस्मिन् विज्ञाते सर्वं तदात्मकमविज्ञातमपि व्यासरूपेण समासेन ज्ञातं भवतीत्येतदत्र विवक्षितमस्ति, तस्मादेकस्यैवात्मनः परिणामोयं भेदप्रपञ्चो न त्वऽसन्नेव। असत्त्वे

---

दृष्टान्तदार्ष्टान्तिकभावमुपपादयति—ततश्च यथेति। सदित्येव सत्यमिति—ब्रह्मैव सत्यं तच्च सर्वत्रानुयायि प्रपञ्चस्य प्रातिस्विकं पृथिव्यादिरूपं त्वाऽऽविर्भावतिरोभावधर्मकमित्यर्थः। संक्षेपेणोक्तं विशदयति—यथाऽऽविर्भावेत्यादिना। ‘इत्युक्ते एतज्ज्ञायते’ इत्यन्वयः। तेषाम्=शरावादीनाम्। अवस्थामात्रभेदात्=नामरूपमात्रभेदात्। स्वरूपभेदाभावात्=पदार्थभेदाऽभावात्। अवस्थाभेदेन=तत्तत्प्रातिस्विकरूपेण=तत्तद्व्यक्तिरूपेणाऽज्ञातमपि कार्यं स्वरूपेण=सामान्यरूपेण—तद्द्रव्यरूपेण वा ज्ञातं भवति। अनवस्थायी=अनित्यः। तत्कारणम्=प्रपञ्चकारणम्। नाऽपायधर्मा=अपायो विनाशस्तद्रहितो नित्य इत्यर्थः। तस्मिन्=आत्मनि विज्ञाते तदात्मकं जगद् व्यासरूपेण=प्रातिस्विकरूपेणाज्ञातमपि समासेन=सामान्यरूपेण ‘सदात्मकं जगत्’ इत्येवं रूपेण ज्ञातं भवतीत्यऽत्र=वाचारम्भणश्रुतौ विवक्षितम्। उपसंहरति—तस्मादिति, परिणामत्वादेव सत्त्वं सिद्धमिति भावः। भेदप्रपञ्चः=भेदात्मकः प्रपञ्चः। न त्वऽसन्नेव=यद्यप्यात्मपरिणामोऽनित्यश्च प्रपञ्चः तथापि नाऽसन्नेवेत्यर्थः। विपक्षे बाधकमाह—असत्त्वेति, यथा सद्विज्ञानेनाऽसच्छशविषाणं न विज्ञातुं शक्यते तथा

हि कथं सद्विज्ञानेन विज्ञातः स्याच्छशविषाणवत्, न हि मृत्पिण्डे विज्ञाते सति शशविषाणं विज्ञातं भवति, तथा प्रपञ्चोपि स्यात्, ततस्तु प्रस्तुतहानिरेव स्यात्। एकोप्यात्माऽन्तःकरणोपाधिभेदाद् भिन्नो जीव इत्युच्यते जीवभेदाच्च बन्धमुक्तिव्यवस्थाप्युपपन्नेति।

तदिदमयुक्तम्-चिद्रूपस्यात्मनो जडरूपपरिणामाऽसम्भवात्। एकत्वे चात्मनः सर्वशरीरेषु प्रतिसन्धानं स्यात्-देवदत्तोहं यज्ञदत्तोहमेवेति, तथा देवदत्तशरीरे मे सुखं यज्ञदत्तशरीरे मे दुःखमिति, पादे मे सुखं शिरसि मे वेदनेतिवत् सर्वसुखदुःखोपलब्धिश्च स्यात्। अन्तःकरणभेदाद् व्यवस्थेति चेत्?, न, अचेतनत्वा-

---

प्रपञ्चोपि यद्यऽसन् स्यात्तदा न सद्विज्ञानेन विज्ञायेत, उपपादयति- न हीति। तथा प्रपञ्चोपि स्यादिति-यथा मृत्पिण्डज्ञानेन शशविषाणज्ञानं न संभवति मृत्पिण्डस्य सत्त्वाच्छशविषाणस्य चाऽसत्त्वात्तथा प्रपञ्चोपि यद्यऽसत्स्यात्तदा सद्विज्ञानेनाऽविज्ञात एव स्यादित्यर्थः। ननु मा भवतु विज्ञात इत्याशङ्क्याह-ततस्त्विति-वाचारम्भणश्रुत्या ह्येकविज्ञानेन सकलविज्ञानमेव प्रस्तुतं तस्य हानिः स्यादिति विरोधः। प्रपञ्चस्वरूपमुक्त्वा जीवस्वरूपमाह-एकेति। जीवैक्ये देवदत्तो बद्धो यज्ञदत्तश्च मुक्त इति बन्धमुक्तिव्यवस्था न स्यात्, अन्तःकरणकृतजीवभेदादपि सर्वं सुस्थमेवेत्यर्थः। नायं पूर्वपक्षो वैष्णवसंप्रदायेनेति सुधिभिराकलनीयम्, वैष्णवैर्जीवस्याणुत्वानेकत्वयोः प्रतिपादनात्।

परिहरति-तदिदमयुक्तमिति। जडेति-सरूपस्यैव परिणामस्य संभवाद्विरूपस्यासंभवाच्च नैतत्परिहारेऽधिकं प्रयत्यते। जीवस्वरूपे स्वीकृते दूषणमाह-एकत्वेति। प्रतिसन्धानम्=अनुभवः। यज्ञदत्तस्य देवदत्तोहमित्यप्यनुसंधानं स्याद् देवदत्तशरीरेपि तस्यैवात्मनः सत्त्वादित्यर्थः। तथा सकलशरीरवर्तिसुखदुःखाद्यनुसंधानमपि स्यादिति सदृष्टान्तमाह-तथेति, यथा पादे मे सुखं शिरसि मे वेदनेत्युभयज्ञानं भवति, तत्कस्य हेतोः? सर्वशरीर एकस्यैवात्मनः सत्त्वादिति वक्तव्यम्, तथा सकलशरीरेषु यद्येक एवात्मा तदा तस्य कथं न स्यात् सकलशरीरीयसुखादिप्रत्यक्षमित्यर्थः। नन्वन्तःकरणभे-

**तू-न ह्यन्तःकरणं सुखदुःखे अनुभवति अचेतनत्वात्, आत्मा त्वनुभविता स च सर्वत्रैक इति कः प्रतिसन्धान- नं वारयेत्, तस्मादिदमपि नातीव सुन्दरमिति-**

**आत्मभेदं प्रकृतिपरिणामं च जगत् साङ्ख्या मन्यन्ते, द्विविधं च साङ्ख्यम्-निरीश्वरं सेश्वरं च ।**

---

दादृव्यवस्था स्यादित्याशङ्कते-अन्तःकरणेति। परिहरति-नेति । अन्तःकरण- भेदाद् व्यवस्थायां प्रकारान्तराभावादऽन्तःकरणस्यैवानुभवितृत्वं वक्तव्यं न चैतत् सम्भवत्यऽन्तःकरणस्याचेतनत्वादित्याह- न हीति, यथैकस्य राज्ञः पूर्वदेशे मे सुभिक्षं पश्चिमे च दुर्भिक्षमिति प्रतीतिर्भवति तथात्मनोपि सकलश- रीरवर्तिसुखाद्यनुभवः स्यादिति सर्वज्ञत्वापत्तिः, न चैवं सम्भवतीति नेदं मतं सुन्दरमित्युपसंहरति-तस्मादिति ।

उक्तमतं नातीवसुन्दरमिति हेतोः सांख्यमतमुपस्थापयति- आत्मभेदमिति, तदुक्तम्—

> " संघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात् ।
> पुरुषोस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च ॥
> जननमरणकरणानां प्रतिनियमादऽयुगपत् प्रवृत्तेश्च ।
> पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥" इति ।

प्रकृतिरिति-तदुक्तम्—

> " मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
> षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥
> त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।
> व्यक्तम्, तथा प्रधानम्, तद्विपरीतस्तथा च पुमान् ॥
> प्रकृतेर्महांस्ततोऽहंकारस्तस्माद् गणश्च षोडशकः ।
> तस्मादपि षोडशकात् पञ्चभ्यः पञ्चभूतानि ॥
> तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः ।
> एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च ॥" इत्यादि ।

प्रकृतेर्महत्तत्त्वमुत्पद्यते ततोऽहङ्कारस्तस्मादेकादशेन्द्रियाणि पञ्च तन्मात्राणि च पञ्चतन्मात्रेभ्यः पञ्चभूतानि स्थूलानीति सृष्टिप्रक्रिया । त्रिगुणात्मिका-

निरीश्वरवादिनस्तावदाहुः– प्रकृतिरऽचेतना त्रिगुणात्मिका प्रधानशब्दाभिधेया महदादिविशेषपर्यन्तेन प्रपञ्चरूपेण चेतनानामुपभोगाय परिणमतीति । सेश्वरवादिनोऽप्येवमाहुः, इयांस्तु विशेषः– पुरुषशब्दाभिधेयमीश्वरं क्लेशकर्मविपाकाशयैरपरामृष्टमाश्रित्य प्रकृतिर्जगत् सृजतीति, यथा हि संस्कृतं क्षेत्रमधिष्ठाय तत्संपर्कवशाद्बीजमङ्कुरादिक्रमेण महान्तं वृक्षमारभते तथा सर्वव्यापिनमीश्वरमधिष्ठाय सर्वव्यापिनी प्रकृतिस्तत्संपर्कवशान्महदहङ्कारतन्मात्रादिक्रमेण परिणमन्ती विशेषान्तं प्रपञ्चमारभत इति । इतिहासपुराणेष्वपि प्रायेणैतदेवमतम् । सेयं प्रकृत्युपादाना सृष्टिः, ईश्वरस्तु निमित्तमात्रम्, क्षेत्रज्ञास्तु भोक्तारः, प्रकृतिरेव तु सर्वकार्याणां कर्त्रीति भोग्या. सा च सर्वत्रैका, भोक्तॄणां च भेदाद् बद्धमुक्तव्यवस्थोपपत्तिः । तथा च—

---

सत्त्वरजस्तमांसि गुणास्तदात्मिका गुणत्रयस्य साम्यावस्थैव प्रकृतिरित्युच्यते गुणत्रयस्य वैषम्ये सति सृष्टिर्भवति तत्र प्रथमं महत्तत्त्वमुत्पद्यते इत्याह– महदादीति । विशेषपर्यन्तम्=घटपटादिदृश्यमानसर्वपदार्थपर्यन्तं महदादिक्रमेण प्रकृतिरेव परिणमते, परिणामप्रयोजनं च जीवकर्तृकभोग एवेत्याह– चेतनानामिति । निरीश्वरसांख्यात् सेश्वरसांख्यस्य विशेषमाह–इयांस्तु विशेष इति । सेश्वरसांख्ये प्रकृतेः स्वातन्त्र्यं नास्ति किं तु परमेश्वराधीनैव प्रकृतिर्जगद्रूपेण परिणमते स्वतन्त्रायास्तस्या जडत्वेन प्रवृत्तेरसम्भवादिति भावः । क्लेशेति– "अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः" "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" इत्यादि योगशास्त्रे द्रष्टव्यम् । कर्मविपाकः=भोगः । आशयः=वासना । अपरामृष्टः=रहितः । पुरुषविशेषः=चेतनविशेषः । अन्यत्रातिदिशति–इतिहासेति । सांख्यस्य सङ्क्षेपेणाभिप्रायमाह– सेयमिति । प्रकृत्युपादाना=प्रकृतिरुपादानं यस्याः सा । अतएवेश्वरो निमित्तकारणमेव । क्षेत्रज्ञाः=जीवाः । भोक्तॄणाम्=जीवनाम् ।

"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः जनयन्तीं सरूपाः।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥"

इति व्यक्तमेव भोग्यायाः प्रकृते रजस्सत्त्वतमोरूपाया एकत्वम्, भोक्तॄणां च भेदाद्बद्धमुक्तव्यवस्थानं दर्शितम्।

ऐकात्म्यवादास्तर्ह्यौपनिषदाः कथम्?, अवैलक्षण्येनेति ब्रूमः—भेदशब्दो हि वैलक्षण्यवचनो लोके प्रसिद्धः, तथा हि—सुसदृशेषु वक्तारो भवन्ति— 'नाऽस्याऽस्य च कश्चिद् भेदोस्ति' इति, तथाऽऽत्मनामपि नरपशुतिर्यग्भेदभिन्नशरीरवर्तिनां शरीरसम्बन्धमपोह्य

---

स्वमते प्रमाणमाह— अजामिति। अजा प्रकृतिः सा चैकव्यक्तिकेत्येका। लोहितं रजः शुक्लं सत्त्वं कृष्णं तम इति गुणत्रयात्मिका, सरूपाः=स्वसमाना अचेतनाः बह्वीः प्रजा जनयन्ती, एवंभूता प्रकृतिरिति प्रपञ्चस्य प्रकृतिपरिणामत्वे प्रमाणं दर्शितम्। अजो जीवस्तेष्वेको जुषमाणः=प्रकृतिं सेवमानोऽनुशेते=प्रकृतिसंसक्तो बद्ध इत्युच्यते, अन्यश्च ज्ञातप्रकृतिपुरुषविवेको भुक्तभोगामेनां प्रकृतिं जहाति=मुक्तो भवतीत्यर्थः प्रकृतिपुरुषयोर्व्यापकत्वेन सम्बन्धे विद्यमानेपि भोगाभाव एव मोक्ष। अत्र च " एकः " इति जातावेकवचनं पुरुषबहुत्वात्। " एकः " " अन्यः " इति शब्दाभ्यामेव पुरुषाऽनेकत्वं श्रुत्या प्रतिपादितमित्याह— इति व्यक्तमेवेति।

ननु " एकस्तथा सर्वभूतान्तरात्मा " " एको वशी सर्वभूतान्तरात्मा " " यदा ह्येवैष एतस्मिन्नु दरमन्तरं कुरुते " इत्यादीनामैकात्म्यवादानामनेकात्मस्वीकारे बाधः स्यादित्याशङ्कते—ऐकात्म्येति। उत्तरमाह—अवैलक्षण्येनेति। तत्रैकशब्दो न व्यक्त्यैक्यपरः किं तु स्वरूपैक्यपरः=स्वरूपतुल्यतापरोस्तीति न तेषां बाध आत्मनां सर्वेषां स्वरूपेणाविलक्षणत्वेनैकरूपत्वात्। ऐकात्म्यवादाभिप्रायप्रतिपादनाय भेदशब्दार्थं प्रथममाह—भेदशब्देति, भेदशब्दस्य वैलक्षण्यपरत्वादभेदशब्दस्याऽवैलक्षण्यपरत्वं प्राप्तम्, अभेद एव चैकशब्देनोच्यते इत्येकशब्देनाप्यऽवैलक्षण्यमेव प्रतिपाद्यते न तु व्यक्त्येकत्वमित्यर्थः। उपपादयति—तथा हीति। वक्तारो भवन्ति=वदन्ति। यथा पद्मरजःपरमाणुद्वयस्य व्य-

केवलं नैजरूपेण निरूप्यमाणानां पद्मरजःपरमाणुद्वय-
वन्न किं चिदपि वैलक्षण्यमस्तीत्यऽनेनाभिप्रायेणैकत्व-
वादा नानात्वनिषेधवादाश्च । एतदभिप्रायमेव चैत-
दपि भगवद्वासुदेववचनम्—

"विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥" इति

तथैव "इन्द्रो मायाभिः पुररूप ईयते" इति स्वय-
मविलक्षणोप्यात्मा नरपश्वादिविचित्रशरीरसम्पर्कव-
शाद् भ्रान्त्या स्वयमपि विलक्षणरूपः प्रतीयत इत्यर्थः ।
ये च मुक्तानां क्षेत्रज्ञानामीश्वरेण सहैकत्ववादास्तेप्य-
त्यन्तसाम्याद् वैलक्षण्याऽभावाच्च । तथा च श्रुत्यन्त-

---

क्तिभेदेपि स्वरूपभेदो नास्ति द्वयोरेव सर्वथैव समानरूपत्वात् तथात्मनामपि व्य-
क्तिभेदेपि समानरूपत्वात्स्वरूपभेदो नास्तीति स्वरूपभेदपरिहारायैवात्मनि श्रु-
तिष्वेकशब्दप्रयोगो न तु व्यक्तिभेदनिषेधायेत्यर्थः । एतदभिप्रायम्=व्यक्ति-
भेदेपि स्वरूपैक्याभिप्रायम् । स्वपक्षे भगवद्गीतां प्रमाणयति-विद्येति । पण्डि-
ताः=सदसद्विवेचनशीलाः । समदर्शिनः=सकलेषु देवतिर्यङ्मनुष्यादिशरीरेषु
जीवात्मनमेकरूपं नित्यं चेतनं जानन्ति भेदश्च बाह्यशरीरकृत एव भासत इत्यर्थः।
यदि जीवात्मैक एव स्यात्तदा समदर्शित्वं किं प्रयुक्तं स्यात् ? न ह्येकमेव स्वस्य
समो भवति साहश्यस्य प्रतियोग्यनुयोगिसापेक्षत्वात्, शरीराणां साम्याभाव-
स्तु पारमार्थिक एव तत्राप्यभिमत एवेति न तत्र समदर्शित्वं संभवति तस्माज्ज्ञा-
यतेऽनेके जीवात्मनस्तेषां स्वरूपैक्यमेवाभिप्रेत्य भगवता समदर्शित्वमुपदिष्टम् ।

ननु "इन्द्रो मायाभिः" इतिश्रुत्या त्वात्मभेदस्यौपाधिकत्वमुच्यते इत्याश-
ङ्क्याह-तथैवेति । इति=उक्तश्रुत्यापि शरीरभेदेनैवात्मनां भ्रान्त्या स्वरूपभेदो-
ऽवभासते इति प्रतिपाद्यते न तु व्यक्त्येकत्वमित्याह-स्वयमिति । आत्मेति जा-
तावेकवचनम् । संपर्कः=संबन्धः । ननु "ब्रह्मविद्ब्रह्मैव भवति" इत्यादिवा-
क्यानां का गतिः ? इत्याशङ्क्याह-ये चेति । मुक्तात्मनां ब्रह्मणः सहात्यन्तं
साम्यमऽवैलक्षण्यं च मोक्षेण भवतीति ते वादा साम्यपरा एव न तु व्यक्त्ये-
कत्वपरा इत्याह-तेपीति । स्वपक्षे श्रुतिं प्रमाणयति-यदेति । पश्यः=विद्वान्

**रम्–" यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥ " इतीश्वरसादृश्यापत्तिमेव मुक्तस्य दर्शयति । तथा भगवता वासुदेवेनाप्युक्तम्—**

**" इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।**
**सर्गेपि नोपजायन्ते प्रलये न व्यथन्ति च ॥" इति ।**

**यत्तु " ममैवांशो जीवलोके जीवभूतः सनातनः " इति भगवद्वचनं तत् स्वामिभृत्यभावपरम्– यथा खल्वऽमात्या राज्ञोंशा व्यापदिश्यन्ते तथा जीवोऽपीश्वरांश इत्युच्यते, अन्यथा जीवत्वनाशात् सनातनत्वानुपपत्तिः । यान्यपि—**

---

रुक्मवर्णम्=तेजोरूपम् । ब्रह्मयोनिम्=ब्रह्मणो वेदस्य चतुर्मुखस्य वोत्पत्तिस्थानम् । निरञ्जनः=निर्दोषः–प्रकृतिसंबन्धरहितः सन् । परमं साम्यम्=परमात्मनः साम्यमुपैति, इति श्रुत्या निगदेनैव परमात्मसाम्यप्राप्तिरुच्यते, एतच्छ्रुतिसहकारेण परमात्मैक्यबोधकश्रुतीनामपि साम्यप्रतिपादन एव तात्पर्यमिति गम्यते तथा च नात्मैक्यं प्रामाणिकमिति भावः । अत्र भगवद्गीतां प्रमाणयति–इदमिति । अत्रापि " मम साधर्म्यमागताः " इत्यनेन मुक्तानां परमात्मसाम्यप्राप्तिरेवोच्यते साम्यं च भिन्नयोरेव भवति नाऽभिन्नयोः ।

ननु सर्वथा भेदस्वीकारे भगवतैव "ममैवांश" इत्याद्युक्तोंऽशांशिभावो नोपपद्येत, अन्यथा देवदत्तयज्ञदत्तयोरप्यंशांशिभावः स्यादित्यऽभेदोप्यस्तीत्याशङ्क्याह–यत्त्विति । दृष्टान्तेनोपपादयति–यथेति । जीवो दासत्वादेवांश इत्युच्यते न त्वभेदादित्यर्थः । विपक्षे बाधकमाह–अन्यथेति, यद्यत्रांशशब्देनैक्यमुच्येत तदा मोक्षावस्थायां ब्रह्मणा सह जीवस्यैक्येन जीवत्वं विनश्येतैव जीवत्वनाशाच्च जीवस्य सनातनत्वं न स्यात्, अत्र च " जीवभूतः सनातनः" इत्यनेन जीवभावस्य सनातनत्वम्=नित्यत्वमुच्यते, जीवत्वस्य च सनातनत्वं भेदं विना नोपपद्यत इत्यर्थः ।

ननु "विभेदजनकेऽज्ञाने" इत्यादिना भेदस्याऽसत्त्वमप्युच्यत इत्याशङ्क्याह–यान्यपीति । उक्तपद्यस्य स्वमतेनाभिप्रायं व्याचष्टे–वैलक्षण्यमिति,

" विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥"

इत्यादीनि पुराणवचनानि तेषामयमेवार्थः—वैलक्षण्यमात्मनो ब्रह्मणश्चाऽत्यन्तमविद्यमानमेवाऽज्ञाननिमित्तमऽज्ञाने विनष्टे स्वयमेवविलीयते, इति । विस्पष्टं हि परापरपुरुषयोर्भेदो गीतादिषूपदर्शितः—

" उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।"
" उपद्रष्टाऽनुमन्ता च कर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेस्मिन् पुरुषः परः ॥" इति ।

अलमतिदूरं गत्वा, तस्मात् प्रकृत्युपादानेयं प्रपञ्चसृष्टिरिति नाऽनुपादानोपालम्भः ।

अत्राभिधीयते— कथं खल्वेकरूपा प्रकृतिर्नरपशुतिर्यग्भेदभिन्नं प्रपञ्चमारभते ? न ह्यऽविलक्षणं कारणं विलक्षणं कार्यं निर्मातुमर्हति । क्षेत्रज्ञगतधर्माधर्मसहायवैचित्र्याद् वैचित्र्यमिति चेत् ?, न, अन्तःकरणवृत्ति-

---

आत्मब्रह्मणोर्यद् वैलक्षण्यं तदत्यन्तमविद्यमानमेवाज्ञानेन भासते अज्ञाने च विनष्टे तदपि स्वयमेव विनश्यतीत्यर्थः । किं वोक्तपद्ये भेदशब्दः स्वरूपभेदपर एव नतु व्यक्तिभेदपरो येन व्यक्त्यऽभेदः सिध्येत । भेदे प्रमाणान्तराण्याह—विस्पष्टमित्यादिना । स्वमतप्रतिपादनाद्विरमते—अलमिति । उपसंहरति—तस्मादिति । उपालम्भेति—ब्रह्मणो जडप्रपञ्चोपादानत्वं न संभवतीति यो ब्रह्मवादे उपालम्भः सोऽस्माकं मते नास्ति जडप्रपञ्चं प्रति जडप्रकृतेरेवोपादानत्वस्वीकारादित्यर्थः ।

एवं सांख्यमतमुपपाद्य परिहर्तुमुपक्रमते—अत्रेति । एकरूपायाः प्रकृतेरनेकरूपस्य प्रपञ्चस्योत्पत्तिर्न संभवति, प्रथमं पृथिव्यादीनां भूतानामेव परस्परं वैलक्षण्यात् । अत्र न्यायमाह— न हीति । अविलक्षणम्=एकरूपम् । विलक्षणम्=भिन्नभिन्नस्वभावम् । ननु जीवगतधर्माधर्मौ सृष्टिसहायभूताविति तयोर्वैचित्र्यादेव सृष्टौ वैचित्र्यमुपपद्यत इत्याशङ्क्ते—क्षेत्रज्ञेति, अत्र सहायशब्दो व्यर्थ एव किं वा क्षेत्रज्ञगतधर्माधर्मयोः सहायभूतं यद् वैचित्र्यं तस्मात् किं वा धर्माधर्मलक्षणौ यौ सहायौ तद्वैचित्र्यादित्यर्थः । परिहरति— नेति स्वा-

त्वाद्धर्माधर्मयोः, अन्तःकरणस्य च कार्यवर्गान्तःपातित्वात् सर्वस्य महदादेः कार्यस्य प्राकृतप्रतिसञ्चरे प्रकृतौ विलीनत्वाद् धर्माऽधर्मावपि तस्यामवस्थायामऽविद्यमानावेवेति न तद्बलेन वैचित्र्यम्।

महदादिविकारारम्भे चास्याः किं कारणम्?, स्वरूपमेवेति चेत्? सर्वदाऽऽरम्भप्रसङ्गस्ततः प्रलयानुपपत्तिः। ईश्वरेच्छया विक्रियत इति चेत्?, न, ईश्वरस्य समस्तक्लेशरहितस्याऽपास्तसमस्तकामस्येच्छाऽसम्भवात्, इच्छायाश्चाप्यन्तःकरणधर्मत्वात् तस्मिन् काले तदसम्भवात्।

---

धिकरणेनान्तःकरणेन सह धर्माधर्मयोरपि प्रलये विनाशात्कथं पुनः प्रपञ्चारम्भे तत्कृतं साहाय्यं स्यादिति भावः। न च प्रलयेऽन्तःकरणं विनापि धर्माधर्मयोः स्थितिरिति वाच्यम्, इदानीमपि तथाकल्पनाप्रसङ्गात्। आत्मनश्च त्वन्मते कर्तृत्वं नास्तीति न तस्य धर्माधर्माश्रयत्वम्, यस्य चान्तःकरणस्य धर्माधर्माश्रयत्वं न तस्य प्रलये स्थितिः स्वीक्रियते प्रकृतौ विलयस्वीकारादिति तेन सह विलीनाभ्यां धर्माधर्माभ्यामपि न सृष्टिवैचित्र्योपपत्तिः। प्राकृतप्रतिसञ्चरे=प्रलये।

मीमांसकः शङ्कते–महदादीति। अस्याः=प्रकृतेः। ननु स्वरूपमेव कारणमित्याह–स्वरूपमिति। प्रकृतेर्नित्यत्वेन तत्स्वरूपस्यापि नित्यत्वात्सदैवारम्भः=सृष्टिस्थितिरेव स्यादिति प्रलयः कदापि न स्यादित्याशयेन परिहरति–सर्वदेति। ननु सृष्टिविषयकायाः कादाचित्काया ईश्वरेच्छाया महदादिविकाराऽऽरम्भसहकारित्वोपगमान्न सर्वदाऽऽरम्भप्रसङ्ग इत्याशङ्कते–ईश्वरेच्छयेति। परिहरति– नेति। हेतुमाह–ईश्वरस्येति। अपास्तेति– अपास्ता नष्टाः समस्ताः कामा मनोरथा यस्य तस्येत्यर्थः। हेत्वन्तरमाह–इच्छाया इति। तस्मिन् काले=प्रलयकाले। अन्तःकरणस्य विनष्टत्वेन तत्समवेताया इच्छाया अप्यऽसम्भवात्। परमात्मनो नित्येच्छान्तःकरणस्वीकारे सदैव सर्गोत्पत्त्यनुपपत्तिरेव प्रलयानुपपत्तिस्तदवस्थैव। अन्तःकरणं विनापीच्छास्वीकारे तस्या नित्यत्वे स एव दोषः, अनित्यत्वे प्रलये विनष्टा स्यादेवेति पुनः सर्गोत्पत्त्यनुपपत्तिरेव इदानीं सर्गस्तदानीं प्रलय इत्यत्र विनिगमनाविरहश्च।

किं च प्राकृते प्रलये प्रकृतिमात्रमात्मानश्च केवलमवतिष्ठन्ते, सर्वे चात्मानो निर्विशेषाः सर्वेषां चैतन्यमात्ररूपत्वात्, न च धर्माधर्मकृतमपि वैलक्षण्यमात्मनां संभवति तयोरात्मधर्मत्वाभावात्. अन्तःकरणवृत्तित्वात्, तस्य च तदानीमभावात्, इत्युक्तम् । एवं च धर्माधर्मरहितेषु निर्विशेषेषु पुरुषेष्ववस्थितेषु सर्गकाले प्रकृतिः शरीरारम्भेणात्मनो बध्नाति चेत् ? ये पूर्वसृष्टौ मुक्ता ये चामुक्तास्तान् सर्वान् बध्नीयादऽविशेषात् । तथा येऽश्वमेधमनुष्ठाय फलमभुक्त्वा पूर्वसृष्टौ स्थिता ये च ब्रह्महत्याकारिणस्तेषां सर्वेषामैकविध्यमेव स्यात् पूर्वकृतयोर्धर्माऽधर्मयोर्नष्टत्वात् ।

ननु नाशो नाम नात्यन्ताभावः किं तु कारणे कार्याणां तिरोभावमात्रं विनाशः, उत्पत्तिरपि विद्यमा-

---

दोषान्तरमुपस्थापयति- किं चेति । निर्विशेषाः=परस्परविशेषरहिताः । निर्विशेषत्वे हेतुमाह- चैतन्यमात्रेति । तयोः=धर्माधर्मयोः । तयोरात्मधर्मत्वाभावे हेतुमाह-अन्तःकरणेति । तस्य=अन्तःकरणस्य । तदानीम्=प्रलयकाले । एवमुक्तस्य तात्पर्यमाह- एवं चेत्यादिना । आत्मनः इति शसो रूपम् । धर्माधर्मरहितानामात्मनां बन्धे हि सर्वेषामेव बन्धः स्याद्विशेषाभावादिति बद्धमुक्तव्यवस्थाहानिः, एवं ह्यस्मिन् सर्गे मुक्तानामपि सर्गान्तरे बन्धो भवेदेवेति मोक्षोपाये प्रकृतिपुरुषविवेके प्रवृत्त्यऽभावः स्यात् । दोषान्तरमाह- तथेति । ऐकविध्यम्=तुल्यत्वं । तच्च फले सुखदुःखादौ ज्ञेयम् । सुखदुःखादिविशेषसम्पादकयोर्धर्माधर्मयोः स्वाधिकरणेनान्तःकरणेन सहैव प्रलयकाले विनाशादिति हेतुमाह- पूर्वकृतेति ।

ननु विनाशो हि नाऽत्यन्ताभावो येन प्रलये धर्माधर्मयोर्विनाशे जाते पुनः सृष्टौ धर्माधर्मवैचित्र्यकृतं वैचित्र्यं न स्यात्, किं तु तिरोभाव एव विनाशस्तथा च प्रलयेपि धर्माधर्मयोर्विनष्टयोरपि शक्त्यात्मना स्थितिस्वीकारात् पुनः सृष्टौ तद्वैचित्र्यकृतं वैचित्र्यं सम्भवत्येवेत्यभिप्रायेणाशङ्कते- नन्विति । उत्पत्तिविनाशयोः स्वरूपमाह- किं त्विति । विपक्षेऽसदुत्पादे बाधकमाह-

नानामेव कारणे कार्याणामाविर्भावमात्रं नह्यऽत्यन्ताऽसतामुत्पत्तिः संभवति शशविषाणस्याप्युत्पत्तिप्रसङ्गात्, असदुत्पत्तौ च सर्वत्र सर्वं स्यात्, नियमो न स्यात्- तन्तुभ्यः पटो मृत्तो घट इति। यथाहुः—

"असदऽकरणादुपादानग्रहणात्सर्वसंभवाभावात्।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥" इति।

तथा-"नाऽसतो विद्यते भावो नाऽभावो विद्यते सतः।" इति भगवद्वासुदेववचनम्। तस्मात् प्रलये धर्मादेः शक्त्यात्मनावस्थितत्वात् तद्वशेन युक्तं सृष्टिवैचित्र्यम्।

नैतदेवम्- नहि मृत्पिण्डावस्थायां वा कपालावस्थायां वा घटरूपमस्ति दृश्यादर्शनविरोधात्।

---

न हीति। विनिगमनाविरहमाह-असदुत्पत्ताविति। स्यात्=उत्पद्येत-सर्वं सर्वस्मादुत्पद्येताविशेषात्। यद्यऽसदेव घटः कपालाभ्यामुत्पद्येत तदा तन्तुभ्योपि किं नोत्पद्येत उभयत्रैव घटासत्त्वस्य समानत्वादेवेत्यर्थः, तथा च कार्यकारणभावे नियमो न स्यादित्याह- नियमेति। स्वपक्षे सत्कार्यवादे प्रमाणमाह-असदकरणादिति। कार्यं सदेव कारणे तिरोहितं कारणव्यापारादाविर्भवतीति सत्कार्यमिति प्रतिज्ञा, हेतुमाह-असदिति, यद्यसदेव कार्यं तदा कदापि सन्न स्यात् किं वाऽसत उत्पत्त्ययोगात्, उपादानग्रहणं कार्यकारणयोः सम्बन्धः स चाऽसता कार्येण कारणस्य सम्बन्धो न सम्भवति, किं वा यद्यऽसदेवोत्पद्येत तदा तदुपादानग्रहणनियमो न स्यात्, किं च यद्यऽसदेवोत्पद्येत तदाऽविशेषात् सर्वं सर्वस्मादुत्पद्येतेत्याह-सर्वेति। शक्तेन तन्त्वादिना पटादीनामेव करणात् कार्यकारणभावस्य नियमाच्च सत्कार्यमित्यर्थः। विस्तरस्तु सांख्यकौमुद्यां द्रष्टव्यः। सत्कार्यवादे भगवद्गीतां प्रमाणयति- नासतेति, असतः सत्ता न सम्भवति सतश्चाऽत्यन्ताभावो न सम्भवतीतिभावः। उपसंहरति-तस्मादिति। तद्वशेन=धर्माधर्मवशेन।

मीमांसकः परिहरति-नैतदेवमिति। यदि कारणे सदेव कार्यं प्रादुर्भवेत् तदा कारणावस्थायामप्युपलभ्येत न चोपलभ्यते, तस्मान्न सत्कार्यम्। किं तु कारणात्कार्यमुत्पद्यते। दृश्यादर्शनविरोधात्=योग्यानुपलब्धिविरोधात् का-

यत्तु-" नाऽसतो विद्यते भावः" इति वचनं तदा-त्माभिप्रायम्, पूर्वत्र हि—

" न त्वेवाहं जातु नासं नत्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥"

इत्याऽऽत्मनित्यत्वं प्रतिपादयितुमपक्रान्तमेवानेनोच्य-ते-ना विद्यमानस्यात्मन उत्पत्तिर्न विद्यमानस्य विनाशः सर्वे एवात्मानोऽनुत्पत्तिविनाशधर्माणो नित्या इति, न पुनः कार्यजातस्य सर्वस्य नित्यत्वाभिप्रायम्, अस-र्वगतत्वादऽनुपलब्धिविरोधाचेत्युक्तम् ।

---

रणे कार्यसत्त्वं नाभ्युपगम्यत इत्यर्थः ।

भगवद्गीतावाक्यस्याभिप्रायं व्याचष्टे- यत्त्विति । " नासतः " इति वाक्यमात्मसत्त्वप्रतिपादनपरं न तु कारणे कार्यसत्त्वप्रतिपादनपरमित्यर्थः । उपक्रमोपसंहारादिभिरेवार्थनिर्णयो भवति न तु तद्वचनमात्रेण उपक्रमे चा-त्मसत्त्वप्रतिपादनमारब्धमिति " नासतः " इत्यनेनाप्यात्मसत्त्वमेव प्रतिपा-द्यते । उपक्रमं प्रदर्शयति- न त्वेवाहमिति । अहं नासमिति न किं त्वासमेव, त्वं नासीरिति न किं त्वासीरेव, इमे जनाधिपा नासन्निति न किं त्वासन्ने-व, अतः परं सर्वे वयं न भविष्याम इति न किं तु भविष्याम एवेत्यर्थः । तथा चैवमुपक्रान्तमाऽऽत्मनित्यत्वप्रतिपादनमेव " नासतो विद्यते भावः " इति पद्येनापि भगवता क्रियते न तु कार्यजातस्य सत्त्वमनेनोच्यत इत्यर्थः । " ना-सतः" इत्यस्य स्वानुकूलां व्याख्यामाह-ना विद्यमानेति । "नासतः" इत्यत्रा-ऽकारप्रश्लेषपरित्यागेन सतः=विद्यमानस्यात्मनो भावः=उत्पत्तिर्ना, तथा सतो विद्यमानस्यात्मनोऽभावः=विनाशोऽपि नास्तीत्यर्थः। अनुत्पत्तिविनाशधर्माणः= उत्पत्तिविनाशरहिता आत्मानः । नित्यत्वाभिप्रायमित्यत्र " नासतः " इति वचनमिति शेषः । असर्वेति-सर्वगतस्य=व्यापकस्यैव नित्यत्वं सत्त्वं च सं-भवतीति न घटादीनां परिच्छिन्नानां नित्यत्वम्, प्रत्यक्षमेव घटादीनामुत्पत्ति-विनाशौ दृश्येते इति कथं नित्यत्वं स्यादित्याह-अनुपलब्धीति, नित्यत्वानु-नुपलब्धिविरोधात्, इत्युक्तमिति-" दृश्यादर्शनविरोधात् " इत्यनेन ।

यदि परम्-उपादानोपादेययोरभेदमाश्रित्य मृदात्मनाऽऽदौ घटो ऽवस्थित इत्युच्यते ?, न च तावता कार्यसिद्धिः-न हि मृदवस्थेन घटेनोदकाहरणं क्रियते। तथा धर्माधर्मावपि स्वरूपेणाविद्यमानौ प्रकृत्यात्मना स्थितावपि न स्वकार्याय पर्याप्ताविति न तद्वशेन वैचित्र्यसम्भवः। प्रमाणमपि महदादिक्रमेण प्रकृतिपरिणामे किं चिन्नास्ति-पुरुषवचसां प्रमाणान्तराऽगोचरार्थे प्रमाणत्वासम्भवात्, वेदानामपि पौरुषेयत्वादितरपुरुषवचनवदऽप्रामाण्यात्।

यदि तु सृष्टिप्रलयपरम्परामनादिमङ्गीकृत्य प्रतिसृष्टि

---

ननूत्पत्तेः पूर्वं न कार्यस्य स्वरूपेण सत्त्वमुच्यते किं तु कारणात्मना तथा च न योग्यानुपलब्धिविरोधः कारणस्योपलभ्यमानत्वादेवेति शङ्कते-यदि परमिति। परिहरति-न चेति। घटादिकार्यसंपाद्यस्य कार्यस्योदकाहरणादेः कारणेन मृदादिना संपादयितुमशक्यत्वात् कार्यसत्त्वस्वीकारस्य च कार्यसिद्ध्यर्थत्वान्न कारणात्मना कार्यसत्त्वस्वीकारस्योपयोग इत्यर्थः। एतदेवाह-न हीति। उक्तन्यायं प्रकृतेऽतिदिशति-तथेति। न स्वकार्याय पर्याप्तौ=न सृष्टिवैचित्र्यसंपादकौ संभवतः। तद्वशेन=धर्माधर्मवशेन। सांख्याभिमतसृष्टिप्रक्रियायां प्रमाणमाक्षिपति-प्रमाणमपीति। ननु—

"बुद्ध्यादयो विशेषान्ता अव्यक्तादीश्वरेच्छया
पुरुषाधिष्ठितादेव जज्ञिरे मुनिपुङ्गवाः॥"

इत्याद्यस्ति प्रमाणमित्याशङ्क्याह-पुरुषवचसामिति। प्रत्यक्षादिना प्रमिते एवार्थे पौरुषेयवाक्यानां प्रामाण्यं संभवति न च महदादिक्रमेण प्रकृतेः परिणामः प्रत्यक्षादिना प्रमित इति न तत्र पौरुषेयवाक्यानां प्रामाण्यमित्यर्थः। अधिकानिष्टमाह-वेदानामपीति। सृष्टिप्रलयस्वीकारे वेदानामप्युत्पत्तिविनाशयोगित्वं स्यादेव, उत्पत्तिश्च कस्य चिन्मुखादेवेति पौरुषेयत्वप्राप्त्या वेदानामपि स्वरूपेणैवाप्रमाण्ये प्राप्ते महदादिक्रमेण प्रकृतिपरिणामे प्रामाण्यं न स्यादित्यर्थः।

पक्षान्तरमुद्दिशति-यदीति। सृष्टिप्रलयपरम्पराऽनादिरस्ति तत्र यथा ऋत्वारम्भे ऋतुलिङ्गानि पूर्वर्तुसदृशान्येव प्रादुर्भवन्ति तथा सृष्ट्यन्तरं पूर्वसृष्टिस-

" सर्वेषां चैव नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥"

इत्यादिवचनै ऋतुलिङ्गन्यायेन तुल्यनामप्रभावव्यवहारवस्तूत्पत्त्या शब्दानामऽनाद्यर्थसम्बन्धानां वेदानां च नित्यत्वमाश्रित्य प्रामाण्यमङ्गीक्रियते ?, तथाप्येकस्य प्रजापतेः संप्रदायप्रवर्तकत्वे कृतकाशङ्का स्यादेव ।

अथ पुनः "अष्टाशीतिसहस्राणि संप्रदायप्रवर्तकाः"

---

इशमेव भवति किं च " सर्वेषाम् " इति प्रमाणेनापि सृष्ट्यन्तरे यानि वस्तून्युत्पद्यन्ते तानि तुल्यनामप्रभावव्यवहाराण्येवोत्पद्यन्ते तथा च प्रवाहनित्यत्वाद् वेदानां शब्दानां च प्रामाण्यं संभवतीति नोक्तप्राकृतपरिणामे प्रमाणाभाव इत्यर्थः । तुल्यनामेति-घटस्य सकलसृष्टिषु घट इत्येव नाम भवतीति तुल्यनामता, ब्रह्महत्यादिभिः नरकमेव भवतीति तुल्यप्रभावता, घटेनोदकाहरणमेव पटेन प्रावरणमेवेति तुल्यव्यवहारता । संस्थाः=मर्यादाः । निर्ममे-प्रजापतिरिति शेषः । पूर्वं हि प्रलयस्वीकारे सृष्ट्यारम्भे वेदानामप्युत्पत्त्या पौरुषेयत्वं तेन चाऽप्रामाण्यं स्यादिति प्रकृतेर्महदादिक्रमेण परिणामे प्रमाणाभाव इत्येवं सिद्धान्तिनाऽऽक्षिप्तं तस्य चात्र पूर्वपक्षिणा " शब्दानामनाद्यर्थसंबन्धनां वेदानां च नित्यत्वम् " इत्यादिनोत्तरमुक्तम्, अयं भावः- प्रमाणान्तरागोचरेऽर्थे पुरुषवाक्यानां प्रामाण्यं नोपपद्यत इति प्रमाणान्तरागोचरे महदादिक्रमेण प्रकृतिपरिणामेऽपि पुरुषवाक्यानां प्रामाण्यासंभवात् पौरुषेयत्वेन तत्तुल्यानां वेदानामपि तत्र प्रामाण्यं न स्यादिति सत्यम्, यदा ह्यऽनादिरेव सृष्टिप्रलयपरम्परा तत्र वेदानामप्यनादित्वान्नित्यत्वेनाऽनाद्यर्थसंबद्धत्वेन च पुरुषवाक्येभ्यो विशेषात् प्रामाण्यं संभवतीति प्रकृतिपरिणामे "अजामेकाम्" इत्यादिवेदवाक्यानां प्रामाण्यमुपपद्यते, प्रवाहनित्यतया वेदानां नित्यत्वेन प्रमाणान्तरागोचरेऽपि प्रकृतिपरिणामे प्रामाण्यसंभवात् । उक्तं परिहरति-तथापीति, एकेन प्रजापतिना सर्वं कुर्वता पूर्वकालिका एव वेदा अध्यापिता न नूतना विरचिता इत्यत्र मानाभावेन कृतकत्वाशङ्कायाः सत्त्वान्न वेदानां प्रामाण्यं संभवतीत्यर्थः । संप्रदायप्रवर्तकत्वे=वेदाध्यापकत्वे इति यावत् ।

ननु नैक एव तदानीं प्रजापतिरेवं करोति येन तत्स्वातन्त्र्यात् कृतका-

इत्यादिवचनानुरोधेन बहूनां महर्षीणां सृष्ट्यन्तराधी-तं वेदं स्मरतां सुप्तप्रतिबुद्धन्यायेन संप्रदायप्रवर्तकत्व-माश्रित्य कृतकाशङ्कां निरस्य नित्यता समर्थ्येत ?, त-थाप्यनुपादानं जगन्निर्माणमऽशक्यमभ्युपगन्तुम्, प्र-कृत्यादीनां ह्युपादानत्वं निरस्तम्। औपनिषदास्तु सृ-ष्टिप्रलयवादाः पौराणिकाश्चाऽर्थवादतया नेतव्याः। भवतु वैवं तथापि नास्माकं काचित् क्षतिः सम्बन्ध-नित्यत्ववेदप्रामाण्ययोरविघातात्।

वैशेषिकास्तु—पौरुषेयत्वमेव शब्दार्थसम्बन्धानां वे-

---

शङ्का स्याद् वेदेषु. किं तु "अष्टाशीति"इत्यादि वचनप्रामाण्येनाऽष्टाशीतिसहस्र-मुनिभिः सृष्ट्यन्तराधीतस्य वेदस्य स्मरणं क्रियते, कथमेवं वेदस्मरणं स्या-दित्याशङ्क्याह—सुप्तेति, यथा ऽस्माभिः सुप्तप्रतिबुद्धैर्गतदिनेऽधीतं स्मर्यते तथा महर्षिभिस्तैर्योगसामर्थ्यात् सृष्ट्यन्तराधीतोपि वेदो स्मर्यते, तथा च न कृत-कत्वाशङ्केति संभवति वेदस्य प्रामाण्यं तथा च वेद एव प्राकृतपरिणामविशेषे प्रमाणमित्याशङ्कते—अथ पुनरिति। परिहरति—तथापीति। भवत्वेवं नित्यत्वा-द्वेदानां प्रामाण्यं तथापि जगन्निर्माणं तु नाभ्युपगन्तुं शक्यते जगदुपादानस्या-नुपलम्भात्। उपादानाभावे च निर्माणासंभवादित्यर्थः। ननु प्रकृतिरेवो-पादानमित्याशङ्क्याह—प्रकृत्यादीनामिति, एकायाः प्रकृतेरनेकविधप्रपञ्चं प्रत्यु-पादनत्वासंभवात्। निरस्तमिति—" कथं खल्वेकरूपा प्रकृतिः "इत्यादिना निरस्तम्। ननु " तदैक्षत बहुस्याम् " इत्याद्यौपनिषदानाम् " बुद्ध्यादयो विशेषान्ताः" इत्यादिपौराणिकानां च सृष्टिप्रलयवादानां तव मते सृष्टिप्रलया-भावात् का गतिरित्याशङ्क्याह—औपनिषदेति। अर्थवादतयेति—तेषां न सर्गा-दिप्रलययोस्तात्पर्यं किं त्वनित्यत्वे तात्पर्यमित्यर्थः। अभ्युपगम्यापि स्वपक्षमु-पपादयति—भवतु वैवमिति। सृष्टिप्रलयस्वीकारेपि त्वया वेदानां शब्दार्थ-संबन्धस्य च नित्यत्वं स्वीकृतमिति शब्दार्थसंबन्धनित्यत्ववेदप्रामाण्ययो-र्विरोधाभावान्नास्माकं काचित् क्षतिरित्युपरम्यत इत्यर्थः।

वैशेषिकमतमुपस्थापयति—वैशेषिकेति। "इदं पदमिममर्थं बोधयतु, अस्मा-च्छब्दादयमर्थो बोद्धव्यः"इत्येवं शब्दार्थसंबन्धस्य परमेश्वरेण कृतत्वात् पौरुषेय-

दानां चाङ्गीकुर्वन्तोऽनुमानेन सृष्टिप्रलयावीश्वरं च सिषाधयिषन्तः प्रयोगमारचयन्ति, त्रिविधं हि वस्तुजातम्-संप्रतिपन्नचेतनकर्तृकं घटादि, संप्रतिपन्नाऽतत्कर्तृकं व्योमादि, विप्रतिपन्नतत्कर्तृकं महीधरदूर्वाङ्कुरादि, तत्रान्तिममऽधिकृत्योच्यते-'क्षित्यादिकं बुद्धिमत्कर्तृकं कार्यत्वाद् घटादिवत्, कार्यत्वं च क्षित्यादेः सावयवत्वाद् घटादिवत् ।

किं पुनः पृथिव्यादेः समवायिकारणम् ?, पार्थिवाऽऽप्यतैजसवायवीयपरमाणुजातं यथास्वं पृथिव्यप्तेजोवायूनां समवायिकारणम्, न हि प्रलये परमाणूनां प्रलयोऽस्माकमस्ति सांख्यादिवत् । कार्यद्रव्याणि तु द्व-

---

त्वम्, वेदानामपि प्रतिसर्गादौ रचितानामुपदेशात् पौरुषेयत्वम्, सृष्टिप्रलयानुमानं यथा-प्रपञ्च उत्पत्तिविनाशशाली सावयवत्वाद् घटवदिति । संप्रतिपन्नचेतनकर्तृकम्=संप्रतिपन्नं वादिप्रतिवादिभ्यां स्वीकृतं चेतनकर्तृकत्वं यस्य तद्घटादि । संप्रतिपन्नातत्कर्तृकम्=संप्रतिपन्नश्चेतनकर्तृकत्वाभावो यत्र तद् व्योमादि, व्योमादीनां नित्यत्वादिति भावः । विप्रतिपन्नतत्कर्तृकम्=न स्वीकृतं संदिग्धं वा चेतनकर्तृकत्वं यस्य तत् । अन्तिमम्=क्षित्यङ्कुरादिकम् । बुद्धिमत्कर्तृकम्=चेतनकर्तृकम् । इत्यनेनानुमानेन चेतनकर्तृत्वे सिद्धे जीवानां तत्कर्तृत्वं न संभवतीति क्षित्यादीनां यः कर्ता स ईश्वर इतीश्वरसिद्धिः क्षित्यादीनां कृतकत्वापत्त्या सृष्टिप्रलयौ च सिद्धौ । ननु यदि क्षित्यादिषु कार्यत्वं हेतुः स्यात्तदा तेन चेतनकर्तृकत्वं सिद्ध्येत न च क्षित्यादीनां कार्यत्वमुपलभ्यते तेषामुत्पत्तेरदृष्टत्वादित्याशङ्क्याह-कार्यत्वमिति, क्षित्यादिकं कार्यं सावयवत्वाद् घटवदित्यनुमानेन कार्यत्वं ज्ञेयम् ।

ननु कार्यस्य समवायिकारणं किं चिद्भवति तत्र क्षित्यादीनां समवायिकारणं किं स्यादित्याशङ्कते-किमिति । उत्तरमाह-पार्थिवेति । यथास्वम्=यथासङ्ख्यम्, यथा पृथिव्याः पार्थिवपरमाणुजातं समवायिकारणम् । एवमग्रेपि । ननु प्रलये परमाणूनां विनाशात् कथं तेषां विनष्टानां समवायिकारणत्वं स्यादित्याशङ्क्याह- न हीति । परमाणूनां नित्यत्वादिति भावः ।

णुकादीनि सर्वाण्येवेश्वरेच्छया विश्लिष्टावयवानि प्रलीयन्ते, परमाणवस्तु मिथोऽसंयुक्तास्तिष्ठन्ति व्योमादयश्च. क्षेत्रज्ञाश्चात्मीयधर्माधर्मयुक्ता एवाऽवतिष्ठन्ते । सर्गकाले पुनरीश्वरेच्छां क्षेत्रज्ञाऽदृष्टं च निमित्तमामासाद्य परमाणुषु कर्माण्युत्पद्यन्ते तद्वशाच्च मिथस्संयुक्ताश्चतुष्टयेपि परमाणवो द्व्यणुकादिक्रमेण यथास्वं पृथिव्यादिकं भूतचतुष्टयमारभन्ते । निमित्तभूतक्षेत्रज्ञाऽदृष्टवैचित्र्याच्च जरायुजाऽण्डजोद्भिज्जस्वेदजभिन्नं शरीरभेदमीश्वरेच्छाकारितसंयोगविशेषवशात् परमाणव आरभन्ते ।

नत्वेतदपि युक्तम्– नहीच्छामात्रेण प्रयत्नमन्तरेण परमाणुषु स्पन्दोत्पत्तिः सम्भवति, इच्छाकारितप्रयत्नवशेन शरीरस्पन्दोत्पत्तिरद्यत्वेपि दृश्यते। ईश्वरोपि

---

स्वमतेन प्रलयं निरूपयति–कार्येति, वस्तुगत्या सावयवानां पदार्थानामवयवविश्लेष एव प्रलय इति वक्तव्यम् । नित्यानां प्रलयेप्यऽविनाशमाह–परमाणव इति । क्षेत्रज्ञाः=जीवाः । सृष्टिं निरूपयति–सर्गकालेति, ईश्वरेच्छा जीवादृष्टं चेत्युभयं सृष्टेर्निमित्तकारणम् । कर्माणि=क्रियाः । तद्वशात्=उत्पन्नकर्मवशात् । चतुष्टये=चतुर्विधाः पार्थिवाप्यतैजसवायवीयाः परमाणवः । यथास्वम्=यथायथम्–पार्थिवाः परमाणवः पृथ्वीमाप्या जलमिति क्रमेण । शरीरोत्पत्तिमाह– निमित्तभूतेति । जरायुजं मानवादिशरीरम्, अण्डजं पक्ष्यादिशरीरम्, उद्भिज्जं वृक्षादिशरीरम्, स्वेदजं यूकादिशरीरम्, शरीरभेदम्,=शरीरविशेषम् । स्पष्टमन्यत् ।

परिहरति–न त्वेतदपीति । शरीरे स्पन्दोत्पत्तिः प्रयत्नेनैव भवतीति नेश्वरेच्छामात्रेण परमाणुष्वपि प्रयत्नं विना स्पन्दः संभवति, अन्यथा शरीरेपि प्रयत्नं विनैव स्पन्दः स्यादित्याह– न हीति । प्रयत्नं विनेच्छामात्रेण क्रियोत्पत्त्यभावे दृष्टान्तमाह–इच्छेति, अद्यत्वे=इदानीमपि शरीरे स्पन्दोत्पत्तिरिच्छाकृतप्रयत्नवशेन दृश्यते इत्यन्वयः । नन्वस्त्वीश्वरेपि प्रयत्न इत्याशङ्कते– ईश्वरोपीति । परिहरति– नेति । किं बहुना सशरीरस्यापि प्रयत्नः श-

प्रयतत इति चेत् ?, न, अशरीरस्य प्रयत्नासम्भवात् । सर्वगता अपि ह्यात्मानः शरीरप्रदेश एव प्रयत्नमारभन्ते न बहिः, अतः शरीरापेक्षः प्रयत्नः। प्रलयकाले च सर्वकार्याणां प्रलयादीश्वरशरीरमपि प्रलीनमिति कथमशरीरः प्रयतते ?। न चाऽशरीरस्येच्छापि सम्भवति मुक्तात्मनामिव। नापि ज्ञानं संभवति- इन्द्रियादेरभावात् ।

नित्यमस्य ज्ञानं नित्या चेच्छा नित्यश्च प्रयत्न इति चेत्, न, सर्वज्ञानेच्छाप्रयत्नानामनित्यत्वव्याप्तेः । शक्यते हि प्रयोक्तुम्-क्षित्यादिकं नाऽशरीरिचेतनक-

---

रीरदेशे एव भवति नान्यत्र, अन्यथा व्यापका एव जीवात्मान इति शरीराद्बहिरपि प्रयतेयुरित्याह-सर्वगतेति । स्वाभिप्रायमाह- अत इति । नन्वस्तु शरीरापेक्षः प्रयत्न इति को दोष इत्याशङ्क्याह- प्रलयकालेति, प्रलयकाले कार्यत्वादीश्वरशरीरस्यापि विनाशादऽशरीरः परमेश्वरः कथं सर्गादौ प्रयतेतेत्यर्थः । नन्वीश्वरेच्छायामस्ति वैलक्षण्यं यत् प्रयत्नं विनापि परमाणुषु कर्मोत्पादयतीत्याशङ्क्याह- न चेति । अशरीरस्येच्छापि न संभवति, अन्यथा मुक्तात्मनामपीच्छा स्यात् । किं वा 'जानातीच्छति यतते करोति' इत्येवं ज्ञानेच्छाप्रयत्नक्रियाणां क्रमभावित्वात् प्रयत्नकारणीभूतेच्छापि न संभवत्यशरीरस्य कुतः प्रयत्न इत्याह- न चेति । इच्छाकारणं ज्ञानमपि न संभवति येनेच्छा स्यादशरीरस्येत्याह- नापीति ।

नन्वऽनित्यानां ज्ञानादीनां शरीरापेक्षा दृष्टा अनित्यज्ञानाद्युत्पत्तेः शरीरसापेक्षत्वात्, ईश्वरस्य च ज्ञानेच्छाप्रयत्ना नित्या एवेति न तत्र शरीरापेक्षेत्याशङ्कते-नित्यमस्येति । अस्य=ईश्वरस्य । परिहरति- नेति । ज्ञानादीनामनित्यानामेवोपलब्धेरीश्वरज्ञानादिकमप्यनित्यमेवेत्यर्थः । ज्ञानादयोऽनित्या ज्ञानादित्वात् जीवज्ञानादिवत् । ईश्वरेच्छाया नित्यत्वे सृष्टिकारणीभूतेच्छाया अपि नित्यत्वात्सदा सृष्टिस्थितिप्रसङ्गात् प्रलयो न स्यादेव, एवं प्रलयकारणीभूतेच्छाया नित्यत्वात् प्रलय एव सदा तिष्ठेन्न सृष्टिरित्यपि दोषोऽनुसन्धेयः। वैशेषिकविरुद्धं सत्प्रतिपक्षमुपस्थापयति-शक्यत इत्यादिना । वैशेषिकस्य क्षित्यादीनामशरीरिचेतनकर्तृकत्वं नित्यप्रयत्नेच्छाज्ञानकर्तृकत्वं चाऽभीष्टं तद्विरुद्धमत्र प्रयुक्तम्-

**र्तृकं न नित्यप्रयत्ननित्येच्छानित्यज्ञानकर्तृकं कार्यत्वाद्
घटवदिति ।**

---

"नाऽशरीरिचेतनकर्तृकं न नित्यप्रयत्ननित्येच्छानित्यज्ञानकर्तृकम्" इति, अशरीरिचेतनकर्तृकत्वाभावो नित्येच्छाप्रयत्नज्ञानवत्कर्तृकत्वाभावश्च घटे प्रसिद्ध एव सशरीरेणाऽनित्येच्छाप्रयत्नज्ञानवता कुलालेनैव कृतत्वात् । जीवकर्तृकत्वं च बाधितमिति क्षित्यादीनां न सृष्टिर्न वा प्रलय इति प्रवाहनित्यता प्राप्नोति भावः । श्लोकवार्तिकेप्युक्तम्—

(का = कीदृशी) "यदा सर्वमिदं नासीत् का(का)ऽवस्था तत्र गम्यताम् । (तत्र = प्रलये)
प्रजापतेः क्व वा स्थानं किं रूपं च प्रतीयताम् ॥
ज्ञाता च कस्तदा तस्य यो जनान् बोधयिष्यति । (अयं प्रजापतिः सर्गकर्तेत्येवम् )
उपलब्धेर्विना चैतत् कथमध्यवसीयताम् ॥
प्रवृत्तिः कथमाद्या च जगतः संप्रतीयते ।
शरीरादेर्विना चास्य कथमिच्छापि सर्जने ॥
शरीराद्यऽथ तस्य स्यात् ? तस्योत्पत्तिर्न तत्कृता । (तस्य = ईश्वरशरीरस्य)
(ईश्वरशरीरनिर्माणार्थमन्यशरीरस्वीकारेनवस्था) तद्वदन्यप्रसङ्गोपि, नित्यं यदि तदिष्यते? ॥ (तत् = ईश्वरशरीरम्)
पृथिव्यादावनुत्पन्ने किम्मयं तत् पुनर्भवेत् । (तत् = ईश्वरशरीरम्)
(प्रायदुःखा दुःखबहुला) प्राणिनां प्रायदुःखा च सिसृक्षाऽस्य न युज्यते ॥
साधनं चास्य धर्मादि तदा किं चिन्न विद्यते ।
न च निस्साधनः कर्ता कश्चित् सृजति किं चन ॥
नाऽऽधारेण विना सृष्टिरूर्णनाभेरपीष्यते ।
प्राणिनां भक्षणाच्चापि तस्य लाला प्रवर्तते ॥ (तस्य = ऊर्णनाभेः)
अभावाच्चानुकम्प्यानां नानुकम्पास्य जायते । (अस्य = ईश्वरस्य)
सृजेच्च शुभमेवैकमनुकम्पाप्रयोजितः ॥
तथा चाऽपेक्षमाणस्य स्वातन्त्र्यं प्रतिहन्यते । (जीवकर्मापेक्षायाम्)
जगच्चाऽसृजतस्तस्य किं नामेष्टं न सिध्यति ? ॥
क्रीडार्थायां प्रवृत्तौ च विहन्येत कृतार्थता । (कृतार्थता = आप्तकामता)
बहुव्यापारतायां च क्लेशो बहुतरो भवेत् ॥
एवं वेदोपि तत्पूर्वस्तत्सद्भावादिबोधने । (तत्पूर्वः = प्रजापतिकृतः)

ननु घटस्यापीश्वरकर्तृकत्वमस्त्येवेति साध्यहीनो

साशङ्को न प्रमाणं स्यात्, नित्यस्य व्यापृतिः कुतः ॥
वेदस्याऽऽदिप्रवृत्तौ च नाऽकृतत्वमतिर्भवेत् । (आदिप्रवृत्तौ = प्रजापतिनोपदिष्टत्वे)
प्रलयेषु स्थितिश्चास्य साशङ्का स्यात् प्रजापतौ ॥
कर्तृसर्गविनाशानामथाऽनादित्वकल्पना ? ।
सैवं युक्ता यथेदानीं भूतानां दृश्यते क्रमात् ॥
प्रलयेऽपि प्रमाणं नः सर्वोच्छेदात्मके नहि ।
न च प्रयोजनं तेन स्यात् प्रजापतिकर्मणा ॥
अशेषकर्मनाशे वा पुनः सृष्टिर्न युज्यते ।
कर्मणां वाऽप्यभिव्यक्तौ किं निमित्तं तदा भवेत् ॥
ईश्वरेच्छा यदीष्येत सैव स्याल्लोककारणम् ।
ईश्वरेच्छावशित्वे हि निष्फला कर्मकल्पना ॥
कुलालवच्च नैतस्य व्यापारो यदि कल्पते । (एतस्य = ईश्वरस्य)
अचेतनः कथं भावस्तदिच्छामनुरुध्यते ॥ (भावः = परमाणुः)
तस्मान्न परमाण्वादेरारम्भः स्यात्तदिच्छया ।
पुरुषस्य च शुद्धस्य नाऽशुद्धा विकृतिर्भवेत् ॥
स्वयं च शुद्धरूपत्वादसत्त्वाच्चान्यवस्तुनः ।
स्वप्नादिवदऽविद्यायाः प्रवृत्तिस्तस्य किंकृता ? ॥
अन्येनोपप्लवेऽभीष्टे द्वैतवादः प्रसज्यते ।
स्वाभाविकीमविद्यां तु नोच्छेत्तुं कश्चिदर्हति ॥
तस्माद्यद्वदेवात्र सर्गप्रलयकल्पना ।
समस्तक्षयजन्मभ्यां न सिध्यत्यऽप्रमाणिकी ॥
कर्मक्षयो हि विज्ञानादित्येतच्चाऽप्रमाणवत् ।
सर्वज्ञवन्निषेध्या च स्रष्टुः सद्भावकल्पना ॥" इत्यादिकम् ।

ननु तवानुमाने दृष्टान्ते घटेऽप्यऽशरीरिचेतनकर्तृकत्वमस्त्येव कार्यमात्रे प्रतीश्वरस्य कर्तृत्वस्वीकारादिति साध्यस्याऽशरीरिचेतनकर्तृकत्वाभावस्याभावात्साध्यविकलो दृष्टान्तः, तथा च कार्यत्वस्या ऽशरीरिचेतनकर्तृकत्वाभावस्य च घटादौ व्याप्तिग्रहाभावादनुमानमेव न प्रसरतीत्याशङ्कते–नन्विति ।

दृष्टान्तः ?। तथापि कुलालस्यापि कर्तृत्वान्न केवलेश्वर-कर्तृकत्वं घटस्य, ततश्चैवं प्रयोक्तव्यम्– क्षित्यादिकं न केवलाऽशरीर्याऽऽत्मकर्तृकं कार्यत्वाद् घटवदिति, वस्तुत्वाद् व्योमवदिति । हेतुदृष्टान्तौ सर्वथापि निर्दोषौ । तथा क्षित्यादिकं न बुद्धिमत्कर्तृकं शरीरिकर्तृकत्वविरहाद् व्योमवदिति साक्षादेव प्रतिसाधनं कर्तव्यम् ।

अथेश्वरशरीरं नित्यमङ्गीकृत्य प्रलयेपि सशरीरमेवेश्वरमभ्युपगच्छेत् ?, ततः सावयवत्वमीश्वरशरीरेऽनैकान्तिकं न क्षित्यादेः कार्यत्वं साधयेत्, सशरीरकर्तृकत्वं च दूर्वाङ्कुरादीनामनुपपन्नमनुपलब्धिविरोधात् ।

---

परिहरति–तथापीति । सशरीरकुलालकर्तृकत्वस्य सत्त्वेन केवलाऽशरीरिचेतनकर्तृकत्वाभावस्य घटादौ सत्त्वादेव न साध्यवैकल्यमित्यर्थः । स्वाभिप्रायं प्रकटयन् प्रयोगान्तरेण सत्प्रतिपक्षयति–क्षित्यादिकमिति । हेत्वन्तरमाह– वस्तुत्वादिति । हेतुदृष्टान्ताविति– उक्तहेतुद्वये व्यभिचारित्वादिदोषो नास्त्येव दृष्टान्तद्वये च साध्यवैकल्यं नास्त्येव घटे कुलालकर्तृकत्वस्यापि सत्त्वात् केवलाऽशरीरिचेतनकर्तृकत्वाभावोस्त्येव व्योम्नि च नित्यत्वेनाऽकृतकत्वादेव केवलाऽशरीरिचेतनकर्तृकत्वाभावोस्त्येवेति न साध्यवैकल्यम् । वैशेषिकेण " क्षित्यादिकं बुद्धिमत्कर्तृकम् " इति प्रयुक्तं तत्र साक्षादपि संप्रति सत्प्रतिपक्षमाह– तथेति । यत्र शरीरिकर्तृकत्वाभावस्तत्र बुद्धिमत्कर्तृकत्वाभावोपि भवत्येव यथा नित्ये व्योम्नि, तथा च क्षित्यादिभ्यः शरीरिकर्तृकत्वनिवृत्त्या बुद्धिमत्कर्तृकत्वमपि निवर्तते सशरीरस्यैव बुद्धिमत्तासम्भवादित्यर्थः ।

नन्वस्त्वीश्वरस्यापि शरीरं तच्च नित्यमेवेति न काचिदनुपपत्तिरित्याशङ्कते–अथेति । परिहरति–तत इति । एवं हीश्वरशरीरे कार्यत्वं नास्ति सावयवत्वं चास्त्येवेति वक्तव्यं तथा च यदुक्तम्–'क्षित्यादिकं कार्यं सावयवत्वात्' इति तत्र सावयवत्वस्याऽकार्येपीश्वरशरीरे सत्त्वेन व्यभिचारित्वात् क्षित्यादिषु कार्यत्वसाधकत्वं न स्यात् कार्यत्वाभावे च बुद्धिमत्कर्तृकत्वमपि न स्यादित्यर्थः । अनुपलब्धिविरोधं दर्शयति–सशरीरकर्तृकत्वमिति ।

किं च प्रतिकार्यं प्रयत्नभेदेन भविव्यम्, अन्यो हि पादसञ्चरणे प्रयत्नः अन्यश्च बाहूद्धरणे, तथा सति यद्यपीश्वरे प्रयत्नो नित्यः स्यात् तथापि तस्यैकत्वान्न विचित्रकार्योदयहेतुत्वं सम्भवतीति व्यर्थ एवासौ। यदि त्वनन्तकार्यानुरूपा अनन्ता एव प्रयत्नाः सर्वदैवेश्वरेऽवतिष्ठेरन्, तथा सति प्रलयकारणीभूतस्य परमाणुविश्लेषकस्य प्रयत्नस्य सर्गकालेप्यवस्थानात्, संयोजकस्य च सर्गहेतोः प्रलयकालेप्यवस्थानात् उभयोः परस्परविघातान्न सृष्टिः स्यात् न प्रलयः।

यच्च क्षेत्रज्ञादृष्टवैचित्र्यात् कार्यवैचित्र्योपपत्तिरिति, तदप्ययुक्तम्- नहि दृष्टकारणवैलक्षण्यमन्तरेणाऽदृष्टवैलक्षण्यमात्रात् कार्यवैलक्षण्यं सिध्यति, न ह्यदृष्टशतेनापि तालबीजमन्तरेण तालवृक्षो निष्पद्यते। विनापि बीजमीश्वरमहिम्ना सर्वं सिध्यतीति चेत् ?, न, तत्रैव प्रमाणाभावात्। नित्यत्वे हि वेदानामऽवसिते त-

---

किं चेश्वरप्रयत्नस्य नित्यस्यैकत्वमेव वक्तव्यं न चैकेन प्रयत्नेन विविधकार्योत्पत्तिः सम्भवति कार्यवैविध्यं प्रति प्रयत्नवैविध्यस्यावश्यकत्वात्, अन्यथैकस्य प्रयत्नस्य सर्वकार्यकारणत्वे लोकेप्येकेनैव प्रयत्नेन सर्वं सिद्ध्येत, इश्वरप्रयत्नस्यैवैकस्य सर्वकार्यकारणत्वस्वीकारेपि तस्य सृष्टिप्रलयोभयकारणत्वे प्राप्ते एकदैव सृष्टिप्रलयोभयप्रसङ्ग इत्याशयेनाह- किं चेति। असौ=ईश्वरप्रयत्नः। अनेकप्रयत्नस्वीकारे दोषमाह- यदीति। उभयोः=सृष्टिप्रलयहेतुभूतयोः प्रयत्नयोः।

एवं सृष्टिप्रलयौ प्रतीश्वरेच्छादीनां कारणत्वं पराकृत्य जीवादृष्टस्यापि कारणत्वं पराकर्तुमुपक्रमते- यच्चेति। परिहरति-तदप्ययुक्तमित्यादिना। दृष्टकार्यवैलक्षण्यं प्रति दृष्टकारणवैलक्षण्यस्यैव हेतुत्वान्नाऽदृष्टवैलक्षण्येन तत्सिद्धिरिति भावः। अत्रोदाहरणमाह- नह्यदृष्टेति। नन्वीश्वरेच्छामाहात्म्येन बीजं विनापि वृक्षस्योत्पत्तिः सम्भवतीति शङ्कते- विनापीति। परिहरति- नेति। तत्र=ईश्वरेच्छामहिम्नि, ईश्वरस्यैवाभावादिति भावः। नित्यत्वेति-वेदानां

त्प्रामाण्यबलेनेश्वरस्याऽपरिच्छेद्यो महिमा सृष्टिप्रलयौ च ऋतुलिङ्गन्यायमाश्रित्य सिध्येयुर्न वा। वेदांस्त्वनादृत्य दृष्टानुसारेण पर्वते इवानुमानमत्यन्तालौकिकेर्थे प्रवर्तयतामुपेक्षैवोत्तरमित्युपरम्यते। तस्मान्न सर्गादिकालेपि सम्बन्धकरणम्।

अशक्यं च कर्तुं सर्वशब्दानां सम्बन्धकरणम्—यदा न कश्चिदपि शब्दः केनाप्यर्थेन सम्बद्ध आसीत् तदा कथं सम्बन्धः क्रियेत?, सम्बन्धं हि कुर्वताऽवश्यं केनचिद्वाक्येन स कर्तव्यः— गौः सास्नादिमानित्यादिना, न चाऽप्रसिद्धमर्थप्रतिपादकत्वेन सास्नादिशब्दमर्थ-

---

नित्यत्वे स्वीकृत एव प्रामाण्यं सम्भवतीति प्रामाण्यसिद्ध्यर्थं वेदानां नित्यत्वे स्वीकृते सति वेदप्रामाण्यबलादीश्वरेच्छामाहात्म्यं सृष्टिप्रलयौ च सिध्येयुर्नवेत्यन्यदेतत्, कदा चित् सिध्येयुरपीत्यर्थः। वेदानुपेक्ष्य तु कथमपि न सिध्यन्ति दृष्टानुसारेणेत्याह— वेदानिति। पर्वत इति— यथा पर्वतो वन्हिमान् धूमादिति दृष्टानुसारेणानुमानं भवति तथाऽत्यन्तादृष्टे सृष्टिप्रलयाद्यर्थेऽनुमानं न प्रसर्तुमर्हतीति तथाप्यनुमानादिना साधयतामुपेक्षैव युक्तेत्याह—उपरम्यत इति। उपेक्षैवोत्तरमिति— यथा— " मौनमेवोत्तरं ददौ " इति तथा। उपसंहरन् स्वाभिप्रायमाह— तस्मादिति। सम्बन्धकरणम्—शब्दार्थयोरिति शेषः। यदि प्रलयः पुनश्च सर्गः प्रामाणिकः स्यात्तदा सर्गादौ परमेश्वरेण शब्दार्थयोः सम्बन्धः कृत इति स्यादपि न चैवमस्ति सर्गप्रलयादावेव प्रमाणाभावादित्यर्थः।

सम्बन्धकरणस्याऽशक्यत्वमाह—अशक्येति। सम्बन्धकरणं हि— 'गोशब्देन सास्नादिमान् पदार्थो बोधव्यः' इत्येव तत्र सर्गादिकाले यथा गोशब्दस्य गोव्यक्तिना सह सम्बन्धो नास्ति तथा सास्नाशब्दस्यापि गलकम्बलेन सम्बन्धो नास्त्येवेति केन वाक्येन सम्बन्धकरणं स्यात्, तदर्थमन्यशब्दार्थयोः सम्बन्धापेक्षायामनवस्थैव, कस्य चिदेव शब्दस्यार्थेन नित्यसम्बन्धोक्तौ च विनिगमनाविरह इति भावः। स्वोक्तवाक्यं विशदयति—यदेति। सम्बन्धकरणाशक्यत्वमुपपादयति—सम्बन्धमिति। सः=सम्बन्धः। विपक्षे बाधकमाह—न चेति। अर्थप्रतिपादकत्वेनाऽप्रसिद्धं सास्नादिशब्दमित्यन्वयः। अगृहीत-

प्रतिपादनाय शक्नोति कर्त्तोच्चारयितुम्, तथा हस्त-सञ्ज्ञादयोपि. प्रतिपादकत्वासिद्धेः ।

नन्वेवमप्रसिद्धसंबन्धस्य कथनमप्यनुपपन्नम्-यद्यपि हि तदा वक्तुः प्रसिद्धसंबन्धत्वात् संबन्धकथनाय वा क्योच्चारणं संभवति तथापि श्रोतारोऽप्रसिद्धसमस्त-पदार्था बालाः कथं वाक्येन संबन्धं प्रतिपद्येरन्? तस्मात् करणवत् कथनमप्यनुपपन्नम् । नैष दोषः-कथयितुस्तावन्न कर्तुरिवाऽशक्तिः- उपायसंभवात्, प्रतिपत्तारस्तूपायाभावान्न प्रतिपद्यन्त इति दृष्टविरुद्ध

---

शक्तिकं सास्नादिशब्दामित्यर्थः । ननु शक्तिग्रहाभावाद्वाक्येन संबन्धग्रहो न भविष्यतीति युक्तं किं तु करचेष्टादिनैव सम्बन्धकरणं भविष्यति मुखेन शब्दमुच्चार्य करेण तद्बोध्ये पदार्थे प्रदर्शिते तेनार्थेन सह तस्य शब्दस्य सम्बन्धग्रहसम्भवादित्याशङ्क्याह- तथेति, एवमपि यं शब्दमुच्चार्य मया यः पदार्थः करेण प्रदर्श्येत तयोः सम्बन्धो ज्ञेय इत्युपदेशस्यापेक्षास्त्येव न चायमुपदेशस्तदा सम्भवति एतदुपदेशवाक्यघटकशब्दानामपि सम्बन्धस्या ऽगृहीतत्वादेवेत्यर्थः । हस्तसञ्ज्ञादयोपीत्यत्र न शक्नोति कर्तुमितिशेषः ।

ननु तव मते शब्दार्थसम्बन्धस्य नित्यत्वेपि तस्य कथनं त्वावश्यकमेव-गोशब्देन सास्नावान् पदार्थो बोधव्य इति, तत्र वक्त्रा कथनस्य सम्भवेपि बालेनाऽवधारणं न सम्भवति कस्यचिदपि शब्दस्य शक्तिग्रहाभावादिति कथनमप्यनुपपन्नमित्याशङ्कते- नन्विति । मीमांसकः परिहरति-नैष इति । उपायसम्भवात्=सम्बन्धकथनोपायस्य सत्त्वात् । सम्बन्धपौरुषेयत्वपक्षे कस्य चिदपि शब्दस्य स्वबोध्यार्थेन सहानादिसबन्धाभावात् कैः शब्दैः शब्दान्तराणां तदर्थैः सह सम्बन्धकरणं स्यादत्यनुपपत्तिरुक्तेति सम्बन्धकरणस्योपायो नास्ति, सम्बन्धकथनपक्षे तु शब्दानां स्वार्थैः सहानादिरेव सम्बन्धः स च वृद्धव्यवहारपरम्परया सम्बन्धकथकेनावगत एवेति स तं तं पदार्थमुद्दिश्य तं तं शब्दमुच्चारयितुं शक्नोतीत्यस्ति सम्बन्धकथनस्योपायः, परं प्रतिपत्तारो बालाः सम्बन्धग्रहोपायाभावात् सम्बन्धं न प्रतिपद्यन्ते इति वक्तव्यं तदपि न सम्भवति प्रत्यक्षमेव बालानां सम्बन्धप्रतिपत्तिदर्शनेन दृष्ट-

म्, दृश्यन्ते ह्यऽप्रसिद्धसमस्तपदार्था बाला वृद्धेभ्यः संबन्धं प्रतिपद्यमानाः।

किं चास्त्युपायो बालानाम्— नाऽवश्यं संबन्धकथनवाक्येनैव वृद्धेभ्यो बालाः संबन्धं प्रतिपद्यन्ते किं तु यदा वृद्धाः प्रसिद्धसम्बन्धाः स्वकार्यार्थेन व्यवहरन्ति तदा तेषामुपशृण्वन्तो बालाः संबन्धं प्रतिपद्यन्ते— यदा हि केनचित् 'गामानय, इत्युक्तः कश्चित् सास्नादिमन्तमानयति तदा समीपस्थो बालोऽगवच्छति—यस्मादयमेतद्वाक्यश्रवणानन्तरमस्मिन्नर्थे प्रवर्तते तस्माद्ऽस्माद्वाक्यादयमर्थः प्रत्यायित इत्येवं संमुग्धरूपेणावगतं प्रत्यायकत्वं पश्चाद्बहुषु प्रयोगेष्वन्वयव्यतिरेकाभ्यां वाक्यभागानां पदानां पदभागानां च प्रकृतिप्रत्ययानां

---

विरोधादित्याह—प्रतिपत्त्यार इति। उक्ते हेतुमाह—दृश्यन्ते इति। अप्रसिद्धसमस्तपदार्थाः=अप्रसिद्धोऽज्ञातः समस्तानां शब्दानामर्थो यैस्ते बालाः।

संबन्धकथनादन्यं शक्तिग्रहोपायमाह—किं चेति। व्यवहारेणापि शक्तिग्रहो भवतीति न तत्र बालस्य वाक्यान्तरज्ञानापेक्षेत्याह— किं त्विति। प्रसिद्धसम्बन्धाः=गृहीतशक्तिकाः। स्वकार्यार्थेन=स्वकार्यार्थमिति यावत्। तेषां समीपस्था बालास्तेषां वाक्यं शृण्वन्तो व्यवहारं च पश्यन्तस्तत्तदर्थे तत्तद्वाक्यस्य शक्तिं गृह्णन्ति, एतदेव विशदयति— यदा हीति। अस्मिन्नर्थे=गवानयनार्थे। अयमर्थः=गवानयनम्। अस्माद्वाक्यादिति जन्यत्वं पञ्चम्यर्थः। प्रत्यायित इति— एतद्वाक्यजन्यप्रत्ययविषयोयमऽर्थो गवानयनरूप इत्यर्थः। सम्मुग्धरूपेणेति— तदा केवलं वाक्यस्य वाक्यार्थप्रत्यायकत्वमऽवगम्यते न तु वाक्यघटकपदानां पदार्थेषु शक्तिग्रहो भवतीति भावः। पदानां पदार्थेषु शक्तिग्रहोपायमाह— पश्चादिति। अन्वयव्यतिरेकाभ्यामिति—'गामानय गां नय' इत्यादौ गोपदसत्त्व एव सास्नादिमत्पदार्थविषयकव्यवहारस्य दर्शनात्, 'अश्वमानयाऽश्वं नय' इत्यादौ च गोपदाभावे सास्नादिमत्पदार्थविषयकव्यवहारस्याऽदर्शनाद्बालो गोशब्दस्य सास्नादिमत्पदार्थे शक्तिं गृह्णातीत्यर्थः। एवमेव प्रकृतिप्रत्ययभागस्यापि व्यवहारेण शक्तिग्रहो ज्ञेयः। विविच्यते—प-

वाक्यार्थभागेषु पदार्थेषु विविच्यते, तस्मान्न पौरुषेयः सम्बन्ध इति न तद्वशेन पुरुषापेक्षास्तीति सिद्धमनपेक्षं वेदानां प्रामाण्यम् ॥

यच्चानन्तरफलानुपलब्ध्या चित्रादीनां न पश्वादिफलत्वमिति। स्यादेवं यदि प्रत्यक्षादिपञ्चकमेव प्रमाणं स्यात्? तदा ह्यनन्तरफलोपलम्भादेव तत्साधनत्वं स्यात् नाऽन्यथा, शब्दस्यापि तु प्रमितिजनकतया प्रत्यक्षादिवत् प्रमाणत्वात्, तेन च चित्रादीनां पशुसाधनत्वाऽवगमादसत्यप्यनन्तरोपलम्भे सिध्यति तत्साधनत्वम्।

ननु प्रमाणान्तरविरोधादप्रामाण्यमित्युक्तम्। न, तद्-

---

दानां पदार्थेषु प्रत्यायकत्वं=बोधजनकत्वं विविच्यते-गोशब्दस्य सास्नादिमानर्थः, आनयनस्य क्रियाविशेषोर्थ इत्येवं भेदेन ज्ञायत इत्यर्थः, सप्तम्यर्थो विषयत्वम्। उपसंहरति-तस्मादिति। तद्वशेन=संम्बन्धकरणवशेन सम्बन्धकरणानभ्युपगमान्न तदर्थं पुरुषापेक्षा येनेश्वरस्वीकारापत्तिरपि स्यादिति भावः। परमोपसंहारमाह-सिद्धमिति। वेदकर्तुः स्वीकारे तु तत्प्रामाण्यापेक्षमेव वेदानां प्रामाण्यं स्यात् नैवमस्तीति सिद्धमनपेक्षं वेदानां प्रामाण्यमित्यर्थः।

॥ इति सम्बन्धाक्षेपपरिहारवादः ॥

चित्राद्याक्षेपपरिहारमारभते-यच्चेति। प्रत्यक्षादिपञ्चकं शब्दभिन्नमित्यर्थः। तदा=प्रत्यक्षादिपञ्चकस्यैव प्रमाणत्वे. इष्ट्यनन्तरं फलोपलब्ध्यैव तत्साधनत्वम्=पश्वादिसाधनत्वं चित्रादीष्टीनां स्यात्। अन्यथा=अनन्तरमेव फलोपलम्भाभावे न स्यात्। न चैवमस्ति शब्दस्यापि प्रमाणत्वात्। तेन=शब्देन "चित्रया पशुकामो यजेत" इत्यादिना चित्रायाः फलसाधनत्वेऽवगते ह्यनन्तरफलोपलम्भाभावेपि तस्य बाधो न भवतीति भावः। तत्साधनत्वम्=पशुसाधनत्वम्।

ननु नैवमुच्यते किं तु इष्ट्यनन्तरं फलानुपलम्भे प्रत्यक्षादिप्रमाणविरोधाच्चित्रादिबोधकवाक्यस्यैवाऽप्रामाण्यमुक्तं तथा च कथमऽप्रमाणभूताच्छब्दादर्थनिश्चय इत्याशङ्कते- नन्विति। पूर्वमप्यभावप्रमाणवादानन्तरम्-"तदिदं प्रत्यक्षाविसंवादेऽवश्यं भाविनि सति तदभावादप्रामाण्यम्" इत्याद्युक्तं तद्

ऽभावात्, नहि शब्दः 'अनन्तरमेव चित्रा फलसाधनम्' इति ब्रूते येन विरोधः स्यात्, साधनत्वमेव प्रतिपन्नं तन्मात्रवचनात्, तस्य चापूर्वद्वारेण कालान्तरेपि तैलपानादिवत् फलसाधनत्वोपपत्तेः।

यत्तु प्रागनुष्ठानाच्छास्त्रार्थावधारणवेलायां नाऽपूर्वमन्तर्भावितमित्युक्तम्, यद्यप्येवं तथापि पश्चादेवमवगच्छति- साधनत्वमात्रेपि शब्देनोक्ते भ्रान्त्या मया साक्षात्साधनत्वमेव प्रतिपन्नं तच्चेदानीमन्यथा जातम्, अतो नूनमस्य केनापि द्वारेण कालान्तरे फलमिति।

---

तत्रैव द्रष्टव्यम्। परिहरति–नेति। तदभावात्=प्रमाणान्तरविरोधाभावात्। यदि श्रुत्या चित्रादिफलस्याऽव्यवधानेनाऽनन्तरभावित्वमुक्तं स्यात्तदानन्तरमेव फलोपलम्भाभावेन प्रत्यक्षविसंवादकृतो विरोधः स्यादपि, न चैवमस्ति फलोत्पत्तिकालमनन्तर्भाव्य फलसाधनतामात्रबोधनादित्याह–न हीत्यादिना। तन्मात्रवचनात्=फलसाधनत्वमात्रकथनात्। तस्य=फलसाधनस्य चित्रादियागस्य। तैलेति–यथा तैलपाने कृतेपि कालान्तर एव तत्फलं भवति तथा चित्रादीनामपि यद्यनन्तरमेव न भवति फलं तदा कालान्तरे भविष्यति, अपूर्वद्वारा कालान्तरेपि फलोत्पत्तिसंभवादिति नाऽप्रामाण्यम्।

ननु यदि चित्रादिष्वपूर्वाश्रयणं स्यात्तदैवमऽपूर्वद्वारा कालान्तरे फलोत्पत्तिरुच्येतापि न चैवमस्ति त्वया हि "चित्रादीनां शास्त्रार्थावधारणसमयेऽपूर्वप्रणाडीसमाश्रयणे कारणं न किंचिदस्ति" इत्युक्तमित्याशङ्कते–यत्त्विति। समाधत्ते–यद्यप्येवमित्यादिना। यद्यपि चित्रादिशास्त्रार्थावधारणवेलायां नापूर्वमाश्रीयते तथापि पश्चादपूर्वस्य द्वारत्वमवगम्यत इत्याह–तथापीति। साक्षात्=अपूर्वं विनैव। एवकारस्य साक्षात्पदेनान्वयः–साक्षादेवेति। तच्च=चित्रादीनां साक्षात्फलसाधनत्वज्ञानम्, अन्यथा=अपूर्वद्वारैव चित्रादीनामपि फलसाधनत्वं न साक्षादित्येवं जातम्=परिणतम्। ज्ञानोपसंहारमाह– अत इति। अस्य=चित्रादियागस्य। केनापि द्वारेण=अपूर्वलक्षणेन द्वारेण। असत्याश्चित्रेष्ट्याः कालान्तरे फलप्रदातृत्वासम्भवादऽपूर्वलक्षणद्वारकल्पनेति भावः।

**प्रागपि च शक्यमेवाऽपूर्वमवगन्तुम्–अनेकेषामङ्गप्रधानकर्मणां क्षणिकानामपूर्वमन्तरेण यौगपद्याऽसंभवात्, पश्वादीनां च दृष्टकारणापेक्षत्वान्न क्षणमात्रेणोत्पत्तिः संभवतीत्यऽवश्यंभाव्यऽपूर्वम् । न च पश्वाद्युत्पत्तिमात्रं फलम्, उपभोगस्य तु चिरकालत्वाद् यावदुपभोगमवस्थास्यमानेन केन चिद्भवितव्यम्, न च क्रियायास्तावत्कालमवस्थानं संभवतीत्यऽपूर्वमङ्गीकर्तव्यमिति तद्द्वारेण युक्तं कर्म कालान्तरे फलदमिति नाऽनन्तरानुपलब्ध्या शास्त्रस्य बाधः ।**

---

शास्त्रार्थावधारणवेलायामप्यपूर्वाश्रयणं सम्भवतीत्याह– प्रागपीति । प्राक्= शास्त्रार्थावधारणवेलायां–वाक्यार्थबोधकाले । हेतुत्वेनाऽपूर्वप्रकल्पनाप्रकारं प्रदर्शयति–अनेकेषामिति । अङ्गप्रधानकर्मणां क्षणिकानां यौगपद्यासम्भवेन फलप्रदत्वावधारणं न सम्भवति सहितानामेव फलप्रदत्वनियमाद् यौगपद्यस्य चाऽपूर्वद्वारैव सम्भवादिति वाक्यार्थबोधकालेप्यऽपूर्वद्वारा चित्रादीनां फलप्रदत्वमवबुध्यत इत्यर्थः । यत्र चेष्टेरव्यवहितोत्तरकालेपि फलं स्यात्तत्राप्यनेकेषामङ्गप्रधानकर्मणां फलोत्पत्त्यऽव्यवहितपूर्वक्षणे यागसमाप्तिक्षणे वा यौगपद्यमवश्यं स्वीकार्यमऽन्यथेष्टेः कारणत्वमेव न स्यान्न च तेषां कर्मणां क्षणिकत्वाद् यौगपद्यं सम्भवतीति वाक्यार्थबोधकालेप्यपूर्वद्वारैव यौगपद्यावधारणं युक्तमिति प्रागपि शक्य एवापूर्वस्यान्तर्भावोवगन्तुमितिभावः । चित्रादावऽपूर्वाश्रयणे हेत्वन्तरमाह–पश्वादीनामिति । पश्वादीनां प्राप्तिर्न यागसमाप्तिक्षणे एव सम्भवतीत्यऽवश्यम्भावि= अवश्यमाश्रयणीयमऽपूर्वम् । दृष्टकारणापेक्षत्वात्=यदा कोपि दास्यति तदा पशुप्राप्तिर्भविष्यति न तु पशोर्भुवः प्रकटनं सम्भवति परतः प्राप्तिकालपर्यन्तमिष्टिस्थितेरसम्भवाच्चेति भावः । अपूर्वाश्रयणे हेत्वन्तरमाह– न चेति । चित्रायाः पश्वादिप्राप्तिमात्रं न फलं किं तु पशूपभोग एव उपभोगश्च चिरकालवर्तीति यावदुपभोगं स्थास्यमानेन कारणेन भवितव्यं न च तावत्कालपर्यन्तमिष्टेः स्थितिः सम्भवतीत्यऽवश्यमपूर्वमङ्गीकर्तव्यम्, यदा चाङ्गीकृतमपूर्वं तदा तद्द्वारा कालान्तरेपि कर्मणां फलप्रदत्वं सम्भवतीति नानन्तरमेव फलानुपलब्ध्या शास्त्रबाधो युक्त इति स्पष्टोर्थः ।

यत्तु प्रत्यक्षविरुद्धं वचनमुपन्यस्तम्–" स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति " इति–एतच्छब्देन प्रत्यक्षं शरीरं यज्ञायुधसंयुक्तमुपदिशतीति। तदभिधीयते–अर्थवादत्वादस्यान्यपरत्वाच्च स्वार्थे प्रमाणान्तरविरोधो दोषः। न च विरोधोऽपि विद्यते न ह्यनेन शरीरस्य स्वर्गगमनमुच्यते। किं तर्हि? आत्मनो यस्यैतच्छरीरम्, सोऽपि हि शरीरशरीरिणोरभेदोपचारेण शरीरस्थेन यज्ञायुधित्वेन प्रत्यक्षत्वेन च व्यपदिश्यते। आत्मनो वा स्वर्गगमनं शरीरे उपचर्यते इति नास्ति विरोधः।

---

ननु मा भवतु चित्रादिवाक्यानां बाधस्तथापि " स एष यज्ञायुधी " इति वचनेन शरीरस्य स्वर्गगमनमुच्यते न च तद् दृश्यते शरीरस्यात्रैव दाहादित्येतादृशानां तु वेदवाक्यानां बाधः स्पष्ट एवेत्याशङ्कते–यत्त्विति। एतच्छब्देन= " स एषः " इत्यनेन। उपदिशतीति–प्रत्यक्षभूतस्य यज्ञायुधसंयुक्तस्य शरीरस्य स्वर्गगमनमुपदिशतीत्यर्थः। परिहरति–तदभिधीयतेत्यादिना। शरीरस्य स्वर्गगमने एव प्रत्यक्षविरोधोऽस्ति न चास्य वाक्यस्य शरीरस्य स्वर्गगमने तात्पर्यमस्त्यऽस्यार्थवादत्वादिति स्वार्थे=शक्यार्थे–शरीरस्वर्गगमने प्रमाणान्तरविरोधेऽपि दोषो नास्ति तत्र तात्पर्याभावादित्यर्थः। अर्थवादत्वं चास्य यज्ञायुधचयनस्य प्रशंसापरत्वाज्ज्ञेयम्। प्रमाणान्तरविरोधाभावमप्याह–न चेति। किं तर्हीति– यद्यनेन वाक्येन शरीरस्य स्वर्गगमनं नोच्यते तदा किमुच्यत इति प्रश्नार्थः। उत्तरमाह–आत्मन इति, यस्यात्मन एतच्छरीरं तस्यात्मनोऽनेन स्वर्गगमनमुच्यत इत्यर्थः। नन्वनेन वचनेन तु "स एषः" इत्येतच्छब्देन प्रत्यक्षभूतं शरीरमेवोद्दिश्य तस्य स्वर्गगमनमुच्यत इति कथमात्मनः स्वर्गगमने तात्पर्यं स्यात्? तथा यज्ञायुधित्वमपि शरीरस्यैवास्ति नात्मन इत्याशङ्क्याह–सोऽपीति। सः=आत्मा। शरीरस्यात्मनाऽभेदोपचारेणैव शरीरस्य स्वर्गगमनमुच्यत इत्यर्थः। उपचारे पक्षान्तरमाह–आत्मनो वेति।

ननु यजमानशब्दस्याऽऽत्मवाचकत्वं कथं स्यात्? आत्मनोऽकर्तृत्वाच्छरीरस्यैव च कर्तृत्वाद् यागकर्तृत्वस्यैव च यजमानशब्दप्रवृत्तिनिमित्तत्वादि-

यजमानशब्दोपि तस्यैव यागस्वामित्वात् कर्तृत्वाच्च वाचकः। न च शक्यते तस्य कापिलवदऽकर्तृत्वं वक्तुं श्रुतिविरोधात्, सर्वत्र हि कर्तृभोक्तृशब्दयोः सामानाधिकरण्यं दृश्यते यथात्रैव-' यजमानः स्वर्गं लोकं याति ' इति। तथा " य एवं विद्वानग्निं चिनुते ऋध्नोत्येव " " य एवं विद्वान् द्विरात्रेण यजते स्वर्गमेव लोकमेति " तथोपनिषत्स्वपि " संकल्पादेवास्य पितरः समुत्तिष्ठन्ति " इति कर्तृत्वाभिधायिन्या षष्ठ्याऽऽत्मनः संकल्पं प्रति कर्तृत्वमुक्तम्।

संभवति च सर्वगतस्याप्यात्मनो यागज्ञानप्रयत्नसं-

---

त्याशङ्क्याह-यजमानशब्दोपीति । तस्यैव=आत्मन एव । नन्वात्मनः कथं यागकर्तृत्वं स्यात् सांख्यादिभिरात्मनः कर्तृत्वस्य पराकृतत्वादित्याशङ्क्याह-न चेति। कापिलवत्=सांख्यवत्। तथा च सांख्यवचनम्- " कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च " इति। आत्मनः कर्तृत्वमुपपादयति-सर्वत्रेति। सांख्यैरपि " पुरुषोस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च " इत्यादिनात्मनो भोक्तृत्वमुक्तमेव अथ च यस्यैव भोक्तृत्वं तस्यैव कर्तृत्वमपि सम्भवत्यऽन्यथा कृतहानिरकृताभ्यागमश्च दोषः स्यात् । अत्रापि यजमानस्यैव कर्तुः स्वर्गभोक्तृत्वमुच्यते । यजनस्य स्वर्गलोकगमनस्य च परस्परमन्वयात् कर्तृभोक्तृशब्दयोः सामानाधिकरण्यं ज्ञेयम्-य एव कर्ता स एव भोक्तेति। न तु शरीरं कर्तृ भोक्ता चात्मेति युक्तम्। एवमन्यत्रापि सामानाधिकरण्यं दृष्टमित्याह-तथेति। सङ्कल्पादेवास्येत्यत्र य एव मुक्तः सङ्कल्पकर्ता तस्यैव स्वपितृसांनिध्यभोक्तृत्वं ज्ञेयम्। स्वाभिप्रायमाह-कर्तृत्वाभिधायिन्येति, अस्येति षष्ठ्या यदि मुक्तस्य सङ्कल्पकर्तृत्वं नोच्येत तदास्य मुक्तस्य सङ्कल्पेन सह कः सम्बन्धः स्याद् येन सङ्कल्पफलभोक्तृत्वं स्यादित्याक्षेपः। कर्तृत्वे च कर्तृत्वमेव सम्बन्धः।

ननु स्पन्द एव क्रिया तथा च शरीरद्वारा तु सम्भवत्यात्मनः कर्तृत्वं साक्षात्तु कथं स्यात् ? आत्मनो व्यापकत्वाद् व्यापकेषु स्पन्दासम्भवादित्याशङ्क्याह- सम्भवतीति । यागज्ञानादिकर्तृत्वेनैवात्मनो यागकर्तृत्वं युक्तमेव शरीरेणाप्येकेन न सर्वो यागः संपद्यते संपादयितुं वा शक्यते। विपक्षे बाध-

कल्पादिषु साक्षादेव कर्तृत्वम्, न हि वयं स्पन्दमेव क्रियामुपगच्छामो वैशेषिकवद् येनात्मनः कर्तृत्वं न स्यात्, धात्वर्थमात्रस्य क्रियात्वाद्। स्पन्देष्वपि प्रयोजकत्वेनास्यैव कर्तृत्वं संभवति, प्रयत्नेन ह्यसौ शरीरं स्पन्दे प्रयोजयति। साक्षात्तु न संभवति सर्वगते स्पन्दस्याऽसंभवात्–इत्यनेनाभिप्रायेण पुराणेषूपनिषत्सु चाऽकर्तृत्ववादाः।

किं पुनः शरीरव्यतिरिक्तात्मसद्भावे प्रमाणम्?, प्राणनादि लिङ्गं सुखादयश्च–प्राणनादिशब्देन कोष्ठ्यस्य

---

कमाह– न हीति। स्पन्देति– स्पन्दश्चलनमेव क्रिया तदुक्तमुपस्कारे–"कर्मत्वं चलतीतिप्रत्ययासाधारणकारणतावच्छेदकजातिमत्त्वं वा. स चायं चलतीति–प्रत्ययसाक्षिकः पदार्थः" इति। न च चलनमात्मनि सम्भवति व्यापकत्वादिति वैशेषिकाभिप्रायः। न चैवं मीमांसकमते स्पन्द एव क्रिया येनात्मनः कर्तृत्वं न स्यादित्याह–येनेति। स्वमतमाह– धात्वर्थेति। तदुक्तम्–

"श्रुतस्वर्गादिबाधेन धात्वर्थः साध्यतां व्रजेत्" इति।

धात्वर्थश्च याग इति स एव क्रिया यागकर्तृत्वं चात्मनः स्पष्टमेव–"यजेत" इत्यादिनोच्यते। क्रियायाः स्पन्दरूपत्वमभ्युपगम्याप्याह–स्पन्देष्वपीति, यदि स्पन्द एव क्रिया तदापि प्रयोजकत्वमात्मन एवास्तीति प्रयोजकत्वलक्षणं कर्तृत्वमस्त्येवेत्यर्थः। उपपादयति–प्रयत्नेनेति। असौ=आत्मा प्रयत्नेन शरीरं स्पन्दे प्रयोजयत्येवेति प्रयोजकत्वं सिद्धम्। प्रयत्नश्चात्मन्येवेत्यविवादम्। न च प्रयत्नं विना प्रवृत्तिरित्यात्मैव प्रयोजकः कर्ता। ननु "नायं हन्ति न हन्यते" "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः" इत्यादिप्रमाणैस्त्वात्मनोऽकर्तृत्वमेवोच्यते त्वया च कर्तृत्वमिति विरोध इत्याशङ्क्याह–साक्षात्त्विति। व्यापके स्पन्दासम्भवादेव साक्षादऽकर्तृत्वमुक्तं न तु शरीरद्वारापि कर्तृत्वनिषेधे तात्पर्यमित्यर्थः।

ननु भवेदात्मनः कर्तृत्वं यद्यात्मा स्यात्तत्रैव प्रमाणं नोपलभ्यत इत्यात्मसद्भावमाक्षिपति– किं पुनरिति। तर्कमतेनोत्तरमाह– प्राणनादीति, प्राणनादिव्यापारः सुखादयश्चात्मसद्भावे लिङ्गं प्रमाणमित्यर्थः। एतदेवोपपा-

वायोरूर्ध्वाऽधोगमनवृत्तिविशेषस्य प्राणनादिशब्दवाच्यस्य हेतुभूतः प्रयत्न उच्यते स च सुखादयश्च न शारीरधर्माः संभवन्ति. अयावच्छरीरभावित्वात् । ये हि कार्यद्रव्यवर्तिनो विशेषगुणा रूपादयस्ते विरोधिगुणान्तराद्वा द्रव्यविनाशाद्वा विनश्यन्ति, प्राणनादयस्तु तदभावेपि नश्यन्ति मृतावस्थायामिति न शरीरगुणाः।

तथा ज्ञानमप्यऽयावच्छरीरभावित्वादेव न शारीरधर्मः । तथा ये प्रत्यक्षविषयाः शरीरगुणास्ते स्वयमिव परैरपि प्रत्यक्षेण गृह्यन्ते यथा रूपादयः, सुखादयस्तु प्रत्यक्षा अपि सन्तो न परप्रत्यक्षग्राह्याः त-

---

दयति- प्राणनादिशब्देनेति । कोष्ठयस्य=कोष्ठसम्बन्धिनः । वृत्तिर्व्यापारः । स च=प्राणानादिव्यापारहेतुभूतः प्रयत्नः । सुखादीनां शरीरधर्मत्वाभावे हेतुमाह-अयावदिति, यावत्कालं शरीरं भवति तावत्कालं सुखादिकं भवत्येवेति नियमाभावात्, मृतावस्थायां शरीरं भवत्येव न च प्राणनादयः सुखादयो वा तदानीं शरीरे भवन्ति यदि शरीरगुणाः स्युस्तदा तदानीमपि स्युरित्यर्थः । उपपादयति- ये हीति । विरोधिगुणान्तरात्=विरोधिगुणोत्पत्त्या यथा पाकेन घटे रक्तरूपे उत्पन्ने श्यामरूपं नश्यति द्रव्यविनाशाच्च यथा रसादिविनाशः । तथा च कार्यद्रव्यवर्तिविशेषगुणा गुणान्तरोत्पत्तिद्रव्यविनाशयोरन्यतरं विना न नश्यन्तीति नियमोस्ति प्राणनादयस्तु तदभावेपि= शरीरलक्षणद्रव्यविनाशाभावेपि नश्यन्ति न चापि मृतशरीरे प्राणनादिविरोधिगुणान्तरोत्पत्तिर्दृश्यते इति न शरीरगुणाः, यस्य चैते गुणाः स एवात्मेति सिद्धमित्यर्थः ।

ज्ञानस्यापि शरीरधर्मत्वाभावमाह–तथेति । यदि ज्ञानं शरीरधर्मः स्यात्तदा मृतशरीरेप्युपलभ्येत न चोपलभ्यते शरीरविनाशाभावेपि ज्ञानविनाशादिति न शरीरगुणो ज्ञानं यस्य च ज्ञानं गुणः स आत्मा । उपपत्त्यन्तरमाह– तथा य इति । यदि सुखादयः शरीरधर्माः स्युस्तदा शरीरधर्मभूतरूपादिवत् परैरपि गृहीताःस्युः न च स्वप्रत्यक्षा अपि स्वसुखादयः परेण ग्रहीतुं शक्यन्त इति न शरीरधर्माः किंत्वात्मधर्मा एवेत्यात्मसिद्धिः । उपसंहरति– तस्मादिति । स्वाभिप्रायमाह–

स्मान्न शरीरगुणाः, तदिदमपि द्वयं सुखादीनां शरीरगुणत्वं निवारयदऽन्यगुणतां सूचयति, योऽसावऽन्यः स आत्मा। किं च सर्वं एव विशेषगुणाः कारणेऽपि वर्तमाना एव कार्यद्रव्यगुणतां भजन्ते न च शरीरकारणभूतेषु पार्थिवपरमाणुषु चैतन्यमस्तीति कथं शरीरगुणता चैतन्यस्य स्यात्?। तस्मादन्यश्चेतनः।

कश्चित् पुनराह—सर्वथा वित्तिषु तावद्वेत्ताऽवभासते अन्यथा स्वपरवेद्ययोरनतिशयप्रसङ्गात्। न च शरीरस्य करचरणाद्यवयवसंनिवेशविशिष्टस्यास्ति तथा-

---

तदिदमिति। इदमपि द्वयम्= सुखादीनामऽयावच्छरीरभावित्वं रूपादिवत्परैरग्राह्यत्वं चेति द्वयम्। यस्य च शरीरातिरिक्तस्य सुखादयो गुणा स एवात्मेत्याह—योसाविति। शरीरात्मवादिना चैतन्यं शरीरगुण एवेत्युक्तं तत्परिहरति— किं चेति। घटस्य यद्रूपं तत्तस्यावयवभूतेषु परमाणुष्वपि भवत्येवेति विशेषगुणस्य कार्ये वर्तमानस्य कारणे सत्ता नियतास्ति तत्र यदि चैतन्यं शरीरगुणः स्यात्तदा शरीरकारणभूतेषु पार्थिवपरमाणुष्वप्युपलभ्येत न चोपलभ्यते तस्मान्न शरीरगुणश्चैतन्यम्, यस्य च चैतन्यं गुण स आत्मा शरीरव्यतिरिक्त एवेत्यर्थः।

ननु सुखादीनामन्तःकरणधर्मत्वान्न नैरात्म्यसिद्धिः सम्भवति किं तु ज्ञाने ज्ञानस्वरूपातिरिक्तो विषयातिरिक्तश्च यो वेत्ता भासते स एवात्मेति साधनीयम्, विपक्षे बाधकमाह—अन्यथेति। अन्यथा=ज्ञानेषु वेत्तुरात्मनोऽवभासाभावे अहं जानामीति प्रतीतिर्न स्यात् किं तु जानातीत्येव प्रतीतिः स्यात् सा चैषा जानातीतिरूपा प्रतीतिस्तु परवेद्यविषयापि भवतीति स्वज्ञाते परज्ञाते च घटे घटं जानातीत्येकरूपप्रतीतिप्रसक्त्या स्वपरवेद्ययोरतिशयो न स्यात्, अस्ति चातिशयः स च परवेद्ये जानातीति स्ववेद्ये च जानामीति प्रतीतिकृत एव जानामिजानातीतिप्रतीत्योश्चाऽऽत्मावभासाऽनवभासकृत एव भेदोऽस्ति ज्ञानत्वस्योभयत्राप्यविशेषात्, जानामीति प्रतीतिश्च स्पष्टमेवात्मानं परामृशति तस्मात् सर्वज्ञानेष्वात्माऽवभासते एवेत्यर्थः। एवं ज्ञानमात्रे विज्ञेयम्। तथा च यो वित्तिषु=ज्ञानेषु विषयज्ञानाभ्यामतिरिक्तोऽवभासते स आ-

ऽवभासः, अतोऽन्यः शरीरादात्मेति । तत्त्वऽयुक्तम्-संनिवेशाऽप्रतिभासेपि शरीरप्रतिभाससंभवात्. न हि संनिवेश एव शरीरं शरीरधर्मो हि संनिवेशः, संभवति च धर्माऽप्रतिभासेपि धर्मिणः प्रतिभासः, अन्यथाऽऽत्मनोपि प्रतिभासो न स्यात् तद्धर्माणां सर्वग-

---

त्मेति प्राप्तम्, न च शरीरस्य तथा=अव्यभिचारेण प्रत्येकज्ञानेऽवभासो भवतीति न शरीरमेवात्मा किं तु शरीरातिरिक्त एवेत्येवमात्मसिद्धिर्वक्तव्या न सुखादिभिस्तेषामात्मधर्मत्वाभावादिति प्रभाकरमतेन पूर्वपक्षमुत्थापयति-कश्चिदिति । तथा च ज्ञानभिन्नत्वे सति विषयभिन्नत्वे सति प्रतिज्ञानं भासमानत्वमाऽऽत्मत्वमिति सिद्धम् । उक्तं चात्र प्राभाकरैः—

" सर्वविज्ञानहेतूत्था मितौ मातरि च प्रमा ।
साक्षात् कर्तृत्वसामान्यात् प्रत्यक्षत्वेन सम्मता ॥

यावती काचिद् ग्रहणस्मरणरूपा प्रतीतिस्तत्र साक्षादात्मा प्रतिभाति न ह्यात्मन्यऽनवभासमाने विषया भासन्ते, सर्वा हि प्रतीतिरेवमुपजायते-अहं जानामीति न पुनर्जानातीति काचिद् बुद्धिरस्ति, अन्यथा हि स्वपरवेद्ययोरनतिशयः स्यात् । तस्मात् सर्वैरेव ज्ञानहेतुभिरात्मनि साक्षात्कारवती धीरुपजन्यते । नन्वेवं तर्हि सर्वं प्रत्यक्षं प्रसक्तम् ? यदि मात्रऽभिप्रायम् ? इष्टमेव, प्रमेयाभिप्रायमिति चेत् ?, न, सर्वत्र प्रमेयस्याऽपरोक्षत्वनियमाभावात् ।" इति । काचिद् बुद्धिरित्यत्र स्ववेद्याविषयेति शेषः । तथा-" घटमहमुपलभे इति घटस्यानुभविता शरीरातिरिक्तः प्रतिभासते शरीरं हि करचरणाद्यनेकावयवयोगि न च घटाद्यनुभवसमये तस्यावभासोऽन्वयी " इति ।

परिहरति-तत्त्वयुक्तमिति । शरीरधर्मस्य करचरणाद्यवयवसंनिवेशस्य ज्ञानेषु प्रतिभासासम्भवेपि शरीरस्य धर्मिणः प्रतिभासः सम्भवत्येव शरीरावच्छेदेनैवात्मनि ज्ञानोत्पत्तेरऽवच्छेदकस्यापि प्रतिभाससम्भवादिति ज्ञानेषु भासमानस्य शरीरस्याप्यात्मत्वं स्यादित्यर्थः । हेतुमाह- नहीति । विपक्षे बाधकमाह-अन्यथेति । यदि शरीरधर्मस्य संनिवेशस्य प्रतिभासासम्भवे शरीरप्रतिभासोपि न स्यात्तदाऽऽत्मधर्माणामपि सर्वगतत्वादीनां ज्ञानेषु प्रतिभासो न भवतीत्यात्मनोपि प्रतिभासो न स्यादेवेत्यर्थः । अर्थज्ञानेष्वात्मभा-

तत्वादीनामर्थवित्तिष्वऽप्रतिभानात् । न चैकान्तिकम-ऽर्थवित्तिषु वेत्तृभानम्,अर्थ एव हि तदा भासते न वेत्ता।

न च स्वपरवेद्ययोरनतिशयः नहि वेतृभासनकृतो-यमऽतिशयः किं तु कस्यचिदेव किं चिदाभासते ना-ऽन्यस्य–इत्येतावानऽतिशयो नान्यः, तस्मान्न ज्ञातृप्र-तिभासेन शरीरविवेकसिद्धिः, किं तु पूर्वोक्तादेव कारणात्= ज्ञानसुखादीनां शरीरगुणत्वाऽसम्भवात् ततोऽन्य एतेषामाऽऽश्रयः स एवात्मा।

सौगतास्त्वाहुः—

" सिद्धे ज्ञानसुखादीनां गुणत्वे गुणिकल्पना ।
न तु तत्सिद्धमस्माकं तावन्मात्रोपपत्तितः ॥"

---

तनियमं निराकरोति– न चेति । ऐकान्तिकम्=नियतम् । वेत्तुरभाने हेतु-माह–अर्थ एवेति । तदा=विषयज्ञानकाले ।

नन्वेवं स्वपरवेद्ययोरतिशयो न स्यात्. ज्ञानविषयत्वस्य स्ववेद्ये घट इव परवेद्येपि सत्त्वात्, वेतृभानस्वीकारे तु परवेद्येन घटेन सह स्वात्मभानाभावा-देव विशेषः स्यादित्याशङ्क्याह– न चेति । हेतुमाह–न हीति । यदि स्वपर-वेद्ययोर्वेतृभासनकृत एव विशेषः स्यात्तदा तद्विशेषोपपत्त्यर्थं वेतृभानं स्वीक्रि-येतापि नैवमस्ति किं तु परवेद्यो न भासते स्ववेद्यश्च भासते इति विषयभानकृत एव स्वपरवेद्ययोर्विशेष इत्यर्थः । वेदने स्वीयत्वपरकीयत्वविशेषकृतोपि वेद्य-योर्विशेष इत्यपि ज्ञेयम् । ज्ञानं घटविषयकमथ च तत्रात्मापि भासत इति य-च्चुच्यते तदा मेरुरपि किं न भासेत, इत्यलमनेन बालवादेन । उपसंहरति–तस्मादिति । आत्मनस्तु ज्ञानेषु भानं भवति शरीरस्य च न भवतीति शरी-राद् व्यतिरिक्त आत्मेत्येवं न शरीरातिरिक्तात्मसिद्धिः संभवति किं तु पूर्वो-क्तादेव हेतोरित्यर्थः । पूर्वोक्तरीत्या ज्ञानसुखादीनां शरीरगुणत्वासम्भवात् ततः=शरीरादन्य एवैतेषाम्=ज्ञानसुखादीनां य आश्रयः स एवात्मेत्यर्थः ।

एवं प्रभाकरपक्षं पराकृत्य सौगतपक्षं पराकर्तुं तमुपक्रमते–सौगता इ-त्यादिना । सिद्धेति– यदि ज्ञानसुखादीनां गुणत्वं स्याच्चदा तदाश्रयभूत-गुणित्वेनात्मकल्पना स्यादपि न चैवमस्ति ज्ञानसुखादीनां गुणत्वाभावात्

न ह्याश्रयमन्तरेण ज्ञानमात्रमनुपपन्नं स्वतन्त्रमेव ज्ञानं किं नेष्यते ? सुखादयोपि ज्ञानविषयाः स्वतन्त्रा एव अन्यस्याश्रयस्यानुपलब्धेः । ज्ञानमेव च नीलमहं जानामीति ज्ञातृत्वेन विपर्यासितदर्शनैरध्यवसीयते नान्यः प्रमाणाभावात् ।

ननु ज्ञानस्य क्षणिकत्वात् कथं पूर्वेद्युरुपलब्धे ऽपरेद्युः स्मरणमिच्छा प्रत्यभिज्ञा च ? न हि स्वयमनुपलब्धे तानि सम्भवन्ति- न हि देवदत्तेनोपलब्धेऽर्थे यज्ञदत्तस्य स्मरणादीनि सम्भवन्ति ? । सत्यम्- न स-

---

तदाश्रयभूतगुणिनं विनापि तावन्मात्रस्य=स्वतन्त्रभूतस्य ज्ञानादेरुपपत्तिसम्भवादित्यर्थः । तत्=गुणत्वम् । सौगतमते ज्ञानमेव विविधाकारेण भासत इति न तदाश्रयत्वेनात्मकल्पना क्रियते । तदुक्तम्—

" सहोपलम्भनियमादभेदो नीलतद्धियोः ।
भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाऽद्वये ॥" इत्यादि ।

सौगतः स्वाभिप्रायं प्रकटयन्नाक्षिपति- नहीनि । स्वतन्त्रम्=आश्रयान्तराऽनधीनम् । ननु सुखादीनामुपभोग्यानां भोक्तारमात्मानं विना कथमुपपत्तिः स्यादित्याशङ्क्याह-सुखादय इति । स्वतन्त्राः=निराश्रयाः । अन्यस्य=ज्ञानातिरिक्तस्यात्मत्वेनाभिमतस्याऽऽश्रयस्यानुपलब्धेः, सर्वस्य ज्ञानपरिणामत्वात् । नन्वस्तु नीलतज्ज्ञानयोरभेदो ज्ञातृज्ञानयोस्त्वभेदः कथं स्यादित्याशङ्क्याह-ज्ञानमेवेति । ज्ञानमेव भ्रान्त्या ज्ञातृत्वेन भासत इत्यर्थः । विपर्यासितदर्शनैः=भ्रान्तैः ।

ननु येन प्रथमं ज्ञायते तस्यैव कालान्तरे ज्ञातविषयकं स्मरणमिच्छा वा प्रत्यभिज्ञा वा भवतीति नियमोस्ति अन्यथा देवदत्तेन ज्ञातस्य यज्ञदत्तस्यापि स्मरणं स्यान्न चैवं भवति, ज्ञानं च क्षणिकं विषयं ज्ञात्वा द्वितीयक्षणे एव नष्टं तदिति कथं ज्ञानान्तरेण ज्ञातं ज्ञानान्तरेण स्मृतं स्यादिति ज्ञानस्मरणयोः कर्ता स्थिरः कश्चिदाश्रयणीयस्तथा च स एवात्मेत्याशङ्कते-नन्विति । तानि=स्मरणादीनि । सौगत उत्तरमाह- सत्यमिति । यदि ज्ञानसन्तानस्य भेदः स्यात्तदा स्मरणादीनि न स्युः न चैवमस्त्येकस्मिन् जन्म-

म्भवन्ति सन्तानभेदे. समानायां तु सन्ततावेकेनोपलब्धेऽन्यस्य स्मरणाद्युपपन्नं दृष्टत्वात्, न ह्युपलब्धुः स्मर्तुश्चैकत्वं कचिदपि दृष्टम्, एकस्य स्थास्नोः पुरुषस्य कचिदप्यनुपलब्धत्वात्, तस्माज्ज्ञानमेव ज्ञातृ नान्यो ज्ञातास्तीति।

अत्रोच्यते—

प्रत्यभिज्ञायते कर्ता यः पूर्वापरकालयोः।
तस्य स्थास्नोः स्फुटो भेदो विज्ञानात्क्षणभङ्गुरात्॥

विषयप्रत्यभिज्ञानानुपपत्तेर्ज्ञातुरेकत्वकल्पनायां स्यादप्येतदुत्तरम्–सन्तानैकत्वादेवोपपद्यत इति, यदा तु ज्ञातैवैकः पूर्वापरकालयोः प्रत्यभिज्ञायते–'योहं पू-

---

नि सन्तानभेदाभावाद सन्तानभेदो हि मरणेनैव भवति, ज्ञानसन्तानस्यैकत्वात् तद्घटकीभूतेनैकेन ज्ञानेन ज्ञातस्य विषयस्य तद्घटकीभूतस्यापरस्य ज्ञानस्य स्मरणादिकं नानुपपन्नं दृष्टत्वात्–एवमेव हि लोके दृष्टमस्ति स्थिरस्यात्मनोऽभावेपि स्मरणादिकं लोके भवत्येव ज्ञानं च तव मतेपि क्षणिकमेवेति ज्ञानसन्तानैकत्वादेव स्मरणादिकमुपपादनीयमित्यर्थः। विपक्षे प्रत्यक्षबाधमाह–न हीति, यदि कचिदपि स्थिरो ज्ञाता स्मर्ता चोपलभ्येत तदा तद्दृष्टान्तेन स्थिरात्मवादो ज्ञानस्मरणयोश्चैककर्तृकत्वमुपपाद्येत न चैवमस्तीत्यर्थः। उपसंहरति–तस्मादिति।

निराकर्तुमारभते–अत्रोच्यत इत्यादिना। प्रत्यभिज्ञायत इति–'योहं पूर्वमद्राक्षं स एवाहं स्मरामि स्पृशामि' इत्यादौ पूर्वापरकालवर्त्तिनः स्थिरस्यैकस्य दर्शनस्मरणयोः कर्तुः प्रत्यभिज्ञा भवति न च सा मिथ्या बाधाभावाद्दोषानुपलब्धेश्चेत्युक्तप्रत्यभिज्ञाविषयः कोपि स्वीकार्यः स एवात्मा स्थिरः, तस्य प्रत्यभिज्ञाविषयस्य स्थास्नोः=स्थिरस्यात्मनः क्षणभङ्गुराज्ज्ञानाद्भेदः स्फुट एव ज्ञानस्य क्षणिकत्वात् तस्य च स्थिरत्वादित्यर्थः। संक्षेपेणोक्तं विशदयति–विषयेति, यदि स एवायं घट इति विषयप्रत्यभिज्ञोपपादनार्थं ज्ञातुरेकत्वकल्पना स्यात्तदा सा सन्तानैकत्वेनाप्युपपद्यत इति त्वदुक्तमुत्तरं युक्तं स्यादपि या तु ज्ञातुरेव प्रत्यभिज्ञा सा तु सन्तानैकत्वेन नोपपद्यते, प्रत्यभिज्ञावि-

र्वमद्राक्षं स एवाहमनुपश्यामि' इति तदा प्रत्यभिज्ञयैव ज्ञातुरेकत्वावगमात्, विज्ञानस्य च क्षणिकत्वात् ततोऽन्यो ज्ञाता सिद्धो भवतीति।

किमहंप्रत्ययगोचरो ज्ञाता स्यात् ? तथा सति शरीरमेव जानामि कृशोऽहं स्थूलोऽहं गच्छाम्यहमिति कार्श्यादिबुद्धिसामानाधिकरण्यादऽहम्बुद्धेर्गोचरः, आत्मनश्च सर्वगतस्य कार्श्याद्यऽनुपपत्तेः।

उच्यते- ज्ञातृविषयस्तावदऽहंप्रत्यय इत्यविवादम्, यो हि परामृशति स स्वात्मानम्-'अहम्' इति परामृशति परान्-'इदम्' इति तेन निस्संशयमऽस्य ज्ञातृगोच-

---

षयस्य पूर्वापरकालसंबन्धावश्यकत्वात् पूर्वापरकालसंबन्धश्च स्थिरस्यैवेति ज्ञातुस्तद्विषयप्रत्यभिज्ञयैवैकत्वं सिद्धमित्यर्थः। ज्ञानस्य च क्षणिकत्वान्न प्रत्यभिज्ञाविषयत्वं संभवति येन ज्ञानस्यैव ज्ञातृत्वमुपपद्येतेत्याह-विज्ञानस्येति। ततः=ज्ञानात् अन्यो ज्ञाता=आत्मा सिद्धः।

यदुक्तम्-" योऽहं पूर्वमद्राक्षं स एवाहमनुपश्यामि " इति तत्राऽद्वैती शङ्कते-किमिति। किं योऽहंप्रत्ययगोचरः स एव ज्ञाता ? यद्यहंप्रत्ययगोचरो यः स एव ज्ञाता तदा ' कृशोऽहम्' इत्यादावहंप्रत्ययगोचरः शरीरमेवेति शरीरस्यैव ज्ञातृत्वं स्यादिति भावः, "जानामि कृशोऽहम्" इत्यत्र ' कृशोऽहमित्यहं जानामि ' इत्येवमन्वयो ज्ञेयः, एवमग्रेऽपि। कथमऽहंप्रत्ययगोचरत्वं शरीरस्येत्याह-कार्श्यादिबुद्धिसामानाधिकरण्यादिति-कार्श्यादिबुद्धिसमानविषयत्वादित्यर्थः। समानविषयत्वं च कार्श्यादिबुद्ध्यऽहंबुद्धिभ्यां शरीरस्यैव विषयीकरणात्। कार्श्यादिबुद्धेः शरीरविषयकत्वे हेतुमाह-आत्मनश्चेति, आत्मनि व्यापकत्वात् कार्श्याद्यनुपपत्तेः शरीरे च कार्श्यादिप्रत्यक्षाच्छरीरस्यैवाहंप्रत्ययगोचरत्वं युक्तं तस्मादहंप्रत्ययगोचरस्य ज्ञातृत्वे शरीरस्यैव ज्ञातृत्वं प्राप्नुयात्, न चैतद्युक्तं शरीरात्मवादप्रसंगादिति नाहंप्रत्ययगोचरो ज्ञातेत्यर्थः

अस्योत्तरमारभते-उच्यते इत्यादिना। "किमहं प्रत्ययगोचरो ज्ञाता" इति वचनमिष्ट्यापत्त्या स्वीकरोति-ज्ञातृविषय इति। अत्र हेतुमाह-यो हीति। आत्मनोऽहमिति परामर्शविषयत्वादहंप्रत्ययविषयत्वं नचात्मभिन्नस्याहंप्रत्यय-

रत्वम्. शरीरस्य च ज्ञातृत्वं निराकृतम्, अतोऽत्यन्तसंसृष्टयोरेकत्वभ्रान्त्या सामानाधिकरण्यप्रतीतिरुष्णतोयप्रतीतिवद् भास्वरायःपिण्डप्रतीतिवच्च ।

तथा व्यतिरेकबुद्धिरपि दृश्यते–'ममेदं शरीरं कृशम्' इति षष्ठ्याऽस्मदर्थस्य शरीरव्यतिरेकात्, शरीरस्य च परविषयेदङ्कारास्पदत्वात्, ततोऽस्माद्विवेकावभासात्

---

विषयत्वं तस्येदंप्रत्ययविषयत्वात् । स्वाभिप्रायमाह–तेनेति, उक्तहेतुना अस्य=अहंप्रत्ययस्य ज्ञातृगोचरत्वम्=ज्ञातृविषयकत्वं सिद्धम् । उक्तं च "युष्मदस्मत्प्रत्ययगोचरयोः"इत्यादि। शरीरस्य च ज्ञातृत्वमनुपदमेव निराकृतम्–"तथा ज्ञानमप्ययावच्छरीरभावित्वादेव न शरीरधर्मः" इत्यादिनेति न शरीरस्याहंप्रत्ययविषयत्वमित्यर्थः ।ननु यदि शरीरस्याहंप्रत्ययविषयत्वमेव नास्ति तदा'कृशोऽहम्' इति प्रतीतिः कथं स्यात्? अत्र ह्यहंप्रत्ययविषयमुद्दिश्य कृशत्वविधानात् । यस्य हि शरीरस्य कृशत्वं संभवति न तस्याहंप्रत्ययविषयत्वं यस्य चात्मनस्तव मतेऽहंप्रत्ययविषयत्वं तस्य कृशत्वं न संभवतीत्याशङ्क्याह–अत इति, यतः कृशत्वप्रत्ययाहंप्रत्यययोर्भिन्नविषयत्वमेव वास्तवमऽतो भ्रान्त्या सामानाधिकरण्यं प्रतीयते, यथा 'जलं दहत्ययो दहति' इत्यत्र दाहकत्वं न जलस्याऽयसो वा धर्मस्तथापि वन्हिसंबन्धात्प्रतीतिर्भवति तथा शरीरात्मनोरप्यत्यन्तसंसृष्टत्वाद् भ्रान्त्या शरीरेऽहंप्रत्ययो भवत्यात्मनि च कृशत्वप्रत्ययो भवतीत्यर्थः।

नन्वेवं शरीरात्मनोरभेद एव किं न स्यादित्याशङ्क्य किं वा शरीरात्मनोरेकत्वबुद्धेर्भ्रमत्वसिद्ध्यर्थं भेदसाधकव्यवहारं दर्शयति–तथेति । व्यतिरेकबुद्धिः=भेदबुद्धिः । षष्ठ्या=ममेति षष्ठ्या । अस्मदर्थस्य=आत्मनः । अभेदेहि मम शरीरमिति प्रतीतिर्न स्यात् किं त्वहं शरीरमिति प्रतीतिः स्यात् । मम शरीरमिति च प्रतीतिर्यथार्थैव बाधाभावादिति भेद एव वास्तवः । शरीरादात्मनो भेदहेतुं प्रदर्श्यात्मनः शरीरस्य भेदहेतुमाह–शरीरस्य चेति । "ममेदं शरीरम्" इत्यत्र शरीरस्येदंशब्दबोध्यत्वात् । परेति–परविषयः=आत्मभिन्नविषयको य इदङ्कारस्तदास्पदत्वात् =तद्विषयत्वादित्यर्थः ।

उपसंहरन् शरीरात्मनोर्भेदे हेतून् प्रदर्शयति– तत इति । अस्मात्=ममेदं शरीरमिति भेदावभासात्, शरीरस्याऽज्ञातृत्वात् ज्ञातुश्चावश्यकत्वात्, कृशो-

पूर्वोक्तन्यायेन च शरीरस्याऽज्ञातृत्वात्, अभेदावगमस्य च संसर्गदोषवशेन भ्रान्त्याप्युपपत्तेः, पूर्वाभ्यस्तस्मृत्यनुबन्धेन च विना जातस्य हर्षभयशोकसंप्रतिपत्त्यनुपपत्तेः। जातिस्मराश्च केचिदद्यत्वेपि देहान्तररहोवृत्तं वृत्तान्तं सम्बोधयन्त उपलभ्यन्त इत्युपलब्धिसिद्धः शरीरात्मनोर्भेदः।

यद्यपि चानेन प्रकारेण शरीरात्मनोर्विस्पष्टो भेदो न सिध्येत् तथापि तावदऽभेदोपि न विस्पष्टः- मम शरीरमिति विवेकस्यापि प्रतिभासात्। तत्र संमुग्धे तत्त्वे श्रुतार्थापत्त्या साक्षात् श्रुत्या वा निर्णयः-स्वर्ग-

---

हमित्याद्यभेदावगमस्य संसर्गदोषवशेन=शरीरात्मनोर्यः संबन्धस्तादृशदोषवशेन भ्रान्त्याप्युपपन्नत्वात्, शरीराद्भिन्न एवात्मेत्यर्थः। तथा बालस्य लाभेन हर्षो भवति सर्पादिदर्शनेन भयं भवति मातृमरणेन शोकश्च भवति तत्र च न बालेन तस्मिन् जन्मनि लब्धवस्तुन उपकारित्वमनुभूतं येन तल्लाभेन हर्षः स्यात्, नापि सर्पस्यानिष्टकारित्वमनुभूतं येन तस्माद्भयं स्यात्, न चापि मातृमरणेन हानिरनुभूता येन शोकः स्यादिति पूर्वजन्मन्यऽनुभूतस्यैवोपकारित्वादेरस्मिन् जन्मनि स्मरणं वक्तव्यं गत्यन्तराभावात्, न च शरीरस्यानेकजन्मसंबन्धः संभवति नूतनशरीरसंबन्धस्यैव जन्मपदार्थत्वादिति शरीरव्यतिरिक्तः स्थायी कश्चिदात्माऽवश्यं स्वीकर्तव्य इत्यर्थः। स्मृत्यनुबन्धेन=स्मृतिरूपकारणेन स्मृतिपरम्परया वा, संप्रतिपत्तिः=निश्चयः प्राप्तिर्वा। शरीरात्मभेदे प्रत्यक्षमूलामर्थापत्तिं प्रमाणयति-जातिस्मराश्चेति, देहान्तरवृत्तान्तबोधनेन ज्ञायते शरीरव्यतिरिक्त एव कश्चिदात्मेति, अन्यथाऽस्य शरीरस्य पूर्वजन्मन्यभावात् किंविषयको वृत्तान्तः स्यादित्युपलब्धिसिद्धः=प्रत्यक्षसिद्धः शरीरात्मभेद इत्यर्थः। रहोवृत्तम्=रहसि जातम्।

ननु कृशोहमित्यादीनां व्यवहाराणां सत्त्वात् तेषां च शरीरात्मनोर्भेदेनुपपन्नत्वात् कथं भेद एवेत्युच्यत इत्याशङ्क्याह-यद्यपीति, उत्तरमाह-तथापीति। हेतुमाह-ममेति। नन्वेवं भेदोपि न स्यादऽभेदोपि न स्यादित्युभयहानिरेव वास्यात् संशय एव वा स्थिरः स्यादित्याशङ्क्याह-तत्रेति। संमुग्धे=संशयिते। निर्णय

कामादिश्रुतयो हि शरीरातिरिक्तं परलोकफलोपभोग-
योग्यं कर्तारमन्तरेणाऽनुपपद्यमानास्तमाक्षिपन्ति ता-
भिश्चाक्षिप्तं साक्षादेवोपनिषदः समर्थयन्ति- " अवि-
नाशी वा अरेऽयमात्मा " इत्येवमादयः, इति सिद्धः
शरीरातिरिक्तो मानसप्रत्यक्षरूपाऽहंप्रत्ययगम्यो ज्ञाता।

कथं पुनर्ज्ञातुर्ज्ञेयत्वम् ? न ह्येकस्य कर्तृत्वं कर्मत्वं च
स्वात्मनि क्रियाविरोधात् सम्भवति, तस्मान्नाहंवि-
त्तिर्नाम घटादिवित्तिव्यतिरेकेण काचिदस्ति, घटादि-
वित्तावेव तु विषयवदात्मा भासत इत्युक्तम्।

---

इत्यत्र कर्तव्य इति शेषः। श्रुतार्थापत्तिं प्रथमं प्रमाणयति—स्वर्गेति। यदि शरी-
रातिरिक्तः स्वर्गभोक्ता कश्चिदात्मा न स्यात्तदा यागादिविधायकश्रुतयो व्यर्थाः
स्युरिति शरीरातिरिक्तमात्मानमाक्षिपन्ति—स्वर्गादिभोक्तारं विना स्वर्गादिभो-
गस्यानुपपन्नत्वेन यागादेरप्यनुपपन्नत्वादिति श्रुतार्थापत्त्याऽऽत्मसिद्धिः। सा-
क्षाच्छ्रुतिं प्रमाणयति—अविनाशीवेति। उपसंहरति— इति सिद्ध इति। मा-
नसेति— मानसप्रत्यक्षरूपो योऽहंप्रत्ययस्तद्गम्य इत्यर्थः।

यदुक्तम्—" मानसप्रत्यक्षरूपाहंप्रत्ययगम्यः " इति तत्प्राभाकरमुखेना-
ऽऽशङ्कते—कथमिति। स्वनिरूपितं स्वस्यैव ज्ञातृत्वं न सम्भवति कर्मकर्तृभाव-
विरोधात्, ज्ञानान्तरस्वीकारे त्वनवस्थैवेति भावः। उपपादयति— न हीति।
ज्ञाता तु ज्ञातैव भवति न ज्ञेय इति न तन्मात्रविषयकं ज्ञानं सम्भवतीत्याह—
तस्मादिति। यदि ज्ञातुर्ज्ञेयत्वं स्यात्तदा तन्मात्रविषयाऽहंवित्तिः स्वीक्रियेतापि
न चैवमस्तीत्यर्थः। तस्मादहंवित्तिरेव घटादिज्ञानातिरिक्ता नास्ति यद्विषयत्वं
ज्ञातुरुच्येत किं तु घटादिज्ञानेष्वेव विषयवदात्माप्यवभासते तदेतत् प्रागेवोक्त-
मित्याह—घटादीति। "उक्तम्"इत्यत्र "युक्तम्"इत्यपि पाठः। उक्तं च प्राभाकरैः—

" बुद्धीन्द्रियशरीरेभ्यो भिन्न आत्मा विभुर्ध्रुवः।
नानाभूतः प्रतिक्षेत्रमर्थवित्तिषु भासते ॥" इति।

तथा—" न ह्येकस्य कर्तृत्वं कर्मत्वं च स्वापेक्षमुपपद्यते स्वात्मनि क्रियावृत्ति-
विरोधात्, न चाहंसंविद्दर्शनाविरोधः स्वयंप्रकाशत्वेन विषयप्रतीतिगोचरत्वे-
नापि तदुपपत्तेः, विषयैः सहोपलम्भनियमश्चैवं सत्युपपन्नः।" इति।

कः पुनरयं स्वात्मनि क्रियाविरोधो नाम ?, यस्यां क्रियायां यः कर्ता न सा तस्मिन्नेव स्वफलं जनयतीत्यर्थः । किं पुनः संवित्तिक्रियायाः फलम् ?, भासनम् । किमिदं कर्तरि न भवति ?, ओमिति चेत् ?, कथं तर्ह्यसौ भासते ? न ह्यसति भासने भासते इति शक्यते वक्तुम्, तस्मादर्थवित्तिष्वप्यात्मनो भासनाभ्युपगमे स्वात्मनि क्रियाविरोधस्तुल्य एव । व्यवहारयोग्यतामात्रं संवित्तेः फलं नान्यदिति चेत् ?, भवत्वेवम्. अस्ति तावत्फलं तच्च विषयेष्विवात्मन्यपि संवित्तितो जायत इत्यङ्गीकृतं भवद्भिः, अतस्तुल्यो विरोधः ।

---

उक्ते स्वात्मनि क्रियाविरोधे मीमांसकः शङ्कते—कः पुनरिति । पृष्टं स्वात्मनिक्रियाविरोधस्वरूपमाह—यस्यामिति, यथा छेदनक्रियायां यो देवदत्तः कर्ता तस्मिन् देवदत्ते एव सा छेदनक्रिया स्वफलं द्वैधीभावं न जनयति किं तु वृक्षादौ जनयति, एवमहमितिज्ञानक्रियायामात्मैव कर्तेति तस्मिन्नेव भासनलक्षणं फलं कथं स्यात् ? । ज्ञानक्रियायाः फलं मीमांसकः पृच्छति—किं पुनरिति । उत्तरमाह—भासनमिति । मीमांसक आक्षिपति— किमिदमिति । इदं भासनं किं कर्तरि=कर्तृविषयकं न भवति ? । ननु न भवतीत्याशङ्कते—ओमिति चेदिति । मीमांसकः पुनराक्षिपति—कथमिति । असौ=आत्मा । आक्षेपे हेतुमाह—नहीति । स्वपक्षे प्राप्तं स्वात्मनि क्रियाविरोधं प्रभाकरपक्षेपि निक्षपति—तस्मादिति । घटादिज्ञानेष्वपि यद्यात्मा भासते तदापि तस्य ज्ञेयत्वं प्राप्तमेव अथ च घटादिज्ञानेष्वपि सैव ज्ञातेति तव पक्षेपि कर्मकर्तृविरोधस्तुल्य एवेत्यर्थः । ननु घटादिज्ञानेषु भासमानस्याप्यात्मनो ज्ञातुर्न ज्ञेयत्वं भवति ज्ञेयत्वस्य घटादिमात्रवृत्तित्वात् आत्मनि तु घटादिज्ञानेन व्यवहारयोग्यतामात्रम्=स्फुरणमात्रं फलं भवतीति न मत्पक्षे स्वात्मनि क्रियाविरोध इत्याशङ्कते—व्यवहारेति । उत्तरमाह—भवत्वेवमिति, व्यवहारयोग्यतामात्रस्यापि ज्ञानफलस्य ज्ञातरि स्वीकाराद्विरोधस्तुल्य एव तदवस्थ इत्यर्थः ।

ननु " अन्य एव तद्विदितादथोऽविदितादधि " इत्यादिश्रुतिभिर्विदिक्रियाकर्मत्वप्रतिषेधात् कर्मत्वस्वीकारे परमार्थविरोधः स्यात् तस्माज्ज्ञानक्रिया-

**यदि परमार्थविरोधमुद्भाव्य सत्यप्यात्मनः क्रियाजन्यफलभागित्वे कर्मसञ्ज्ञा कर्मविभक्तिश्च न भवतीत्युच्यते "परसमवायिक्रियाफलभागित्वं कर्मत्वम्" इत्यभिधानात्?। तच्चाऽयुक्तम्–शब्दसाधुत्वं हि प्रयोगतोऽवगन्तव्यम्, अस्ति चात्मनः स्वकर्तृकायामेव क्रियायां कर्मव्यवहारो लोके वेदे च–यथा तावद्भाष्य एव "स्वसंवेद्यः स भवति" इति कर्मवाचिकृत्यप्रत्ययप्रयोगः, वेदेपि–"आत्मानमुपासीत" "आत्मानं वेद" "आत्मा ज्ञातव्यः" इत्यनेकशः प्रयोगः।**

---

जन्यस्फुरणाख्यफलभागित्वेप्यात्मनः कर्मसञ्ज्ञा न भवति कर्मसञ्ज्ञाऽभावाच्चात्मबोधकशब्देभ्यः कर्मविभक्तिरपि न भवति, कर्मसञ्ज्ञा हि कर्मत्वे सति स्यात् न चात्मनः कर्मत्वं संभवति परसमवेतक्रियाफलभागित्वस्यैव कर्मत्वात् न चात्मनः परसमवेतज्ञानक्रियाफलभागित्वं संभवति तस्य स्वयंप्रकाशत्वात् "येनेदं सर्वं विजानाति तं केन विजानीयात्" "यद्वाचाऽनभ्युदितं येन वागभ्युद्यते" "न दृष्टेर्द्रष्टारं पश्येर्न विज्ञातेर्विज्ञातारं विजानीयाः" इत्यादिश्रुतिविरोधाच्चेत्याशङ्कते–यदीति। परिहरति–तच्चायुक्तमित्यादिना। कर्मविभक्तिर्न भवति वेति शब्दसाधुत्वविचारः शब्दसाधुत्वं च नास्माकमधीनं किं तु वृद्धप्रयोगादेवावगन्तव्यमित्याह–शब्देति। आत्मनः कर्मत्वे शावरभाष्यं प्रमाणयति–भाष्य एवेति, तथा च भाष्यम्–"अत्रोच्यते–स्वसंवेद्यः स भवति नासावन्येन शक्यते द्रष्टुं कथमसौ निदर्श्येत" इति, अन्यात्मनाऽन्यात्मा न द्रष्टुं शक्यते इत्यर्थः स्वात्मनः स्वमात्रप्रत्यक्षत्वात्। शावरभाष्ये एवोक्तम्–"एवमसौ पुरुषः स्वयमात्मानमुपलभते न चान्यस्मै शक्नोति दर्शयितुमऽन्यस्य द्रष्टुस्तं पुरुषं प्रति दर्शनशक्त्यभावात् सोप्यन्यः पुरुषः स्वयमात्मानमुपलभते न च परमाऽऽत्मानम्" इति। शारीरकेप्यात्मनः कर्मत्वेन व्यवहारः कृतः–"ब्रह्म हि ज्ञानेनाप्तुमिष्टतमत्वात् प्रधानं तस्मिन् प्रधाने जिज्ञासाकर्मणि परिगृहीते" "ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म" इत्यादिः। आत्मनः कर्मत्वे आत्मशब्दस्य च कर्मविभक्तियुक्तत्वे श्रुतिं प्रमाणयति–वेदेपीति, प्रयोगः=आत्मनः कर्मत्वेन कर्मविभक्तियुक्तत्वेन च प्रयोगोस्तीत्यर्थः।

न च गन्तुर्गमने कर्मत्वम्. प्रयोगाभावात् । शब्दसाधुत्वे हि प्रयोगपरवशा वयं न स्वयमीश्महे, यथा हि चलनार्थत्वे समाने गच्छतिः सकर्मकः चलतिश्चाकर्मकः प्रयोगस्य तथादर्शनात्, एवं ज्ञातुः कर्मत्वं गन्तुश्चाकर्मत्वं भविष्यति । तस्मान्मानसाहंप्रत्ययगम्य आत्मा तथा च श्रुतिः-" स मानसीन आत्मा जनानाम् " इति । तेन यद्यपि विषयवित्तिवेलायामेवाऽऽत्मावभासस्तथापि न विषयवित्तिकर्तृतयाऽवभासः किं तु मानसाहंप्रत्ययकर्मतयाऽवभासो न तद्वित्तिकर्मतयाऽव्याप्तेः।

ननु शरीरवदात्मन्यप्यहमभिमानो भ्रान्तिरेव ?, न,

---

ननु यदि ज्ञातुरपि ज्ञानक्रियाकर्मत्वं स्यात्तदा गन्तुरपि गमनक्रियाकर्मत्वं स्यादित्याशङ्क्याह- न चेति । गन्तुर्गमने कर्मत्वं न भवति ज्ञातुश्च ज्ञाने कर्मत्वं भवतीत्यत्र न वयमीशाः किं तु यथावृद्धप्रयोगमेवैषा व्यवस्था भवति तथा च यथा हि चलनं गमनं चैकरूपमेव तथापि गम्धातुः सकर्मकः-ग्रामं गच्छतीति प्रयोगात्, चलधातुश्चाकर्मकः-देवदत्तश्चलतीति प्रयोगात्, तथा गन्तुर्गमनकर्मत्वं न भवति ज्ञातुश्च ज्ञानकर्मत्वं भवत्येव तथैव वृद्धव्यवहारात् । उपसंहरति-तस्मादिति, यस्माज्ज्ञातुर्ज्ञानक्रियाकर्मत्वं तस्मान्मानसाहंज्ञानविषय एवात्मा । अत्र श्रुतिं प्रमाणयति- सेति । सः=आत्मा । मानसीनः=मानसगम्यः । विरोधं परिहरति-तेनेति । आत्मनो विषयज्ञानकर्तृत्वेन प्रतीतिर्न भवति येन कर्तुः कर्मत्वं न भवतीतिविरोधः स्यात् किं तु मानसाहंज्ञानकर्मतयैव प्रतीतिर्भवति, विषयवित्तिकर्मतयापि न प्रतीतिर्भवति विषयवित्तौ विषयस्यैव कर्मत्वात्, अव्याप्तेरिति-सकलेषु विषयज्ञानेष्वात्मावभासाभावात् किं तु मानसाहंप्रत्ययकर्मतयैव प्रतीतिर्भवतीत्यर्थः । अत्र च ' न विषयवित्तिकर्तृतया न वा विषयवित्तिकर्मतयाऽवभासो भवत्यव्याप्तेः किं तु मानसाहंप्रत्ययकर्मतयावभासः ' इत्येवं युक्तः पाठः ।

ननु यथा शरीरे कृशोहमित्यादावात्मत्वाभिमानो भ्रान्तिरेव तथाऽऽत्मन्यप्यहमित्यभिमानो भ्रान्तिरेव, अहंपदस्याहङ्कारवाचकत्वादित्याशङ्कते- नन्विति । परिहरति-नेति । बाधे सत्येव भ्रान्तित्वं भवति यथा शुक्तिरजतज्ञानस्य

बाधाभावात्। योगिनामस्ति बाध इति चेत् ?, न, प्रमाणाभावात्।

तथा च येऽपि योगस्य परां काष्ठामुपागताः।
योगेश्वरेश्वरास्तेऽपि कुर्वन्त्यात्मन्यहंमतिम्॥
"अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा।"
"तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप।"
"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।"
"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्।"
"मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्।"
एवमादावऽहंशब्दः परस्मिन् पुंसि हि ध्रुवम्।

न हि महद्विकारोऽहङ्कारः कृत्स्नस्य प्रभवः, नापि क्षराऽक्षराभ्यामुत्तमः, नापि ब्रह्मशब्दवाच्ये प्रधाने गर्भं दधाति, पुरुषसंपर्ककृतत्वात् प्रकृतिक्षोभस्य। तथोप-

---

न चात्मन्यहंप्रत्ययस्य बाध इति न भ्रान्तित्वम्। ननु योगिनां तत्त्वदर्शिनामात्मन्यहंप्रत्ययस्य बाधो भवतीत्याशङ्कते—योगिनामिति। परिहरति—नेति। योगेश्वराणामप्यात्मन्यहंप्रत्ययो भवत्येवेत्याह— तथा चेति। अत्र भगवद्गीतां प्रमाणयति— अहमित्यादिना। उक्तगीतावाक्येष्वहंशब्दः परमात्मबोधक एव, यद्यहंशब्दोऽहङ्कारपर एव स्यात्तदोक्तगीतावाक्येष्वहंशब्दः परमात्मनि न प्रयुक्तः स्यात् किं वा भगवता स्वात्मनि न प्रयुक्तः स्यादिति भावः। प्रभवः=उत्पत्तिस्थानम्। प्रलयः=लयस्थानम्। तानि=पूर्वजन्मानि। क्षरम्=प्रधानम्। उक्तं च "तमसः परस्तात्" इति। अक्षरात्=जीवात्मनः। विष्टभ्य=व्याप्य। महद्ब्रह्म=प्रधानं तस्मिन् प्रधाने प्रपञ्चकारणभूते मम=स्वकीये गर्भम्=जीवात्मानम् दधामि=संयोजयामि, तेन संयोगेन सृष्टिर्भवतीत्यर्थः। स्वाभिप्रायमाह— एवमादाविति। ननूक्तवाक्येष्वप्यहंशब्दोऽहङ्कारविषय एव किं न स्यादित्याशङ्क्याह— न हीति। उक्तवाक्येष्वहंपदवाच्यस्य प्रपञ्चकारणत्वं क्षराक्षराभ्यामुत्तमत्वं प्रधाने जीवसंयोजकत्वं चोक्तं न च तदऽहङ्कारस्य प्रकृतिविकारमहत्तत्त्वविकारभूतस्य सम्भवतीत्यर्थः। अहङ्कारस्य प्रकृतौ गर्भसंयोजकत्वाभावे हेतुमाह—पुरुषेति। जीवात्मना प्र-

निषत्स्वपि-" ब्रह्म वा इदमग्रे आसीत् " " तदात्मान-मेव वेदाहं ब्रह्मास्मि" इति, मन्त्रवर्णोपि-" अहं मनुर-भवं सूर्यश्च " इति । तस्मादहंप्रत्ययगम्यत्वमात्मनो-ऽनिच्छन्तः श्रुतिविरोधादेवोपेक्षणीयाः ।

यत्तु निर्मुक्ताहङ्कारममकारवचनम्, तदपि पौर्वापर्ये-ण परामृष्यमाणं नाहङ्कारस्वरूपनिषेधार्थं भवति, एवं हि तद्वचनम्-' नास्य कश्चित् नायं कस्यचित्. निर्मु-क्ताहङ्कारममकार एवायम् ' इति, तदयमर्थः-यस्मा-न्नास्य कश्चित् तस्मान्निर्मुक्तममकारः, यस्मान्नायं कस्य-चित् तस्मान्निर्मुक्ताहङ्कार इति । यद्यहङ्कारस्वरूपनिषेधः स्यात्. न पूर्वेण संबध्येत-' यस्मान्नयं कस्यचित् तस्मा-

---

कृतेः संयोगे जाते हि प्रकृतिक्षोभो भवति प्रकृतिक्षोभाच्च महत्तत्त्वमुत्पद्यते तस्मादहङ्कार इत्यनुत्पन्नस्याहङ्कारस्य कथं प्रकृतौ गर्भाधायकत्वं स्यादि-त्यर्थः । तस्मादुक्तवाक्येष्वहंपदेन परमात्मैव प्रतिपाद्यते । परमात्मनः प्रकृतौ गर्भाधायकत्वे सर्वेभ्यः पूर्वं परमात्मनः सत्त्वे वा प्रमाणमाह-ब्रह्म वेति । आत्म-नोऽहंपदवाच्यत्वे श्रुतिं प्रमाणयति-आत्मानमिति, अहमिति च । उपसंहरति-तस्मादिति । अनिच्छन्तः=अद्वैतवादिनः । उक्तं च—

" अहमर्थो न चेदात्मा प्रत्यक्त्वं नात्मनो भवेत् "

" अतोहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम् ।" इत्यादि ।

ननु यद्यात्मन्यऽहन्ता स्यात्तदात्माऽहंप्रत्ययगम्यः स्यान्न चैवमस्ति नि-र्मुक्ताहंकारममकारवचनविरोधादित्याशङ्क्याह-यत्त्विति । परिहरति-तद-पीति । नाहङ्कारस्वरूपनिषेधार्थम्=नात्मन्यहन्तानिषेधार्थम् । पूर्वपक्ष्यभिप्रेतं वचनमर्थतः पठति- नास्य कश्चिदिति । वचनार्थं व्याचष्टे-यस्मादिति । य-दि कोप्यात्मनः स्यात्तदा 'ममेदम्' इत्येवं ममकारः स्यात्, न चास्तीति नि-र्मुक्तममकार आत्मा । यस्मान्नायमिति-यद्यात्मा कस्य चित् स्यात्तदा ' अ-हमस्य ' इत्येवमहङ्कारः स्यात् न चास्तीति निर्मुक्ताहङ्कार आत्मेत्यर्थः । वि-पक्षे बाधकमाह-यद्यहङ्कारेति, यद्यात्मन्यहन्तानिषेधः स्यात्तदाऽसङ्गतिरेव स्या-दित्यर्थः । असङ्गतिप्रदर्शनार्थं पूर्वपक्ष्यभिप्रायेण वाक्यं रचयति-यस्मान्नाय-

दस्मिन्नऽहंभावो भ्रान्तिः ' इति किं केन सङ्गतम् ?, तस्मान्नायमहन्तास्वरूपनिषेधः ।

किं तर्हि ?, जन्मसंबन्धितयाऽऽत्मन्यहंमतिः–' अहमस्य पिता. अहमस्य पुत्रः ' इत्यादिः स भ्रम इत्येवं सङ्गतं भवति । अयमात्मा न कस्य चिदपि पुत्रादिरूपेण संबन्धी जन्यजनकभावस्य शरीरविषयत्वात्. शरीरं हि शरीराज्जायते न त्वाऽऽत्माऽऽत्मान्तरात्, तस्मादन्यसंबन्धितयाऽऽत्मन्यहंमतिः कृशादिमतिवच्छरीराद्विवेकमऽबुध्यमानानां भ्रान्तिरिति । तदिदमस्याऽन्यसंबन्धित्वनिषेधेन पुत्रादिविषयस्नेहनिवर्तनेन वैराग्यजननार्थमुच्यते, नाहंकारस्वरूपस्याऽयं निषेधोऽनुपयोगादऽसङ्गतत्वात् प्रमाणान्तरविरो-

---

मिति । 'यस्मान्नयमात्मा कस्य चित्तस्मादस्मिन्नहं भावो भ्रान्तिः' इत्यसङ्गत एव वाक्यार्थबोधः स्यादित्याक्षिपति– किं केनेति, स्वाभिप्रायमाह–तस्मादिति ।

पूर्वपक्षी पृच्छति– किं तर्हीति । यद्यहन्तास्वरूपत्वं न निषिध्यते तर्ह्युक्तवाक्येन किं प्रतिपाद्यत इत्यर्थः । उत्तरमाह–जन्मेति । जन्मसम्बन्धितया=शरीरसम्बन्धेन । 'अहमस्य ममेदम्' इति प्रतीतिर्भ्रम एवेत्यात्मनि किं चित्सम्बन्धित्वं नास्तीत्येतावन्मात्रेणाहन्ताममताराहित्यं प्रतिपाद्यते न त्वात्मन्यऽहन्ताऽभावः प्रतिपाद्यत इत्यर्थः, इत्यादिरित्यत्र जायते इति शेषः । उक्तं स्ववाक्यं विशदयति– अयमात्मेत्यादिना । वाक्याभिप्रायमुपसंहरति–तस्मादिति । यथा कृशोहमित्यादिज्ञानमात्मनि भ्रान्तिरेव तथात्मनि 'अहमस्य ममेदम्' इति मतिरपि शरीरादात्मनो भेदमबुध्यमानानामेवाऽविदुषां भवतीति भ्रान्तिरेव, भ्रान्तित्वे च हेतुरन्यसम्बन्धितयेत्युक्तस्तस्मान्न निरुपाधिकाया अहंमतेर्भ्रान्तित्वमित्यर्थः । ननु यद्यस्त्येवात्मन्यहन्ता तदा 'अहमस्य ममेदम्' इत्येवंमतेर्भ्रान्तित्वनिरूपणे निर्मुक्ताहङ्कारममकारवचनानां किं प्रयोजनमित्याशङ्क्याह– तदिदमिति । इदम्=निर्मुक्ताहङ्कारममकारत्वम् । अस्य=आत्मनः । वैराग्यजनने पुत्रादिविषयस्नेहनिवर्तनं हेतुस्तत्राप्यन्यसंबन्धित्वनिषेधो हेतुः। स्वाभिप्रायमाह– नाहङ्कारेति । प्रमाणान्तरविरोधात्=अयमह-

धात् " अहं ब्रह्मास्मि " इति वचनविरोधाच्च । तस्मादऽहंप्रत्ययगम्यो ज्ञाता शरीरातिरिक्त इन्द्रियव्यतिरिक्तश्च ।

कथमिन्द्रियभेदः ?, इन्द्रियाभावेपि ज्ञातुरेकस्य प्रत्यभिज्ञानात्-योऽहं रूपमद्राक्षं सोऽहं स्पृशामीति, योऽहमग्रहीषं सोऽहं स्मरामीति । मनस्तु प्रत्यक्षसिद्धस्य ज्ञातृ रूपादिज्ञानेषु व्यतिरिक्तकरणाधीनत्वात् सुखादिज्ञानेषु भवितव्यं करणेनेत्येवं कल्प्यत इति नास्य ज्ञातृत्वमाशङ्कनीयम् ।

---

मित्याद्यात्मन्यहन्ताप्रत्यक्षविरोधात् । आत्मन्यहन्तानिषेधे श्रुतिविरोधमाह-अहं ब्रह्मास्मीति, अत्राहंपदवाच्यस्य ब्रह्मपदवाच्यस्य च विशिष्टाद्वैतबोधनादहंपदवाच्य आत्मेत्येव युक्तं तस्माद् युक्तमहंप्रत्ययगम्यत्वमात्मनस्तथा शरीरव्यतिरिक्तत्वमिन्द्रियव्यतिरिक्तत्वं च सिद्धमित्याह-तस्मादिति ।

ननु काणोहमित्यादिप्रतीत्येन्द्रियस्यैवात्मत्वं प्रतीयते काणत्वादेरिन्द्रियधर्मत्वात् काणाहंपदयोश्च सामानाधिकरण्यात् अहंपदस्य चात्मवाचकत्वादिति कथमात्मन इन्द्रियव्यतिरिक्तत्वमुक्तमित्याशङ्कते- कथमिति । परिहरति-इन्द्रियाभावेति । प्रथमं देवदत्तेन घटश्चक्षुषा दृष्टस्तदनन्तरं चक्षुर्नष्टं तत्र घटस्पर्शकाले ' योहं रूपमद्राक्षं सोहं स्पृशामि ' इत्येवमात्मप्रत्यभिज्ञा भवति यदीन्द्रियमेवात्मा स्यात्तदा रूपग्राहकचक्षुर्नाशानन्तरं ' सोहं स्पृशामि ' इति प्रत्यभिज्ञा न स्यात् भवति चैषा प्रत्यभिज्ञेति ज्ञायत आत्मेन्द्रियभिन्न एवेत्यर्थः । प्रत्यभिज्ञास्वरूपमाह-योहमिति। आत्मनि यदीन्द्रियभेदो न स्यात्तदेन्द्रियाभावे ज्ञातुरेकस्य प्रत्यभिज्ञापि न स्यान्न चैवमस्तीति सिद्धो भेदः । ननु मनस एव ज्ञातृत्वमस्त्वलमधिकात्मकल्पनयेत्याशङ्क्याह-मन इति । यद् यज्ज्ञानं तत्तत्सकरणकमेवेति यथा वाह्यरूपादिज्ञानेष्वात्मनः स्वव्यतिरिक्तचक्षुराद्यधीनत्वमस्ति तथा सुखादिज्ञानेष्वपि स्वव्यरिक्ताधीनत्वात् सुखादावान्तरे चक्षुरादीनां च प्रवृत्त्यसम्भवात् सुखादिज्ञानकरणत्वेन मनः कल्प्यत इति न मनस आत्मत्वं सम्भवति, आत्मानं विना मनःकल्पनाया एवाभावात्कस्यात्मत्वं स्यात् ? । अस्य=मनसः ।

ये तु कर्तृतयैवात्मसिद्धिर्न कर्मतयेत्याहुः तेषामात्मनि स्मरणप्रत्यभिज्ञाने नोपपद्येयाताम्, तत्रापि हि पूर्वकालसंबन्धित्वेनात्मनः प्रतिभासोऽङ्गीकरणीयः, न च सांप्रते स्मरणे पूर्वकालसंबन्धिनः कर्तृत्वं संभवतीति कथं कर्तृतया सिध्येत्? तस्मादहंप्रत्ययकर्मतयैवात्मनः सिद्धिरिति रमणीयम्।

अथ स्वप्रकाशत्वमात्मनः सुखादीनां च किं नेष्यते?, स्वप्रकाशस्य कस्य चिदप्यदर्शनात्. सर्वस्यैव हि वस्तुनः

---

ननु यद्यप्यहंप्रत्ययादात्मसिद्धिस्तथापि 'जानाम्यहं गच्छाम्यहं देवदत्तोऽहम्' इत्यादौ सर्वत्राहंप्रत्ययेष्वात्मनः कर्तृत्वेनैव भानादहंप्रत्ययकर्तृत्वेनैवात्मसिद्धिर्वक्तव्या न त्वहंप्रत्ययकर्मत्वेन एकस्यैव कर्तृत्वकर्मत्वयोर्विरोधात् आत्मनोऽविषयत्वाच्चेत्याशङ्कते—ये त्विति। परिहरति—तेषामिति। तेषां मते आत्मविषयकं स्मरणं प्रत्यभिज्ञा च न स्यात्, स्मरणे हि स्मर्यमाणस्य प्रत्यभिज्ञायां च प्रत्यभिज्ञायमानस्य कर्तृत्वेन भानाभावात् कर्मत्वेन विषयत्वेनैव वा भानसम्भवादित्यर्थः। एतदेवोपपादयति— तत्रापीति। तत्र=स्मरणे प्रत्यभिज्ञाने च विषयस्य पूर्वकालसम्बन्धित्वेनैव प्रतीतिर्भवतीत्यात्मनोपि स्मरणे प्रत्यभिज्ञाने वा पूर्वकालसम्बन्धितयैव प्रतीतिः स्वीकार्या न च सांप्रते=इदानीन्तने स्मरणे इदानीन्तनस्य कर्तृत्वेपि पूर्वकालसम्बन्धिनः कर्तृत्वं सम्भवति कर्मत्वादिति कथं कर्तृतयात्मसिद्धिः स्यात्। आत्मप्रत्यभिज्ञा च स एवाहमित्यादिरेवेत्यहंप्रत्ययकर्मत्वेनैवात्मसिद्धिर्युक्तेत्याह—तस्मादिति। किं च प्रत्यभिज्ञयैवात्मसिद्धिर्भवति प्रत्यभिज्ञायाः पूर्वापरकालसम्बन्धिविषयकत्वात् अन्येषां तु ज्ञानानां शरीरेन्द्रियविज्ञानादिविषयत्वेनाप्युपपत्तेः प्रत्यभिज्ञायां चात्मनः कर्मत्वेनावभासस्यावश्यकत्वादन्यथात्मप्रत्यभिज्ञाया निर्विषयत्वापत्तेः।

ननु स्वयंप्रकाश एवात्मेति कथमहंप्रत्ययस्यापि विषयः स्यात्? किं चात्मनः स्वयंप्रकाशत्वादेव सिद्धिरस्तीति कृतमहंप्रत्ययविषयत्वेनात्मसिद्ध्या तथा सुखादिकमपि स्वयंप्रकाशमेवेति कृतं मनःकल्पनयेत्याशङ्कते— अथेति। दृष्टान्तासिद्ध्या परिहरति—स्वप्रकाशस्येति। न च दीपादीनां स्वप्रकाशत्वम्, तेषामपि प्रकाशस्य चक्षुराद्यधीनत्वात् अन्यथान्धस्यापि दीपः प्रकाशेत न च

परप्रकाश्यत्वनियमात् । स्वप्रकाशत्वे चात्मा सुषुप्ताव-
पि प्रकाशेत न च प्रकाशते यथोक्तम्-" अचेतयन्नेव
सुषुप्त इत्युच्यते " इति ।

ननु सुषुप्तावपि प्रकाशत एवात्मा स्वाभाविकपर-
मानन्दयुक्तः, अन्यथा कथम्-'सुखमहमस्वाप्सम्, इति
प्रबोधे प्रतिसंधानं स्यात् ?, अर्थान्तरं तु न किं चि-
च्छरीरमिन्द्रियमन्यद्वा वस्तु प्रकाशत इत्येतावान् स्व-
प्नजागराभ्यां सुषुप्तेर्भेदः । नैतदेवम्-संविद्विरोधात्,

---

प्रकाशते तस्मात् परप्रकाश्य एव, दीपादितुल्यौपचारिकस्वप्रकाशत्वस्यात्म-
न्यपि स्वीकारादित्यर्थः । विपक्षे बाधकमाह-स्वप्रकाशत्व इति । सुषुप्तावात्मा-
ऽप्रकाशे प्रमाणमाह- अचेतयन्नेवेति । योऽचेतयन् भवति स सुषुप्त इत्युच्यते ।
प्रकाशमानस्याऽचेतयद्रूपत्वं न संभवतीत्यऽचेतयद्रूपत्वान्न सुषुप्तावात्मा प्रकाश-
ते इति प्राप्तं सुषुप्तौ प्रकाशाभावाच्च स्वप्रकाशत्वाभावः प्राप्त इत्यर्थः ।

ननु यदि सुषुप्तावात्मा न प्रकाशेत तदा प्रबोधे जाते यत् कदाचित् 'सु-
खमहमस्वाप्सम्' इति प्रसिन्धानम्=स्मरणं भवति तन्न भवेत् अनुभूतस्यैव-
स्मरणसम्भवात्. सुषुप्तावात्मप्रकाशस्वीकारे तु सुषुप्तौ प्रकाशमानस्यैवात्मनः
सुखस्वरूपस्य प्रबोधे जाते 'सुखमहमस्वाप्सम्' इति स्मरणं भवति किं वात्मनः
सुखेन स्थितेः स्मरणं सम्भवतीत्याशङ्कते-नन्विति । सुषुप्ताविन्द्रियादिकं तु
नैव प्रकाशते यद्विषयकमिदं स्मरणमुच्येतेत्याह-अर्थान्तरमिति । अत्र हेतुतया
स्वप्नजागराभ्यां सुषुप्तेर्भेदं दर्शयति-इत्येतावानिति, किं वा यदिसुषुप्तावप्यात्मा
प्रकाशेत तदा सुषुप्तेः स्वप्नजागराभ्यां भेदो न स्यादित्याशङ्क्याह-अर्थान्तरमिति,
यदि सुषुप्तावप्यात्मातिरिक्तं किं चिच्छरीरादिकं प्रकाशेत तदा स्वप्नजागराभ्यां
सुषुप्तेर्भेदो न स्यात्, नैवमस्ति किं तु जागरे शरीरादीनामपि प्रकाशो भवति,
स्वप्ने च बाह्यपदार्थप्रकाशाभावेपि मनसः प्रकाशो भवति, सुषुप्तौ त्वात्मन
एव प्रकाशो भवतीति विवेकः । परिहरति-नैतदेवमिति । संविद्विरोधात्=सु-
प्तेन मया न किं चिदपि ज्ञातमित्यादिज्ञानविरोधात्, अन्यथा 'सुषुप्तावन्यप्र-
काशाभावेप्यात्मप्रकाश आसीदेव' इत्येवं परामर्शः स्यात् । किं च यदि सु-
षुप्तावात्मा प्रकाशेत तदा योगिनः समाधिं त्यक्त्वा सुषुप्तिपरायणा एव स्यु-

न हि सुप्तानामात्मा सुखं वा प्रकाशते, नह्यऽभासमानं व्यवहारमात्रेण प्रकाशत इति शक्यमङ्गीकर्तुम्।

किं च सुष्वापादुत्थिताश्चैवं निर्विद्यन्ते हि कामुकाः—

वृथेयमन्तरेणैव कामिनीं यामिनी गता।
आश्लिष्टामप्यबुद्ध्वैनां मृतवच्छयितं मया॥
भुक्त्वा च परमानन्दं तस्य च स्मरणादयम्-।
स्वल्पाल्पसुखहान्यैवं निर्वेदो नावकल्पते॥
तत्सुखं विस्मृतं चेत् स्यात्? सुखमस्वाप्समित्ययम्-।
व्यवहारो न युज्येत, दुःखाननुभवे त्वियम्-॥
सुखव्यवहृतिस्तस्माद् गुणवृत्त्येति निश्चयः॥

---

रित्यादि विभावनीयम्। स्वाभिप्रायमाह—न हीति। विपक्षे बाधकमाह— नहीति। सुखमहमस्वाप्समिति व्यवहारमात्रेणाऽभासमानस्याप्यात्मनः प्रकाशो न शक्योऽङ्गीकर्तुम्, अन्यथाऽमात्येपि नृपत्वापत्तिः स्यादित्यर्थः।

बाधकन्तरमाह— किं चेति। एनाम्=कामिनीम्। यदि सुषुप्तावात्मा प्रकाशेत तदैवं पश्चात्तापः कामुकस्य न स्यादित्यर्थः। स्वाभिप्रायमाह—भुक्त्वेति। यदि सुषुप्तावात्मानन्दस्य भोगः स्यात्तस्य च प्रबोधे 'सुखमहमस्वाप्सम्' इत्येवं स्मरणं स्यात्तदा स्वल्पाल्पस्य कामिनीसुखस्य हान्यापि "वृथेयमन्तरेणैव" इत्येवं निर्वेदो न स्यात् तस्मान्न सुषुप्तौ सुखं प्रकाशत इत्यर्थः। परमानन्दस्याऽस्मरणादेवं निर्वेदो भवतीत्याशङ्क्योक्तम्—स्मरणादिति। स्वल्पाल्पेत्यत्र स्वल्पशब्दः परिच्छिन्नपरः, अल्पशब्दश्च तस्यापि लेशतां वक्ति। ननु भुक्तमपि तत्सुखं विस्मृतमिति हेतोर्निर्वेदः सम्भवतीत्याशङ्क्याह—तत्सुखमिति। यदि सुषुप्तिकालिकं सुखं विस्मृतं तदा 'सुखमहमस्वाप्सम्' इत्येवं प्रतिसन्धानं न स्यात्, भवति च प्रतिसंधानमथ च निर्वेदोपि भवति तस्मान्नैव सुषुप्तौ सुखं प्रकाशते किं तु यथा भारापगमे सुखी संवृत्तोहमित्येवं दुःखाभावे सुखत्वमुपचर्यते तथैव सुषुप्तावपि दुःखं न किं चिदपि भवतीति दुःखाभावे एव सुखव्यवहारो गौणीवृत्त्या भवति—सुखमहमस्वाप्समितीत्येव युक्तमित्याह—दुःखाननुभवेति। व्यवहृतिः=व्यवहारः।

प्रबुद्धा हि सुषुप्तावऽवगतं किं चिदपि दुःखमसंस्मरन्तः स्मरणानुत्पत्त्यैव सुषुप्त्यऽवस्थायां मे न किं चिदपि दुःखमासीदित्यवगम्य तत्रैव सुखव्यवहारं गुणवृत्त्या-कुर्वन्ति, तथा च व्यवहरन्ति-एतावन्तं कालमहमात्मा-नमप्यबुद्धा शयितोस्मीति । तस्मात् सुषुप्तावप्रकाशा-ऽऽत्मनः स्वप्रकाशत्वम्, अतो मानसप्रत्यक्षगम्य एवा-यमिति स्थितम् ।

स पुनरयमात्मा- अणुः शरीरपरिमाणो विभुर्वेति चिन्तनीयम् । तत्राणुपरिमाणत्वे युगपच्छिरःपादयो-र्वेदनानुपपत्तिः । अयौगपद्येप्यतिशैघ्र्याद् यौगपद्या-

---

पद्यैः संगृहीतमर्थं स्वयं विशदयति गद्येन-प्रबुद्धाहीति । सुषुप्तौ न किं चिदपि दुःखमवगतमऽत एव तदस्मरन्तो जनाः स्मरणानुत्पत्त्यैव=दुःखस्मरण-स्योत्पत्त्यभावेनैव " सुषुप्त्यऽवस्थायां मे न किं चिदपि दुःखमासीत् " इ-त्यवगम्य तत्रैव=दुःखाभावे एव 'सुखमहमस्वाप्सम्' इत्याकारकं सुखव्यव-हारं गुणवृत्त्या=गौणीवृत्त्या=लक्षणया (उपचारेण) कुर्वन्तीत्यर्थः । अयं भावः-यदि सुषुप्तौ किं चिदपि दुःखमनुभूतं स्यात्तदा कदा चित् प्रबोधका-ले तस्य स्मरणं स्यादपि न च स्मरणं भवतीति तादृशस्मरणानुत्पत्त्यैव प्र-बुद्धा जनाः 'सुषुप्तौ किं चिदपि दुःखं नासीत्' इत्यध्यवस्यन्ति ततश्च दुः-खाभावे एव सुखव्यवहारं कुर्वन्ति, सुषुप्तौ सुखानुभवे हि वृथेयमन्तरेणैवेत्यु-क्तदिशा प्रबुद्धानां निर्वेदो नोपपद्येत तस्मान्न सुषुप्तौ सुखानुभवः प्रामाणिक इति । प्रबुद्धव्यवहारमाह-एतावन्तमिति, " अहमात्मानमप्यबुद्धा शयितोस्मि" इति प्रबुद्धव्यवहारेण सुषुप्तौ सुखाननुभव आत्माऽप्रकाशश्च स्पष्टमेव सिद्धः । यदा हि सुषुप्तावात्मैव न प्रकाशते तदा दूरे सुखप्रकाशचर्चा । अयम्=आत्मा ।

अणुमध्यमविभुभेदेन त्रिविधः परिमाणस्तत्र किंपरिमाणकोयं जीव । इति विवेक्तुमारभते-स पुनरयमित्यादिना । प्रथममणुपरिमाणकत्वं पराकरोति-तत्रेति । अणुपरिमाणत्वे हि युगपच्छिरःपादाभ्यां संबन्धासंभवाद् युगपच्छि-रःपादयोर्वेदनाया ज्ञानं न स्यादित्यर्थः । अणुत्ववादी शङ्कते-अयौगपद्येति,

---

१ अयं च शुद्धः पाठः परमप्रयत्नेनातीवप्राचीनपुस्तके उपलब्धः ।

वगतिरिति चेत् ?, स्यादेवं यद्यऽणुत्वं कुतश्चित् सिद्धं स्यात्, तदसिद्धौ दृष्टानुसारादनणुत्वमेव युक्तम्। तत्र शरीरपरिमाणत्वे सावयवः स्यात्, द्विविधमेव हि निरवयवद्रव्यम्—अणु विभु वा, तदसौ शरीरसंमितः सन् सावयवः स्यात्, तत्र बह्वऽवयवकल्पना तावतां चान्यूनानधिकानामवयवानां पुत्तिकाहस्तिदेहयोरतिसंकोचविस्तारकल्पनं नातीव हृदयमनुरञ्जयति, तस्माद्विभुत्वमेव युक्तम्, तथा च श्रुतिः—"अनन्तमपारम्" इति, भगवद्गीतासु च वचनम्—

"नित्यः सर्वगतः स्थाणुरचलोयं सनातनः" इति।

ये चोपनिषत्स्वऽणुत्ववादाः पुराणेषु च "अङ्गुष्ठमात्रं

---

उत्पलशतपत्रभेदनन्यायेन क्रमो न लक्ष्यते इत्ययौगपद्येपि यौगपद्यज्ञानं शिरःपादयोर्वेदनायां भवतीत्यर्थः। परिहरति—स्यादेवमिति। एवम्=अतिशैघ्र्याद् यौगपद्यावगतिः। तदसिद्धौ=अणुत्वासिद्धौ। दृष्टेति—अणोर्युगपद्देशद्वयेन संबन्धो न संभवतीत्यऽनणुत्वमेवात्मनः। तत्र=अनणुत्वेपि शरीरपरिमाणो वास्यादात्मा विभुपरिमाणो वा तत्र शरीरपरिमाणत्वं पराकरोति—तत्र शरीरेति, शरीरपरिमाणो हि मध्यमपरिमाण एव स च सावयवत्वेन व्याप्त इति सावयवत्वं स्यात्, सावयवत्वं चानित्यत्वव्याप्तमित्यनित्यत्वं स्यात्। शरीरपरिमाणत्वे दोषान्तरमाह—तत्रबह्विति। तत्र=शरीरपरिमाणत्वे बह्ववयवकल्पना स्यात् तेषां चावयवानां पुत्तिकादेहप्रवेशे सङ्कोचो हस्तिदेहप्रवेशे च विस्तारो वक्तव्य इति नातीवसमञ्जसमित्यर्थः। पुत्तिका=मधुमक्षिकाविशेषः। स्वाभिप्रायमाह—तस्मादिति। विभुत्वे प्रमाणमाह—अनन्तेति, नित्य इति च। यद्यपि सर्वगतशब्देनात्र न विभुत्वलक्षणं व्यापकत्वमभिप्रेतं किं त्वऽन्तःप्रवेशलक्षणमेव, श्रुतिभिश्चापि— "एषोणुरात्मा चेतसा वेदितव्यः" "वालाग्रशतभागस्य" इत्येवं स्पष्टमेवाणुत्वं प्रतिपाद्यते, प्रतिपादितश्चायं विषयो वृद्धैः, मयापि भगवद्गीताटीकायां तत्त्वार्थसुदर्शन्यां विस्तरेणाणुत्वं प्रतिपादितं तथाप्यलमत्र मीमांसाप्रतिकूलपथपल्लवितेनेत्युपरम्यते। ग्रन्थकारस्तु सर्वगतशब्देन विभुत्वमभिप्रैति। नन्वेवमणुत्ववादानां कागतिरित्याशङ्क्याह—ये-

पुरुषम्" इत्यादयस्ते सूक्ष्मग्रहणगोचरत्वाभिप्रायाः ।

ननु विभुत्वे सर्वशरीरेष्वेक एवात्माऽस्तु किं नानात्मभिरभ्युपगतैः ?, नैवम्—एकत्वे सति यथा करणभेदेपि कर्तुरेकत्वाच्चक्षुषा दृष्टमर्थं मनसा स्मरति त्वचा च प्रत्यभिजानाति—यमहमदर्शं तमहं स्पृशामीति तथा देवदत्तशरीरस्थेनात्मना दृष्टमर्थं यज्ञदत्तः प्रत्यभिजानीयात्. शरीरभेदेप्यात्मनः प्रत्यभिज्ञातुरेकत्वात् । कर्तुरेकत्वेपि मनोभेदाद् व्यवस्थेति चेत् ?, न, करणत्वान्मनसः, करणभेदस्य चक्षुरादेर्भेदव्यवस्थापकत्वाऽयोगादित्युक्तम् ।

---

चेति। सूक्ष्मग्रहणगोचरत्वाभिप्रायाः=सूक्ष्मज्ञानगोचरत्वाभिप्रायाः। आत्मा घटादिवद्बाह्यज्ञानविषयो न भवति किं तु योगजसूक्ष्मज्ञानविषयो भवति तदुक्तम्—"दृश्यते सूक्ष्मया बुद्ध्या" "पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात् पराङ् पश्यति नान्तरात्मन्। कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्"इत्यादि ।

ननु यदि विभुरेवात्मा तदैक एवास्तु किमनेकात्मस्वीकारेण ? एकस्याप्यात्मनो विभुत्वात् सकलशरीरैः सम्बन्धसम्भवेन सकलव्यवहारोपपत्तेरित्याशङ्कते— नन्विति । परिहरति—नैवमिति । एकत्वे दोषमुद्घाटयति—एकत्वेति, यथैकस्मिन् शरीरे करणभेदस्य प्रत्यभिज्ञाप्रतिबन्धकत्वं न भवति तथा शरीरभेदस्यापि प्रत्यभिज्ञाप्रतिबन्धकत्वं न स्यात् प्रत्यभिज्ञातुरात्मन एकत्वात्, न च देवदत्तेन दृष्टं यज्ञदत्तः प्रत्यभिजानाति तस्मादनेक आत्मनः प्रतिशरीरं भिन्ना इत्यर्थः । ननु मनोभेदाद् व्यवस्था भविष्यति—अनेकानि मनांसि तद् येनैव मनसा दृष्टं तेनैव प्रत्यभिज्ञासम्भवाद्, न च देवदत्तीयं मनो यज्ञदत्तशरीरेस्ति येन देवदत्तशरीरस्थेनात्मना दृष्टं यज्ञदत्तः प्रत्यभिजानीयादित्याशङ्कते—कर्तुरेकत्वेपीति। परिहरति— नेति। स्वाभिप्रायमाह—करणभेदस्येति, करणविशेषस्य चक्षुरादेर्यथा भेदव्यवस्थापकत्वं न भवति चक्षुरादेर्भेदेपि चक्षुषा दृष्टं त्वचा स एव प्रत्यभिजानाति नान्यस्तथा मनसो भेदेपि देवदत्तशरीरस्थेनात्मना दृष्टं यज्ञदत्तः प्रत्यभिजानीयादेव मनसः करणमात्रत्वात्, किं वान्तःकरणरूपमनोभेदादेवात्मभेदो न त्वात्मव्यक्तिभेद इति पूर्वपक्षाभिप्रायः ।

**चक्षुरादिकरणानामऽव्यवस्थापकत्वेपि मनः करणं व्यवस्थापकमिति चेत् ?, न, करणत्वाविशेषात् । स्यादप्येषा कल्पना यद्येकात्मत्वे दृढं प्रमाणं स्यात् ? न तु तदस्ति । ये त्वात्मैकत्ववादाः श्रुतिषु स्मृतिषु पुराणेषु वा ते " निरञ्जनः परमं साम्यमुपैति " " मम साधर्म्यमागताः " " उत्तमः पुरुषस्त्वन्यः " इत्यदिभिरात्मभेदवचनैः प्रत्यक्षादिभिश्च विरोधान्नैकान्ततः शक्नुवन्त्यात्मैकत्वं निश्चाययितुम् ।**

**वचनानां हि मिथो विरोधे सिद्धवस्तुविषयत्वेन च**

---

करणस्यात्मभेदव्यवस्थापकत्वं न सम्भवत्यऽन्यथैकास्मिन्नपि शरीरे चक्षुरादिकरणभेदेनाप्यात्मभेदः स्यादिति व्यक्तिभेदेनैवात्मभेदो नान्तःकरणभेदात् इति परिहाराभिप्रायः । इत्युक्तमिति-" केचित्त्वौपनिषदाः " इत्येवमाक्षिप्तवेदान्तविशेषमतस्य परिहारसमये (४४०पृ) " अन्तःकरणभेदाद् व्यवस्थेति चेन्न अचेतनत्वात् " इत्यादिनोक्तमित्यर्थः ।

ननु चक्षुरादीनामात्मभेदव्यवस्थापकत्वाभावेति मनस आत्मभेदव्यवस्थापकत्वं भविष्यतीति कृतमात्मनानात्वेनेत्याशङ्कते-चक्षुरादीति । मनसोपि करणत्वान्न भेदव्यवस्थापकत्वं सम्भवतीति परिहरति- नेति । आत्मैकत्वे प्रमाणाभावमाह- स्यादपीति । नन्वेवमात्मैकत्ववादानां कागतिरित्याशङ्क्याह- ये त्विति । श्रुतिषु यथा-" एकमेवाद्वितीयम् " " एको वशी " स्मृतिपुराणेषु यथा-" यद्यन्योस्ति परः कोपि मत्तः पार्थिवसत्तम " इत्यादि ज्ञेयम् । मीमांसकमते परमेश्वरस्याभावात् " एकमेवाद्वितीयम् " इत्यादीनां जीवपरत्वमेव, इत्येवमादीनां वाक्यानाम् " मम साधर्म्यमागताः " इत्याद्यनेकात्मप्रतिपादकवचनद्वन्दविरोधान्नात्मैक्ये तात्पर्यं किं तु स्वरूपवैलक्षण्याभावे एव तात्पर्यं सर्वेप्यात्मानस्तुल्यस्वरूपा एव स्वरूपभेदप्रतीतेः शरीरभेदप्रयुक्तत्वादित्यर्थः । प्रत्यक्षादिविरोधः=लोकप्रत्यक्षादिविरोधो यथा-अहमेवजाने नान्य इत्येवं सकलव्यवहारमात्रेणात्मनानात्वमेव सिध्यति ।

नन्वात्मैक्यप्रतिपादकानामाऽऽत्मनानात्वप्रतिपादकानां च वाक्यानां परस्पराविरोधे कथमेकपक्षावधारणं स्यादित्याशङ्क्याह- वचनानामिति । सा-

विकल्पासंभवे प्रमाणान्तरान्निर्णयः स्यात्, तच्च प्रमाणान्तरं भेद एव समर्थमित्यैकात्म्यवादानामऽवैलक्षण्यपरत्वं पूर्वोक्तन्यायेनावगन्तव्यम्,

विस्पष्टं चैतद्वायुदृष्टान्तोपादानात्—

"वेणुरन्ध्रादिभेदेन भेदः षड्जादिसञ्ज्ञितः ।
अभेदव्यापिनो वायोस्तथा तस्य महात्मनः ॥" इति ।

---

ध्ये क्रियादौ तु विकल्पः संभवत्येवं पाकः कर्तव्यो नैवं वेति सिद्धे तु पदार्थे तत्स्वरूपस्यापि सिद्धत्वान्न तत्र विकल्पः संभवति येन वचनानां मिथो विरोधेनाऽऽत्मन एकत्वं नानात्वं च स्यात् ? तस्मात् प्रमाणान्तरेण निर्णयः कर्तव्य एक एवात्माऽनेके वात्मान इति, तच्च प्रमाणान्तरम्—"अजो ह्येको जुषमाणोनुशेते जहात्येनां भुक्तभोगामजोन्यः" "कश्चिद्धीरः प्रत्यगात्मानमैक्षत्" "स चानन्त्याय कल्पते" इत्यादिकं भेदे=भेदप्रतिपादन एव समर्थमिति तद्विरोधादात्मैक्यप्रतिपादकवचनानां स्वरूपावैलक्षण्यप्रतिपादन एव तात्पर्यं न तु व्यक्त्यैक्यप्रतिपादने इत्याह—तच्चेति । पूर्वोक्तन्यायेनेति—यथाऽऽत्माणुत्ववादानां नाणुत्वे तात्पर्यं किं तु सूक्ष्मज्ञानगोचरत्वे तात्पर्यमित्युक्तम्—"ते सूक्ष्मग्रहणगोचरत्वाभिप्रायाः" इति तथाऽत्रापि स्वरूपाऽवैलक्षण्ये तात्पर्यं ज्ञेयमित्यर्थः । किं वा सांख्यमतेन यत् (४४३पृ) पूर्वमात्मैकत्ववादानां स्वरूपावैलक्षण्ये तात्पर्यमुक्तं तेन पूर्वोक्तन्यायेन ।

स्वाभिप्राये प्रमाणमाह— विस्पष्टमित्यादिना । यद्यात्मैक्यमेव भवेत्तदा "वेणुरन्ध्रादिभेदेन" इत्यत्रात्मन उपमानत्वेन वायुर्नोपन्यस्येत किं त्वाकाशमेवोपन्यस्येत, वायूपन्यासेन चैवं विज्ञायते यथा वायूनां व्यक्त्या नानात्वमप्यस्ति स्वरूपवैलक्षण्यमपि स्वाभाविकं नास्ति किं त्वौपाधिकमेव तथाऽऽत्मनामपि व्यक्त्या नानात्वमप्यस्ति स्वरूपावैलक्षण्यमप्यस्ति वैलक्षण्यप्रतीतेः शरीरवैलक्षण्योपाधिकृतत्वादिति । वेणुरन्ध्रेति—सर्वत्राभेदेन समानरूपेण व्यापिनो वायोर्यथा स्वरूपकृतो भेदो नास्ति किं तु वेणुरन्ध्रभेदकृत एव षड्जादिभेदस्तथा तस्य=आत्मनोपि व्यक्तिभेदेन नानात्वेपि स्वरूपकृतो भेदो नास्ति किं तु शरीरभेदकृत एव स्वरूपभेदः प्रतीयते । अभेदव्यापिन इत्यस्य सकलेषु वेणुरन्ध्रेष्वऽभेदेन व्यापिन इति वार्थः । स्वमतेन पद्यं व्याख्यन् स्वाभिप्रायं

नहि वायुद्रव्यं सर्वत्रैकं व्यक्तिभेदस्य स्पष्टत्वात्. अविलक्षणस्वभावस्य तु वायोर्वेणुरन्ध्रकृतं षड्जादिवैलक्षण्यम्, एवमात्मनोपि पशुमनुष्यादिवैलक्षण्यं देहसंबन्धकृतं न स्वाभाविकमित्ययमेवार्थः। वायोरिति तस्येति चैकवचनं सामान्याभिप्रायम्, तस्मात् प्रतिशरीरं भिन्ना एवात्मानः सर्वगता नित्याः। एवं च बद्धमुक्तव्यवस्थापि युक्ततरा भवति।

---

प्रकटयति–नहीत्यादिना। सामान्याभिप्रायमिति– वायोरिति तस्येति चैकवचनं जातावेवेत्यर्थः। स्पष्टमन्यत्। एवम्=नानात्वस्वीकारे। वार्तिकं यथा––

"साक्षाद् यद्यपि सम्बन्धो नाऽऽत्मनो यज्ञसाधनैः।
तथापि लक्षणावृत्त्या शरीरद्वारकोभवेत् ॥
प्रत्यक्षत्वं च देहस्थं भाक्तमात्मनि कल्पितम्।
आत्मनः स्वर्गयानं वा शरीरस्योपचर्यते ॥,
जन्मान्तरेऽभ्युपेतेपि ज्ञानमात्रात्मवादिनाम्।
ज्ञानानां क्षणिकत्वाद्धि कर्तृभोक्त्रऽन्यता भवेत् ॥
निष्क्रियत्वाऽविभुत्वाभ्यां न च देहान्तराऽऽश्रितिः ॥,
ज्ञानशक्तिस्वभावोऽतो नित्यः सर्वगतः पुमान्।
देहान्तरक्षमः कल्प्यः सोऽगच्छन्नेव योक्ष्यते ॥
यजमानत्वमप्यात्मा सक्रियत्वात् प्रपद्यते।
न परिस्पन्द एवैकः क्रिया नः कणभोजिवत् ॥
न च स्वसमवेतैव कर्तृभिः क्रियते क्रिया।
क्रिया धात्वर्थमात्रं स्यादन्याधारेपि कर्तृता ॥
सत्ताज्ञानादिरूपाणां कर्ता तावत् स्वयं पुमान्।
योपि भूतपरिस्पन्दस्तत्राधिष्ठानतो भवेत् ॥
तदुद्देशप्रवृत्तेश्च या या देहेन्द्रियैः क्रिया।
क्रियते पुरुषेणैव सा सा सर्वा कृतोच्यते ॥
(एषाम्=इन्द्रियाणाम्)नैव ह्येषां प्रवृत्तिः स्यात् पुरुषेणाऽपरिग्रहे।
अस्वातन्त्र्यादतो नैषां परिस्पन्देपि कर्तृता ॥

(तत्कर्म = आत्मकर्म)तत्कर्मोपार्जितैश्चैतैः क्रियमाणेषु कर्मसु ।
कर्तृता यजमानानामृत्विक्परशुकर्मवत् ॥
यथा परिक्रयाम्नानाद् ऋत्विग्द्वारा क्रियेष्यते ।
गमनादिविधेस्तद्वद् भूतद्वारत्वमाश्रितम् ॥
न च सर्वत्र तुल्यत्वं स्यात् प्रयोजककर्मणाम् ।
चलनेन ह्यसिं योद्धा प्रयुङ्क्ते च्छेदनं प्रति ॥
सेनापतिस्तु वाचैव भृत्यानां विनियोजकः ।
राजा संनिधिमात्रेण विनियुङ्क्ते कदा चन ॥
तस्मादऽचलतोपि स्याच्चलने कर्तृताऽऽत्मनः ।
यथैवाऽभिद्यमानस्य देवदत्तस्य भेतृता ॥
तस्माद् यथाऽऽकृतौ शास्त्रं प्रवृत्तं व्यक्तिमाश्रयेत् ।
तथा पुंसि प्रवृत्तस्य भूतेन्द्रियसमाश्रयः ॥,
गुणो द्रव्यविनाशाद्वा विनाशमुपगच्छति ।
गुणान्तरोपपाताद्वा तस्मादुत्कृत्य नाश्यते ॥
न तावत्तद्द्रव्यं मृत्यौ सर्वस्यैवोपलभ्यते ।
अविनष्टशरीरस्य प्राणादिश्चापगच्छति ॥
तस्मान्न देहधर्मत्वं प्राणादेरिति गम्यते ।
अन्तःस्थितेर्न दृष्टिश्चेत् पाटितेप्यनुपग्रहात् ॥
अन्तःशरीरे रूपादि पाटितस्योपलभ्यते ।
न सुखादिः, अतोस्याऽसौ न मनोबुद्धिवद् गुणः ॥
गुणत्वादाश्रितत्वं हि सुखादेः स्याद्रसादिवत् ।
य आश्रितः स आत्मेति ब्रुवाणस्यैतदुत्तरम् ॥
हेतुष्वेवं परोक्तेषु प्रतिषिद्धेषु संप्रति ।
अहंप्रत्ययविज्ञेयः स्वयमात्मोपपाद्यते ॥,
यदि स्याज्ज्ञानमात्रं च क्षणिकं ज्ञातृ तत्र वः ।
न भवेत् प्रत्यभिज्ञानं पूर्वज्ञातरि संप्रति ॥,
ज्ञातुरन्यश्च विषयस्तस्य न स्यात्स्वभावतः ।
अहंप्रत्ययविज्ञेयो ज्ञाता नः सर्वदैव हि ॥
गुरुः स्थूलः कृशो वाहमिति देहेपि यो मतिः ।

**कः पुनरयं मोक्षो नाम ?, विचित्रवासनावशेन विचित्रनीलपीतादिरूपेण प्रवहतो ज्ञानसन्तानस्य निश्शेषवासनोच्छेदान्नीलपीतादिवैचित्र्यं हित्वा केवलं संविन्मात्रेणाऽवस्थानमिति केचित् ।**

---

भ्रान्तिः सा, भेदरूपं हि गुरु मे तदितीष्यते ॥(तत्=शरीरम्)
इदं ममेदृशं चक्षुर्मनो मे श्रान्तमित्यपि ।
इन्द्रियेष्वपि भेदेन व्यवहारश्च दृश्यते ॥,
ममेत्येतस्य मुख्यार्थो नात्मनोऽन्यः प्रतीयते ।
तेनासौ भेदहेतुः स्याद् भेदश्च ज्ञानहेतुकः ॥
ये चेहाऽज्ञातनानात्वास्तेषां देहेष्वहंमतिः ।
तत्राप्यात्माभिमानेनेत्यहंबुद्धिर्ध्रुवाऽऽत्मनि ॥
ये तु विज्ञातनानात्वास्ते देहेष्वनहंकृताः ।
जानाम्यहमितीदं तु ज्ञानं नैव निवर्तते ॥
अविनाशी स्वरूपेण पुरुषो या तु नाशिता ।
मात्राणां साधिकाराणाम्, भूतादीनामसंज्ञिता ॥" इत्यादिकम् ।

॥ इत्यात्मवादः समाप्तः ॥

यदुक्तम्– " एवं च बद्धमुक्तव्यवस्थापि युक्ततरा भवति " आत्मनानात्वे ह्येकस्य बद्धत्वमपरस्य चात्मनो मुक्तत्वमपि सम्भवति, न चैकात्म्यवादे–एकस्मिन्नात्मनि विरुद्धयोर्बन्धमोक्षयोरसम्भवादिति, तत्र मोक्षमुद्दिश्याशङ्कते–कः पुनरिति । अत्र योगाचारमतेन मोक्षस्वरूपमाह– विचित्रेति । ज्ञानानां क्षणविनाशित्वेपि ज्ञानसन्तानस्यैकत्वात् वासनासंक्रमे युक्ते तत्तद्वासनावशात् कदाचिज्ज्ञानं नीलाकारं कदाचित् पीताकारमुदेति एवं प्रवहतो ज्ञानसन्तानस्य नीलाद्याकारपरिणतिं त्यक्त्वा यत्स्वरूपेणावस्थानं स एव मोक्षः, ज्ञानस्य बाह्याकारेण परिणामस्यैव संसारत्वात् तत्परिणामहानस्यैव मोक्षत्वसम्भवात्संसारनिवृत्तेरेव सर्वैर्मोक्षत्वोपगमादिति भावः । तदुक्तं बौद्धैः—

" बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते ।
अतो निरभिलप्यास्ते निस्स्वभावाश्च दर्शिताः ॥
नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः ।

अपरे तु दीपसन्तानस्येव ज्ञानसन्तानस्योपरमम् ।

---

ग्राह्यग्राहकवैधुर्यात् स्वयं सैव प्रकाशते ॥
तत्स्यादालयविज्ञानं यद्भवेदहमास्पदम् ।
तत्स्यात्प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेत् ॥
रागादिज्ञानसन्तानवासनोच्छेदसंभवा ।
चतुर्णामपि बौद्धानां मुक्तिरेषा प्रकीर्तिता ॥ " इति ।

चार्वाकमतेनैवं मोक्षस्वरूपम्-यथा तैलान्ते दीपसन्तानस्य विनाशो भवति तथा यथायोगं संयुक्तेषु चतुर्षु भूतेषु प्राप्तचैतन्यभावेषु विकृतिविशेषात् तस्य चैतन्यस्य यो विनाशः स एव मोक्ष अत एव निर्वाणमित्युच्यते, प्रकारान्तरस्य निरूपयितुमशक्यत्वात्, शरीरातिरिक्तात्मोपलम्भाभावाच्च, यदि कोपि नित्यः शरीरातिरिक्त आत्मा स्यात्तदा स बद्ध एव वा स्यान्मुक्त एव वा स्यादित्यभिप्रायः, विस्तरस्तु तेषां सन्दर्भेष्वेव द्रष्टव्यः । उक्तं च—

" यावज्जीवेत् सुखं जीवेद् ऋणं कृत्वा घृतं पिवेत् ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥
यदि गच्छेत् परं लोकं देहादेष विनिर्गतः ।
कस्माद् भूयो न चायाति बन्धुस्नेहसमाकुलः ॥
अत्र चत्वारि भूतानि-भूमिवार्यऽनलाऽनिलाः ।
चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते ॥
किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत् ॥
अहं स्थूलः कृशोस्मीति सामानाधिकरण्यतः ।
देहे स्थौल्यादियोगाच्च स एवात्मा न चापरः ॥
न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः ॥" इति ।

तथा-" तत्र पृथिव्यादीनि भूतानि चत्वारि तत्त्वानि. तेभ्य एव देहाकारपरिणतेभ्यः किण्वादिभ्यो मदशक्तिवच्चैतन्यमुपजायते तेषु विनष्टेषु सत्सु स्वयं विनश्यति " इति ।

सर्वशून्यवादिमाध्यमिकमतेन मोक्षस्वरूपमाह-अपरे तु दीपेति । अकृतकत्वाच्छून्यमेव मोक्षः कृतकस्य कस्य चिन्मोक्षत्वस्वीकारे मोक्षानित्यत्वं स्याद् घटादिवदित्यभिप्रायः । उक्तं च " तदेवं भावनाचतुष्टयवशान्निखिलवासना-

उभयमप्येतद्बाह्यार्थाभावमूलमिति तत्सद्भावप्रतिपादनेनैव निराकृतम् ।

अपरे तु प्रपञ्चविलयमपवर्गमाहुः—अविद्यानिर्मितो हि प्रपञ्चः स्वप्नप्रपञ्चवत् प्रबोधेनैव ब्रह्मविद्ययाऽवि-

---

निवृत्तौ परनिर्वाणं शून्यरूपं सेत्स्यतीति वयं कृतार्थाः " इति । योगाचारमते बाह्याभावेपि ज्ञानमस्त्येव तस्य स्वरूपेणावस्थितिर्मोक्षे सति भवति, माध्यमिकमते तु तज्ज्ञानमपि मोक्षे विनश्यतीति ज्ञानसन्तानस्य विनाश एव मोक्ष इतिं विवेकः । उपरममित्यन्ते मोक्षं वदन्तीति शेषः ।

परिहरति—उभयमपीति । उभयमेतत्=योगाचारमते संविन्मात्रेणावस्थानम्, माध्यमिकमते च ज्ञानसन्तानस्योपरम इत्युभयम् । प्रथमे बाह्यस्याभावेपि बाह्याकारेण ज्ञानस्य परिणाम एव संसार इति तद्धानेन स्वरूपावस्थितेर्मोक्षत्वं स्वीकृतम् द्वितीये वस्तुतः किमपि नास्त्येवेति ज्ञाननाशस्यैव मोक्षत्वं प्रतिश्रुतं सर्वशून्यत्वस्यैव परमार्थत्वात् । तदेतदुभयप्रकारकमोक्षस्य बाह्यार्थाऽभाव एव मूलम्, बाह्यार्थसत्त्वस्य च पूर्वमेव प्रतिपादितत्वादेतन्निराकृतमेवेति ज्ञेयमित्यर्थः । यदि बाह्यं न स्यात्तदा ज्ञानपरिणामस्वीकारे ज्ञानपरिणाम एव संसारस्तन्निवृत्तिश्च मोक्ष इति ज्ञानस्य स्वरूपेणावस्थितेर्मोक्षत्वं स्यादपि न चैवमस्ति बाह्यपदार्थस्य सत्त्वादेव तथा च न ज्ञानपरिणाम एव संसारो येन ज्ञानस्य परिणामनिवृत्तिपूर्वकंस्वरूपेणावस्थानं मोक्षः स्यात्, एवं सर्वशून्यवादेपि स्याच्छून्यस्य मोक्षत्वं यदि शून्यं स्यात्, न चैवमस्ति बाह्यपदार्थानामपि सत्त्वस्य प्रतिपादितत्वात् सुतरामात्मनोपि सत्त्वमिति न शून्यमपि मोक्ष इत्यभिप्रायः । यद्यपि दीपसन्तानस्येव ज्ञानसन्तानोपरमस्य मोक्षत्वं चार्वाकमतेपि संभवति तथापि " उभयमप्येतद्बाह्यार्थाभावमूलम् " इत्येवं परिहारात् " दीपसन्तानस्येव " इति माध्यमिकमतेनैव पूर्वपक्षः प्रतीयते, चार्वाकेन पृथिव्यादिभूतचतुष्टयस्य सत्त्वस्वीकारात्तस्य " उभयमप्येतद्बाह्यार्थाभावमूलम् " इति परिहारोऽसङ्गत एव स्यात् । अलमधिकक्षोदेन ।

अद्वैतवादेन मोक्षस्वरूपमाह—अपरे त्विति । प्रपञ्चनाशस्य मोक्षत्वं निरूपयति—अविद्येति । मोक्षो हि संसारनिवृत्तिरेव स च मोक्षो ज्ञानेनैव श्रूयते—" तरति शोकमात्मवित् " " नान्यः पन्था " इत्यादि, ज्ञानेन च ज्ञानतत्का-

द्यायां विलीनायां स्वयमेव विलीयते, तथा हि श्रुतिः-" यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाऽभूत् तत् केन कं पश्येत्" इति ।

तदिदमपि प्रपञ्चस्याऽविद्यानिर्मितत्वनिराकरणेन परमार्थत्वप्रतिपादनान्निरस्तमेवेति । " आत्मैवेदं सर्वम् " इति सर्वस्यात्मा भोक्तेत्यर्थः, यथा " यः कामयेत राष्ट्रं स्याम्" राष्ट्रस्य भोक्तेत्यर्थः, यथा-"यः कामयेत सर्वमिदं भवेयम् " इति सर्वस्य भोक्ता भवेयमित्यर्थः, तथा-'आत्मा सर्वम्' इति सर्वस्यात्मा भोक्तेत्यर्थः ।

यत्तु " यत्र हि द्वैतमिव भवति " इति द्वैतभाव-

---

र्ययोरेव नाशः संभवतीत्यर्थापत्त्या प्रपञ्चस्या ऽज्ञानकार्यत्वं प्राप्तम् । स्वयमेवेति-कारणविनाशे कार्यविनाशावश्यंम्भावादऽविद्यायां विलीनायां तत्कार्यं प्रपञ्चोपि निवर्तते । अत्र श्रुतिं प्रमाणयति-यत्रेति । यत्र=यदा द्वैतं भवति= द्वैतज्ञानं भवति तदा इतर इतरं पश्यति=प्रपञ्चोऽवतिष्ठते, यदा तु सर्वमात्मैवाऽभूत=अद्वैतज्ञानं जातं तदा केन कं पश्येत् =प्रपञ्चो निवर्तत इत्यर्थः ।

परिहरति-तदिदमपीति, यदि प्रपञ्चोऽविद्यानिर्मितः स्यात्तदा ज्ञानेनाविद्यानिवृत्तौ प्रपञ्चनिवृत्तिः स्यादिति प्रपञ्चविलयस्यापवर्गत्वं स्यादपि न चैवमस्ति प्रपञ्चस्य पारमार्थिकत्वेनाविद्यानिर्मितत्वाभावान्न ज्ञानेन तन्निवृत्तिर्येन प्रपञ्चविलयस्तस्यापवर्गत्वं च स्यादित्यर्थः । ननु यदि ज्ञानेन प्रपञ्च विलयो न भवति तदा " आत्मैवेदं सर्वम् " इति श्रुत्या किं प्रतिपाद्यते ? मन्मते तु प्रपञ्चविलये जाते एकस्यात्मन एव सत्त्वं प्रतिपाद्यते प्रपञ्चस्यात्मविवर्तत्वादित्याशङ्क्याह-आत्मैवेदमिति । यथा " यः कामयेत राष्ट्रं स्याम् " इत्यत्र राष्ट्रशब्दस्य राष्ट्रभोक्तृत्वे लक्षणा जीवस्य राष्ट्रत्वसंपत्त्यऽसंभवात्. यथा च " यः कामयेत सर्वमिदम् " इत्यत्र सर्वशब्दस्य सर्वभोक्तृत्वे लक्षणा तथा-" आत्मैवेदं सर्वम् " इत्यत्रापि सर्वशब्दस्य सर्वभोक्तृत्वे लक्षणा सर्वस्य प्रपञ्चस्यात्मभोग्यत्वादात्मैवेतत्सर्वप्रपञ्चस्य भोक्तेति श्रुत्यर्थः, न त्वद्वैतं श्रुत्यर्थः ।

नन्वद्वैतपारमार्थिकत्वप्रतिपादकस्य " यत्र हि द्वैतमिव " इति वचनस्य द्वैतस्वीकारे का गतिरित्याशङ्क्याह-यत्त्विति । भ्रान्तित्वमिति-पूर्वपक्षे द्वैतस्य

स्य भ्रान्तित्ववचनम्, तदौपचारिकम्- यथा खलु स्वप्नप्रपञ्चेन्द्रजालमृगतोयादिः कियन्तं चित्कालं दृष्टिपथमापन्नः पश्चाद्विलीनो भोग्यतामतिवर्तते तथाऽयं शरीरेन्द्रियविषयरूपप्रपञ्चोऽप्यस्यात्मनः कियन्तञ्चित्कालमुपभोग्यः सन् पश्चाद्विनाशादनुपभोग्यो भवति- इत्यनेन सादृश्येन भ्रान्तिरित्युपचारेणोच्यते पुरुषाणां विषयभोगेष्वास्थानिवर्तनेन मुक्तवऽभिरुचिं जनयितुम् ।

यदपि- "यत्र त्वस्य सर्वमात्मैवाभूत्" इति मुक्तावाऽऽत्मनोऽद्वितीयत्ववचनं तदपि न प्रपञ्चस्वरूपनिषेधार्थं किं तु सत एव प्रपञ्चस्यात्मसम्बन्धनिषेधार्थम्. अस्येति वचनात्, न ह्यत्रैतावदुच्यते-'यत्र सर्वमात्मैवाभूत्' इति । किं तर्हि ?, "यत्र त्वस्य सर्वमात्मैव"

---

मिथ्यात्वात् तत्प्रतीतेर्भ्रान्तित्वं । परिहरति-तदिति, द्वैतस्य सत्यत्वादेव द्वैतप्रतीतेर्यद् भ्रान्तित्वमुक्तं तदौपचारिकमित्यर्थः । औपचारिकत्वमेव प्रतिपादयति-यथेत्यादिना । भोग्यतामतिवर्तते=भोग्यो न भवति । इत्यनेनेति-इत्यनेन सादृश्येनोपचाराद् द्वैतमतिर्भ्रान्तिरित्युच्यत इत्यन्वयः । उपचारेणेत्यत्र सादृश्येनेति हेतुः । उपचारेण भ्रान्तित्वप्रतिपादनस्य प्रयोजनमाह-पुरुषाणामिति । मिथ्याभूते प्रपञ्चे प्रीतिर्न युक्तेत्यर्थः । एवमेवाद्वैतपूर्वाचार्यैर्यत् प्रपञ्चस्य मिथ्यात्वमुक्तं तदपि शिष्याणां जिहासासंपादनार्थमेवोक्तं न तु वास्तविकमित्यनुसन्धेयम् ।

नन्वेवं श्रुतेः पूर्वार्धस्य गतिरुक्ता, उत्तरार्धस्य का गतिः स्यात् ? तत्र तु स्पष्टमेवाद्वैतमुच्यत इत्याशङ्क्याह-यदपीति । वचनस्य प्रपञ्चात्मनोः संबन्धनिषेधार्थत्वमुपपादयति-अस्येत्यादिना । अत्र=उक्त श्रुतौ । यदि 'यत्र सर्वमात्मैवाभूत्' इत्येवमुच्येत तदा प्रपञ्चनिषेधः स्यादपि न चैवमस्ति किं तु "यत्र त्वस्य सर्वमात्मैवाभूत्" इत्येवं "अस्य" इति षष्ठ्यन्तमदघटितमुच्यते तथा च मुक्तावात्मनः स्वरूपेणैव संबन्धो भवति नान्येन केन चिदिति प्रपञ्चसंबन्धनिषेध एव प्रतिपाद्यते न प्रपञ्चनिषेध इत्यर्थः । स्वमतेनोक्त्वा-

इति, तेनास्यायमर्थः–यत्र=यस्यामवस्थायां मुक्ताविन्यर्थः, अस्य=आत्मनो दृश्यत्वेन दर्शनसाधनत्वेन दर्शनायतनत्वेन वा न किं चिदन्यत् सम्बन्धि विद्यते किं त्वात्मैवास्य सर्वं नान्यत् किं चित् तदा केन कं पश्येदिति। यथा लोके यस्य न किं चिदपि बान्धवो वित्तं वास्ति स एवं वदति– 'न मे किं चिदस्ति अहमेव सर्वम्' तत्र सम्बध्यन्तरं न किं चिदस्तीत्येतावद्विवक्षितम्, एवं मुक्तावात्मैवात्मनः सर्वमिति सम्बन्ध्यन्तराभावमात्रं विवक्षितं न प्रपञ्चस्वरूपाभावः, तस्मान्न प्रपञ्चविलयो मोक्षः किं तु प्रपञ्चसम्बन्धविलयः। त्रेधा हि प्रपञ्चः पुरुषं बध्नाति–भोगायतनं शरीरम्, भोगसाधनानीन्द्रियाणि, भोग्याः शब्दादयो विषयाः, भोग इति च सुखदुःखविषयोऽपरोक्षाऽनुभव उच्यते, तदस्य त्रिविधस्यापि बन्धस्यात्यन्तिको विलयो मोक्षः।

किमिदमात्यन्तिकत्वम्?, पूर्वोत्पन्नानां शरीरेन्द्रियविषयाणां विनाशः अनुत्पन्नानां चात्यन्तिकोऽनुत्पादः। कथमत्यन्तानुत्पत्तिः?, उत्पादकयोर्धर्माधर्म-

---

क्यं व्याचष्टे–तेनेति। अस्य= "यत्र त्वस्य सर्वमात्मैवाभूत्" इति वचनस्य। दृश्यत्वेन=भोग्यत्वेन–भोग्यपदार्थः, दर्शनसाधनत्वेन=इन्द्रियम्, दर्शनायतनत्वेन=शरीरमिति यावत्। तदेत्यस्य पदस्य यत्रपदेनान्वयो मुक्ताविन्यर्थः। इति=इत्यर्थः। अत्र दृष्टान्तमाह–यथेति। तत्र=उक्ते लौकिकवाक्ये। उपसंहरति–तस्मादिति। स्वमतमाह– किं त्विति। त्रेधा=शरीरेन्द्रियविषयैः। भोगायतनेत्याद्येकदेशं भोगपदार्थमाह– भोग इति। पुनरुपसंहरति–तदस्येति। त्रिविधस्य=तत्तच्छरीरेन्द्रियविषयरूपस्य। न तु प्रपञ्चविलयो मोक्षोऽसम्भवात्।

यदुक्तम्– "आत्यन्तिको विलयः" इति तत्र शङ्कते–किमिदमिति। उत्तरमाह–पूर्वेति। अनुत्पन्नानाम्=अप्राप्तानाम्। अत्यन्तानुत्पादे हेतुं पृच्छति–कथमिति। उत्तरमाह–उत्पादकयोरिति, शरीरेन्द्रियविषयप्रापकयोरित्य-

योर्निश्शेषयोः परिक्षयात्, सोयं प्रपञ्चसम्बन्धो बन्धस्तद्विमोक्षश्च मोक्षः।

नन्वेवमशेषधर्मक्षयान्मुक्तस्य न किंचित्सुखं स्यात् ततश्चाऽपुरुषार्थो मोक्षः स्यात् ? । नैष दोषः– न हि धर्मजन्यो मुक्तस्यानन्दः तथा सत्युत्पत्तिमत्त्वाद् विनाशी स्यात् तत्राऽपुनरावृत्तिश्रुतेर्विरोधः स्यात् । स्वाभाविकस्त्वात्मानन्दः संसारेणाभिभूतः सन् निर्मुक्तसंसारस्याभिव्यक्तो भोग्यो भवति स्वाभाविकत्वे चानन्दस्य "आनन्दं ब्रह्म" इत्यादिश्रुतिसहस्रं प्रमाणम्।

ननु सुखाभावेपि श्रुतिरास्ति– "अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः" इति ?, सत्यम्– विषयसु-

---

र्थः।उपसंहरन् स्वमतमाह–सोयमिति।

ननु सुखस्यैव पुरुषार्थत्वात्तस्य च धर्मजन्यत्वनियमादशेषधर्मक्षये हि न मुक्तस्य सुखं स्यात्तथा च मोक्षस्य पुरुषार्थत्वमपि न स्यादित्याशङ्कते– नन्वेवमिति। वेदान्तमतमुखेन परिहरति– नैष इति। उपपादयति– नहीत्यादिना। तथा सति=मुक्तानन्दस्य धर्मजन्यत्वे सति। तत्र=मोक्षसुखस्य विनाशित्वे मोक्ष एव विनष्टः स्यादिति मुक्तस्य पुनः संसारसम्बन्धः स्यात्तथा च "न स पुनरावर्तते" इत्यादिश्रुतेर्विरोधः स्यात्, तस्मान्न मुक्तस्य सुखं धर्मजन्यं किं तु यदात्मसुखं स्वाभाविकमपि संसारसम्बन्धादभिभूतं सत् तिष्ठति तस्यैव मोक्षे संसारसम्बन्धापगमादाविर्भावो भवतीत्याह–स्वाभाविकस्त्विति। "ब्रह्मविद् ब्रह्मैव भवति" इति मुक्तस्य ब्रह्मस्वरूपत्वं ब्रह्मस्वरूपस्य चानन्दत्वम्– "आनन्दं ब्रह्म" इत्यनेनप्राप्तमित्यर्थः।

मोक्षे सुखप्राप्तिर्योक्ता तत्र शङ्कते– नन्विति। मोक्षे सुखानन्दादिशब्दैर्दुःखाभाव एव प्रतिपाद्यते "अशरीरम्" इत्यादिश्रुत्या मोक्षे सुखदुःखयोरुभयोरप्यभावस्य बोधनादित्यर्थः। प्रियाप्रिये=सुखदुःखे न स्पृशतः। श्रुतिं स्वीकुर्वन् परिहरति–सत्यमिति। मोक्षे प्रियं न स्पृशतीत्यस्य विषयसुखं न स्पृशतीत्यभिप्राय इत्याह–विषयेति। तथा च सुखाभाववचनं विषयसुखाभाव-

खाभिप्रायं त्वेवंजातीयकम्, अन्यथाऽऽनन्दश्रुतिविरोधात्। अथ सुखाभाववचनबलेनाऽऽनन्दवचनमेव दुःखाभावाभिप्रायं किमिति न व्याख्यायते ?, सुखाभाववचनानामत्यल्पत्वात्तेषामेवान्यथाकरणं युक्तं न भूयसामानन्दवचनानाम्। किं चानन्दशब्दस्य दुःखाभावपरत्वेऽत्यन्तस्वार्थहानिः स्यात्, सुखशब्दस्य तु सामान्यवचनस्य विशेषव्याख्यानेपि नातीव स्वार्थहानिरिति तदेव युक्तम्।

ननु विद्यमानोप्याऽऽनन्दोऽननुभूयमानोऽकिंचित्कर एव, न च मुक्तस्य सर्वकरणहीनस्यानन्दानुभवः सम्भवति। स्वप्रकाशोयमानन्द इति चेत् ?, न, संसारावस्थायामप्रकाशात्। ननु तत्राप्यानन्दस्वभावः

---

परं ज्ञेयं मोक्षे स्वरूपसुखस्य सत्त्वेपि विषयसुखस्य बन्धरूपस्याभावात्। एवंजातीयकमित्यत्र वचनमिति शेषः। विपक्षे बाधकमाह—अन्यथेति। ननु श्रुत्या स्पष्टमेव मुक्तस्य सुखाभाव उच्यत इत्यानन्दवचनमेव दुःखाभावपरं किं न स्यादित्याशङ्कते—अथेति। उत्तरमाह—सुखाभावेति। अन्यथाकरणम्=विषयसुखाभावपरत्ववर्णनम्। परिहारान्तरमाह—किं चेति, आनन्दशब्दस्य भावपदार्थबोधकस्य दुःखाभावपरत्वे सर्वथा वाच्यार्थपरित्यागः स्यादिति नैवमुचितम्, सुखशब्दस्तु सामान्यतो नित्यसुखे विषयसुखे च वर्तत इति सुखशब्दस्य विशेषव्याख्याने=विषयसुखपरत्वे स्वीकृतेपि न सर्वथा वाक्यार्थपरित्यागापत्तिः—विषयसुखाभावेपि स्वरूपसुखसंभवात् तस्मात्सुखाभावशब्देन विषयसुखाभाव एव मोक्षे उच्यते।

नन्वनुभूयमानस्यैवानन्दस्य पुरुषार्थत्वं सम्भवति न स्वरूपसतः, मुक्तस्य च सर्वेन्द्रियराहितत्वान्नानुभवकर्तृत्वं सम्भवतीति शङ्कते—नन्विति। ननु स्वप्रकाशोयमानन्द इति न तदनुभवाय करणापेक्षेत्याङ्कते वेदान्तसिद्धान्ती—स्वप्रकाशेति। पूर्वपक्षी मीमांसकः परिहरति—नेति। संसारेति—यदि स्वरूपानन्दः स्वप्रकाशः स्यात्तदा संसारावस्थायामपि प्रकाशेत न च प्रकाशते तस्मान्न स्वप्रकाश इत्यर्थः। वेन्दात सिद्धान्ती स्वपक्षमुत्थापयति—नन्विति। तत्रा-

पुरुषः प्रकाशत एव आत्मनि प्रेमोत्पत्तेः न ह्यसुखे प्रेमोत्पत्तिः सम्भवति नाप्यविज्ञाते सुखे ?। किमिदानीमस्माभिरात्मा सुखरूपोनुभूयते ?, सत्यमिति ब्रुवाणस्यातिसाहसिकस्य नोत्तरं वाच्यम्। यदि संसारिणोपि परमानन्दमनुभवेयुस्ततो मुक्तस्य न कश्चिदतिशय इति तदेवापुरुषार्थत्वं मोक्षस्यापद्येत, अतो बलादसुखरूपस्याप्यात्मनः प्रेमविषयत्वं दृष्टत्वादङ्गीकर्तव्यम्।

अथ स्वप्रकाशोप्यानन्दः संसारावस्थायामभिभूतो न प्रकाशते ?। कोयं प्रकाशमानस्याऽभिभवो नाम ?, प्रकाशनिवारणं ह्यभिभवः, न च प्रकाशमानस्याऽप्रकाशनं संभवति, यदि तु नैव प्रकाशते संसारावस्थायाम् ?. तस्यामवस्थायामसतः प्रकाशस्य मुक्तावस्था-

---

पि=संसारावस्थायाम्। प्रेमोत्पत्तेरिति- 'मा न भूवं हि भूयासम्' इत्येवमात्मनि प्रेमदर्शनात्, विपक्षे बाधकमाह- न हीति। ननु तथापि नानन्दस्वरूपता ज्ञातेत्याशङ्क्याह-नापीति। तस्मादात्मा सुखस्वरूप एव संसारावस्थायामपि प्रकाशते इत्यात्मानन्दः स्वप्रकाश एवेति न तत्प्रकाशार्थं मोक्षे कस्य चित्कारणस्यापेक्षेत्यर्थः। इत्येवं संसारेप्यात्मनः सुखरूपत्वे तज्ज्ञाने चोक्ते पूर्वपक्ष्याऽऽक्षिपति-किमिदानीमिति। नन्वनुभूयत एव सुखरूप आत्मेत्याशङ्क्याह-सत्यमिति। विपक्षे बाधकमाह-यदीति। दृष्टत्वादिति-यथाऽसुखरूपेपि शरीरादौ प्रेम भवति तथैवासुखरूपेप्यात्मनि प्रेम संभवतीति भावः।

ननु स्वप्रकाशोप्यानन्दः संसारावस्थायां प्रकृतिसंबन्धेनाऽभिभूतत्वान्न प्रकाशते न च प्रकाशाभावेन तदभावो वक्तुं शक्यतेऽन्यथा गृहाभ्यन्तरस्थोपि घटो प्रकाशाभावे नास्तीत्युच्येतेत्याह-अथेति। पूर्वपक्षी पृच्छति-कोयमिति, स्वयमेवोत्तरमाह-प्रकाशेति। अभिभवः प्रकाशनिवारणमेव तच्चाऽप्रकाशमानत्वमेव न च प्रकाशमानस्याप्रकाशमानत्वं संभवतीति विरोधमुद्घाटयति- न चेति। स्वरूपानन्दस्य संसारावस्थायां प्रकाशमानत्वे विरोधदोषमुक्त्वाऽप्रकाशमानत्वेपि दोषमाह-यदित्विति। तस्यामवस्थायाम्=संसारावस्थायाम्। एवं हि मुक्तावस्थायां स्वरूपानन्दप्रकाशस्योत्पत्तिरेव स्यात्, उत्पत्तिश्च कारणाधीना

यामुत्पद्यमानस्य कारणं वक्तव्यम्, विज्ञानमेव च प्रकाशाख्यस्य फलस्य कारणं तच्चेन्द्रियाधीनम्, न च मुक्तस्येन्द्रियाणि संभवन्तीति कथमानन्दानुभवःस्यात्?।

उच्यते– बाह्येन्द्रियाण्येव मुक्तस्य निवर्तन्ते मनस्तु तस्यामवस्थायामनुवर्तते इत्यानन्दश्रुतिबलादेवाध्यवसीयते। एवं ज्ञानं च "नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इतिश्रुतेः, विज्ञानघनश्रुतेश्च, तस्मान्मुक्त्यवस्थायां मानसप्रत्यक्षेण परमानन्दमनुभवन्नात्माऽवतिष्ठते।

तदुक्तम्—

" निजं यस्त्वात्मचैतन्यमानन्दश्चेष्यते च यः।
यच्च नित्यविभुत्वादि तैरात्मा नैव मुच्यते॥" इति।

---

न च मुक्तावस्थायामुत्पादकं कारणं संभवति तत्र केवलमात्मस्वरूपमात्रस्य स्वीकारादित्यर्थः। किं च स्वरूपानन्दप्रकाशस्य तदनुभव एव फलं वक्तव्यं तदपि मुक्तस्य न संभवत्यनुभवकारणानामिन्द्रियाणामभावादित्याह–विज्ञानमेवेति। आनन्दविषयकानुभवलक्षणप्रकाशरूपफलस्य प्रकाशविषयकं विज्ञानं कारणं तस्य चेन्द्रियं कारणं मुक्तस्य च नेन्द्रियमिन्द्रियाभावाच्च न विज्ञानमाऽऽनन्दविषयकविज्ञानाभावाच्च नानन्दानुभव इति यावत्। तच्च=विज्ञानम्।

एवमाक्षिप्य उत्तरमारभते वेदान्ती–उच्यते इत्यादिना। मुक्तावस्थायां बाह्येन्द्रियाणामभावेपि मनसः सत्त्वात्तेनैवानन्दानुभवः संभवति, मुक्तावस्थायां मनससत्त्वं च " आनन्दं ब्रह्म " इत्याद्यानन्दश्रुतिबलादेवार्थादऽध्यवसीयते, यदि तदा मनो न स्यात्तदाऽऽनन्दानुभवोपि न स्यादिति श्रुतिरानन्दं न प्रतिपादयेदित्यर्थः। एवं मुक्तावस्थायां ज्ञानमपि श्रुतिरेव प्रतिपादयतीत्याह–एवमिति। विज्ञातेः=विज्ञानस्य। विज्ञानघनश्रुतेः= " विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय " इति श्रुतेः। अनया श्रुत्याऽऽत्मनो विज्ञानघनत्वं प्रतिपाद्यते न च मुक्तावस्थायामात्मस्वरूपनाश इति ज्ञानमपि तदा भवत्येवेत्यर्थः। उपसंहरति–तस्मादिति। अत्र प्रमाणमाह–निजमिति। निजम्=स्वाभाविकम्। मुक्तस्यानन्दभोक्तृत्वं मनससत्त्वं च निगदेनापि श्रुतिराह–" स वा एष दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके " "स तत्र

यत्तु–" तस्मात्कार्मक्षयादेव हेत्वभावेन मुच्यते ।
न ह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम् ॥"
इतिवार्तिकं तत्परमतम्, इत्येवमानन्दमोक्षवादिनोमतम् ।
अपरे त्वाहुः– अभावात्मकत्ववचनमेव स्वमतम्.
उपपत्त्यभिधानात्, आनन्दवचनं तूपन्यासमात्रत्वात्

---

पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा, स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति " सूत्रं च " संकल्पादेव तच्छ्रुतेः " " भावं जैमिनिर्विकल्पामननात् " " द्वादशाहवदुभयविधं बादरायणोतः " इति वेदान्तसिद्धान्तः । ननु श्लोकवार्तिके मोक्षस्याभावकरणकत्वमुक्तमित्याशङ्क्याह–यत्त्विति । तस्मादिति–" न हि कारणवत् किं चिदक्षयित्वेन गम्यते " इत्येवं पूर्ववाक्ये सकारणकस्यानित्यत्वमुक्त्वा मोक्षस्यापि सकारणकत्वे ह्यनित्यत्वं स्यादित्याशङ्क्योक्तम्–तस्मादिति, कर्मक्षयात्=कर्मक्षये जाते बन्धहेतुभूतकर्मणामभावेन मुच्यते इत्येव युक्तं कर्माभावं मुक्त्वाऽन्यत् मोक्षनित्यत्वकारणं किमपि न संभवतीत्यर्थः। परिहरति–तत्परमतमिति । ग्रन्थकृदुपसंहरति–इत्येवमिति ।

उक्तवार्तिकाभिप्रायव्याख्यातॄणामन्येषां मतमुपस्थापयति–अपरेत्विति । अभावात्मकत्ववचनम्=" तस्मात्कर्मक्षयादेव " इति । स्वमतम्=श्लोकवार्तिककारश्रीकुमारिलभट्टमतम्, अभावात्मकत्वे एव युक्त्यभिधानात्, तथा हि—

" न ह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम् ।
न च क्रियायाः कस्याश्चिद ऽभावः फलमिष्यते ॥
तत्र ज्ञातात्मतत्त्वानां भोगात् पूर्वक्रियाक्षये ।
उत्तरप्रचया ऽसत्त्वाद् देहो नोत्पद्यते पुनः ॥
कर्मजन्योपभोगार्थं शरीरं न प्रवर्तते ।
तदभावे न कश्चिद्धि हेतुस्तत्रावतिष्ठते ॥
मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।
नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया ॥ " इति ।

आनन्दवचनं यथा—

सुखोपभोगरूपश्च यदि मोक्षः प्रकल्प्यते ।

**परमतम्, न हि मुक्तस्यानन्दानुभवः संभवति करणाभावात् । मनः स्यादिति चेत्?, न, अमनस्कत्वश्रुतेः-"अमनोऽवाक्" इति ।**

**यत्तु-" न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते " इति तज्ज्ञानशक्त्यभिप्रायम्, अन्यथा हि सुषुप्तावपि ज्ञानानुवृत्तिरुक्ता स्यात् सा च संविद्विरुद्धेत्युक्तम् । विस्पष्टं चास्य शक्त्यभिप्रायत्वम्, एवं हि श्रूयते-"यद्वैतन्न पश्यति पश्यन् वैतन्न पश्यति, न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्येते, अविनाशित्वात् "न तु तद्द्वितीर-**

---

स्वर्ग एव भवेदेष पर्यायेण, क्षयी च सः ॥ "

इत्येवमुपन्यासमात्रं कृतं न तत्रोपपत्तिरुक्ता प्रत्युतानुपपत्तिरेवोक्तेति नेदं वार्तिककारमतमित्यर्थः । मोक्षे सुखानुभवं पराकरोति-नहीत्यादिना ।

ननु श्रुतिस्तु "न हि विज्ञातुर्विज्ञातेः" इत्येवं मोक्षावस्थायामपि ज्ञानसत्त्वं प्रतिपादयति ज्ञानं च मनो विना कथं स्यादित्याशङ्क्याह-यत्त्विति । इदं वचनं ज्ञानशक्त्यभिप्रायमस्ति आत्मनो ज्ञानशक्तेर्लोपो न भवतीत्यर्थः ज्ञानं तु मोक्षावस्थायां नैव भवति तथा च न मोक्षावस्थायां मनःकल्पनापत्तिरिति भावः। विपक्षे बाधकमाह-अन्यथेति । यदि मोक्षे ज्ञाननिवृत्तिर्न स्यात्तदा सुषुप्तावपि न स्यादुभयोस्तुल्यत्वात् न चैवं सम्भवतीत्याह-सा चेति । किं वा यदि मोक्षे ज्ञानं स्यात्तदा सुषुप्तावपि स्यादित्याह-सा चेति। सा=सुषुप्तौ ज्ञानानुवृत्तिः। संविद्विरुद्धा=ज्ञानाभावविषयकज्ञानविरुद्धा अन्यथा सुषुप्तेः स्वरूपहानिरेव स्यात्। उक्तमिति-(४८९पृ)"संविद्विरोधात् न हि सुप्तानामात्मा सुखं वा प्रकाशते"इत्यादिनोक्तम्। ननु "न हि विज्ञातुर्विज्ञातेः" इत्यत्रविज्ञातिशब्दो विज्ञानशक्त्यभिप्राय एव न विज्ञानपर इत्यत्र किं मानमित्याशङ्क्याह-विस्पष्टमिति । अस्य= उक्तवचनस्य । प्रमाणमाह-यद्वैतन्नेति । एतत्=मुक्तो न पश्यति, पश्यन्= ज्ञानशक्तिमानपि न पश्यतीत्यर्थः, यदि मोक्षावस्थायां ज्ञानं भवेत्तदा श्रुत्या " न पश्यति " इत्येवं ज्ञानं न निषिध्येत, ज्ञाननिषेधादेव ज्ञायते "न हि विज्ञातुर्विज्ञातेः" इत्यत्र विज्ञातिशब्दोपि ज्ञानशक्त्यभिप्रायक एवेत्यर्थः। शक्तिलोपाभावे हेतुमाह-अविनाशीति । ज्ञानाभावप्रतिपादकं वचनान्तरमाह- न तु

यमस्ति ततोऽन्यद्विभक्तं यत् पश्येत्"।

एवमन्यान्यपि वाक्यानि– "जिघ्रन् वैतन्न जिघ्रति न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यते" "न श्रोतुः श्रुतेर्विपरिलोपो विद्यते" "न स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यते" "न ज्ञातुर्ज्ञातेर्विपरिलोपो विद्यते" इति, तत्र तत्र दृष्टिघ्रातिश्रुतिस्पृष्टिशब्दाश्चक्षुर्घ्राणश्रोत्रत्वगिन्द्रियजन्यानां रूपगन्धशब्दस्पर्शविषयाणां विज्ञानविशेषाणां वाचकाः नार्थान्तरविषयाणां नापि विज्ञानसामान्यस्य न चैषां ज्ञानविशेषाणां सुषुप्तौ मुक्तौ वा कथं चिदप्यऽपरिलोपः सम्भवति न हि तदानीमिन्द्रियाणि सन्ति नापि गन्धादयो ज्ञा-

---

तदिति। "ततोऽन्यद् विभक्तं यत् पश्यते" इत्यनेन स्पष्टमेव ज्ञानाभावस्य प्रतिपादनात्। तद्द्वितीयम्=मुक्तात्मभिन्नं ज्ञानकरणादिकं मोक्षे न भवतीत्यर्थः।

प्रमाणान्तराण्याह–जिघ्रन्नित्यादिना। स्वाभिप्रायमाह–तत्र तत्रेति। तत्र तत्र=उक्तवचनेषु। यथा दृष्टिशब्दो रूपविषयकस्य चाक्षुषज्ञानस्यैव वाचको नार्थान्तरविषयस्य=न गन्धादिविषयकज्ञानस्य नापि ज्ञानसामान्यस्य इत्यन्वयः, यदि दृष्टिशब्दो ज्ञानसामान्यस्य वाचकः स्यात्तदा मुक्तावपि संभवात् "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इत्युक्तो दृष्टिलोपाभाव उपपद्येतापि न चैवमस्ति दृष्टिशब्दस्य रूपविषयकचाक्षुषज्ञानमात्रवाचकत्वात् चाक्षुषं च ज्ञानं चक्षुर्विना न संभवति चक्षुस्तु मुक्तस्य नैव भवतीत्यनुपपन्नम्–"न हि द्रष्टुर्दृष्टेः" इत्यादिवाक्यं न च श्रुतिवाक्येनानुपपन्नेन भवितव्यं तस्माद् दृष्ट्यादिशब्दानां दर्शनादिशक्तावेव तात्पर्यं दर्शनादिशक्तिस्तु मुक्तस्यापि संभवतीति दर्शनादिशक्तीनामेवाऽपरिलोपः श्रुत्या प्रतिपादित इति भावः। एतदेवोपपादयति–न चैषामिति। ज्ञानविशेषाणाम्=रूपादिविषयकचाक्षुषादिज्ञानानाम्। मुक्तौ ज्ञानविशेषाभावे हेतुमाह–नहीति। तदानीम्=सुषुप्तौ मुक्तौ च। नापीति–यदि मुक्तस्य गन्धादिकं गन्धादिज्ञानविषयतां प्राप्नुयात्तदाप्यर्थाद् गन्धादिविषयकस्य ज्ञानविशेषस्योक्तोऽपरिलोप उपपद्येत न चैवमस्तीत्यर्थः। तदुभयाभावे=इन्द्रियस्य गन्धादिज्ञानस्य चाभावे

यन्ते तदुभयाभावे च न श्रुत्यादिशब्दवाच्यज्ञानविशेषाः सम्भवन्ति ।

ननु यथा प्रकाश्यासंनिधावपि सवितुः प्रकाशकत्वं नित्यम्. एवमिन्द्रियाभावेपि नित्यैव दृष्टिरिति चेत् ?, स्यादेवं यदि ज्ञानमात्रं दृष्ट्यादिशब्दानां वाच्यं स्यात् न तु तथास्ति लोकप्रसिद्ध्यभावात्. यथालोकं च शब्दार्थावधारणं न यथेच्छम्. न हि लोके गन्धादन्यद् घ्राणं जिघ्रतीत्युच्यते, गन्धमपि यदा घ्राणादन्येनानुमानादिना जानाति तदा न जिघ्रतीत्युच्यते, तस्माद् घ्राणादीन्द्रियजन्यगन्धादिविषयज्ञानविशेषवाचिनो घ्रात्यादिशब्दाः, न च तेषां सुषुप्तौ मुक्तौ वा सम्भवत्यऽपरिलोपः, तस्माद् घ्राणादिशक्ता-

---

भावे न श्रुत्यादिशब्दवाच्यज्ञानविशेषाः संभवन्ति नापि ज्ञानसामान्यम् "निर्विशेषं न सामान्यम्" इति न्यायात् तस्माद् दृष्टिश्रुत्यादिशब्दास्तत्तज्ज्ञानशक्त्यभिप्रायका एवेति सिद्धम् ।

यदुक्तं "तदुभयाभावे" इति तत्राशङ्कते–नन्विति । न हि सूर्यस्य प्रकाश्यपदार्थसत्त्व एव प्रकाशो भवति किं तु सर्वदैव एवं मुक्तस्यापि ज्ञानं ज्ञेयज्ञानसाधनयोरभावेपि किं न स्यादित्यर्थः । परिहरति–स्यादेवमिति । दृष्ट्यादिशब्दानां यदि ज्ञानमात्रमेवार्थः स्यात्तदा तस्य रूपविषयकत्वाभावाद्रूपं विनापि सत्त्वमुच्येत तथा गन्धादिविषयकत्वाभावाच्च गन्धादिकं विनापि सत्त्वमुच्येत नैवमस्ति दृष्ट्यादिशब्दानां चाक्षुषादिज्ञानविशेषवाचकत्वात् । अत्र हेतुमाह–लोकेत्यादिना, "य एव लौकिकास्त एव वैदिकाः" इतिन्यायात्.लोके च दृष्ट्यादिशब्दानां चाक्षुषादिज्ञानविशेष एव प्रयोगात् तथैव वेदेपि भवितव्यमित्यर्थः । विपक्षे बाधकमाह– न हीति । जानातीत्यत्र देवदत्तादिरिति शेषः । उपसंहरति–तस्मादिति । स्वाभिप्रायमाह– न चेति । तेषाम्=गन्धादिविषयकघ्राणजादिज्ञानानाम् । घ्राणाद्युपचारः=घ्राणजादिज्ञानानामुपचारः । मोक्षे विषयं विनापि ज्ञानं भवतीति प्रशस्ततरो मोक्ष इति प्ररोचना, न च ज्ञानं भवतीति ज्ञानशक्तौ लक्षणेत्यर्थः । अत्र द-

वेव प्ररोचनार्थं घ्राणाद्युपचारः, यथा " तेन ह्यन्नं क्रियते " इति शक्तिवर्तमानत्वेन प्ररोचनार्थं " क्रियते " इति वर्तमानत्वोपचारः, तस्मात् " न ज्ञातुर्ज्ञातेर्विपरिलोपो विद्यते " इत्येतदपि शक्त्यभिप्रायमेव।

यत्त्वादित्यप्रकाशकत्ववदिति, किं तस्य प्रकाशकत्वमभिप्रेतम् ? यदि तिमिरोत्सारणम् ?, तन्नित्यमस्त्येव सर्वदा ह्यसावऽव्यवहितेषु देशेषु तिमिरमुत्सादयत्येव, न त्वेवमात्मा सर्वदा शृणोति सुषुप्तावऽश्रवणात्। अथ ज्ञानजनकत्वमादित्यस्य प्रकाशकत्वम् ?। न तन्नित्यम्, तत्सामर्थ्यमेव तत्रापि नित्यम्, तस्माज्ज्ञानशक्त्यभिप्रायमिदं नित्यत्वाभिधानम्।

एषा ह्यत्र वचनव्यक्तिः–यदेतत् सुषुप्तौ मुक्तौ वाऽऽत्मा न पश्यति पश्यन्नेव=द्रष्टुं शक्नुवन्नेव न पश्यति.

---

ष्टान्तमाह–यथेति। " शूर्पेण जुहोति तेन ह्यन्नं क्रियते " इत्यत्र यथा होमकालेऽन्नसम्पत्त्यऽसम्भवेपि शूर्पहोमेऽन्नसंपादकताशक्तेर्वर्तमानत्वात् " क्रियते " इत्यन्नसंपादकत्वस्य वर्तमानत्वमुच्यते तथा " न ज्ञातुर्ज्ञातेः " इत्यादिशब्दोपि तत्तज्ज्ञानशक्त्यभिप्रायक एव ज्ञानशक्तेर्वर्तमानत्वादित्यर्थः। अत्र " तस्मात् " इत्यत्र ' तथा ' इति युक्तः पाठः।

यच्च सूर्यस्य प्रकाशकत्वं दृष्टान्तविधयोक्तं तद्विवेचयति–यत्त्विति, अत्र 'उक्तम् ' इति शेषः। स्वयं पृच्छति–किमिति। तस्य=आदित्यस्य। आदित्यस्य प्रकाशकत्वं तिमिरोत्सारकत्वं वा ज्ञानजनकत्वं वेति विकल्प्य प्रथमस्य नित्यत्वं स्वीकरोति– तन्नित्यमिति। न त्वेवमात्मनि ज्ञानं सदा सम्भवति येन मुक्तावपि स्यादित्याह– न त्वेवमिति। द्वितीयपक्षमुत्थापयति–अथेति। आदित्यनिष्ठं ज्ञानजनकत्वं न नित्यमित्याह–न तन्नित्यमिति। अस्मिन् पक्षे रवेः प्रकाशकत्वं कथं नित्यमुच्यत इत्याशङ्क्याह–तत्सामर्थ्यमेवेति। तत्सामर्थ्यम्=ज्ञानजनकत्वसामर्थ्यम्। तत्र=सूर्ये। उपसंहरति–तस्मादिति। नित्यत्वाभिधानम्=" न ज्ञातुर्ज्ञातेः" इति ज्ञानस्य नित्यत्वप्रतिपादनं ज्ञानशक्त्यभिप्रायमेव।

" यद्वैतन्न पश्यति " इति श्रुतिं स्वमतेन व्याचष्टे–एषेति। वच-

नहि द्रष्टुरात्मनो या दर्शनशक्तिस्तस्याः कदा चिदपि लोपो विद्यते. सा ह्यविनाशिनीति, न द्रष्टुर्द्वितीयमन्यद् दर्शनसाधनं चक्षुर्व्यापाररूपं दृश्यं वा तस्यामवस्थायामस्ति यतो दर्शनं स्यात्, यद्यपि दृश्यं रूपादिकं स्वरूपतस्तस्यामवस्थायामस्ति तथापि दृश्यता=दर्शनयोग्यता तस्यामवस्थायां नास्तीति तेन रूपेणाऽभावाद् दृश्यं नास्तीत्युच्यते तस्मात्साधनान्तरवैकल्यात् तस्यामवस्थायां न पश्यति न शक्तिवैकल्यात्, शक्तिस्तु न कदा चिदपि लुप्यते इति । एवमन्येषामपि वाक्यानां योजना । तथा ज्ञानशक्त्यऽपरिलोप एव ज्ञानाऽपरिलोप उच्यते, ज्ञातिशब्दश्चात्रानुमानादिज्ञानपरः चक्षुरादिज्ञानानां स्वशब्दैरुक्तत्वात् ।

एवम्-" विज्ञानं ब्रह्म " " विज्ञानघनः " इत्यादीनामपि शक्तिपरत्वं वेदितव्यम् । स्वयमेव श्रुत्या शक्तिपरत्वं व्याख्यातम्- " विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति " इति भूतेन्द्रियनाशा-

---

नव्यक्तिः=वाक्यार्थः । " न तु तद्द्वितीयमस्ति " इति श्रुतिं व्याचष्टे-न द्रष्टुरिति । यतः-यस्माद् येनेत्यर्थः । स्वाभिप्रायमाह-यद्यपीति । तस्यामवस्थायाम्=मुक्तावस्थायाम् । तेन रूपेण=दर्शनयोग्यतारूपेण । स्वमतमाह-तस्मादिति । उपसंहरति-तथेति । तथेत्यत्र तस्मादिति युक्तः पाठः । अत्र=" न ज्ञातुर्ज्ञातेः " इत्यत्र । पारिशेष्यादिति भावः । स्वशब्दैः=" न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते " इत्येवं दृष्ट्यादिशब्दैश्चाक्षुषादिज्ञानानामुक्तत्वात् पारिशेष्यात् " न ज्ञातुर्ज्ञातेः " इत्यत्र ज्ञातिशब्दो ऽनुमानादिज्ञानपर इत्यर्थः । इदं च सर्वं वाजसनेयोपनिषदः षष्ठाध्यायतृतीयब्राह्मणे द्रष्टव्यम् ।

उक्त न्यायमन्यत्र योजयति-एवमिति । शक्तिपरत्वम्=विज्ञानशब्दस्य विज्ञानशक्तिपरत्वं ज्ञेयं न विज्ञानक्रियापरत्वम् । शक्तिपरत्वे प्रमाणमुपक्रमते-स्वयमेवेति । विज्ञानशब्दस्य शक्तिपरत्वप्रतिपादकश्रुतिप्रदर्शनाय ततः प्रथमां श्रुतिं पठति-विज्ञानेति । वाजसनेयोपनिषदश्चतुर्थाध्यायीयचतुर्थब्राह्मणे

दात्मापि प्रमाणागोचरत्वमापन्नो विनष्ट इव भवती-ति। न तस्येतः प्रेतस्य=मुक्तस्य संज्ञास्तीति। एवं या-ज्ञवल्क्येनोक्ते मैत्रेयी चोदयति स्म- 'अत्रैव भगवान् मा मोहितवान्-विज्ञानघन इति न चास्ति संज्ञेति विरुद्धाभिधानात्' इति। षष्ठाध्याये तु विनाशावि-नाशविरोधश्चोदयिष्यत इति विवेकः। एवंचोदितो याज्ञवल्क्यः परिहारमाह-"न वा अरे अहं मोहम्=" परस्परविरुद्धं "ब्रवीमि" "अलं वा अरे इदं विज्ञा-नाय" अत्रात्मतत्त्वं सर्वास्वऽवस्थासु विज्ञानायसम-र्थमित्यर्थस्तेन विज्ञानघनत्वाभिधानं सामर्थ्याभिप्रा-यमिति व्याख्यातं भवति, संभवति च शक्तस्यापि ज्ञानाभाव इति नास्ति विरोध इत्यभिप्रायः, अनया

---

द्रष्टव्यम्। ननु "तान्येवानुविनश्यति" इति कथमात्मनो नित्यस्य विनाश उक्त इत्याशङ्क्य श्रुत्यर्थमाह-भूतेति। यथा धननाशे नष्टोहमित्युच्यते यथा च समुद्रपातेन लब्धुमयोग्ये घटे नष्टो घट इत्युच्यते तथात्रापीन्द्रियादिविना-शेन नष्ट इत्युच्यते न स्वरूपेणाऽऽत्मनो नित्यत्वादित्यर्थः। "न प्रेत्य संज्ञा-स्ति" इत्यस्य श्रुतिभागस्यार्थमाह-न तस्येति। संज्ञा=ज्ञानम्। इत्यनया श्रुत्या मोक्षावस्थायां स्पष्टमेव ज्ञानाभाव उक्त इति भावः। मैत्रेयीशङ्कामुत्था-पयति-एवमिति। तामर्थतोनुवदति-अत्रैवेति। श्रुतिवचनं तु-"अत्रैव मा भगवानऽमूमुहन्न प्रेत्य संज्ञास्तीति" इति। एवमेव वाजसनेयोपनिषदः षष्ठा-ध्यायपञ्चमब्राह्मणेपि विचारोस्तीति पुनरुक्तदोषपरिजिहीर्षया प्रसङ्गेनाह-षष्ठेति। तत्र "अत्रैव मा भगवान्मोहान्तमापीपिपत्" इत्येवं मैत्रेय्योक्ते "अरे ऽयमात्माऽनुच्छित्तिधर्मा" इत्युक्तम्, अनेन षष्ठाध्यायवाक्येनात्मनो-ऽविनाशित्वमुक्तम्, अत्र च ज्ञानशक्तिमत्त्वमुक्तमग्रिमवाक्येनेति विवेक इत्यर्थः। प्रकृतमनुसरति-एवमिति। एवम्="अत्रैव मा भगवान्" इत्येवम्। इदम्= आत्मतत्त्वं मुक्तावस्थायामपि विज्ञानायालम्=समर्थम्-विज्ञानशक्तिमदेव ति-ष्ठतीत्यर्थः। श्रुत्यर्थमाह-अत्रेति, अत्र=उक्त श्रुतौ। स्वाभिप्रायमाह-तेनेति। ज्ञानसमर्थस्य ज्ञानाभावः कथमित्याशङ्क्याह-सम्भवतीति। उपसंहरति-अन-

श्रुत्या सर्वविज्ञानश्रुतयः शक्त्यभिप्राया व्याख्याताः ।

यदि शक्तिरस्ति तस्यामवस्थायां ततः केन ज्ञानानुत्पत्तिः ?, ज्ञानसाधनानामिन्द्रियाणां ज्ञेयानां च विषयाणामभावात्, तदाह-" यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति. यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् ?" इत्यादि, तदेतत् प्रागेव व्याख्यातम् । एवमर्थान्तरज्ञानं साधनाभावान्निराकृते सति आत्मानमेव मुक्तावस्थायां जानात्वित्याशङ्क्याह-" विज्ञातारमरे केन विजानीयात् " इति न ह्यात्मापि विना साधनेन ज्ञातुं शक्यते मनसा खल्वसौ संसारावस्थायां ज्ञायते न च मुक्तस्य मनस्सम्बन्धोस्ति. अतः ' केनात्मानं जानातु ' इति व्यक्त एव मुक्तस्यात्मज्ञानाभावो ज्ञानशक्तिमात्रस्याऽवस्थानं श्रुत्या दर्शितम्, तस्मान्निसम्बोधो निरानन्दश्च मोक्षः ।

---

येति-" अलं वा अरे इदं विज्ञानाय " इति श्रुत्या निगदेनैव ज्ञानशक्तिसत्त्वस्य प्रतिपादनात् " न प्रेत्य संज्ञास्तीति " इति श्रुत्या च ज्ञानक्रियाप्रतिषेधात् " न द्रष्टुर्दृष्टेः " इत्यादिश्रुतिषु दृष्ट्यादिशब्दानां दृष्ट्यादिशक्तिपरत्वं व्याख्यातमित्यर्थः ।

ज्ञानानुत्पत्तिमाशङ्कते-यदीति । तस्यामवस्थायाम्=मुक्तावस्थायाम् । केनेति-ज्ञानशक्तिसत्त्वेपि यज्ज्ञानं नोत्पद्यते तत्र कोहेतुरित्यर्थः । उत्तरमाह-ज्ञानेति । मुक्तावस्थायामिन्द्रियाणां ज्ञेयानां चाभावे श्रुतिं प्रमाणयति-यत्रेति । इदं च श्रुतिवाक्यं पूर्वं(५०१पृ)व्याख्यातमिति नेह व्याख्यायत इत्याह-तदेतदिति । ननु ज्ञेयाभावेपि स्वरूपज्ञानं मोक्षे भविष्यतीत्याशङ्क्याह-एवमिति । स्वाभिप्रायमाह- नहीति । असौ=आत्मा । श्रुत्युपसंहारमाह- अत इति । स्ववक्तव्योपसंहारमाह-तस्मादिति । निसम्बोधः=ज्ञानरहितः । मुक्तस्यानन्दोपि न भवति ज्ञानमपि न भवतीत्यर्थः । अत्र प्राभाकरैरप्येवमुक्तम्-" न च मोक्षस्यापुरुषार्थता सांसारिकविविधदुःखोपरमरूपत्वान्मोक्षस्य दुःखोपरमोहि पुरुषैरर्थ्यते । मोक्षस्तु सांसारिकदुःखोपशमात् पुरुषार्थ इति

ननु नाऽऽत्मनोऽन्यद्विज्ञानमानन्दो वा किं त्वात्मैव ज्ञानमानन्दश्च " विज्ञानं ब्रह्म " " आनन्दं ब्रह्म " इति श्रुतेः, आत्मा च सुषुप्तितुरीययोरपि भवतीति कथं विज्ञानस्य चानन्दस्य चाभावः ? । नैतदेवम्–यद्धि वस्त्वन्तरप्रकाशजननस्वभावं वस्तु=यस्मिन् सति किमप्यर्थान्तरं प्रकाशत एव तल्लोके विज्ञानशब्देनोच्यते, न चात्मनि सति किं चिदन्यत् प्रकाशत एव विद्यमानेपि तस्मिन् सुषुप्त्यऽवस्थायामर्थान्तरस्य कस्य

---

पुष्कलम् । धर्माधर्मवशीकृतो जीवस्तासु तासु योनिषु संसरति, तयोरेकान्तोच्छेदेप्यऽपगतदेहेन्द्रियसम्बन्धः समुत्खातनिखिलसांसारिकदुःखबन्धनो मुक्त इत्युच्यते । कथं पुनरशेषधर्माधर्मपरिक्षयः ? न तावदुपभोगेनैव–अनादिशरीरसन्ततिसञ्चितानां भोगसमये सञ्चीयमानानां कर्माशयानामऽनन्तानां क्षेप्तुमशक्तेः । उच्यते–यः खलु सांसारिकेभ्यो दुःखेभ्य उद्विग्नस्तदनुशङ्गबलेभ्यश्च सुखेभ्योपि गतस्पृहो मोक्षायोत्तिष्ठते स तावद्बन्धहेतुभूतेभ्यो निषिद्धेभ्यः प्रत्यवायहेतुभूतेभ्योऽभ्युदयसाधनेभ्यश्च निवर्तमानः सन्नुत्पन्नपूर्वौ धर्माधर्मौ भोगेन कृतावपि क्षयं नयन् शमदमब्रह्मचर्यादिकाङ्गोपबृंहितेनात्मज्ञानेन " न च पुनरावर्तते " इत्यपुनरावृत्तये चोदितेन निःशेषकर्माशयं नाशयन् मुच्यते । ननु मुक्तस्यात्मनः सकलोपलम्भातीतस्य सन्मात्रावस्थितौ किं प्रमाणम् ? । उच्यते–सदऽकारणं च यत् तदविनाशि गगनवत् सदऽकारणं चायमात्मेत्यविनाशित्वभावः सिद्धः ।" इत्यादि ।

यदुक्तम्–" ज्ञानसाधनानामिन्द्रियाणां ज्ञेयानां च विषयाणामभावाज्ज्ञानानुत्पत्तिः " " तस्मान्निसम्बोधो निरानन्दश्च मोक्षः " इति तत्र शङ्कते–नन्विति । यद्यात्मनोऽन्यद्विज्ञानमानन्दश्च स्यात्तदा तत्साधनविषययोरभावान्मोक्षे ज्ञानानन्दयोरभावः स्यादपि नैवमस्ति किं त्वात्मैव विज्ञानमानन्दश्च स चात्मा मोक्षेपि भवत्येवेति कथं ज्ञानानन्दयोर्मोक्षेऽभावः स्यादित्यर्थः । तुरीयः=मोक्षः । परिहरति–नैतदेवमिति । नियमेन वस्त्वन्तरप्रकाशकमेव लोके ज्ञानशब्देनोच्यते न च नियमेन वस्त्वन्तरप्रकाशकत्वमात्मनोऽस्ति सुषुप्तौ व्यभिचारादिति नात्मा ज्ञानशब्दवाच्यो येनाऽऽत्मनो ज्ञानरूपत्वं स्या-

चिदप्यदर्शनात्, अतो न ज्ञानमात्मा ।

ननु प्रकाशजननस्वभावोपि सहकारिवैकल्यान्न जनयेत् ? । सत्यं न जनयति, यस्मिंस्तु सहकारिसंनिधाने तत्कृते वाऽन्यस्मिन्नाऽऽगन्तुके सति नियमेन प्रकाशत एवार्थान्तरं तज्ज्ञानशब्दवाच्यम् । तथा गीतिश्रवण-प्रियालिङ्गन-चन्द्रदर्शन- मधुरास्वाद- सुरभिघ्राणादिजन्यमाऽऽल्हादमाऽऽनन्दसुखशब्दावऽभिदधाते न चैवं रूपत्वमात्मनोस्ति, यथा ह्यन्यसुखेषु सुखरूपं प्रत्यभिज्ञायते नैवमात्मनि प्रत्यभिजानीमो येनाऽऽनन्दशब्दस्याभिधेयः स्यात् ? ।

---

दित्यर्थः । तस्मिन्=आत्मनि । अदर्शनात्=अप्रकाशनात् तस्मान्न मोक्षे ज्ञानसम्भव इति निस्संबोधो मोक्षः ।

ननु सर्वत्र कारणेन कार्योत्पत्तौ सहकारिसंनिधानमपेक्ष्यते यथा बीजेनाङ्कुरोत्पत्तौ मृत्सलिलसंयोगः, तथा ज्ञानस्वरूपेणाप्यात्मनाऽर्थान्तरप्रकाशे जननीये विषयेन्द्रियसंयोगादिसहकारिणां सन्निधानस्यावश्यमपेक्षा वक्तव्या तथा चात्मा प्रकाशजननस्वभावोपि मुक्तावस्थायां सहकारिवैकल्यादर्थान्तरप्रकाशं न जनयति मुक्तस्येन्द्रियाणामभावाद्विषयसांनिध्याभावाच्चेति न प्रकाशाऽजननमात्रेण ज्ञानस्वरूपत्वहानिरित्याशङ्कते-नन्विति । उत्तरमाह-सत्यमिति । यद्यपि प्रकाशजननस्वभावोपि सहकारिवैकल्ये सति न प्रकाशं जनयति तथापि सहकारिसंनिधाने तत्कृते=सहकारिसंनिधानकृते वाऽऽगन्तुके कस्मिंश्चिद्विशेषे सति तु यद्वस्तु प्रकाशं जनयत्येव तदेव ज्ञानशब्दवाच्यं भवति लोके न चैवंरूप आत्मास्ति कदा चित्संसारावस्थायामपि सहकारिसंनिधानेप्यर्थान्तरप्रकाशाजननादिति नात्मा ज्ञानस्वरूपो येन मोक्षे ज्ञानं स्यादिति भावः । आत्मनो ज्ञानरूपत्वं पराकृत्याऽऽनन्दरूपत्वं पराकरोति- तथेति । विषयसुखमेव सुखशब्दस्यानन्दशब्दस्य च वाच्यमस्ति न च तद्रूपत्वं तत्सदृशत्वं वात्मनोऽनुभूयते येनात्मा सुखरूप आनन्दरूपो वोच्येतेत्याह- न चैवमिति । विपक्षे बाधकान्तरमाह-यथेति । अभिधेयः स्यादित्यदित्यत्रात्मेति शेषः ।

यदि पुनर्यदेवात्मरूपं प्रतीयते तस्यैव ज्ञानमिति चानन्दमिति च संज्ञेत्युच्यते ? न सा लौकिकी नापि वैदिकी । यदि परं वृद्ध्यादिवत् परिभाष्येत? तदस्तु यथाकामम् । यत्तु " विज्ञानं ब्रह्म " " आनन्दं ब्रह्म " इति च सामानाधिकरण्यं तद् धर्ममात्रवचनत्वेन धर्मधर्मिणोरभेदान्नीलोत्पलादिवदुपपन्नम् ।

नन्वानन्दादिशब्दा गुणमात्रनिष्ठा न नीलादिवद् गुणिनि वर्तन्ते ?, सत्यं न बाहुल्येन वर्तन्ते कदाचित्तु

---

वास्तविकज्ञानानन्दयोरभावेप्यात्मनो ज्ञानानन्दशब्दाभिधेयतायां लोकवेदयोरसंमतिमाह– यदि पुनरिति । परिभाषामात्रत्वे च स्वपक्षाऽहानिं परपक्षे प्रयोजनाभावं च सूचयति–यदि परमिति । परिभाषामात्रेणात्मनो ज्ञानानन्दस्वरूपताऽसिद्धेः । वृद्ध्यादिवत्=यथा व्याकरणे " वृद्धिरादैच् " इत्येवं वृद्धिसंज्ञा तथा । तत्=परिभाषणम् । ननु यद्यात्मा न ज्ञानानन्दस्वरूपस्तदा कथं " विज्ञानं ब्रह्म " " आनन्दं ब्रह्म " इत्येवं सामानाधिकरण्यं स्यादित्याशङ्क्याह–यत्त्विति । नीलशब्दस्य धर्मवाचकत्वेपि यथा नीलमुत्पलमिति सामानाधिकरण्यं भवति तथा ऽत्रापि ज्ञेयमित्याह–तदिति । यथा तत्रोत्पलस्य द्रव्यत्वेन नीलत्वाभावेपि नीलमुत्पलमिति प्रयोगस्तथाऽत्रात्मनो ज्ञानत्वानन्दत्वाभावेपि "विज्ञानं ब्रह्म" "आनन्दं ब्रह्म" इति प्रयोगो भवतीति भावः । हेतुमाह–धर्मेति । ज्ञानानन्दयोरपि संसारावस्थायामेवात्मधर्मत्वं ज्ञेयं मुक्तावस्थायां तत्कारणाभावात्तयोरात्मधर्मत्वमपि न संभवतीत्यनुसन्धेयम् ।

ननु नीलादिशब्दानां तु " नीलमुत्पलम् " इत्यादिप्रयोगाद् द्रव्ये गुणिन्यपि वृत्तिः सम्भाव्यते इति युक्तं तत्र नीलशब्दस्य गुणपरत्वाभावेनोत्पलशब्देन सामानाधिकरण्यम्, एवमानन्दादिशब्दानां तु लोके द्रव्ये गुणिनि प्रयोगाभावाद् द्रव्यपरत्वं नास्तीति गुणमात्रपरत्वमेव प्राप्तमिति यद्यात्माऽऽनन्दस्वरूपो न स्यात्तथा ज्ञानस्वरूपो न स्यात्तदा ज्ञानानन्दशब्दयोः कथं ब्रह्मशब्देन सामानाधिकरण्यं स्यात्–" विज्ञानं ब्रह्म " " आनन्दं ब्रह्म " इति ? इत्याशङ्कते–नन्विति । उत्तरमाह–सत्यमिति । यद्यपि गुणमात्रबोधकानामानन्दादिशब्दानां बाहुल्येन गुणिनि द्रव्ये प्रयोगो न भवति तथापि

गुणमात्रवचनानामपि गुणिनि प्रयोगो भवति यथा शीतो मधुरो रसः स्निग्धो गुरुश्चेति रसशब्दो द्रव्ये प्रयुज्यते, अन्यथा शीतादिशब्दसामानाधिकरण्याऽयोगात्। किं च " रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति " इति मत्वर्थीयनिर्देशादात्मानन्दयोर्भेदोऽवगम्यते। तथा "आनन्दं ब्रह्मणो विद्वान् " " स एको ब्रह्मण आनन्दः " इति षष्ठ्याऽऽनन्दाद् ब्रह्म व्यतिरिच्यते।

किं च ' न मे सांप्रतं किंचिदपि सुखं दुःखमेव तु सर्वात्मना मम ' इति सुखाभावे दुःखानुभवे चानुसंधी-

---

कदा चित् प्रयोगो भवत्येवेत्यर्थः। प्रयोगसत्त्वे दृष्टान्तमाह- यथेति। शीतो रस इत्यत्र रसशब्दस्य गुणमात्रवाचकस्यापि गुणिनि द्रव्ये एव प्रयोगोस्ति। नन्वत्र रसशब्दस्य गुणे एव किं न प्रयोगः स्यादित्याशङ्क्याह-अन्यथेति। " गुणादिर्निर्गुणक्रियः " इति नियमाद् गुणे गुणो न वर्तते यद्यत्र रसशब्दो गुणपरः स्यात्तदा रसगुणे शीतगुणाभावात् " शीतो रसः " इति सामानाधिकरण्यं न स्यात् द्रव्यपरत्वे तु द्रव्ये शीतत्वादिगुणानां सम्भवात्सम्भवति सामानाधिकरण्यमित्यर्थः। एवं मधुरो रस इत्यादि व्याख्येयम्। एवं गुणमात्रवाचकानामप्यानन्दादिशब्दानां गुणिनि द्रव्ये प्रयोगः सम्भवतीति श्रुतिर्वदति-" विज्ञानं ब्रह्म " आनन्दं ब्रह्म " इति तस्माद्विज्ञानानन्दयोरात्मधर्मत्वमेव नत्वात्मनो विज्ञानानन्दस्वरूपत्वमित्यर्थः। आनन्दात्मनोर्भेदे श्रुतिं प्रमाणयति-रसमिति। मत्वर्थीयनिर्देशात्=आनन्दीति मत्वर्थीयनिर्देशात्। यद्यानन्द एवात्मा स्यात्तदाऽऽनन्दीति प्रयोगो न स्याद् भेदे एव मत्वर्थीयप्रयोगात्। भेदे श्रुत्यन्तरमाह-आनन्दमिति। "न बिभेति कुतश्चन" इति श्रुतिशेषः- ब्रह्मसंबन्धिनमानन्दं विद्वान्=जानन् कस्मादपि न बिभेतीति श्रुत्यर्थः। श्रुत्यन्तरमाह-स एक इति, उक्त श्रुतिद्वयेपि षष्ठ्या ब्रह्मण आनन्द उक्त इति आत्मानन्दयोः स्पष्टमेव भेदः श्रुत्या प्रतिपाद्यत इति नात्मानन्दरूप इत्यर्थः।

आत्मन आनन्दरूपत्वाभावे लौकिकीं प्रतीतिं प्रमाणयति-किं चेति। स्वाभिप्रायमाह-सुखाभावेति। सुखाभावकाले सुखाभावानुयोगित्वेन वाऽनुसन्धीयमानस्येत्यर्थः। दुःखानुभवेति-अहं दुःखीति दुःखित्वानुभवविषयत्वेना-

यमानस्यात्मनः कथमानन्दरूपता स्यात् ?। किं च स्वप्रकाशानन्दरूपमात्मानमभ्युपगच्छतामऽस्माकं चैतावदऽविवादम्—सुषुप्तितुल्या मुक्तिरिति. संसाराऽनुवृत्त्यऽननुवृत्तिमात्रं भिद्यते. अन्यत्सर्वं तुल्यम्, तथा च श्रुतिरपि—"ता एताः प्रजा अहरहर्ब्रह्मलोकं यन्ति. अहरहरागच्छन्ति" इति सुषुप्तिं ब्रह्मलोक शब्देन वदन्ती तुल्यत्वमेतयोर्दर्शयति, सुषुप्तिश्चास्माकमपि गोचरो न च तत्रानन्दानुभवोस्तीति व्यक्तमेतत्, तस्मान्निरानन्दो मोक्षः, दुःखपरिलोपाच्च पुरुषार्थत्वम्।

सुखलोपादऽपुरुषार्थत्वमपीति चेत् ?,

नैवमल्पं हि संसारे सुखं तदपि सूरयः।
बहुप्रयाससाध्यत्वाद् दुःखमेवानुजानते ॥ १ ॥
जन्ममृत्युजराव्याधिदुःखान्यनुदिनं नृणाम्।
स्वयमेव विना यत्नान्निपतन्ति सहस्रधा ॥ २ ॥

---

ऽनुसन्धीयमानस्येत्यर्थः। बाधकान्तरमाह किं चेति। भवता मया च सुषुप्तिमोक्षयोस्तुल्यत्वमेवोच्यते भेदस्तु केवलमऽयमेव—यत् सुषुप्त्यनन्तरमपि संसारानुवृत्तिर्भवति मोक्षानन्तरं च न भवतीति, सुषुप्तिमोक्षयोस्तुल्यत्वे श्रुतिं प्रमाणयति—ता एता इति। एतयोः=सुषुप्तिमोक्षयोः। यदि सुषुप्तिमोक्षयोस्तुल्यत्वं न स्यात्तदा सुषुप्तेर्ब्रह्मलोकशब्देन मोक्षवाचकेनात्राभिधानं न स्यात्। तथा च यदि सुषुप्तावानन्दानुभवः स्यात्तदा तद्दृष्टान्तेन मोक्षेप्यानन्दानुभव उच्येत सुषुप्तौ चाऽऽनन्दानुभवो न भवतीति प्रत्यक्षमेवेति न मोक्षेप्यानन्दानुभवः संभवतीत्यन्वयः। ननु सुखाभावे कथं मोक्षस्य पुरुषार्थत्वं स्यादित्याशङ्क्याह—दुःखपरिलोपादिति।

ननु सुखलोपादऽपुरुषार्थत्वमपि स्यान्मुक्तेरित्याशङ्कते—सुखलोपादिति। पद्यैः परिहरति—नैवमित्यादिना। संसारे सुखमल्पतरमस्ति तदपि प्रयाससाध्यत्वात् कैश्चिन्नापि प्राप्तुं शक्यते दुःखं चाधिकतरमस्ति तदपि स्वयमेव यत्नं विनैवापततीति दुःखबहुलसंसारनिवृत्तिरूपत्वेन मोक्षस्य पुरुषार्थत्वं न तु सुखरूपत्वेन येना ऽसुखरूपत्वादऽपुरुषार्थत्वं स्यादित्यर्थः। १। २।

विहिताऽकरणान्नित्यं प्रतिषिद्धनिषेवणात् ।
महदामुष्मिकं दुःखं यन्नरैर्नैव गम्यते ॥ ३ ॥
बहुदुःखपरिष्वक्तं यन्नाम स्वल्पकं सुखम् ।
सुरापानादिसुखवद्वर्जनीयं विवेकिनाम् ॥ ४ ॥
एवंभूतेपि संसारे ये रक्ताः सुखतृष्णया ।
न तेषामधिकारोस्ति मुक्तिशास्त्रे कथं चन ॥ ५ ॥
संसारादुद्विजन्ते ये दृष्टलोकपरावराः ।
त एव खलु मुच्यन्ते न तु यः प्राकृतो जनः ॥ ६ ॥
तेषामेवापवर्गाख्यः पुरुषार्थो महात्मनाम् ।
तेषामेवाधिकारश्च मुक्तिशास्त्रे मनीषिणाम् ॥ ७ ॥
तेनाऽभावात्मकत्वेपि मुक्तेर्नाऽपुरुषार्थता ।
सुखदुःखोपभोगो हि संसार इति शब्द्यते ॥ ८ ॥
तयोरनुपभोगं तु मोक्षं मोक्षविदो विदुः ।
श्रुतिरप्येतमेवाह भेदं संसारमोक्षयोः ॥ ९ ॥

---

नरकदुःखं तत्कारणं चाह–विहितेति । गम्यते इत्यत्र गण्यत इत्यपि पाठः । गम्यते=ज्ञायते । ३ । संसारसुखस्य हेयतामाह–बहुदुःखेति । यथा विषमिश्रं मधु त्यज्यते तथा दुःखबहुलत्वात्संसारसुखमपि त्याज्यमेवास्ति । विवेकिनामित्यत्र विवेकिनेत्यपि पाठः । ४ । दुःखबहुलेपि संसारसुखेऽनुरक्तानां मोक्षशास्त्रेऽनधिकारमाह–एवमिति । एवंभूते=दुःखप्रधाने । ५ । मोक्षाधिकारिणमाह–संसारादिति । दृष्टलोकपरावराः=अनुभूतसंसारविषया जनाः । नेत्यत्र 'न तु ये प्राकृता जनाः' इति युक्तः पाठो बहूनां बद्धत्वात् मुक्तानां चाल्पत्वात् । ६ । संसारादुद्वेगवतां मोक्षशास्त्रे ऽधिकारं मोक्षप्राप्तिं चाह–तेषामिति । मनीषिणाम्=स्वाधीनमनसाम् । ७ । स्वाभिप्रायमाह–तेनाति । उक्तेर्थे हेतुमाह–सुखेति । यतः सुखानुभवोपि संसारपक्षे एव वर्ततेऽतो मोक्षस्याऽभावात्मकत्वे=सुखाभावात्मकत्वेप्यपुरुषार्थता न युक्ता सांसारिकविविधानन्तदुःखनिवृत्तिमात्रेणैव पुरुषार्थत्वादिति भावः । ८ । यतः सुखदुःखयोरुपभोग एव संसारोऽतस्तयोः=सुखदुःखयोरनुपभोगस्यैव मोक्षत्वं युक्तमित्याह–तयोरिति । स्वसिद्धान्ते श्रुतिसंमतिमाह–श्रुतिरपीति ।

न ह वै सशरीरस्य प्रियाऽप्रियविहीनता।
अशरीरं वा व सन्तं स्पृशतो न प्रियाऽप्रिये ॥ १० ॥
आनन्दात्मकमात्मानं ये वदन्ति स्वयंप्रभम्।
तन्मतेपि च संसारान्मुक्तेरेतावती भिदा ॥ ११ ॥
आत्मा ह्यानन्दरूपोसौ संसारेपि प्रकाशते।
तावानेव स मोक्षेपि नाधिक्यं तस्य किं चन ॥ १२ ॥
अथ संसारवेलायामानन्दो न प्रकाशते?।
न ह्यऽप्रकाशनं युक्तं स्वप्रकाशस्य वस्तुनः ॥ १३ ॥
यद्यसौ न प्रकाशेत किं तर्ह्यन्यत् प्रकाशते ?।
आत्मस्वरूपमिति चेत् ? ननु चानन्द एव तत् ॥१४॥
तच्चेत् प्रकाशते नूनमानन्दोपि प्रकाशते ॥,
तेन शब्दादिविषयजन्ययोः सुखदुःखयोः–॥ १५ ॥

---

एतमेवेति–संसारे सुखदुःखयोरुपभोगो भवति मोक्षे च न भवतीत्ययमेव संसारमोक्षयोर्भेदः, आत्मस्वरूपस्य तूभयत्रापि तुल्यत्वात् ॥ ९ ॥ उद्दिष्टां श्रुतिमर्थतः पठति– न हेति। सशरीरस्य=संसारिणः। अशरीरम्=मुक्तम्। प्रियाप्रिये=सुखदुःखे। श्रुतिवचनं तु " न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः " इति ॥ १० ॥ परेणाप्येतदेव संसारमोक्षयोर्भेदो वक्तव्य इत्याह–आनन्देति। एतावती भिदेति– संसारे सुखदुःखयोरुपभोगो भवति मोक्षे च न भवतीति भेदः ॥ ११ ॥ विपक्षे बाधकमाह–आत्मेति। तावानेव=आनन्दरूप एव। सः=आत्मा। तस्य=मोक्षस्य। एवं हि संसारान्मोक्षस्याधिक्यं किमपि न स्यादित्यर्थः ॥१२॥ ननु संसारावस्थायां सन्नप्यात्मानन्दो न प्रकाशत इत्याशङ्कते–अथेति। परिहरति–नहीति ॥१३॥ मीमांसकः पृच्छति–यदीति। असौ=आत्मानन्दः। उत्तरमाह–आत्मेति। यद्यात्मस्वरूपं प्रकाशते तदात्मस्वरूपमेवानन्द इत्यानन्दोपि प्रकाशत इत्येव प्राप्तमित्याह– नन्विति। तत्=आत्मस्वरूपम् ॥ १४ ॥ आत्मस्वरूपं यदि प्रकाशते तदाऽऽनन्दोपि प्रकाशते आत्मस्वरूपानन्दयोरभेदादित्याह–तच्चेदिति। स्वपक्षे संसारान्मोक्षस्य विशेषमाह–तेनेत्येकेन। संसारे शब्दस्पर्शादिविषयभोगजन्यं सुखं दुःखं च भवति मोक्षे च विषय-

निवृत्तिरेव संसारादपवर्ग इतीर्यते ॥,
ततश्च सुखलोपेन मुक्तेरऽपुरुषार्थता—॥ १६ ॥
यद्यस्माकं भवेत्तर्हि तुल्यैषा भवतामपि ॥,
सुखहानिमतस्तस्य भूयोदुःखविवर्जनात्—॥ १७ ॥
मोक्षस्य पुरुषार्थत्वमावयोरुभयोः समम् ॥,
सुखदुःखविहीनोऽतो मुक्तः स्वस्थोऽवतिष्ठते ॥१८॥

किमिदं स्वस्थ इति ?। येऽस्यागमापायिनो धर्मा बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारास्तानऽपहाय यदस्य स्वं नैजं रूपं ज्ञानशक्तिसत्ताद्रव्यत्वादि-तस्मिन्नवतिष्ठते इत्यर्थः। यदि तु संसारावस्थायामविद्यमानोप्यानन्दो मुक्तावस्थायां जन्यत इत्युच्यते ततो

---

भोगजन्यसुखदुःखयोर्निवृत्तिर्भवतीत्ययमेव संसारान्मोक्षस्य विशेष इति मोक्षे नानन्दानुभव इत्यर्थः ॥ १५ ॥ एतदेवाह—निवृत्तिरिति । स्वाभिप्रायमाहैकेन—ततश्चेति । यथास्माकं मते सुखाभावान्मोक्षस्याऽपुरुषार्थता तथा भवतां मतेप्येषा=अपुरुषार्थता तुल्यैव आत्मन आनन्दस्वरूपत्वात् तस्य च संसारेपि प्रकाशमानत्वात् तदपेक्षया मोक्षे विशेषाभावादऽपुरुषार्थतेत्यर्थः ॥ १६ ॥ सिद्धान्तमाह—सुखेति । सुखहानिमतोपि मोक्षस्य सांसारिकविविधानेकदुःखनिवृत्तित एवावयोरुभयोः समं पुरुषार्थत्वम् । त्वयापि सांसारिकसुखाभावस्य मोक्षे स्वीकारात् ततो वरं सर्वथैव सुखाभावो मोक्षे युक्त इत्यभिप्रायः ॥१७॥ उपसंहरति— सुखेति । वार्तिकेप्युक्तम्—

"सुखोपभोगरूपश्च यदि मोक्षः प्रकल्प्यते ।
स्वर्ग एव भवेदेष पर्यायेण क्षयी च सः ॥" इति ।

यदुक्तम्—"मुक्तः स्वस्थोवतिष्ठते" इति तत्राशङ्कते—किमिदमिति । किमिदं स्वस्थत्वमित्यर्थः । उत्तरमाह—य इति । संसारसम्बन्धेनात्मनि ये बुद्ध्यादयो धर्मा आगमापायिनः=उत्पत्तिविनाशशीलाः सन्ति तेषां निवृत्तिरेव स्वस्थत्वं सा च निवृत्तिर्मोक्षावस्थायामेव भवतीत्यर्थः । अस्य=आत्मनः। आत्मनो निजं रूपमाह—ज्ञानेति । ज्ञानशक्त्यादय आत्मस्वरूपान्तर्भूता एवेति ज्ञेयम्।ज्ञानस्य शक्तिर्ज्ञानशक्तिः।मोक्षस्यानन्दरूपत्वे बाधकान्तरमाह—यदीति

जनिमत्त्वादऽनित्यो मोक्षः स्यात् । केन चासावनुभाव्यः ? न हि स्वप्रकाशत्वं कस्य चित्संभवतीत्युक्तम् । न च मनसाऽनुभवः संभवति मुक्तस्य मनसोऽभावात्. अमनस्कत्वश्रुतेरित्युक्तम् । अत एव 'नित्योप्यानन्दः संसारदशायामभिभूतत्वादननुभूतोपि मुक्तावऽभिभवे निवृत्ते मनसाऽनुभूयते' इत्येतदपि निरस्तम् ।

किं च सुखविशिष्टात्मानुभवः पुरुषार्थो न सुखमात्रानुभवः, न च मुक्तावात्मानुभवः संभवति–" विज्ञातारमरे केन विजानीयात् " इति कण्ठेनैव श्रुत्या निषिद्धत्वात्, " अलं वा अरे इदं विज्ञानाय " इति च श्रुत्या विज्ञानशब्दस्य शक्तिपरत्वं व्याचक्षाणया मुक्तौ शक्तिमात्रमवतिष्ठते न ज्ञानमिति व्यक्तमेवोक्तमिति श्रुतिविरुद्धं मुक्तस्य विज्ञानमशक्यमभ्युप-

---

एवं ह्यानन्दस्यानित्यत्वान्मोक्षस्याप्यानित्यत्वं स्यान्मोक्षस्यानन्दाभिन्नत्वात् । अनुपपत्त्यन्तरमाह–केनेति । असौ=मोक्षकालिक आनन्दः । ननु स्वयंप्रकाश एव स आनन्द इति नानुभवसाधनापेक्षेत्याशङ्क्याह– नहीति । ननु स्वयंप्रकाशत्वाभावेपि मनसाऽनुभवः किं न स्यादित्याशङ्क्याह– न चेति । अमनस्कत्वश्रुतेः–" अमनोऽवाक् " इति श्रुतेः । यदुक्तं " नित्योप्यानन्दः" इत्यादि तत्परिहरति– अत एवेति, तदपि मुक्तस्य मनसोऽभावादेव निरस्तम् । किं चाभिभवनिवृत्त्यनन्तरं मोक्षस्वीकारे संसारदशायामेवाभिभवनिवृत्तेरानन्दः प्रकाशेत, मोक्षे जातेऽभिभवनिवृत्तिस्वीकारेऽभिभवसत्त्वे मोक्षानुपपत्तिः, मोक्षे जातेपि किं चित्कालानन्तरमभिभवनिवृत्त्या मोक्षस्य सातिशयत्वमेव स्यात्, न च संसारमोक्षयोर्मध्येऽन्यावस्थास्ति यत्राभिभवनिवृत्त्या मोक्षः स्यादित्याद्यूहनीयं स्वयम् ।

आनन्दमोक्षवादेऽनुपपत्त्यन्तरमाह– किं चेति । सुखमात्रानुभवस्य पुरुषार्थत्वे विवेकिनं प्रति सांसारिकसुखानुभवस्यापि पुरुषार्थत्वं स्यादिति भावः । मुक्तावात्मानुभवाभावे श्रुतिं प्रमाणयति–विज्ञातारमिति । श्रुत्यन्तरमाह– अलमिति । स्वाभिप्रायमाह–इति च श्रुत्येति । एवम्–"अशरीरं वा व सन्तं न

गन्तुम्, न ह्यस्याः श्रुतेः प्रियाप्रियाऽस्पर्शश्रुतेश्च तत्त्वकथनं मुक्त्वा कथं चिदन्यपरत्वं संभवति । विज्ञानश्रुतयस्तु शक्तावेव विज्ञानोपचारं कुर्वन्ति प्ररोचनार्थितयेत्युपपन्नम् । एवमानन्दश्रुतयोपि पुरुषार्थत्वसामान्यात् सुखत्वोपचारेण प्ररोचनार्थतया प्रवृत्ताः। उक्तं चैतत्-'वचनयोर्विरोधेऽन्यतो निर्णयः' इति। विरोधश्चात्रानन्दाप्रियाऽभाववचनयोः,

---

प्रियाप्रिये स्पृशतः " इति श्रुत्या मोक्षे दुःखसम्बन्धवत् सुखसम्बन्धोपि परिहृत इति ज्ञेयम् । नन्वऽस्याः=" विज्ञातारम् " " अबलं वा " इत्यादिज्ञाननिषेधकश्रुतेस्तथा " अशरीरम् " इति प्रियाप्रियाऽस्पर्शश्रुतेश्चान्यपरत्वम्=वैषयिकज्ञानसुखाभावप्रतिपादकत्वं किं न स्याद् येन मोक्षे ज्ञानं सुखं च सिध्येदित्याशङ्क्याह-नहीति । तत्त्वकथनम्=शक्यार्थम् । ननु " विज्ञानं ब्रह्म " " आनन्दं ब्रह्म " इत्यादिश्रुतयो ज्ञानानन्दरूपत्वमप्यात्मनो वदन्तीति कथं ज्ञानानन्दयोर्मोक्षेऽभाव एव स्यात् ? तस्मान्मोक्षे वैषयिकविज्ञानसुखयोरेवा ऽभावः श्रुत्या प्रतिपाद्यते न तु स्वरूपभूतयोरपि विज्ञानसुखयोरित्याशङ्क्याह-विज्ञानेति । प्ररोचनार्थतया कुर्वन्तीत्यन्वयः । अन्यत्रातिदिशति-एवमिति । सुखमपि पुरुषार्थस्तथात्मापि पुरुषार्थ इति पुरुषार्थत्वबोधनायाऽऽत्मनः सुखत्वं वदन्ति। वचनानां मिथो विरोधे ह्यन्यतो निर्णयः कर्तव्य इति त्वात्मस्वरूपप्रतिपादनावसान एव(४९३पृ)"वचनानां हि मिथो विरोधे सिद्धवस्तुविषयत्वेन च विकल्पासम्भवे प्रमाणान्तरान्निर्णयः स्यात् " इत्यादिनोक्तं तदेव स्मारयति-उक्तं चैतदिति । विरोधं विशदयति-विरोधश्चात्रेति । आनन्देति-" आनन्दं ब्रह्म " इति श्रुत्यात्मनः सुखरूपत्वमुच्यते, " अशरीरम् " इति श्रुत्या च मोक्षे सुखाभाव उच्यते तत्र यद्यात्मा सुखरूपस्तदा मोक्षे आत्मनः सत्त्वादेव सुखाभावो न संभवति यदि च मोक्षे सुखाभावस्तदात्मा सुखरूपो न सम्भवत्यन्यथा मोक्षे आत्मनः सत्त्वात्सुखमपि स्यादेवेति विरोधः । एवम्-" विज्ञानं ब्रह्म " " विज्ञातारमरे केन विजानीयात् " इत्यनयोरपि वाक्ययोः परस्परविरोधः पूर्वपक्षे ज्ञेयः।

**न चाऽभाववचनं वैषयिकाभिप्रायम्, इतरत्तु स्वाभाविकाभिप्रायमिति शक्यं वक्तुम्, उभयत्रापि सामान्योपादानात्, अत्यन्तसमानविषयत्वात् । अतः प्रमाणान्तरवशादाऽऽनन्दवचनं दुःखाभावपरम्, इतरत्तु यथाश्रुतमिति न्याय्यम् । तस्मात् सुखदुःखादिसमस्तवैशेषिकात्मगुणोच्छेदो मोक्षः । सुखदुःखोच्छेदश्च धर्माऽधर्मयोरुच्छेदात् । धर्माधर्मयोरुच्छेदश्चोत्पन्नानां**

---

ननु " अशरीरम् " इति श्रुतिर्वैषयिकसुखाभावं बोधयति " आनन्दं ब्रह्म " इति च स्वरूपसुखं बोधयति तत्र मोक्षे वैषयिकसुखाभावेऽपि स्वरूपसुखसम्भवान्नास्ति विरोध इत्याशङ्क्य परिहरति– न चेति । हेतुमाह–उभयत्रेति। उभयत्र=उक्तश्रुतिद्वयेऽपि । " आनन्दम् " इत्यत्र स्वाभाविकत्वमप्यानन्दस्य नोक्तं " अशरीरम् " इत्यत्र च वैषयिकत्वमप्यभावप्रतियोगिनः सुखस्य नोक्तं येन त्वदुक्तमुपपद्येत किं तु सामान्यत एवोक्तम् । श्रुत्योरत्यन्तसमानविषयत्वात्=सामान्यतः सुखविषयकत्वाद् वैषम्यं नोपपद्यत इत्यर्थः । स्वाभिप्रायमाह–अत इति । प्रमाणान्तरवशात्=आत्मन आनन्दरूपत्वं न प्रत्यक्षेण न वा श्रुतिषूपलभ्यत इत्यनुपलब्धिरूपप्रमाणान्तरवशात् । किं च " ता एताः प्रजा अहरहर्ब्रह्मलोकं यन्ति, अहरहरागच्छन्ति " इति श्रुत्या सुषुप्तिमोक्षयोस्तुल्यत्वमुक्तं न च सुषुप्तावानन्दानुभवो भवतीति सुषुप्तितुल्ये मोक्षेप्यानन्दानुभवो नास्तीत्यर्थादेव प्राप्तमित्यर्थापत्तिवशाद्वा । एतत्सर्वं पूर्वमेव प्रतिपादितमित्यनुसन्धेयम् । किं च " मन आनन्दम् " इति श्रुतेरानन्दस्य मनोधर्मत्वं मनोरूपत्वं वा प्राप्तं मोक्षे च " अमनोऽवाक् " इति श्रुत्या मुक्तस्य मनसः प्रतिषेधान्मोक्षे नानन्दः सम्भवतीति प्रमाणान्तरवशात् " आनन्दं ब्रह्म " इत्यानन्दवचनं दुःखाभावपरं ज्ञेयमित्यर्थः । आनन्दवचनम्= " आनन्दं ब्रह्म " इति वचनम् । इतरत्तु=" अशरीरम् " इति वचनम्, यथाश्रुतम्=सामान्यतः सुखमात्राभावबोधकम् ।

स्वसिद्धान्तमाह–तस्मादिति । सुखदुःखोच्छेदप्रकारमाह–सुखेति । धर्माधर्मयोरुच्छेदः कथं स्यादित्याह–धर्मेति । धर्माधर्मा द्विविधा–उत्पन्ना भाविनश्च, तत्रोत्पन्नानां तु नित्यनैमित्तिककर्मानुष्ठानेन भोगेनात्मज्ञानेन चोच्छेदो

धर्माधर्माणामुपभोगेन नित्यनैमित्तिककर्मानुष्ठानेनात्मज्ञानेन च विरोधात्, उत्पाद्यानां च काम्यानुष्ठाननिमित्तानां धर्माणां तदऽननुष्ठानेनाऽनुत्पादात्. विहिताकरण–प्रतिषिद्धानुष्ठाननिमित्तानां चाऽधर्माणां विहितानुष्ठानेन प्रतिषिद्धाऽकरणेन च परिहारात्. असति शरीरारम्भे पूर्वशरीरनिपाते चाऽशरीरोऽवस्थितो मुक्तो भवति।

---

भवति तत्रात्मज्ञानस्य धर्माधर्मयोश्च परस्परं विरोधादात्मज्ञानस्य प्रबलत्वेनात्मज्ञानेन धर्माधर्मयोरुच्छेद इत्यर्थः। स्मर्यते च "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन" इति। नित्यनैमित्तिककर्मानुष्ठानेनाऽधर्ममात्रोच्छेदो ग्रन्थकृदभिप्रेत इति प्रतीयते। भाविनामुच्छेदप्रकारमाह–उत्पाद्यानामिति। तत्रापि भाविनां धर्माणां काम्यकर्मानुष्ठानेनैवोत्पत्तिर्भविष्यतीति काम्यकर्मपरित्यागेन तेषामनुत्पत्तिरेवोच्छेदः। भाविनामधर्माणां तु विहितस्य नित्यनैमित्तिककर्मकलापस्य परित्यागान्निषिद्धस्य च निषेवणादुत्पत्तिर्भविष्यतीति विहितस्यानुष्ठानात् प्रतिषिद्धस्य च परित्यागात्तेषामनुत्पत्तिर्या सैवोच्छेद इत्याह–विहिताकरणेति। परिहारात्=अनुत्पादात्। धर्माधर्मपदाभ्यां चात्र शुभाशुभमपूर्वमेव ग्राह्यम्। पर्यवसितार्थमाह–असतीति, मरणानन्तरं भाविशरीरेण शरीरान्तरेण वा सम्बन्धाभावान्मोक्षः। इत्यनेन मुक्तस्य न शरीरेन्द्रियादिकं नाप्यानन्दानुभवः किं तु भारापगमे संप्रति सुखी संवृत्तोऽहमितिवत् सांसारिकसकलदुःखनिवृत्त्यैव मोक्षस्य पुरुषार्थत्वं प्रतिपादितम्, मतमिदं चाधुनिकमीमांसकानामेवेति विज्ञायते यत उक्तस्वरूपमोक्षप्रतिपादकं नात्र भगवतो जैमिनेः किमपि सूत्रमस्ति प्रत्युत वेदान्तसूत्रेषु भगवता व्यासदेवेन मुक्तस्य शरीरादिकं भवति न वेति विचारमुपक्रम्य जैमिन्यभिप्रायमुद्दिश्य "भावं जैमिनिर्विकल्पामननात्" इति सूत्रेण मुक्तस्य दिव्यशरीदिसत्त्वं प्रतिपादितं तच्च वेदान्तभाष्येषु द्रष्टव्यं तस्मादानन्दमोक्षवाद एव भगवतो जैमिनेरप्यभिप्रेत इत्यलमत्र ग्रन्थकृत्प्रतिकूलप्रतिपादनेन।

॥ इति मोक्षवादः समाप्तः ॥

नन्वात्मज्ञानं क्रत्वर्थम् ?, सत्यं, पुरुषार्थमपि तत्. संयोगभेदात् । यत्तावत्–" अविनाशी वा अरेऽयमात्मा " इत्यादिना शरीराद्यऽतिरिक्तनित्यात्मस्वरूपसद्भावज्ञानं तत्पारलौकिकफलकर्मानुष्ठानौपयिकत्वात् कर्मज्ञानवदेव सामर्थ्यतः क्रतुसंयोगात् क्रत्वर्थम् । यथा हि ज्योतिष्टोमादिवाक्याध्ययनं दृष्टेनैवानुष्ठानौपयिकं ज्ञानं जनयतीति तदर्थतयैवाध्ययनविधिना विधीयते तथा " अविनाशी वा अरेऽयमात्मा" इत्यादिवाक्यानामप्यध्ययनविधिरेव कर्मानुष्ठानोपयोग्याऽऽत्मज्ञा-

---

यदुक्तम्–' आत्मज्ञानेन धर्माधर्मोच्छेदः' इति तत्र शङ्कते–नन्विति । नन्वात्मनित्यत्वादिज्ञानाभावे शरीरस्यात्रैव विनाशित्वाद् यागेषु प्रवृत्तिर्न सम्भवतीत्यात्मज्ञानं क्रत्वर्थमेवेति कथं तस्य धर्माधर्मोच्छेदकत्वं स्यान्मोक्षार्थत्वाभावादित्यर्थः। उत्तरमाह–सत्यमिति । तत्=क्रत्वर्थमप्यात्मज्ञानं पुरुषार्थम्=मोक्षसाधनं मोक्षार्थं वा भवत्येव संयोगभेदात्=संयोगपृथक्त्वन्यायादिति यावत् । उक्तं च चतुर्थाध्यायतृतीयपादे सूत्रम्–"एकस्य तूभयत्वे संयोगपृथक्त्वम्" इति । यथैकस्यापि दध्नः संयोगभेदान्नित्यत्वं काम्यत्वं च भवति तदुक्तं मधवीयाधिकरणमालायां चतुर्थाध्यायतृतीयपादतृतीयाधिकरणे–" तस्मादेकस्यापि दध्नो वाक्यद्वयेन नित्यत्वं काम्यत्वं चाविरुद्धम्" इति । तथैवात्मज्ञानस्याप्येकस्य क्रत्वर्थत्वं मोक्षार्थत्वं च संयोगभेदादविरुद्धम् । यथा च दध्नः " दध्ना जुहोति " इति वाक्येन नित्यत्वम् " दध्नेन्द्रियकामस्य " इति वाक्येन च काम्यत्वं तथाऽत्रापि " न स पुनरावर्तते " इत्यादिवाक्येनात्मज्ञानस्योपासनात्मकस्य मोक्षार्थत्वम् " अविनाशी वा " इत्यादिवाक्यजन्याऽनुपासनात्मकस्य चात्मज्ञानस्य क्रत्वर्थत्वं प्राप्तमिति विवेकः ।

एतदेवोपपादयति–यत्तावदित्यादिना । यत्=तत्=आत्मज्ञानम् । "कर्मज्ञानवदेव " इति यो दृष्टान्त उक्तस्तंप्रतिपादयति–यथा हीति । दृष्टेनैव=दृष्टरूपेणैव । दृष्टफलकमिति यावत् । तदर्थतयैव=अनुष्ठानौपयिककर्मज्ञानार्थतयैवाऽध्ययनं विधीयते । अध्ययनविधिना=" स्वाध्यायोऽध्येतव्यः " इत्यनेन । प्रकृतमाह–तथेति । यदि शरीरातिरिक्त आत्मा कोपि नित्यो न

नार्थतां विधत्ते । तद् यदि प्रमाणान्तरेणात्मनः शरीरादिविवेको नैकान्ततः सिध्यति ततो दृढविवेकप्रतिपादकानामुपनिषद्वाक्यानां विस्पष्टमेव फलम्, यथोक्तम्—
"इत्याहनास्तिक्यनिराकरिष्णुरात्मास्तितांभाष्यकृदत्रयुक्त्या दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन ॥" इति ।

अथ त्वन्यतोपि सिध्यति ?, ततो यथैवान्यथापि क्रतुज्ञानसंभवेऽध्ययनोपात्तवेदवाक्यावगतकर्मरूपाणामेव पुंसां कर्मस्वधिकारः तथैवाध्ययनोपात्तोपनिषद्वाक्यावगतात्मतत्त्वानामेवाऽधिकार इत्यध्ययनविधिबलादेव कल्प्यते ।

---

स्यात्तदा शरीरस्यात्रैव विनाशात्स्वर्गादिकं यागफलं नैव प्राप्नुयादिति न कोपि यागे प्रवर्तेत तस्माच्छरीरातिरिक्तनित्यात्मज्ञानमपि कर्मानुष्ठानोपयोग्येव तच्चात्मज्ञानं केन प्राप्यमित्याकाङ्क्षायामध्ययनविधिरेव " अविनाशी वा " इत्यादिवाक्यानामात्मज्ञानार्थतां विधत्ते=" अविनाशी वा " इत्यादिवाक्यैरेवात्मज्ञानं संपादनीयमिति भावः । एतदेवाह–तद्यदीति । प्रमाणान्तरेण=अनुमानादिना । प्रतिपादकानाम्=बोधकानाम् । शरीरात्मनोर्दृढं भेदबोधकानामुपनिषद्वाक्यानां शरीरात्मभेदबोधनमात्मनश्च नित्यत्वादिबोधनमेव फलं स्पष्टमेवेत्यन्वयः । अत्र श्लोकवार्तिकं प्रमाणयति–इत्याहेति । अत्र=पञ्चमसूत्रान्त्यभाष्ये । एतद्विषयः=आत्मविषयको बोधो वेदान्तवाक्यविचारेण दृढत्वं प्रयाति=दृढो भवतीत्यन्वयः ।

नन्वात्मज्ञानमनुमानादिनैव यदा जातं तदा " अविनाशी वा " इत्यादिवाक्यानां वैयर्थ्यमेव स्यादित्याशङ्क्याह–अथेति। अध्ययनविधेर्नियामकत्वस्वीकाराद् यथा कर्मज्ञानं जातमपि वेदवाक्यैः संपादनीयं वेदवाक्यैर्ज्ञातकर्मस्वरूपाणामेव कर्मस्वधिकारस्तथा जातमप्यात्मज्ञानमुपनिषद्वाक्यैः संपादनीयमुपनिषद्वाक्यैरवगतात्मतत्त्वानामेव कर्मस्वधिकार इति नियमोऽध्ययनविधेरेव प्राप्नोतीत्यर्थः । अध्ययनेति–अध्ययनेनोपात्तैर्वेदवाक्यैरवगतं कर्मरूपं यैस्तेषां पुंसाम् । एवं चात्मज्ञानस्यान्यतो जातत्वेप्युपनिषद्वाक्यैस्संपादनीयत्वान्नोपनिषदां वैयर्थ्यमित्यर्थः ।

**यत्त्वात्मसद्भावप्रतिपादनोपक्रमे विधिसरूपं वाक्यम्–"आत्मा वारे द्रष्टव्यः" इत्यादि तद्वक्ष्यमाणस्यार्थस्यातिगहनात्वान्महोपयोगत्वाच्च 'कथं हि नामालस्यं हित्वा श्रद्धाविशेषेण वक्ष्यमाणमर्थं प्रतिपद्येत' इत्येतावन्मात्रार्थम्। तस्मादेतज्ज्ञानं दृष्टोपयोगित्वात् क्रत्वर्थम्।**

**यानि पुनरितिकर्तव्यताविशेषयुक्तान्युपासनात्मकानि विधीयन्ते तेषां क्रतौ दृष्टोपयोगाभावादऽदृष्टफलत्वम्। अदृष्टं च फलं वाक्यशेषाद् द्विविधम्–अभ्युदयरूपं निःश्रेयसरूपं च, " सर्वान् कामानाप्नोति " " सोऽश्नुते सर्वान् कामान् " इत्याद्यभ्युदयफलम्। "न स पुनरावर्तते" इत्यादि निःश्रेयसफलमिति विवेकः।**

---

ननु यदुक्तम्–" अविनाशी वेत्यादिवाक्यानामप्यध्ययनविधिरेव कर्मानुष्ठानोपयोग्यात्मज्ञानार्थतां विधत्ते " इति तत्र यद्यध्ययनविधिप्रयुक्तमेवात्मज्ञानं तदा " आत्मा वारे द्रष्टव्यः " इत्याद्यात्मज्ञानविधीनां वैयर्थ्यमेव स्यादित्याशङ्क्याह–यत्त्विति। आत्मसद्भावप्रतिपादनोपक्रमे =आत्मनिरूपणप्रकरणारम्भे वाजसनेयोपनिषदि षष्ठाध्यायपञ्चमब्राह्मणे । विधिसरूपम्=विधिसदृशम्– द्रष्टव्य इति प्रयोगात् । अर्थस्य=आत्मस्वरूपस्य। आत्मज्ञानस्य प्रशस्तत्वात् तत्र पुरुषस्य प्रवर्तनाय च पुनः " द्रष्टव्यः " इत्युक्तं वस्तुत आत्मज्ञानविधानं त्वध्ययनविधिनैव कृतं तथाप्यानर्थक्यं नास्ति प्रवृत्तौ सहकारित्वात्। उपसंहरति–तस्मादिति । एतज्ज्ञानम्=" अविनाशी वा " इत्यादिवाक्यजन्यमात्मज्ञानं दृष्टस्य=यागादौ प्रवृत्तेरुपयोगित्वात् क्रत्वर्थम्।

आत्मज्ञानस्य क्रत्वर्थत्वमुक्त्वा पुरुषार्थत्वमाह–यानीति। उपासनात्मकानीत्यत्र ज्ञानानीति शेषः। तानि च "मनो ब्रह्मेत्युपासीत" इत्यादीनि विधीयन्ते। अभ्युदयरूपम्=स्वर्गादिरूपम्। सप्रमाणकमभ्युदयफलमाह–सर्वानिति। मोक्षफलमाह– न स इति। निःश्रेयसम्=मोक्षः। द्विविधः पुरुषार्थस्तदर्थत्वमप्यात्मज्ञानस्योक्तश्रुतिभ्य एव सिद्धमस्तीत्यात्मज्ञानेन धर्माधर्मयोरुच्छेदः संभवति, मीमांसकनये धर्माधर्मोच्छेदप्रणाड्यैवात्मज्ञानस्य मोक्षप्रयोजकत्वादिति सिद्धम्। क्रत्वङ्गत्वं तु नोपासनात्मकस्यात्मज्ञानस्य अनुपासनात्मकेनाप्यात्मज्ञानेन क्रतु-

यत्तु " विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवाऽनुविनश्यति न प्रेत्य सञ्ज्ञास्ति " इत्यनेन ब्राह्मणेन भूतचैतन्यमुक्तमित्याशङ्क्यते तत् स्वयमेव ब्राह्मणेनात्रैव 'मा भगवान् मोहान्तं प्रापितवान् पूर्वमऽजरामृतत्वमभिधायाधुना विनाशीत्यभिधानात्' इति पूर्वपक्षं चोद्याख्यमुक्त्वा सिद्धान्तपरिहार उक्तः- "अविनाशी वा अरे ऽयमात्मा अनुच्छित्तिधर्मा " इत्युक्त्वा, कथं तर्हि विनाशवचनमित्याशङ्क्य " मात्रासंसर्गस्त्वस्य भवति " इत्युक्तम्, मात्राशब्देन भूतेन्द्रियाणि धर्माधर्मौ च विकारशब्दवाच्या उच्यन्ते ।

एतदुक्तं भवति-विज्ञानघनशब्देन ज्ञानशक्तिस्वभावस्यात्मनोऽभिधानं स ह्येतेभ्यो भूतेभ्यः समुत्थाय=

---

निष्पत्तिसंभवात् क्रत्वर्थं स्वर्गादिभोगाय शरीरातिरिक्तनित्यात्मस्वरूपनिश्चयमात्रस्याऽपेक्षितत्वात् परमोत्कृष्टस्योपासनात्मकज्ञानस्य स्वयं प्रधानत्वेन क्रत्वङ्गत्वायुक्तत्वादित्यनुसंधेयम् ।

ननु भवेद् क्रत्वर्थत्वमात्मज्ञानस्य यद्यात्मा शरीरातिरिक्तः स्यान्नैवमस्ति श्रुत्या " विज्ञानघन एव " इत्यादिना शरीरस्यैवात्मत्वप्रतिपादनात् किं वात्मनोपि विनाशित्वप्रतिपादनादित्याशङ्क्याह-यत्त्विति । भूतचैतन्यम्=चार्वाकमतवच्छरीरस्य चैतन्यमुक्तम् । परिहरति-तदित्यादिना । श्रुत्युक्तं पूर्वपक्षमर्थतः पठति-मा भगवानिति । मा=माम् । मोहान्तम्=अत्यन्तमोहम् । मोहोत्पत्तौ हेतुमाह-पूर्वेति । परिहारश्च " अविनाशी वा " इत्याह- सिद्धान्तेति। "अविनाशी वा" इत्युक्त्वा तेन सिद्धान्तेन पूर्वपक्षस्य परिहार उक्त इत्यर्थः । ननु यद्यविनाशी तदा "तान्येवानुविनश्यति" इति कथमुक्तमित्याशङ्कामाह-कथमिति । श्रुत्युक्तं परिहारमाह-मात्रेति । संसर्गः=संबन्धः । अस्य=आत्मनः । मात्राशब्दार्थमाह- भूतेति । अयं भावः-भूतादिसंबन्ध आत्मनो भवति तत्र भूतादिविनाशादेवात्मनो विनाश इत्युच्यते यथा गृहे नष्टे देवदत्तो नष्टोयमिति न त्वात्मनः स्वरूपेण विनाशो भवति तस्य नित्यत्वात् ।

एतमेव स्वाभिप्रायं श्रुतिं व्याख्यन् प्रकटयति- एतदिति । सः=आत्मा । भू-

मुक्तो भूत्वा तान्येवानुविनश्यति=भूतविनाशात् सोऽपि विनष्ट इव भवतीति, भूतस्थो ह्यसौ स्वयं प्रत्यक्षेण गृह्यते परैश्च शरीरचेष्टालिङ्गकेनानुमानेन, मुक्तस्तु प्रमाणपथातिवर्तनाद्विनष्ट इव भवतीति विनश्यतीत्युच्यते, तदनेन प्रकारेण मात्राणामेव विनाश इत्युच्यते नाऽऽत्मन इत्यविरोधः। तदुक्तम्—

"अविनाशी स्वरूपेण पुरुषः, या तु नाशिता।
मात्राणां साधिकाराणां, भूतादीनामऽसंज्ञिता॥" इति।

किमिदम्—"भूतादीनामसंज्ञिता" इति ?। यदि तावत् "न प्रेत्य संज्ञास्ति" इत्यस्य व्याख्यानम् ?, तदयुक्तम्— न हि "न प्रेत्य संज्ञास्ति" इत्यनेन भूतादी-

---

तस्थः=शरीरस्थः। उपसंहरति—तदनेनेति। अविरोधः="तान्येवानुविनश्यति" "अविनाशी वा" इति वाक्ययोरविरोधः—"अविनाशी वा" इत्यनेनात्मस्वरूपमात्रस्याऽविनाशित्वप्रतिपादनात् "तान्येवानुविनश्यति" इति वाक्येन तु मात्राणामेव मात्रासंसर्गस्यैव वा विनाशित्वप्रतिपादनेनात्मस्वरूपविनाशित्वाऽप्रतिपादनान्न परस्परं कोऽपि विरोध इत्यर्थः। अत्र वार्तिकं प्रमाणयति—अविनाशीति, पुरुषः=आत्मा स्वरूपेणाऽविनाश्येव यस्त्वात्मनो विनाश इत्युच्यते स न स्वरूपेण किं तु साधिकाराणाम्=अधिकारशब्दवाच्यधर्माऽधर्माभ्यां सहितानां मात्राणाम्=इन्द्रियाणामेव. अर्थात् साधिकाराणामिन्द्रियाणामात्मना सह यः संबन्धस्तस्य मोक्षकाले नाशात् तत्संबन्धात्मना पुरुषो विनष्टो भवतीति "तान्येवानुविनश्यति" इत्यनेनोच्यते न त्वात्मनः स्वरूपेण विनाशः संभवति नित्यत्वात्, मुक्तस्य प्रमाणागोचरत्वाल्लुप्तपदार्थस्येव गौणो वा विनाश उच्यते न वास्तव इत्यर्थः। प्राकरणिकार्थमाह वार्तिककारः—भूतादीनामिति, भूतेन्द्रियविज्ञानानां त्वसंज्ञिता=अचैतन्यमेव भूतादिभ्योऽन्यस्यैवात्मनश्चेतनत्वादित्यर्थः।

यदुक्तम्—" भूतादीनाम ऽसंज्ञिता " इति तत्राशङ्कते—किमिदमिति। ननु " न प्रेत्य संज्ञास्ति " इति वचनस्यैवेदं व्याख्यानमित्याशङ्क्याह—तदयुक्तमिति। हेतुमाह— न हीति, वाख्येयव्याख्यानवाक्ययोः समानार्थत्वनिय-

**नामसंज्ञित्वमुच्यते। किं तर्हि? आत्मन एव मुक्तस्य संज्ञाऽभावोऽनेनोच्यते तस्यैवोपायाभावेन "तत्केन कं पश्येत्" इत्यादिना "विज्ञातारमरे केन विजानीयात्" इत्यन्तेन विज्ञानाभावोपपादनात्। सत्यं नेदमस्य व्याख्यानं प्रकरणार्थोपसंहारस्त्वयम्-यत एवं पूर्वोक्तेन न्यायेन भूतचैतन्यं न सम्भवति ब्राह्मणेनापि तथैवोक्तं तस्माद् भूतेन्द्रियाणामसंज्ञित्वमचैतन्यम्, अन्यस्तु तेभ्यो नित्यश्चेतनः, तस्य स्वर्गगमनसम्भवान्न "स्वर्गं लोकं याति" इत्यस्य प्रत्यक्षविरोधः॥ ५॥**

---

मादिति भावः। सिद्धान्ती पृच्छति-किं तर्हीति। "न प्रेत्य" इति वचनेन किमुच्यते इत्यर्थः। उत्तरमाह- आत्मन इति। हेतुमाह- तस्येति। तस्य=आत्मनः। उपायाभावेन=ज्ञानसाधनाभावेन। इत्यादिना=इत्यारभ्य। सिद्धान्ती परिहरति-सत्यमिति। इदम्="भूतादीनामसंज्ञिता" इति वाक्यम्। अस्य="न प्रेत्य संज्ञास्ति" इति वाक्यस्य न व्याख्यानं किं तु प्राकरणिकार्थोपसंहार एवेत्याह-प्रकरणेति, भाष्यप्रकरणार्थोपसंहार इत्यर्थः। उपसंहारं प्रदर्शयति-यत इति। ब्राह्मणेन=" न प्रेत्य संज्ञास्ति " इत्यादिना। तथैव= भूतानामचैतन्यम्। तेभ्यः=भूतादिभ्यः। परमोपसंहारमाह-तस्येति। " स एष यज्ञायुधी " इत्यत्र यः प्रत्यक्षविरोध उक्तः स नास्ति न ह्यनेन वचनेन शरीरस्य वास्तवं स्वर्गगमनमुच्यते किं त्वात्मनः स्वर्गगमनं शरीरे उपचर्यते इति भावः। विरोधाभावश्च पूर्वमेव (४६७पृ) प्रतिपादितस्तत्रैव द्रष्टव्यः॥

॥ इति पञ्चमसूत्रव्याख्यानं पञ्चमाधिकरणं च समाप्तम्॥



( षष्ठं शब्दनित्यताधिकरणम् )

## सू- कर्मैके[1] तत्र दर्शनात् ॥६॥

**शब्दस्यार्थप्रत्यायकत्वं स्वाभाविकमिति यदुक्तं तदाक्षिप्यते-शब्दस्यानित्यत्वात्, न ह्यऽभिनवस्य शब्दस्य वृद्धव्यवहारपरम्परया स्वाभाविकं प्रत्यायकत्वं**

---

शब्दनित्यतासाधनार्थमधिकरणमारभते-कर्मैकेति। ननु भवेच्छब्दार्थयोः सम्बन्धो नित्यो यदि शब्दो नित्यः स्यात् सम्बन्धनित्यतायाः सम्बन्धिनित्यताधीनत्वात्, न च शब्दो नित्यस्तत्र=शब्दे विषयत्वं सप्तम्यर्थः, कर्मणः=क्रियाया दर्शनात्-शब्दोत्पादकक्रियादर्शनात् तथा च क्रियाजन्यत्वादऽनित्यः शब्दः, तस्माच्छब्दार्थयोः सम्बन्धोऽप्यनित्य एवेति सूत्रार्थः। पूर्वपक्षे चैतत्सूत्रम्। उक्तं च वार्तिके—

"यद्यनित्यत्वपक्षेपि शब्दादर्थो ऽवगम्यते।
अनादिर्व्यवहारश्च नित्यत्वं किं नु साध्यते॥" इति।

भाष्यवार्तिकाभिप्रायं विशदीकुर्वन् स्वयं व्याचष्टे-शब्दस्येति। स्वाभाविकम्=नित्यम्। आक्षेपे हेतुमाह-शब्दस्यानित्यत्वादिति। यतः शब्दोऽनित्यस्तस्मादर्थप्रत्यायकत्वस्य नित्यत्वे आक्षेपः। शब्दस्य नित्यत्वे हि तद्धर्मस्यार्थप्रत्यायकत्वस्यापि कदाचिन्नित्यत्वं स्याद् यदा हि धर्मी शब्द एवाऽनित्यस्तदा तद्धर्मस्यार्थप्रत्यायकत्वस्य कथं नित्यत्वं स्यादिति भावः। पूर्वपक्ष्यऽर्थप्रत्यायकत्वस्यानित्यत्वमुपपादयति- न हीति। अभिनवस्य=अगृहीतशक्तिकस्य=इदानीमेवोत्पन्नस्य श्रुतस्य वा शब्दस्य=वाक्यस्य। वृद्धव्यवहारश्च गामानयाश्वं नयेत्यादिवाक्यश्रवणानन्तरभवं गवाद्यानयनादिकं

---

[1] अस्मिन्नधिकरणेऽष्टादश सूत्राणि सन्ति तथा हि-" ( पूर्वपक्षे ) कर्मैके तत्र दर्शनात् ६। अस्थानात् ७। करोतिशब्दात् ८। सत्त्वान्तरे च यौगपद्यात् ९। प्रकृतिविकृत्योश्च १०। वृद्धिश्च कर्तृभूम्नाऽस्य ११। ( उत्तरपक्षे ) समं तु तत्र दर्शनम् १२। सतः परमदर्शनं विषयानागमात् १३। प्रयोगस्य परम् १४। आदित्यवद् यौगपद्यम् १५। वर्णान्तरमविकारः १६। नादवृद्धिपरा १७। नित्यस्तु स्याद् दर्शनस्य परार्थत्वात् १८। सर्वत्र यौगपद्यात् १९। संख्याभावात् २०। अनपेक्षत्वात् २१। प्रख्याभावाच्च योगस्य २२। लिङ्गदर्शनाच्च २३॥" इति।

शक्यते ग्रहीतुम्, अगृहीतमपि चेत् स्वभावतश्चक्षुरा-
दिवत् प्रत्याययेत् ? प्रथमश्रवणेऽपि प्रत्याययेत्, तस्मा-
दऽनित्यत्वे शब्दस्य देवदत्तादिशब्दवत् पुरुषकृतमेव
प्रत्यायकत्वमापद्यते ।

कथं पुनरनित्यत्वं शब्दस्य ?, प्रयत्नाऽनभिव्यङ्ग्यत्वे
सति तदनन्तरमुपलब्धेर्घटादिवत् तज्जन्यत्वमध्यवसी-

---

तत्परम्परया । शब्दस्य नित्यत्वेन प्राक्तनत्वे तु सम्भवत्यपि वृद्धव्यवहारपर-म्परया पूर्वपूर्वतरैर्जनैरस्य शब्दस्यार्थो ज्ञात एवेति स्वाभाविकमेव प्रत्याय-कत्वमिति । यदा ह्यऽनित्यत्वात् शब्द इदानीमेवश्रुतो न चार्थं प्रत्याययति तदा तस्य प्रत्यायकत्वं स्वाभाविकमिति कथं ग्रहीतुं शक्यते इत्यर्थः । सदै-वार्थप्रत्यायकत्वे ह्यर्थप्रत्यायकत्वस्य नित्यत्वं स्यादपि न चाभिनवः शब्दः प्रथमश्रवणसमयेऽर्थं प्रत्याययतीति नार्थप्रत्यायकत्वं नित्यम् । किं चार्थप्र-त्यायकत्वस्य नित्यत्वे शक्तिग्रहस्य वैयर्थ्यमेव स्यादऽर्थप्रत्यायकत्वस्यैव शक्ति-ग्रहप्रयोजनत्वात् । विपक्षे बाधकमाह–अगृहीतमपीति–अगृहीतशक्तिकमपि पदं वाक्यं वेत्यर्थः । ननु " अगृहीतम् " इत्यस्य " प्रत्यायकत्वम् " इत्य-नेनान्वयः । अगृहीतशक्तिकोपीति युक्तः पाठः पूर्वं शब्दपदप्रयोगात् । किं वा " अगृहीतमपि " इत्यस्य प्रथममश्रुतमपीत्यर्थः । यथा हि चक्षुः पदार्थे निष्पतदेव किं वा पदार्थेन सह संयोगाद् द्वितीयक्षणे एव पदार्थं बोधयतीति चक्षुषः स्वाभाविकं प्रत्यायकत्वं नैवं शब्दस्य प्रत्यायकत्वं प्रथमश्रवणेऽर्थान-वबोधात् तस्मान्न शब्दस्य स्वाभाविकं प्रत्यायकत्वम् । उपसंहरति–तस्मादिति । शब्दस्यानित्यत्वे सिद्धे यथा देवदत्तशब्दस्य देवदत्तपित्रा स्वतनयपिण्डेन स-म्बन्धस्य कृतत्वात् पुरुषकृतं प्रत्यायकत्वं तथा ऽन्येषामपि शब्दानां पुरुषकृ-तम्=अनित्यं प्रत्यायकत्वं न स्वाभाविकमित्यर्थः ।

मीमांसकः शब्दानित्यत्वहेतुं पृच्छति–कथमिति । पूर्वपक्ष्युत्तरमाह–प्र-यत्नेति । यदि प्रयत्नानन्तरमप्युपलभ्यमानः शब्दः प्रयत्नाभिव्यङ्ग्यः स्या-त्तदा प्रयत्नेन नित्यस्यैव शब्दस्याभिव्यक्तिरेव न चोत्पत्तिरिति स्यादपि नि-त्यत्वं न चैवमस्ति प्रयत्नेनऽनभिव्यङ्ग्यत्वात् तथा च प्रयत्नेन शब्दस्योत्पत्ति-रेव भवतीति प्राप्तं न चोत्पन्नस्य नित्यत्वं युक्तमऽन्यथा घटादेरपि नित्यत्वं

यते. अन्यथा किमिति तदनन्तरमेवोपलभ्यते न पूर्वम्, उपलब्धस्य च द्रागेव तिरोभावाद्विनाशित्वमध्यवसीयते। न चाऽसिद्धमनभिव्यङ्ग्यत्वम्, अभिव्यक्तेरयोगात्, सा हि प्रतिबन्धकनिरासेन वा संस्कारविशेषाधानेन वा, न तावत् प्रतिबन्धनिरासः-प्रतिबन्धकानुपलब्धेः। स्तिमिता वायवः श्रोत्रमाच्छाद्यावस्थिताः शब्दोपलब्धिं प्रतिबध्नन्ति तेषु प्रयत्नोत्थापितैः कौष्ठ्यैर्वायुभिरुत्सारितेषूपलभ्यते शब्द इति चेत् ?, एवं तर्हि सर्वे शब्दाः सर्वगतत्वाच्छ्रोत्रं प्राप्या-

---

स्यादित्यर्थः। तदनन्तरम्=प्रयत्नानन्तरम्। तज्जन्यत्वम्=प्रयत्नजन्यत्वम्। विपक्षे बाधकमाह-अन्यथेति, यदि शब्दः प्रयत्नजन्यो न स्यात्तदा प्रयत्नात् पूर्वमप्युपलभ्येत न चोपलभ्यते तस्मात् प्रयत्नजन्य एव। शाब्दप्रयत्नस्तु व्याकरणशास्त्र उक्तः-"प्रयत्नोद्विधा-आभ्यन्तरो बाह्यश्च" इत्यादिः स तु तत्रैव द्रष्टव्यः। शब्दस्य विनाशित्वमाह-उपलब्धस्येति। ननु प्रयत्नाच्छब्दस्याभिव्यक्तिरेव भवतीति नाऽनभिव्यङ्ग्यः शब्दो येनाऽनित्यत्वं स्यादित्याशङ्क्याह-न चेति। अनभिव्यङ्ग्यत्वम्=प्रयत्नजन्यत्वमेवसिद्धमित्यर्थः। अभिव्यङ्ग्यत्वाभावे हेतुमाह-अभिव्यक्तेरयोगादिति। अभिव्यक्तिं निराकर्तुमारभते-साहीति। सा=अभिव्यक्तिर्द्विधा सम्भवति-प्रतिबन्धकनिरासेन वा संस्कारोत्पादनेन वा। प्रतिबन्धकनिरासो यथा जवनिकान्तस्थस्य घटस्य प्रतिबन्धकीभूतजवनिकादूरीकरणेनोपलब्धिः, संस्काराधानं यथा दर्पणोपरि भस्ममर्दनेन तत्र प्रतिबिम्बोपलब्धिः। तत्र प्रतिबन्धकनिरासपक्षं निराकरोति-न तावदिति। यदि प्रतिबन्धकः स्यात्तदा तस्य निरासोपि स्यात् न च प्रतिबन्धकोस्ति येन तन्निरासेन शब्दस्याभिव्यक्तिरेवोच्येत नोत्पत्तिः। ननु श्रोत्रगता बाह्या वायव एव प्रतिबन्धकाः सन्ति तेषामेवोत्सारणं प्रतिबन्धकनिरासः स च कौष्ठ्यैर्वायुभिर्भवतीत्याशङ्कते-स्तिमितेति। स्तिमिताः=विस्तृताः स्थिरा वेति यावत्। तेषु=श्रोत्राच्छादकवायुषु। परिहरति-एवमिति। त्वन्मते वर्णानां व्यापकत्वाद्वर्णात्मकाः शब्दा अपि व्यापका एवेत्येकस्मिन् श्रोत्रे सर्वे एव शब्दास्तिष्ठन्त्येव तत्र कौष्ठ्यैर्वायुभिः प्रतिबन्धकीभूतवायुषूत्सारितेषु

ऽवस्थिताः प्रतिबन्धकेषूत्सारितेषु युगपच्छ्रूयेरन् ।

अथ संस्काराधानम् ? तत्रापि त्रैविध्यम्—शब्दस्य वा संस्कारमादध्युः कौष्ठ्या वायवः श्रोत्रस्य वोभयोर्वा । शब्दस्य चेत् ? तस्यैकत्वात् सर्वगतत्वादऽनवयवत्वेनाऽवयवसंस्कारायोगात् स्रुघ्नस्थैर्वायुभिः संस्कृतः शब्दः पाटलिपुत्रेष्युपलभ्येत, तदिदमुक्तम्—"तत्र सर्वैः प्रतीयेत" इत्यादिना । श्रोत्रसंस्कारपक्षेप्ययमेव दोषः ।

---

सर्वे शब्दा युगपच्छ्रूयेरन् न च श्रूयन्ते तस्मान्नायं पक्षः समीचीन इत्यर्थः ।

संस्काराधानपक्षमुत्थापयति—अथेति । संस्काराधानं च त्रिधा सम्भवतीत्याह— तत्रापीति । त्रैविध्यमेवाह—शब्दस्येति, शब्दस्य वा श्रोत्रस्य वा श्रोत्रशब्दयोरुभयोरेव वा संस्कार इति, तत्र प्रथमं पराकरोति—शब्दस्य चेदिति । शब्दस्य संस्कारो हि श्रावणप्रत्यक्षयोग्यत्वं वा श्रावणप्रत्यक्षविषयत्वं वा वक्तव्यं तत्र शब्दस्य संस्कारे कौष्ठ्यवायुभिर्जाते शब्दस्यैकत्वाद् व्यापकत्वाच्च स शब्दः सकलदेशेषु श्रूयेत न च श्रूयते । ननु यदि सकलस्य शब्दस्य संस्कारः स्यात्तदा सर्वत्र श्रूयेतापि न चैवमस्तीत्याशङ्क्याह—अनवयवेति । सकलस्य संस्काराभावेऽवयवसंस्कारो वक्तव्यो न च तत्सम्भवति त्वया शब्दस्याऽनवयवत्वस्वीकारादित्यर्थः । अत्र पूर्वपक्षश्लोकवार्तिकं प्रमाणयति—तत्रेति । तथा हि—

"सा हि स्याच्छब्दसंस्कारादिन्द्रियस्योभयस्य वा ।
तत्र सर्वैः प्रतीयेत शब्दः संक्रियते यदि ॥
निर्भागस्य विभोर्न स्यादेकदेशे हि संस्क्रिया ।
न चास्याधारभेदेन संस्कारनियमो भवेत् ॥
यतः शब्दो निराधारो व्योमाऽऽत्मादिवदेव च ॥" इत्यादि ।

उक्तमेतद्दोषं श्रोत्रसंस्कारपक्षेप्यतिदिशति—श्रोत्रेति । श्रोत्रस्यापि कणादमते आकाशरूपत्वात् सांख्यादिमतेऽहङ्काररूपत्वान् मीमांसकमते च दिग्रूपत्वादाकाशादीनां चैकत्वाद् व्यापकत्वाच्छ्रोत्रस्यापि व्यापकत्वमेकत्वं च सिद्धमित्येकस्मिन् श्रोत्रे संस्कारे जाते सर्वाण्येव श्रोत्राणि संस्कृतानीति सर्वैरेवैकदैव च शब्दः श्रूयेतेत्यर्थः ।

यदि काणाद-कापिल-वैदिकमतेनाऽऽकाशमहङ्कारो दिग्वा श्रोत्रं तस्यैकत्वात् सर्वगतत्वादनवयवत्वाच्च सर्वपुंसामेकमेव श्रोत्रं स्यात् तच्चैकदेशस्थैरपि ध्वनिभिः संस्कृतमिति कः सर्वेषां शब्दोपलब्धिं वारयेत्? तदिदम्-" आकाशश्रोत्रपक्षे च " इत्यादिना " श्रोत्रादेरियमेवदिक् " इत्यन्तेन दर्शितम्। अस्मिंश्च पक्षे श्रोत्रस्य सर्वशब्दसाधारणत्वादेकशब्दोपलब्ध्यर्थमपि संस्कृतं श्रोत्रं प्रसङ्गात् सर्वान् शब्दान् घटार्थोन्मीलितमिव नेत्रं समानदेशस्थान् पटादीनऽवबोधयेत्, तदिदम्-" सकृच्च संस्कृतं श्रोत्रम् " इत्यादिना दर्शितम्।

---

एतदेव विशदयति-यदीति। वैदिकमतेन=मीमांसकमतेन। तस्य=आकाशादेः। तच्च=श्रोत्रम्। सर्वेषां जनानाम्। काणादेति वाक्यस्याऽऽकाशेति वाक्येन यथासंख्यमन्वयः। अत्र श्लोकवार्तिकं प्रमाणयति-आकाशेति। तथा हि—

" आकाशश्रोत्रपक्षे च विभुत्वात् प्राप्तितुल्यता।
दूरभावेपि शब्दानामिति ज्ञानं प्रसज्यते॥ (इतिशब्दो हेतौ)
श्रोत्रस्य चैवमेकत्वं सर्वप्राणभृतां भवेत्।
तेनैकश्रुतिवेलायां शृणुयुः सर्व एव ते॥
तस्यानवयवत्वाच्च न धर्माधर्मसंस्कृतः।
नभोदेशो भवेच्छ्रोत्रं व्यवस्थाद्वयसिद्धये॥
वैशेषिकादिसिद्धान्तेष्वेवं तावत् प्रसज्यते।
(अहङ्काराभेदात्) कापिलेपि विभुत्वेन श्रोत्रादेरियमेव दिक्॥ " इति।

सर्वेषां जनानां शब्दोपलब्ध्यापत्तिदोषं प्रदर्श्य संप्रति सर्वेषां शब्दानामुपलब्ध्यापत्तिदोषमुद्भावयति-अस्मिंश्चेति, अस्मिन्=श्रोत्रसंस्कारपक्षे श्रोत्रं सर्वान् शब्दानवबोधयेदित्यन्वयः। अत्र दृष्टान्तमाह-घटेति, घटार्थोन्मीलितं नेत्रं समानदेशस्थान्=घटसमीपस्थान् पटादीनिवेत्यन्वयः। अत्र श्लोकवार्तिकं प्रमाणयति-सकृच्चेति। तथा हि—

" सकृच्च संस्कृतं श्रोत्रं सर्वशब्दान् प्रबोधयेत्।

अयं च दोषः पूर्वापक्षिणेपि शब्दसंस्कारपक्षे दर्शयितव्यः— सर्वे हि शब्दाः श्रोत्रदेशेऽवस्थितास्तत्रैकस्मिन् संस्क्रियमाणे बलादन्येषामपि संस्कारः स्यादेव नहि समानदेशानां समानेन्द्रियग्राह्याणां कस्यचित्संस्कारः कस्यचिच्चाऽसंस्कार इति व्यवस्था सम्भवति घटादावदर्शनात्, तदिदमुक्तम्—" एतदेव प्रसङ्क्तव्यम् " इत्यादिना ।

उभयसंस्कारपक्षे तूभयेपि दोषाः समुच्चित्य दर्शयितव्याः, तस्मान्न प्रयत्नाभिव्यङ्ग्यः शब्दः, तज्जन्यस्त्वसौ प्रादेशिकश्च, श्रोत्रं च कर्णशष्कुल्येव, तथा

---

घटायोन्मीलितं चक्षुः पटं न हि न बुध्यते ॥" इति ।

सर्वेषां जनानां सर्वशब्दोपलब्धिप्रसङ्गः पूर्वोक्ते शब्दसंस्कारपक्षेप्यस्त्येवेत्याह—अयं चेति । उक्तदोषं विशदयति—सर्व इति । तत्र=शब्देषु । एकस्मिन्—शब्दे । अन्येषामपि—शब्दानाम् । स्यादेवेत्यत्र 'तथा च सर्वैः श्रोत्रवद्भिः सर्वे शब्दा गृहीताः स्युः' इति शेषः । विपक्षे बाधकमाह— नहीति । तस्मादेकस्मिन् शब्दे संस्कृते सर्वेषामेव संस्कारः स्यादेवेति शेषः । अत्र श्लोकवार्तिकं प्रमाणयति— एतदेवेति, तथा हि—

" एतदेव प्रसङ्क्तव्यं विषयस्यापि संस्कृतौ । ( विषयस्य = शब्दस्य )
समानदेशवर्तित्वात् संस्कारोप्यविशेषतः ॥
स्थिरवाय्वऽपनीत्या च संस्कारोऽस्य भवन् भवेत् ।
दृष्टं वाऽऽवरणाऽपाये तद्देशान्योपलम्भनम् ॥
संस्कृताऽसंस्कृतत्वे च शब्दैकत्वे न सिध्यतः ॥" इत्यादि ।

शब्दश्रोत्रयोरुभयोरेव संस्कारपक्षे तूभये=उक्ता द्विविधा एव दोषा दर्शयितव्या इत्याह—उभयेति. । उपसंहरति—तस्मादिति । नाभिव्यङ्ग्य इति—यदि शब्दः प्रयत्नाभिव्यङ्ग्यः स्यात्तदास्य नित्यताच्येतापि नैवमस्तीत्यर्थः । स्वसिद्धान्तमाह— तज्जन्येति—प्रयत्नजन्य एवाऽसौ=शब्द इति न नित्यः । न च विभुरपीत्याह— प्रादेशिकेति । श्रोत्रमपि न व्यापकमित्याह— श्रोत्रमिति । सर्वेषां जनानां सर्वशब्दोपलब्धिप्रसङ्गः शब्दश्रोत्रयोर्व्यापकत्व एवास्ति न चा-

सति हि कैश्चिदेव कश्चिदेव शब्दः श्रूयत इत्युपपद्यते, अन्यथा श्रोत्रव्यवस्था शब्दव्यवस्था चोभयमपि न स्यात्। किं च नानादेशस्थैश्च वक्तृभिरुच्चारितः शब्दो युगपन्नानादेशेषूपलभ्यते "तदेकस्य नित्यस्यानुपपन्नम्" इति भाष्यं तत्र नित्यस्यानुपपन्नमितिप्रतिज्ञा एकस्येति हेतुः, नित्यो ह्यसावेकः स्यात् एकस्य चानुपपन्नं नानादेशेषूपलम्भनमिति।

ननु नावश्यं नित्यत्वे सत्येकत्वं भवति, अनेकान्येव हि गकारादीनि नित्यानि भवन्तु ? इत्यत आह—"असति विशेषे नित्यस्य नानेकत्वम्" इति। एतदुक्तं

---

स्माकं मते तयोर्व्यापकत्वमुभयोरेव प्रादेशिकत्वस्वीकारादित्याह—तथेति। तथा सति=शब्दश्रोत्रयोः प्रादेशिकत्वे सति। विपक्षे बाधकमाह—अन्यथेति। श्रोत्रस्याकाशादिरूपत्वस्वीकारे व्यापकत्वमेकत्वं च स्यादितीदं देवदत्तश्रोत्रमिदं च यज्ञदत्तश्रोत्रमित्यादिव्यवस्था न स्यात्, शब्देति—शब्दस्य व्यापकत्वस्वीकारे चायं शब्दोऽनेन श्रुतोऽनेन च न श्रुत इति व्यवस्थापि न स्यात्। अव्यवस्था च पूर्वमेव प्रदर्शिता। अत्र शाबरभाष्यमप्यऽन्वेति—किं च नानेति। अत्र हि "तदेकस्य नित्यस्यानुपपन्नम्" इत्येव भाष्यवाक्यमस्य च वाक्यस्य पूर्वभाष्यवाक्यमर्थतो पठितम्—"किं च नाना" इत्यादीति ज्ञेयम्। भाष्यानुपूर्वी तु—"नानादेशेषु च युगपच्छब्दमुपलभामहे तदेकस्य नित्यस्यानुपपन्नम्" इत्येवं विज्ञेया। तत्=नानादेशेषूपलम्भनम्। उक्तभाष्ये साध्यहेतुप्रभेदं दर्शयति—तत्रेति। नित्यस्य नानादेशेषूपलम्भनमनुपपन्नमेकत्वात् परमाणुवत्, स्वाभिप्रायं प्रकटयति—नित्य इति। असौ=शब्दः। शब्दस्य व्यापकत्वमनालोच्य दूषणं ददाति, तत्र प्रादेशिकस्यैकस्यानेकदेशेषूपलम्भनमनुपपन्नमेव अन्यथैकस्य घटस्यापि नानादेशेषूपलब्धिः स्यादिति भावः।

ननु यन्नित्यं तदेकमेवेति नास्ति व्याप्तिर्येन नित्यत्वाच्छब्दस्यैकत्वं स्यात्, एकत्वे ह्यनेकदेशेषूपलम्भनमनुपपन्नं नैवमस्ति नित्यानामपि गकारादीनामनेकत्वसंभवादित्याशङ्कते—नन्विति। पूर्वपक्षशाबरभाष्यवचनेन पूर्वपक्षी परिहरति—असतीति। यदि विशेषाभावेपि नित्यस्यानेकत्वं स्यात्तदाऽऽकाशस्याप्यनेक-

**भवति–प्रत्यभिज्ञाख्यविशेषप्रत्ययबलेन ह्यस्तनाऽद्यतनगकारयोरेकत्वावगमान्नित्यत्वमाऽऽश्रीयते अस्ति चासावऽविशेषप्रत्ययो युगपन्नानावक्तृभिरुच्चारितेपि गकारे नहि तत्रापि प्रत्ययविशेषोस्ति, असति च विशेषे नित्यस्य नाऽनेकत्वं सम्भवति । अनेकत्वे हि प्रत्यभिज्ञाया अप्रामाण्यमस्माकमिव भवतोपि स्यात् तदप्रामाण्ये च नित्यत्वानुपपत्तिः,तस्मान्नित्यत्वे सत्येकत्वम-**

---

त्वं किं न स्यादित्याक्षेपः। न चानेकदेशेषूपलब्धिरेव विशेषस्तदर्थं चानेकत्वं कल्प्यत इति वाच्यम्, अनेकदेशेषूपलब्धेरनित्यत्वेपि सम्भवात् नित्यत्वेपि च व्यापकत्वेन सम्भवादिति नानेकत्वमित्यर्थः । उक्तं विशदयति–एतदुक्तमिति । प्रत्यभिज्ञेति–स एवायं गकार इति प्रत्यभिज्ञया यद्येकत्वं न प्रतीयेत तदा नित्यत्वमपि न स्यात् श्रुतस्य विनष्टत्वेनान्यस्यैव गकारस्य श्रूयमाणत्वादिति कल्पनादित्यर्थः तस्मादेकत्वमेव युक्तम्, एतदेवोपपादयति–अस्तीति। असौ=स एवायं गकार इत्यविशेषप्रत्ययः । विपक्षे बाधकमाह– न हीति । किं वा यथा युगपन्नानावक्तृभिरुच्चारिते गकारे प्रत्ययस्य विशेषो न भवति किं तु स एवायमित्यविशेष एव तथा तत्रापि=ह्यस्तनाद्यतनगकारयोरपि ह्यस्तनादऽद्यतनगकारः पृथगेवेति प्रत्ययविशेषो नास्ति येनानेकत्वं स्यादित्यर्थः। स्वाभिप्रायमाह–असतीति । एकत्वविपक्षे बाधकमाह–अनकत्वेति । स एवायमिति ज्ञानमेव प्रत्यभिज्ञा तत्र पूर्वापरकालसम्बन्धिनः पदार्थस्योक्तज्ञानविषयस्य यद्येकत्वं तदेव प्रत्यभिज्ञायाः प्रामाण्यं प्रत्यभिज्ञायाः पदार्थैक्यावगाहकत्वात्, प्रत्यभिज्ञाविषयस्य चानेकत्वे प्रत्यभिज्ञाया एकत्वावगाहकत्वाद्विषयस्य चानेकत्वाद्विषयसारूप्याभावाच्छुक्तिरजतज्ञानवदऽप्रामाण्यं स्यादेवेत्यर्थः । अस्माकमिवेति–अस्माकं मते सादृश्यमात्रेणैव स एवायं गकार इति प्रत्यभिज्ञा भवति तत्र प्रत्यभिज्ञाविषयस्यैकत्वस्य गकारेऽभावादप्रामाण्यमेव प्रत्यभिज्ञायास्तथा तव मतेपि गकाराणामनेकत्वस्वीकारे प्रत्यभिज्ञाया अप्रामाण्यमेव स्यात् न चैतदिष्टं तवेत्यर्थः । तदप्रामाण्ये=प्रत्यभिज्ञाया अप्रामाण्ये च प्रत्यभिज्ञास्थले तस्मिन्नऽसत्यपि गकारे स एवायं गकार इति ज्ञानं जातमिति वक्तव्यं तत्र चास्य गकारस्य पूर्वकालसम्बन्धाभावे पूर्वं श्रुतोऽन्य

ङ्गीकर्तव्यम्, एकस्य चानुपपन्नं नानादेशोपलम्भनमिति।

वार्तिकेपि-" यौगपद्योपलम्भाद्वा भेदो भेदाच्च कार्यता " इति द्वयमुपक्षिप्य यथा यौगपद्योपलम्भाद् भेदो भवति तथा दर्शितम्-" अविभुत्वे हि युगपत् " इत्यादिना " स्फुटेऽन्यत्वेऽवकल्पते " इत्यन्तेन । यथा च भेदात्कार्यता भवति नाऽकार्यस्य नित्यस्य भेदोऽवकल्पते तथा दर्शितम्-" नित्यत्वे त्वेकबुद्धिः स्या-

---

एवं गकार आसीत् स च नष्टोऽयं चान्य एवेति प्राप्तं तथा च स्पष्टमेवाऽनित्यत्वमिति नित्यत्वानुपपत्तिः । प्रत्यभिज्ञाया अप्रामाण्ये स्वीकृते चानेकगकारव्यक्तीनां नित्यत्वाभ्युपगमोपि व्यर्थ एवेत्यऽनित्यत्वमेव बलात् प्राप्नुयात् । तस्मान्नित्यत्वप्रतिपादनायैकत्वमवश्यमभ्युपगन्तव्यम्, एकस्य च नाऽनेकदेशेषूपलम्भः सम्भवतीत्यर्थः ।

अत्र श्लोकवार्तिकमन्वेति-वार्तिकेति । द्वयमुपक्षिप्य=यौगपद्योपलम्भाद्भेदं भेदाच्च कार्यत्वमिति द्वयमुपक्षिप्य " अविभुत्वे हि " इत्यादिना यौगपद्योपलम्भाद्=युगपन्नानादेशेषूपलम्भात् गकारादीनां भेदः प्रदर्शित इत्यर्थः । तथा च वार्तिकम्—

" अविभुत्वे हि युगपन्नैको नानाऽवगम्यते । ( नाना = नानादेशेषु )
कात्स्न्र्येन चावगम्यत्वादेकदेशे घटादिवत् ॥
शब्दस्याऽविभुता तस्मादन्यतास्य मुखान्तरे ।
एकः सन्नेकदेशस्थो यदैकेन प्रयुज्यते ॥
तदा वक्त्रन्तरे न स्यादेकवक्तृमुखादिवत् ।
कार्यत्वे स्यात् क्रियाभेदात् फलभेदः प्रतिक्रियम् ॥
तेनैकबुद्धिः सादृश्यात् स्फुटेऽन्यत्वेऽवकल्पते ॥" इति ।
" नित्यत्वे त्वेकबुद्धिः स्यान्न किञ्चिद्भ्रान्तिकारणम् ।
कामं देशा इति न्यायात् तच्चैकत्वं विरुद्ध्यते ॥" इति च ।

" नित्यत्वे त्वेकबुद्धिः स्यात्." इत्यनेन च भेदात् कार्यत्वं शब्दस्य वार्तिके पूर्वपक्षतया प्रदर्शितमित्याह-यथा चेति । ननु नित्यत्वं हि स एवायं गकार इति प्रत्यभिज्ञया वक्तव्यं न च सा प्रमाणं येनैकत्वं स्यात् तस्माद्

तू ” इति । न हि नित्यत्ववादिना प्रत्यभिज्ञाया भ्रान्तित्वमिष्यते तथा च वक्ष्यते-“ अपि चैकरूप्ये सति देशभेदेन कामं देशा एव भिन्नाः स्युर्न तु शब्दः ” इति । न हि तदप्रामाण्ये नित्यत्वं सिध्यति प्रमाणान्तराभावात्, अतो नित्यत्वे सत्येकत्वं स्यात् तच्च नानादेशोपलम्भेन विरुध्यत इति, ततश्च यौगपद्योपलम्भाद् भेदो भेदे च प्रत्यभिज्ञाया अप्रामाण्यं तदप्रामाण्ये च नित्यत्वाभावात् कार्यत्वम्-तदेतदानुपूर्व्यं स्वतन्त्रसिद्धम् । दृढे चानित्यत्वे दीपवत् सादृश्यात् प्रत्यभिज्ञा भवति तस्मादनित्यः शब्द इति प्राप्ते,

---

गकारादीनामनेकत्वादनेकदेशेषूपलम्भो न विरुद्ध इत्याशङ्क्याह-नहीति । प्रत्यभिज्ञयैव तव मते गकारादीनां नित्यत्वं सिध्यतीति न प्रत्यभिज्ञायास्त्वया भ्रान्तित्वम्=अप्रामाण्यं वक्तव्यम् । शब्दस्यैकत्वे शाबरभाष्यं प्रमाणयति-अपि चेति । ऐकरूप्ये=शब्दैक्ये । प्रत्यभिज्ञाया अप्रामाण्ये बाधकमाह- न हीति । तदप्रामाण्ये=प्रत्यभिज्ञाया अप्रामाण्ये, स एवायं गकार इति प्रत्यभिज्ञयैव गकारादीनां नित्यत्वं सिध्यति प्रत्यभिज्ञायाः स्वविषये पूर्वापरकालवृत्तित्वबोधनात् तस्याः प्रत्यभिज्ञाया अप्रामाण्ये च गकारादीनां नित्यत्वे प्रमाणान्तराभावान्नित्यत्वं न स्यादित्यर्थः । नित्यत्वे च स्वीकृते एकत्वं स्यादेवाऽन्यथा स एवायं गकार इति प्रत्यभिज्ञायाः प्रामाण्यं न स्यादित्याह-अत इति । तच्च=एकत्वं नानादेशेषूपलम्भेन सह विरुध्यते एकस्यानेकदेशेषूपलम्भासम्भवात् । स्वोक्तं सङ्कलयति-ततश्चेति । यौगपद्योपलम्भात्=युगपन्नानादेशेषूपलम्भात् । एकस्यापि क्रमेण नानादेशेषूपलम्भः सम्भवतीत्युक्तम्-यौगपद्येति । एतदानुपूर्व्यम्=ततश्चेत्यादिनोक्तं पूर्वपक्षानुपूर्वीस्वरूपं स्वतन्त्रसिद्धम्=प्रत्यक्षसिद्धं हेतुमनपेक्ष्यसिद्धमिति वा यावत् । ननु यद्यनित्यः शब्दस्तदा स एवायं गकार इति प्रत्यभिज्ञा न स्यादित्याशङ्क्याह-दृढ इति । दीपवदिति-यथा बिन्दुभेदेन प्रतिक्षणं ज्वालाया भिन्नत्वेपि सादृश्यात् सैवेयं ज्वालेति प्रत्यभिज्ञा भवति तथा सादृश्यादेव स एवायं गकार इति प्रतीतिर्भवति नैकत्वादित्यर्थः । शब्दानित्यत्वोपपादनमुपसंहरति-तस्मादिति ।

अभिधीयते—

प्रयत्नानन्तरं दृष्टेर्नैकान्त्यात् कार्यता ध्वनेः।
तदभिव्यङ्ग्यपक्षेऽपि युज्यते तत्र दर्शनम् ॥

यत्तु कथमभिव्यङ्ग्यत्वम्? इति, श्रोत्रसंस्कारेणेति ब्रूमः। यत्त्वाकाशस्याऽहङ्कारस्य वा श्रोत्रत्वे तत्संस्कारत्वे च सर्वत्र पुंसामुपलब्धिः स्यादित्युक्तम्, तत्र ब्रूमः—यदि तयोः श्रोत्रत्वे भवेदयं दोषः? तत् कर्णशष्कुली भवतु श्रोत्रं सा च प्रतिपुरुषं भिन्नेति नातिप्रसङ्गः। यद्यपि चाऽऽकाशमेव श्रोत्रं तत्तु न साक्षात् संस्क्रियते किं त्वऽधिष्ठानद्वारेण ततश्च यद्यपि श्रोत्रं

---

एवं पूर्वपक्षमुपपाद्य तस्य निराकरणमारभते—प्रयत्नेति। ध्वनेः=शब्दस्य प्रयत्नानन्तरमपि दृष्टेः=उपलब्धेर्न कार्यता प्राप्नोति ध्वनेस्तदभिव्यङ्ग्यपक्षेऽपि=प्रयत्नाभिव्यङ्ग्यत्वपक्षेऽपि तत्र=प्रयत्नानन्तरं दर्शनम्=उपलब्धिर्युज्यते एव अभिव्यङ्ग्यानामप्यभिव्यञ्जकादनन्तरमेवोपलब्धिनियमादित्यर्थः। ननु यदि शब्दस्य प्रयत्नाभिव्यङ्ग्यत्वं स्यात्तदा स्यादपि नित्यता न चैवमस्ति प्रयत्नाभिव्यङ्ग्यत्वपक्षस्य पूर्वमेव निराकृतत्वात्कथमभिव्यङ्ग्यत्वं स्यादित्याशङ्कते—यत्त्विति। परिहरति—श्रोत्रेति, शब्दो व्यापकत्वाच्छ्रोत्रे स्थित एव श्रोत्रसंस्काराभावान्नोपलभ्यते श्रोत्रसंस्कारे च जाते सत एव शब्दस्याभिव्यक्तिमात्रं भवतीति प्रयत्नाभिव्यङ्ग्य एव शब्दो न प्रयत्नजन्य इत्यर्थः। ननु श्रोत्रसंस्कारपक्षेऽपि दोष उक्त इत्याह—यत्त्विति। परिहरति—यदीति। यदि तयोः=आकाशाहङ्कारयोः श्रोत्रत्वे सर्वपुंसां सर्वशब्दोपलब्धिप्रसङ्गो दोषोऽस्ति तत्=तदा कर्णशष्कुल्येव श्रोत्रमित्यर्थः, तथा च नोक्तदोष इत्याह—सा चेति। सा=कर्णशष्कुली तस्याः प्रतिपुरुषं भिन्नत्वान्न सर्वेषां श्रोत्रमेकव्यापारेण संस्कृतं भवति येन सर्वेषां तच्छब्दश्रवणप्रसङ्गः स्यात्। आकाशश्रोत्रपक्षेऽपि व्यवस्थामाह—यद्यपीति। तत्=श्रोत्रभूतमाकाशं यदि साक्षात् संस्क्रियेत तदैकसंस्कारेण सर्वसंस्कारसम्भवात्सर्वेषां तच्छब्दश्रवणप्रसङ्गः स्यात् नैवमस्ति किं त्वधिष्ठानद्वारेण=कर्णशष्कुलीद्वारा संस्क्रियते तथा च यस्य कर्णशष्कुली संस्कृता तेनैव स शब्दः

सर्वेषामेकं तथाप्यधिष्ठानानां भिन्नत्वात् तत्संस्कारव्यवस्थया श्रवणस्य व्यवस्था भविष्यति ।

नन्वेकत्वे सतीन्द्रियस्य यद्यप्यधिष्ठानानि भिन्नानि तथाप्येकेनाप्यधिष्ठानेन संस्कृतेनेन्द्रियस्य संस्कृतत्वात् सर्वपुंसामिन्द्रियं संस्कृतमिति सर्वेषामुपलब्धिः स्यादेव तदुक्तम्—

" नन्वेकस्मिन्नधिष्ठाने लब्धसंस्कारमिन्द्रियम् ।
बोधकं सर्वदेहेषु स्यादेकेन्द्रियवादिनः ॥" इति ।

सर्वदेहवर्तिनां पुंसामित्यर्थः । अत्रोत्तरम्—

" पुंसां देहप्रदेशेषु विज्ञानोत्पत्तिरिष्यते ।
तेन प्रधानवैदेश्याद् विगुणा सा तु संस्कृतिः ॥" इति ।

---

श्रूयते नान्येनेति व्यवस्था भविष्यति । श्रोत्रमेकमिति—आकाशस्यैकत्वात् । अधिष्ठानानाम्=कर्णशष्कुलीनाम् । यद्यपीतिपदं न तथापीतिपदसाकाङ्क्षं किंतु पक्षान्तरोपस्थापकमेवात्र, अन्यथा मीमांसकमते दिश एव श्रोत्रत्वाद्वाक्यमेवाऽसङ्गतं स्यादिति ध्येयम् । किं वा ' अपि च यदि ' इत्येवमन्वयः । "तत्तु" इत्यारभ्य च व्यवस्थोपपादनारम्भः ।

नन्वधिष्ठानानां कर्णशष्कुलीनां भेदेपीन्द्रियस्याऽऽकाशस्यैकत्वादेकत्रत्यसंस्कारेण सर्वं संस्कृतमेवेति किं न सर्वेषां सर्वशब्दोपलब्धिः स्यादिति यद्यपीत्युक्तपक्षे शङ्कते—नन्विति । स्वपक्षे श्लोकवार्तिकं प्रमाणयति—नन्वेकस्मिन्निति । एकस्मिन्नप्यधिष्ठाने=कर्णशष्कुल्यां संस्कारे जाते सति स संस्कारः सर्वस्यैवेन्द्रियस्य स्याच्छ्रोत्रस्याकाशरूपत्वेनैकत्वादिति लब्धसंस्कारमिन्द्रियं पुंसां सर्वदेहेषु बोधकम्=शब्दग्राहकं स्यादेवेत्येकेन्द्रियवादिनः पक्षे दोष इत्यर्थः । सर्वदेहेष्वितिपदं व्याचष्टे—सर्वदेहवर्तिनामिति, सर्वदेहभृतां पुंसां बोधकं स्यात् । अस्य परिहारमपि श्लोकवार्तिकोक्तमेवातिदिशति—पुंसामिति । जीवस्य व्यापकत्वेपि ज्ञानं देहावच्छेदेनैवोत्पद्यत इति शब्दज्ञानमपि देहावच्छेदेनैव वक्तव्यं तेन यद्देहीयकर्णशष्कुल्यां संस्कारो जातस्तद्देहावच्छेदेनैव शब्दश्रवणं भवति नान्यदेहावच्छेदेन सगुणस्यैव संस्कारस्योपकारकत्वात् संस्कारस्य च प्रधान ( संपाद्य ) समानदेशत्वमेव गुणस्तत्र देवदत्तीयकर्णशष्कु-

अयमर्थः—स्वशरीरे एव भोगायतने सर्वपुंसामपि ज्ञानमुत्पद्यते नान्यत्र शब्दज्ञानाङ्गं चायमधिष्ठानसंस्कारः प्रधानसमानदेशत्वं चाङ्गानां गुणस्तेन देहान्तरवर्तिनः पुरुषस्य यत् स्वदेहे निष्पादयितव्यं विज्ञानं तस्य तद्देहगत एव संस्कारो निष्पादको भवति न देहान्तरगतः स हि तत्प्रधानभूतेन ज्ञानेन विदेशत्वाद् विगुणः।

ननु संस्कार्यस्यैकत्वात् तद्द्वारत्वाच संस्काराङ्गभावस्य देशभेदोऽकिंचित्कर एव यथा बर्हिरेकत्वात् त-

---

स्लीसंस्कारो यज्ञदत्तीयदेहावच्छेदेनोत्पाद्ये ज्ञाने वैदेश्यात्=भिन्नदेशत्वाद् विगुणः=गुणहीन एव, अत एव न तदा यज्ञदत्तीयदेहावच्छेदेन ज्ञानमुत्पद्यते संस्कारस्याऽङ्गभूतस्य प्रधानसमानदेशत्वे एवोपकारकत्वनियमादिति भावः। उक्तपद्यं स्वयं व्याचष्टे— अयमर्थ इति। अपिपदस्य ज्ञानपदेनान्वयः। सः=देहान्तरगतः संस्कारः। तत्प्रधानभूतेन=संस्कारप्रधानभूतेनाऽङ्गिना ज्ञानेन=शब्दश्रवणेन, विदेशत्वात्=भिन्नदेशवृत्तित्वात्—यस्मिन् देहे ज्ञानोत्पत्तिरभीष्टा तद्देहेऽभावात्। विगुणः=गुणहीनः स संस्कारः। स्पष्टमन्यत् अ-

नन्वातिथ्योपसदग्नीषोमीयेष्वेकमेव बर्हिर्भवतीति निर्णीतं च [illegible] द्वितीयपादत्रयोदशेऽधिकरणे—" अपि वोत्पत्तिसंयोगादर्थसम्बन्ध [illegible]रति—तत्रेति। प्रयोगैकत्वहेतुः स्यात् " इति, श्रूयते च " यदातिथ्यायां [illegible]वति यथा समीदग्नीषोमीयस्य च " इति, तत्र यथा बर्हिष उपसत्स्व[illegible]य कस्यचिद्दूर्णस्य श्र-स्कारो न भवति किं त्वातिथ्यायामेव कृतेन [illegible] तेषां कर्णशष्कुल्यां संभवत्याऽऽतिथ्योपसदग्नीषोमीयेषु त्रिष्वपि [illegible]चुयशानामेवाभिव्यञ्जकत्वात् तद्द्वादशाध्यायप्रथमपादस्यैकोनविंशेऽधिकरणे [illegible]च्चकारस्य कदा चिच्छकारस्य इति तथा—" बर्हिष एकत्वात् सकृत् प्रोक्षणादिभि[illegible] व्यव[illegible] [illegible]सः सर्वः [illegible] प्रोक्षणाद्यपेक्षा नास्ति ते च प्रोक्षणादयः प्राथम्याद[illegible] ज्ञेया, इयांस्तु पसत्स्वग्नीषोमीये च प्रसङ्गसिद्धिर्न वारयितुं शक्यते " इति प्राप्[illegible]वस्थापक इति ऽत्रापि संस्कार्यस्येन्द्रियस्यैकत्वाद् देशभेदः=कर्णशष्कुलीरूपाधिष्ठान[illegible]व शब्दो-श्चित्करः=न व्यवस्थापकः सम्भवति संस्काराङ्गभावस्य=शब्द[illegible]ध्वनिना क-संस्कारस्य यदङ्गत्वं तस्य तद्द्वारत्वात्=संस्कार्यद्वारा शब्दश्रवणोपायत्वात्,

त्संस्काराणामातिथ्याकालानामप्युपसदऽग्नीषोमीयाङ्गत्वं न विहन्यते तद्वदत्रापि स्यात् ?। न, अदर्शनात्– न ह्येकस्मिन्नऽधिष्ठाने सर्वेषां ज्ञानमुपलभ्यते, अतः साधारणमऽपीन्द्रियं विज्ञानसमानदेशसंस्कारसचिवमेव ज्ञानमुत्पादयति नान्यथेति दर्शनबलादध्यवसीयते ततो नातिप्रसङ्गः ।

न चावश्यमेकमेवेन्द्रियम्–यद्यप्याकाशमेकमनवयवं च तथापि तस्य प्रादेशिकैर्घटादिभिर्ये संयोगास्तेपि

---

* तथा च संस्कार्यस्येन्द्रियस्याकाशरूपत्वेनैकत्वादेककर्णशष्कुलीसंस्कारेणापि संस्कृतत्वसम्भवात्सर्वेषामेव पुंसां तच्छब्दश्रवणं स्यादेवेत्याशङ्क्ते–नन्विति। देशभेद इत्यत्र देहभेद इत्यपि क्वचित्पाठः। बर्हिरेकत्वात् = बर्हिष एकत्वादित्यर्थ इत्येव च पाठो युक्तः। तत्संस्काराणाम् = बर्हिस्संस्काराणां प्रोक्षणादीनाम्। आतिथ्याकालानाम्= आतिथ्येष्टौ कृतानाम्। उपसदग्नीषोमीयाङ्गत्वम् = उपसदग्नीषोमीयाङ्गबर्हिरङ्गत्वं न विहन्यते। अत्रापि =श्रवणेन्द्रियसंस्कारपक्षेपि । तद्व-

प्रादेशिकास्ततश्च कर्णशष्कुलीसंयोगानां प्रतिपुरुषं भिन्नत्वात् तदवच्छिन्नस्य चाकाशस्य श्रोत्रत्वात् सत्यपि स्वरूपैकत्वेऽवच्छिन्नरूपाणां श्रोत्राणां भेदाद् व्यवस्थासिद्धिः। एवमहङ्कारभागे दिग्भागे च श्रोत्रे द्रष्टव्यम्।

यत्तु "सकृच्च संस्कृतं श्रोत्रं सर्वशब्दान् प्रकाशयेत्" इत्युक्तम्, तत्रोच्यते—ध्वनयो हि ताल्वादिस्थानविशेषसंपर्काद् विजातीया विलक्षणसामर्थ्या निष्पद्यन्ते ततश्च कश्चिदेव ध्वनिः कस्य चिच्छब्दस्यानुगुणं संस्कारमाधत्ते न सर्वसाधारणमित्युपलब्धिव्यवस्था कल्प्यते। शब्दसंस्कारपक्षेपि कश्चिदेव ध्वनिः कंचिच्छब्दं

---

तस्य=आकाशस्य। तदवच्छिन्नस्य=कर्णशष्कुल्यवच्छिन्नस्य। व्यवस्थासिद्धिः= न सर्वपुंसां तच्छब्दश्रवणप्रसङ्गः। उक्तन्यायमन्यत्रातिदिशति—एवमिति। अहङ्कारभागे=अहङ्कारविशेषे श्रोत्रे दिग्विशेषे च श्रोत्रे। अहङ्काररूपे दिग्रूपे वा श्रोत्रेऽहङ्कारस्य दिशश्च कर्णशष्कुल्यवच्छेदेनैव श्रोत्रत्वात् कर्णशष्कुल्यवच्छिन्नस्य चाहङ्कारस्य परस्परं भेदान्न सर्वेषां श्रवणप्रसङ्गः। एवं दिक्पक्षेपि ज्ञेयम्।

(५३७पृ)श्लोकवार्तिकोक्तं पूर्वपक्षं मुद्दिशति—यत्त्विति। परिहरति—तत्रेति। यथा—वक्तुर्ध्वनिस्तालुस्थानेन संयुज्य तथा सामर्थ्यवान् भवति यथा समीपस्थानां तेन ध्वनिना श्रोत्रसंस्कारे जाते इचुयशानां मध्ये कस्यचिद्वर्णस्य श्रवणं भवति न कवर्गादीनां न वापि दूरस्थानां पुंसां तेषां कर्णशष्कुल्यां संस्कारोत्पादाभावात् ध्वनितालुसंयोगस्य इचुयशानामेवाभिव्यञ्जकत्वात् तत्रापि तालुप्रदेशविशेषसंयोगवशात् कदा चिच्चकारस्य कदा चिच्छकारस्य श्रवणं भवतीति कल्प्यते तथात्र श्रोत्रसंस्कारपक्षेपि व्यव[illegible]। उपल[illegible]ब्धिः=शब्दोपलब्धिः। शब्दसंस्कारपक्षेप्येवमेव व्य[illegible]था ज्ञेया, इयांस्तु विशेषः—श्रोत्रसंस्कारपक्षे श्रोत्रसंस्कार एव शब्दोपलब्धिव्यवस्थापक इति शब्दसंस्कारापेक्षा नास्ति, शब्दसंस्कारपक्षे च शब्दसंस्कार एव शब्दोपलब्धिव्यवस्थापक इति श्रोत्रसंस्कारापेक्षा नास्ति, केन चिद् ध्वनिना कश्चिदेव शब्दः संस्क्रियते इति स एव श्रूयते नान्यस्तदा तत्संस्काराभावात्। शब्दस्य च संस्कारे जातेपि वक्तृसमीपस्थैरेव श्रूयते न दूरस्थै-

**संस्करोति न सर्वः सर्वमिति युक्ततरैव व्यवस्था ।**

**दृष्टा च समानेन्द्रियग्राह्याणामप्यऽभिव्यञ्जकव्यवस्था—सावित्रं हि तेजो घटादीनामेवाभिव्यञ्जकं न नक्षत्राणाम्, निम्बत्वक् चन्दनगन्धस्यैवाभिव्याञ्जिका न गन्धान्तराणाम्, तस्माददोषः ।**

---

रपीति दूरत्वमेव तत्रोपलब्धौ संस्कारे वा प्रतिबन्धकम्, परिच्छिन्नैर्ध्वनिभिरुत्पन्नैः स्वदेश एव शब्दसंस्कारसम्भवात् । बधिरस्य तु समीपस्थत्वेपि श्रवणसाधनमिन्द्रियमेव नास्तीति न तेन श्रूयत इति ।

ननु ध्वनेः शब्दसंस्कारकत्वे सर्वशब्दसंस्कारकत्वं सर्वशब्दाभिव्यञ्जकत्वं च युक्तं तथा च सर्वेषामेव शब्दानां श्रवणप्रसङ्गः—कंश्चिदेव शब्दं ध्वनिः संस्करोत्यभिव्यनक्तीत्यत्र हेत्वभावादित्याशङ्क्य लोकदृष्टेन समाधत्ते—दृष्टेति । अभिव्यञ्जकव्यवस्थामेवाह—सावित्रमिति । घटादीनां नक्षत्राणां च चक्षुर्ग्राह्यत्वात्समानेन्द्रियग्राह्यत्वं तत्र सूर्यतेजसा यथा घटादीनामेवोपलब्धिर्भवति न तारकाणां यथा च निम्बत्वचा चन्दनगन्धस्यैवाभिव्यक्तिर्भवति नान्यगन्धस्य तथा केनापि ध्वनिना कस्यचिदेव शब्दस्योपलब्धिर्भवति न सर्वेषामित्यर्थः । उपसंहरति—तस्मादिति । तदुक्तं वार्तिकेपि—

" जातिभेदश्च तेनैव संस्कारो व्यवतिष्ठते ॥
अन्यार्थं प्रेरितो वायुर्यथान्यं न करोति वः । (करोति = उत्पादयति)
तथान्यवर्णसंस्कारशक्तो नान्यं करिष्यति ॥ (करिष्यति = संस्करिष्यति)
अन्यैस्ताल्वादिसंयोगैर्वर्णो नान्यो यथैव ते ।
तथा ध्वन्यन्तराऽऽक्षेपो न ध्वन्यन्तरसारिभिः ॥ (सारिभिः = अनुगुणः)
तस्मादुत्पत्त्यभिव्यक्त्योः कार्यार्थापत्तितः समः— ।
सर्वदेष्विदेः सर्वत्र स्यात् प्रयत्नविवक्षयोः ॥
विषयस्यापि संस्कारे तेनैकस्यैव संस्कृतिः । (विषयस्य = शब्दस्य)
नरैः सामर्थ्यभेदाच्च न सर्वैरवगम्यते ॥
यथैवोत्पद्यमानोयं न सर्वैरवगम्यते ।
दिग्देशादिविभागेन सर्वान् प्रति भवन्नपि ॥
तथैव यत्समीपस्थैर्नादैः स्याद् यस्य संस्कृतिः ।

न च शब्दसंस्कारे सर्वपुंसामुपलब्धिप्रसङ्गः-ध्वनीनां प्रादेशिकत्वात्, तद्देशे शब्दः संस्क्रियते न सर्वत्र, अतः संस्कृतेन शब्देन यस्येन्द्रियं संनिकृष्टं स एव शृणोति नान्य इत्युपपन्नम् ।

युगपद्देशभेदश्च स्यादेकस्यापि सूर्यवत् ।
ये विन्ध्यनिलया ये च कामरूपे व्यवस्थिताः ॥
प्राग्भागे ह्यात्मनः सर्वैरुद्यन् भास्वान् निरीक्ष्यते ।
प्रत्यग्भागे तथास्तं यन्, मध्यान्हे चोपरि स्थितः ॥
भिन्नाश्च तेषां प्राग्भागास्तथा प्रत्यक् तथोपरि ।
तेष्वस्य दृश्यमानस्य विस्पष्टा भिन्नदेशता ॥

---

तैरेव श्रूयये शब्दो न दूरस्थैः कथं चन ॥" इत्यादि ।

दोषाभावं प्रतिजानीते- न चेति । उपपादयति-ध्वनीनामिति । प्रादेशिकत्वात्=अव्याप्यवृत्तित्वात्-किंचिद्देशे वृत्तित्वात् । तद्देशे=ध्वनिदेशे । उपसंहरति-अत इति । संस्कारकाणां ध्वनीनां प्रादेशिकत्वेन संस्कृतस्य शब्दस्य किं चिद्देश एव सम्भवात्तद्देशस्थैरेव स शब्दः श्रूयते नान्यदेशस्थैरिति भावः ।

नन्वेकस्य युगपद्देशभेदः=युगपदनेकदेशेषूपलम्भो न सम्भवतीत्याशङ्क्य "आदित्यवद् यौगपद्यम्" इतिसूत्राभिप्रायं प्रकटयन् पद्यैः परिहरति-युगपदिति । यथैकस्यैव सूर्यस्य नानादेशेषूपलम्भस्तथैवैकस्य सन् युगादेः शब्दस्य नानादेशेषूपलम्भो न विरुद्ध इत्यर्थः, तत्र [illegible]पि स्वयंप्रकाशत्वादऽतिदूरवर्तित्वाच्च नानादेशेषु युग[illegible]तबिम्बानां ते च तु विभुत्वादेवेत्यनुसन्धेयम् । एकस्यापि सूर्यबिम्बस्य ना[illegible]पलब्धिमुपपादयति-ये विन्ध्येत्यादिना, ये जना विन्ध्यनिलया=विन्ध्याचलनिवासिनो ये च कामरूपदेशनिवासिनस्तैः सर्वैरप्युदयाचलं प्राप्तः सूर्यः स्व[illegible]भागे=पूर्वस्यां दिशि निरीक्ष्यते, अस्तं प्राप्तश्च प्रत्यग्भागे=पश्चिमस्यां दिशि निरीक्ष्यते, मध्यान्हकाले च स्वोपरिदेशे स्थितः निरीक्ष्यते तेषाम्=तत्तद्देशीयजनानां च प्राग्भागाः प्रत्यक्=प्रत्यग्भागाः उपरि=ऊर्ध्वभागाश्च स्पष्टमेव भिन्ना विन्ध्याचलनिवासिभिरध्यवसितात् सूर्याधिकरणदेशात् कामरूपनिवासिभिरध्यवसितस्य तात्कालिकस्यापि सूर्याधिकरणदेशस्य भिन्नत्वात् तेषु=भि-

तथा यस्मिन् यावद्दूरे देशे कैश्चित्सूर्योदयो दृश्यते तद्देशवर्तिनोऽन्येपि ततः परस्तात् तावति पश्यन्ति ततोप्यस्ति देशभेदः । न च सूर्यनानात्वमाशङ्कनीयम्, न हि केचिद्भिन्नं सूर्यं पश्यन्ति ।

किं पुनरेकदेशस्थस्यैव सवितुर्नानादेशोपलम्भे कारणम् ?, उच्यते-अतिदूरवर्तिनोऽस्य यथावद्देशमजानन्तः स्वसंनिधिमध्यस्यन्तो देशभेदं मन्यन्ते वि-

---

ष्वपि प्रत्यग्भागादिदेशेषु दृश्यमानस्यास्य=सूर्यस्य भिन्नदेशता=नानादेशेषूपलब्धिः स्पष्टैव, एवं शब्दस्यापि नानादेशेषूपलम्भो न विरुद्धः किं तु व्यापकत्वाद् युक्त एवेत्यर्थः । तत्र सूर्यस्यैव नानात्वं मा शङ्क्येतेत्यभिप्रायेण देशानां भेदः प्रदर्शितः ।

प्रदर्शितदेशभेदे संप्रति गद्येन युक्तिं वदति-तथेति । तद्देशवर्तिनः=यत्र सूर्यो दृष्टस्तद्देशवर्तिनो यथा-माथुरैः काश्युपरि सूर्यो दृष्ट इति काशीस्थैस्ततोपि=स्वस्मादपि दूरे दृश्यते । किं च माथुरैरपि मथुरातो यावद्दूरे रविर्दृश्यते काशीस्थैरपि काशीतस्तावदेव दूरे दृश्यत इत्याह-तावतीति । [illegible]ोपि=सर्वैः स्वस्माद्दूरे एव रवेर्दर्शनतः । देशभेद इति-यदि देशभेदो न [illegible]त्तदा सूर्यस्य नानात्वमुच्येतापि, नैवमस्ति तदाह-न चेति । तस्माद् यथै-

[illegible]न्वस्त्वेकस्यानेकदेशेषूपलम्भस्तथाप्येकदेशस्थस्य तु नानेकदेशेषूपलम्भः सम्भवतीत्येकदेशस्थस्य सूर्यस्य नानादेशेषूपलम्भे किं कारणमिति पृच्छति-किं पुनरिति । उत्तरमारभते-उच्यत इत्यादिना । यद्यपि सूर्यस्यैकदेशस्थस्य नानेकदेशेषु तदा स्थितिर्भवति विरोधात् तथाप्यस्य=सूर्यस्य स्थितिदेशं वास्तवमजानन्तो जनाः स्वसंनिधेः=स्वसामीप्यस्याध्यासं कुर्वन्ति-स्वसामीप्याभावेपि सूर्यं स्वसमीपं मन्यन्ते तथा ततोऽग्रदेशवर्तिनोपि स्वसमीपं

स्पष्टं चैतत् तथाहि—योऽपराह्णे यस्मिन् यावद्दूरे देशे सूर्यं पश्यति—'अस्मिन् क्षेत्रेऽस्मिन् पर्वते सूर्यः' इति स सवितारमीक्षमाण एव तद्देशे गतस्ततः परस्तात् तथैव तं पश्यति तेनावगम्यते सर्वेषां देशानामऽग्रत स्थितो-ऽसौ संनिहितवदवभासत इति । ये चादित्यापेक्षया स्तोकदेशाः पर्वतास्तेपि द्वियोजनस्थितानां त्रियोजन-स्थितानां च पुरुषाणां तुल्यवदवभासन्ते, तस्मादेकत्वे-ऽपि संभवति नानादेशोपलम्भः । तथैकमेव मुखं भिन्ने-ष्वादर्शेषु युगपद् दृश्यते ।

ननु प्रतिबिम्बं नामार्थान्तरं तत्र दृश्यते ?। न, त-स्याऽभावादनुपलम्भाच, न हि मूर्तमध्ये मूर्तान्तरं सं-भवति । किं च शरावस्थमुदकं भूमेरुपरि नाभिदघ्ने धारयित्वा तस्योपरिष्टादरत्निदघ्ने स्वमुखं कुर्वन्नुदक-स्याधस्तादरत्निमात्रे मुखप्रतिबिम्बं पश्यति तस्मिंश्च

---

मन्यन्ते इति देशभेदाभावेपि देशभेदं मन्यन्ते । उक्तमेव विशदयति—तथा ही-ति । सूर्यसमीपस्थानां पर्वतानामप्यतिदूरत्वादेवैव गतिरित्याह—ये चेति । स्तो-कदेशाः=सूर्यसमीपस्थाः । उपसंहरति—तस्मादिति । निदर्शनान्तरमाह—तथैक-मिति, यथैकमेव मुखमनेकदर्पणेषु युगपद् दृश्यते तथा शब्दोप्येकः सन् यु-गपन्नानादेशेषूपलभ्यते ।

ननु नानेकदर्पणेष्वेकस्य मुखस्योपलब्धिः किं तु प्रतिबिम्बानां ते च प्रतिदर्पणं भिन्ना एवेत्याशङ्कते—नन्विति । परिहरति—नेति । तस्य=प्रतिबि-म्बस्य । प्रतिबिम्बं नाम कोपि पदार्थ एव नास्ति यस्य प्रतिदर्पणं भेदः स्या-त् किं तु मुखमेवानेकत्रोपलभ्यते तथा शब्दोपीति ज्ञेयम् । प्रतिबिम्बस्य पदार्थान्तरत्वं निराकरोति—न हीति । मूर्तेति—मूर्तपदार्थस्य दर्पणस्य मध्ये= अन्तः, मूर्तान्तरम्=प्रतिबिम्बं मुखं वा न सम्भवति=न प्रवेष्टुं शक्नोति । प्र-तिबिम्बस्य पदार्थान्तरत्वाभावे उपपत्त्यन्तरमाह— किं चेति । नाभिदघ्ने= नाभिपरिमितदेशे । धारयित्वा=संस्थाप्य । तस्य=नाभिसमानदेशे स्थापितस्य शरावोदकस्य । तस्मिंश्च देशे=शरावस्याधोदेशे । यदि तत्र प्रतिबिम्बनाम

**देशे पार्श्वस्थाः पुरुषा न किं चिदपि पश्यन्ति. तेन दृश्यादर्शननिरस्तः प्रतिबिम्बाख्योर्थो न शक्योऽभ्युपगन्तुम्, तस्मादादर्शतेजसा जलेन च प्रतिहतं नायनं तेजः परावृत्त्य गृह्णातीति युक्तम् । तस्मादनैकान्तिको नानादेशोपलम्भो न नानात्वं शब्दस्य साधयति ।**

**ननु सवितुः सांनिध्याध्यासाद् युक्ता नानादेशावगतिः शब्दे तु कथम् ? । सर्वगतत्वात्–सर्वगतो हि**

---

कोपि पदार्थः स्यात्तदा पार्श्वस्थः पुरुषः शरावस्याधोदेशे प्रतिबिम्बं पश्येदेव न च पश्यति तस्माद् दृश्यादर्शननिरस्तः=योग्यानुपलब्धिनिरस्तोयं प्रतिबिम्बाख्यः पदार्थः । नन्वेवं कथं दर्पणादौ मुखप्रतीतिरित्याशङ्क्याह–तस्मादिति । गृह्णातीत्यत्र मुखमेवेति शेषः । उपसंहरति–तस्मादिति । अनैकान्तिकेति–शब्दनानात्ववादिनाहि शब्दो नाना नानादेशोपलम्भाद् घटवद् यत्र यत्र नानादेशोपलम्भस्तत्र नानात्वमित्येव वक्तव्यम्,तत्रोक्तरीत्या रवौ वक्त्रे च नानात्वं नास्त्यस्ति च नानादेशोपलम्भ इति नानात्वलक्षणसाध्यस्याभाववत्यपि रवौ वक्त्रे च नानादेशोपलम्भरूपहेतोः सत्त्वाद् हेतुर्व्यभिचारीति न शब्दस्य नानात्वं साधयितुं समर्थ इत्यर्थः, तस्माच्छब्दो गकारादिरेक एव । प्रतिबिम्बप्रतीतौ प्राभाकरा अप्येवमेवाहुः–“ प्रतिबिम्बज्ञानं तु मुखाद्यवभासं मुखादिविषयमेव भासुरे हि दर्पणादौ नयनरश्मिर्निपतितः प्रतिहतः परावृत्तो मुखादिना संप्रयुक्तस्तदेव मुखादि ग्राहयति, नन्वेवमपि सव्यदक्षिणविपर्यासो देशविशेषपरिमाणत्वाल्पत्वमहत्त्वप्रतिभासश्च किंनिबन्धनः ? अत्राभिधीयते–मुखादेर्देशो न गृह्यते दर्पणादीनां च ग्रहणमिति मुखादयस्तद्देशा इव भान्ति, अभिमुखेन मुखादिना नयनरश्मिः संयुक्त इति तथैव तदवगमात् सव्यदक्षिणविपर्यासोपि युक्तः, अल्पत्वमहत्त्वे च दर्पणादे रश्मिप्रतिघातहेतोरल्पतया महत्तया च दोषभूतया मुखादिपरिमाणाग्रहाद् दर्पणादिपरिमाणग्रहाच्च मुखादिष्विव भासेते ।” इत्यादि ।

ननु सूर्यस्य तु भ्रान्त्या सर्वेषां स्वसंनिधावेव प्रतीतिर्भवति संनिधयश्च सर्वेषां भिन्ना एवेति युक्तस्तत्र नानादेशोपलम्भो नैवं शब्दे सम्भवतीति कथमेकस्य शब्दस्यानेकदेशेषूपलम्भः स्यादित्याशङ्कते–नन्विति । उत्तरमाह–

शब्दो भिन्नदेशैर्ध्वनिभिः स्वे स्वे देशेऽभिव्यज्यमानो भिन्नदेशोऽवभासते, ध्वनयो हि श्रोत्रदेशमागत्यापि शब्दं व्यञ्जन्तः स्वोत्पत्तिदेशमिव शब्दं भासयन्तीति दर्शनबलादभ्युपगम्यते।

ननु प्राप्यकारि श्रोत्रं न च ध्वन्युत्पत्तिदेशः श्रोत्रेण प्राप्यत इति कथं तस्य श्रोत्रेण ग्रहणम्? तदग्रहे च कथं तद्विशिष्टशब्दग्रहः?। उच्यते—नायं श्रोत्रतस्तद्देशविशिष्टशब्दप्रत्ययः किं तु श्रोत्रं हि स्वदेशस्थितं

---

सर्वेति। एकस्यापि शब्दस्य विभुत्वादनेकदेशोपलम्भो न विरुद्ध इत्यर्थः। उपपादयति—सर्वगतेति। एकस्य व्यापकस्य देशभेदाभावेपि ध्वनीनामव्याप्यवृत्तीनां देशभेदादेव शब्दस्य देशभेदोवभासते। ननु कर्णशष्कुल्यवच्छिन्नाया दिश एव श्रोत्रत्वाद् ध्वनीनां च दूरदेशवर्तित्वात् तदभिव्यक्तशब्दस्यापि दूरदेशवर्तित्वेन श्रोत्रसंयोगाभावात्कथं शब्दश्रवणं स्यादित्याशङ्क्याह—ध्वनयो हीति, दूरदेशोत्पन्ना अपि ध्वनयो वीचितरङ्गन्यायेन श्रोत्रदेशमागत्य श्रोत्रदेशस्थं शब्दमभिव्यञ्जन्तीति तेन शब्देन श्रोत्रसंयोगस्य सत्त्वाच्च न शब्दश्रवणे काप्यनुपपत्तिरित्यर्थः, नन्वेवं श्रोत्रदेशस्थस्यैव शब्दस्य प्रत्यक्षं जातमिति श्रोत्रदेशस्थत्वेनैव शब्दप्रत्यक्षं स्यात् न दूरवर्तित्वेनापीत्याशङ्क्योक्तम्—स्वोत्पत्तिदेशमिवेति। यद्यपि श्रोत्रदेशमागता ध्वनयः श्रोत्रदेशस्थमेव शब्दमऽभिव्यञ्जन्ति तथापि न श्रोत्रदेशस्थत्वेन शब्दं भासयन्ति किं तु स्वोत्पत्तिदेशस्थत्वेन भासयन्तीति प्रतीतिबलात्—देशान्तरवर्तित्वेन शब्दप्रत्यक्षबलादभ्युपगम्यते।

ननु श्रोत्रं प्राप्यकारि=सम्बद्धग्राहि ध्वन्युत्पत्तिदेशस्य च श्रोत्रेण सम्बन्ध एव नास्तीति कथं श्रोत्रेण ध्वन्युत्पत्तिदेशग्रहणं स्यात्? तदग्रहे= ध्वन्युत्पत्तिदेशाग्रहे च ध्वन्युत्पत्तिदेशविशिष्टस्य शब्दस्य ग्रहणं नोपपद्यते विशिष्टबुद्धौ विशेषणग्रहस्यापि कारणत्वादित्याशङ्कते—नन्विति। उत्तरमारभते—उच्यत इत्यादिना। यदि ध्वन्युत्पत्तिदेशविशिष्टशब्दप्रत्ययः श्रोत्रेण स्यात्तदा श्रोत्रेण ध्वन्युत्पत्तिदेशग्रहणासम्भवात् स्यादयमुपालम्भो न चैवमस्तीत्यर्थः। स्वाभिप्रायमाह—किं त्वित्यादिना, किं तु स्वरूपमात्रेणैव शब्दं

शब्दं बोधयदपि न देशविशिष्टं बोधयति किं तु स्वरूपमात्रेण, यतस्तु दिश आगता ध्वनयस्तया विशिष्टं शब्दं बोधयति, सा हि दिक् श्रोत्रप्राप्ता शक्यते श्रोत्रेण ग्रहीतुम्, यद्यपि न स्वातन्त्र्येण दिशः श्रोत्रग्राह्यत्वं तथापि शब्दे गृह्यमाणे तद्विशेषणतया दिगपि श्रोत्रेण गृह्यते इति दृष्टत्वादङ्गी क्रियते कालवत् ।' यथा हि कालो न स्वातन्त्र्येणेन्द्रियैर्गृह्यते. अथ च विषयेषु स्वेषु गृह्यमाणेषु तद्विशेषणतया सर्वैरपीन्द्रियैर्गृह्यते तद्वत् । ततश्चास्यां दिशि शब्द इति विशिष्टग्रहणं तावत् सिद्धम् ।

ध्वनयश्च क्रमेण मन्दीभवन्तः प्रत्यासन्नाद् दूराद्

---

बोधयति श्रोत्रं तथापि यस्या दिशो ध्वनयः समागच्छन्ति तद्दिग्विशिष्टं तु शब्दं श्रोत्रं बोधयत्येव तस्याश्चदिशः श्रोत्रसम्बद्धत्वाच्छ्रोत्रेण ग्रहणं सम्भवति तत्रापि केवलाया विशेष्यत्वेन वा दिशो न श्रोत्रेण ग्रहणं सम्भवति शब्दविशेषणीभूतायास्तु श्रोत्रेण ग्रहणं भवत्येवेति तद्दिग्विशिष्टशब्दग्रहणं नानुपपन्नमिति भावः । अत्रोदाहरणमाह—कालवदिति । कालस्येन्द्रियग्राह्यत्वमुपपादयति—यथा हीति । तद्विशेषणतयेति— तदानीं घट इत्यादौ घटविशेषणतया कालस्येन्द्रियग्राह्यत्वं स्पष्टमेव अत्र च कालविशिष्ट एव घटो विषयो यदि चात्र कालस्य ग्रहणं न स्यात्तदा तद्विशिष्टस्य घटस्यापि ग्रहणं न स्यादेव, तत्रापि यत्र चाक्षुषविषयविशेषणं कालस्तत्र कालस्य चक्षुषा ग्रहणमित्याद्यनुसन्धेयम् । प्रकृतमाह—ततश्चेति । ततः=शब्दविशेषणीभूताया दिशः श्रोत्रेण ग्रहणसम्भवात् ' अस्यां दिशि शब्दः ' इत्येवं दिग्विशिष्टशब्दग्रहणं सिद्धम्, अन्यथा—दिशः श्रोत्रेणाग्रहणे 'अस्यां दिशि शब्दः' इति प्रतीतिर्न स्यात् किं तु 'शब्दः' इत्येव प्रतीतिः स्यात् अन्येन चेन्द्रियेण शब्दस्य ग्रहणाभावात् श्रोत्रेणैव शब्दविशेषणीभूता दिगपि गृह्यत इति सिद्धम् ।

ननु श्रोत्रस्य सम्बद्धग्राहित्वाद् ध्वन्युत्पत्तिदेशस्य ग्रहणमेव न सम्भवतीति 'तस्मिन् देशे शब्दः ' इत्यादिप्रतीतिः कथं स्यादित्याशङ्क्यैतत्प्रतीतिमुपपादयति—ध्वनयश्चेति । प्रत्यासन्नादेशादागतास्तीव्रं दूरादागता मन्दं

दूरतराच्च देशादागतास्तीव्रं मन्दं मन्दतरं च शब्दं बोधयन्ति। बोधविशेषाच्च ध्वन्युत्पत्तिदेशः प्रत्यासन्नदूरादिरूपेणाऽनुमानाद् हृदयदेशमागच्छति तत्र यः शब्दस्य परमार्थदेशः श्रोत्रदेशस्तस्याऽग्रहणाद् दिग्विशिष्टस्य शब्दस्वरूपस्य ध्वन्युत्पत्तिदेशस्य च ग्रहणात् तयोः संसर्गभ्रमादेवंविधः प्रत्ययो भवति– प्राच्यां दिश्येतावदन्तराले शब्द इति, तस्मादभिव्यञ्जकदेशभेदादुपपन्नं नित्यस्यापि नानादेशोपलम्भनमित्यदोषः।

नन्वयं दोषो यदऽसतिबाधके भ्रान्तित्वम्, प्रत्यभि

---

दूरतरादागता मन्दतरं शब्दं बोधयन्तीत्यन्वयः। बोधविशेषादिति–तीव्रशब्दबोधाद् ध्वन्युत्पत्तिदेशः प्रत्यासन्न इति मन्दशब्दबोधाद् ध्वन्युत्पत्तिदेशो दूर इत्यनुमानं भवति तत्रानुमानादेव ध्वन्युत्पत्तिदेशो हृदयमागच्छति=मनसा गृह्यत इत्यर्थः, तत्र श्रोत्रदेशस्थस्यैव शब्दस्य ग्रहणं भवतीति श्रोत्रदेश एव शब्दस्य गृह्यमाणस्य परमार्थतो देशस्तथापि तस्याग्रहणात् ध्वन्युत्पत्तिदेशस्योक्तरीत्या ग्रहणाच्छब्दस्य च ग्रहणात् तयोः=शब्दध्वन्युत्पत्तिदेशयोः परस्परं सम्बन्धाभावेपि सम्बन्धभ्रमात् प्राच्यां दिशि तस्मिन् देशे शब्द इत्यादिः प्रतीतिर्भवतीत्यर्थः। यथा पुरोवर्तिदेशस्य प्रत्यक्षे रजतस्य च स्मरणे जाते पुरोवर्तिदेशरजतयोश्च सम्बन्धाभावेपि भ्रान्त्या रजतमिदमिति पुरोवर्तिदेशरजतयोः सम्बन्धोऽवभासते तथात्रापि ध्वन्युत्पत्तिदेशशब्दयोः सम्बन्धोऽवभासते। "ननु सवितुः" इत्यादिनाक्षेपे प्राप्ते "सर्वगतत्वात्" इत्यादिना समाहितमर्थमुपसंहरति–तस्मादिति। अभिव्यञ्जकानां ध्वनीनामुत्पत्तिदेशस्य भेदादेकस्यापि गकारादेः नानादेशोपलम्भः सम्भवति। नित्यस्येत्यस्यैकत्वे लक्षणा। किं वा 'एकस्य' इति शेषः। नित्यस्य विभोरेकस्यापि नानादेशोपलम्भेन विरोधाभावात्।

यदुक्तम्–"इत्यदोषः" इति तत्राक्षिपति–नन्विति। सति बाधके भ्रान्तित्वं भवति यथा नेदंरजतमिति बाधकेन शुक्तिरजतज्ञानस्य भ्रान्तित्वं 'प्राच्यां दिश्येतावदन्तराले शब्दः' इति प्रतीतेस्त्वया भ्रान्तित्वमुक्तं न च तत्र बाधकज्ञानं जायते इति बाधकज्ञानाभावेपि यदुक्तप्रतीतेर्भ्रान्तित्वं स एव दोषः,

ज्ञायां वा कः पक्षपातो येन सा भ्रान्तिर्न स्यात्? ।
अयमस्ति पक्षपातः—न ह्यऽसंभवति तद्भ्रान्तित्वे भ्रा
न्तित्वमङ्गीकर्तुं युक्तम्, नानादेशोपलब्धेस्त्वऽपरिहार्यं
भ्रान्तित्वम्—अनित्यत्वपक्षेऽपि श्रोत्रगत एव परमार्थ-
तो गृह्यते श्रोत्रस्य प्राप्यकारित्वात्, न च वक्तृमुख-
गतो येन तद्देशग्रहणस्याऽभ्रान्तित्वं स्यात् ।

---

किं च शब्दस्यैकत्वेन नित्यत्वेन चोक्तप्रतीतेर्भ्रान्तित्वं वक्तव्यमन्यथा ना-नादेशेषु नानाशब्दानामुत्पत्तिविनाशशालिनामुपलब्धेः 'प्राच्यां दिश्येतावदन्तराले शब्दः' इति प्रतीतेर्भ्रान्तित्वं न स्यात्, नित्यत्वे चोत्पत्तिविनाशाभावाद् ध्वनिभिः श्रोत्रदेशस्थ एव शब्दोभिव्यज्यत इति वक्तव्यं ध्वनि-देशस्थशब्दाभिव्यक्तिपक्षे च ध्वनिदेशेन सह श्रोत्रसम्बन्धाभावाच्छ्रोत्रस्य च सम्बद्धग्राहित्वाच्छब्दोपलब्धिरेव न स्यादिति श्रोत्रदेशस्थशब्दाभिव्यक्ति-रेव वाच्या श्रोत्रदेशस्थशब्दस्य च ध्वन्युत्पत्तिदेशेन सम्बन्धाभावेपि 'तत्र शब्दः' इति सम्बन्धप्रतीतिर्भ्रान्तिरेव स्यात्, न चैवं युक्तं यतः शब्दस्य नि-त्यत्वमेकत्वं च 'स एवायं गकारः' इति प्रत्यभिज्ञयैव प्रतिपादनीयं तत्र सा-दृश्यादपि प्रत्यभिज्ञोपपत्तेः प्रत्यभिज्ञाया एव भ्रान्तित्वं किं न स्याद्? येन 'तत्र शब्दः' इत्यादिप्रतीतेर्भ्रान्तित्वं न स्यादिति पूर्वपक्षाभिप्रायः । सा= 'स एवायं गकारः' इति प्रत्यभिज्ञा । उत्तरमाह—अयमस्तीति । तद्भ्रान्ति-त्वे=प्रत्यभिज्ञाया भ्रान्तित्वे । प्रत्यभिज्ञाया भ्रान्तित्वस्वीकारेपि तव मतेन नानादेशोपलब्धेः प्रामाण्यं न सम्भवति, एतदेवोपपादयति—अनित्यत्वेति । शब्दानित्यत्वपक्षेपि श्रोत्रस्य सम्बद्धग्राहित्वाच्छ्रोत्रगत एव शब्दो गृह्यत इ-ति वक्तव्यं श्रोत्रगतस्य च शब्दस्य यो वक्तृमुखदेशादिना सम्बन्धप्रतीतिः सा भ्रान्तिरेव स्यादिति प्रत्यभिज्ञानानादेशोपलब्ध्योरुभयोर्भ्रान्तित्वाद्वरं ना-नादेशोपलब्धेरेव भ्रान्तित्वमित्यर्थः तद्देशग्रहणस्य=वक्तृमुखदेशग्रहणस्य । "असंभवति तद्भ्रान्तित्वे" इत्यत्र "संभवत्यऽभ्रान्तित्वे" इत्यपि पाठः ।

ननु यदीन्द्रियाणां प्राप्यकारित्वम्=सम्बद्धग्राहकत्वं स्यात्तदा श्रोत्र-स्यापि सम्बद्धग्राहकत्वं स्यात् तथा च श्रोत्रदेशस्थशब्दस्य ग्राह्यस्य ध्वनिदेशेन सम्बन्धाभावेपि या 'तस्यां दिशि शब्दः' इति सम्बन्धप्रतीतिस्तस्या भ्रान्तित्वं

**यदपि सौगतोप्यऽप्राप्यकारित्वमेवाङ्गीकुर्वन्नऽभ्रान्तित्वं समर्थयते, तदयुक्तम्- अप्राप्यकारित्वे हि संनिकृष्टविप्रकृष्टस्थितौ युगपच्छब्दमुपलभेयाताम्, तयोस्तु क्रमेणोपलब्धिर्न कथंचिदप्यऽप्राप्यकारित्वे**

---

स्यादपि नैवमस्ति, इन्द्रियाणामप्राप्यकारित्वात्=असम्बद्धग्राहकत्वात्। यदि बाह्यं स्यात्तदा तेनेन्द्रियसम्बन्धोपि संभाव्येत न च बाह्यमेवास्तीति केनेन्द्रियसम्बन्धः स्यात्?। किं वा दूरस्थ एव विषय इन्द्रियेण गृह्यते न हि विषयप्रत्यक्षकाले विषयेन्द्रियसंयोगोऽनुभूयते? येन प्राप्यकारित्वं कल्प्येत, प्रत्युतेन्द्रियसंयोगे सत्येव प्रत्यक्षं न सम्भवति नेत्रसंसक्तस्य कज्जलस्यानुपलम्भात्। न चेन्द्रियं विषयदेशे गच्छतीति कल्पयितुं शक्यमनुपलम्भात्, गृह्यमाणविषयस्य त्विन्द्रियदेशाद् दूरस्थितिः प्रत्यक्षैव तस्मादसम्बद्धग्राहकमेवेन्द्रियम्। यदि परमऽसम्बद्धग्राहकत्वस्य त्वचि रसनायां च व्यभिचारस्तथापि नेत्रं श्रोत्रं चाऽसम्बद्धस्यैव ग्राहकमिति वक्तव्यं तथा च ध्वनिदेशस्थस्यैव शब्दस्य ग्रहणाद् ध्वनिदेशस्थशब्दस्य च ध्वनिदेशेन सम्बन्धस्य यथार्थत्वादेव न शब्दध्वनिदेशयोः सम्बन्धग्रहणस्य भ्रान्तित्वं सम्भवतीत्याशङ्कते–यदपीति। वार्तिकेप्युक्तम्—

"येषां त्वप्राप्त एवायं शब्दः श्रोत्रेण गृह्यते।
तेषामप्राप्तितुल्यत्वं दूरव्यवहितादिषु॥" इति।

वार्तिकटीकाकारेणाप्युक्तम्–"अप्राप्यकारीन्द्रियवादिनः शाक्यान् प्रत्याह–येषामिति।" इति। परिहरति–तदयुक्तमित्यादिना। प्राप्यकारित्वस्वीकारे तु शब्दो वा शब्दाभिव्यञ्जको ध्वनिर्वा यस्य श्रोत्रेण प्रथमं सम्बध्यते तस्य प्रथमं शब्दप्रत्यक्षं भवति यस्य च श्रोत्रेण पश्चात्सम्बध्यते तस्य पश्चाच्छब्दप्रत्यक्षं भवतीति व्यवस्थोपपद्यते, अप्राप्यकारित्वे तु नैषा व्यवस्था सम्भवतीति दूरसमीपस्थपुरुषयोः श्रोत्रस्य शब्देन सहाऽसम्बन्धस्य समानत्वादेव शब्दप्रत्यक्षविलम्बेऽन्यत्कारणाभावाच्च दूरसमीपस्थयोर्युगपदेव तच्छब्दश्रवणं स्यादिति दोषः, न चैवं सम्भवति किं तु क्रमेणैव शब्दप्रत्यक्षं भवति यथा समीपस्थस्य प्रथमं दूरस्थस्य तदनन्तरमिति, सैषा क्रमेणोपलब्धिरऽप्राप्यकारित्वे कथमपि समर्थयितुं न शक्यते इत्याह–तयोस्त्विति। तयोः=संनिकृष्टविप्रकृ-

**समर्थयितुं शक्या ।**

**किं च क्षणिको वा शब्दः स्यात् स्थायी वा ? । यदि क्षणिकः ? ततः प्रत्यासन्नैर्गृहीतमात्रो नष्टः कथं विप्रकृष्टैः पश्चाद् ग्रहीतुं क्षमः । स्थायित्वं तु सौगतानामनभिमतमेव, । स्थायित्वे च प्रत्यासन्नानां शब्दश्रवणं चिरकालमनुवर्तेत । तस्मादप्राप्यकारित्वासंभवादऽवर्जनीयं नानादेशोपलब्धेर्भ्रान्तित्वम् । अस्म-**

---

ष्टस्थितयोः=दूरसमीपस्थयोरित्यर्थः । तस्मात् प्राप्यकारित्वं श्रोत्रस्य स्वीकार्यं स्वीकृते च प्राप्यकारित्वे श्रोत्रदेशस्थस्यैव शब्दस्य प्रत्यक्षं वक्तव्यं श्रोत्रस्य ध्वनिदेशे गमनासम्भवात् श्रोत्रदेशस्थशब्दस्य च ध्वनिदेशेन-सम्बन्धाभावेपि या श्रोत्रदेशस्थशब्दध्वनिदेशयोः सम्बन्धप्रतीतिः सा भ्रान्तिरेवेति सिद्धमित्यर्थः । वार्तिकेप्युक्तम्-

" तत्र दूरसमीपस्थग्रहणाग्रहणे समे ।
स्यातां न च क्रमो नापि तीव्रमन्दादिसम्भवः ॥" इति ।

तत्र=अप्राप्यकारित्वपक्षे दूरसमीपस्थपुरुषयोः शब्दस्य ग्रहणाग्रहणे समे स्यातां न तु समीपस्थेन ग्रहणं दूरस्थेन चाऽग्रहणमिति । तथा समीपस्थेन प्रथमं श्रुतं दूरस्थेन पश्चाच्छ्रुतमिति क्रमोपि न स्यादऽप्राप्तेस्तुल्यत्वादित्याह-न च क्रमेति । समीपस्थेन प्रथमं प्राप्त्या तीव्रं श्रूयते दूरस्थेन पश्चात् प्राप्त्या मन्दं श्रूयते इति तीव्रमन्दादिव्यवस्थापि न स्यादुभयश्रोत्राऽप्राप्तेस्तुल्यत्वादित्याह-नापीति, इति वार्तिकार्थः ।

दोषान्तरमाह-किं चेति । ग्रहीतुं क्षमः=गृह्णीतेत्यर्थः । स्थायित्वस्वीकारेपि दोषमाह-स्थायित्वे चेति । उपसंहरति-तस्मादिति । यदि श्रोत्रस्याऽप्राप्यकारित्वं स्यात्तदा नानादेशोपलब्धेः=देशान्तरसंबन्धप्रतीतेरुक्तयुक्त्या भ्रान्तित्वं न स्यादपि न चैवमस्तीति भ्रान्तित्वमेव । किं चान्तरज्ञानस्यैव सौगतमते बाह्यतया प्रतिभासात्तथान्येषामपि सौगतानां मते बाह्यज्ञानमात्रस्य भ्रान्तित्वाद् यन्नानादेशोपलब्धेरत्राऽभ्रान्तित्वोपपादनं तत् सर्वथा विस्मृतस्वसिद्धान्तस्यैवेति विज्ञेयम् । नन्वेते दोषा भवन्मतेपि संभवन्तीत्याशङ्क्य स्वमतोपपत्तिमाह-अस्मदिति । ध्वनीनामासन्नदेशे दूरदेशे च क्रमेण गमनाद् ध्व-

त्पक्षे तु ध्वनीनां क्रमेणाऽऽसन्नदूरगमनाद् गत्वरत्वेन चैकस्मिन् श्रोत्रे चिरमनवस्थानादुपपन्ना क्रमेणोपलब्धि-श्चिरकालाननुवृत्तिश्च। तस्मान्नैकान्ततस्तावदनित्यत्वम्।

अर्थप्रतिपत्त्यनुपपत्त्या तु नित्यत्वमेव युक्तम्, न हि प्रत्युच्चारणमन्यस्याऽन्यस्य क्रियमाणस्यार्थप्रत्यायकत्वं संभवति, संबन्धग्रहणासंभवादगृहीतसंबन्धस्य चाऽप्रत्यायकत्वात्। न चान्यस्मिन् गृहीतसंबन्धेऽन्यस्य प्रत्यायकत्वं संभवति—न हि गोशब्दे गृहीतसंबन्धेऽश्वशब्दः प्रत्याययति।

---

न्यभिव्यङ्ग्यस्य शब्दस्य क्रमेणोपलब्धिर्युज्यते—समीपस्थेन प्रथमं श्रूयते दूरस्थेन तदनन्तरमिति। दूरसमीपत्वे च ध्वन्युत्पत्तिदेशापेक्षया ग्राह्ये। तथा ध्वनीनां गत्वरत्वेन=विनाशित्वेन तदभिव्यङ्ग्यशब्दश्रवणस्य चिरकालमनुवृत्तेरप्यापत्तिर्नास्ति—अभिव्यञ्जकाभावे तदभिव्यङ्ग्यप्रत्यक्षविरामस्यावश्यम्भावात्। तस्मान्नैकान्ततः=नियमेन शब्दस्यानित्यत्वमित्यर्थः। किं तु वक्ष्यमाणरीत्या नित्यत्वमेव।

प्रकारान्तरेण शब्दस्य नित्यत्वमुपपादयति—अर्थेति। यदि शब्दोऽनित्य एव तदा प्रत्युच्चारणं भिन्न एवेति प्राप्तं न च तेषामुच्चार्यमाणानां संप्रत्येवोत्पन्नानामर्थेन संबन्धग्रहो जातो न च संबन्धाग्रहे प्रत्यायकत्वं संभवति. अस्ति च प्रत्यायकत्वं तस्मान्नित्यः शब्दः, नित्यत्वे चैकदा वृद्धव्यवहारेषु संबन्धो गृहीत इति गृहीतसंबन्धत्वाद् युक्तं प्रत्यायकत्वमित्यर्थः। नित्यत्वाभावे त्वर्थप्रतिपत्तेरनुपपत्तिरेव। नन्वनित्यत्वेपि तेषु कस्याश्चिच्छब्दव्यक्तेरर्थेन सह संबन्धग्रहः संभवतीति तेनैवार्थप्रत्यायकत्वं युक्तमित्याशङ्क्याह— न चेति। अस्तु गृहीतसंबन्धस्य कस्य चिद् घटादिशब्दस्य प्रत्यायकत्वं तदन्यस्य तु घटादिशब्दस्य नैतावता प्रत्यायकत्वं संभवत्यऽन्यथा सर्वेषामेव गवादिशब्दानामपि तद्भिन्नानामगृहीतसंबन्धानामर्थप्रत्यायकत्वं स्यादित्यर्थः। विपक्षे बाधकमाह— न हीति।

ननु गोशब्दस्याऽश्वशब्दो न सदृश इति गोशब्दे गृहीतसंबन्धेपि नाऽश्वशब्दः प्रत्याययति गृहीतसम्बन्धस्य गोशब्दस्याऽन्ये गोशब्दास्तु स-

सत्यम्-असदृशो हि न प्रत्याययति यस्त्वऽन्योपि गृहीतसबन्धेनार्थवता शब्देन सदृशः शब्दः स प्रत्याययतीति चेत् ?, न. तदसंभवात्-नहि कश्चिदपि मुख्योर्थवान् संभवति सर्वेषां तुल्यत्वेन संबन्धाऽग्रहणात्, न हि द्विस्त्रिर्वाऽनुपलब्धस्य संबन्धग्रहणं संभवति. अन्वयव्यतिरेकाऽभावात् ।

अथ व्युत्पत्तिसमये सदृशेषु शब्देषु द्वित्रेषूपलब्धेषु

---

र्वे सदृशा एवेति सम्भवति तेषां संप्रत्युत्पन्नानामप्यर्थप्रत्यायकत्वमित्याशङ्कते-सत्यमिति । परिहरति-नेति । तदसम्भवादिति-यदि कोपि गोशब्दो मुख्योर्थवान्=गृहीतसम्बन्धः सम्भवेत्तदा तत्सादृश्येनान्येषामपि गोशब्दानामर्थप्रत्यायकत्वं स्यान्नचैवं सम्भवतीत्यर्थः । हेतुमाह-सर्वेषामिति । सर्वेषां गोशब्दानाम् । सम्बन्धग्रहासम्भवमाह- न हीति । अन्वयव्यतिरेकाभ्यामेव शक्तिग्रहो भवति अन्वयव्यतिरेकग्रहणं च द्विवारं वा त्रिवारं वा शब्दोपलब्धि विना न सम्भवति न चानित्यस्य शब्दस्य द्विवारमुपलब्धिरुपपद्यते तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वात् प्रत्युच्चारणं शब्दभेदादेकस्यानेकवारोच्चारणासम्भवादुपलब्धेश्चोच्चारणाधीनत्वादिति न कस्यापि गोशब्दस्यार्थेन सम्बन्धग्रहः सम्भवति येन तत्सादृश्यादन्येषां गोशब्दानामर्थप्रत्यायकत्वं स्यादित्यर्थः । अन्यत्राप्युक्तम्-" यद्युच्चरितमात्रविनाशी शब्दो भवेत्तदा तस्य वृद्धव्यवहारेण स्वाभाविकी स्वार्थाभिधानशक्तिरवसातुमशक्या, भूयो भूयः प्रयोगदर्शने हि तत्तदऽस्वार्थपरिहारेण निष्कृष्य स्वार्थाभिधानसामर्थ्यमवधार्यते, न चोच्चरितमात्रापवर्गिणः शब्दस्य पुनः पुनः प्रयोगदर्शनमुपपद्यते, स्वार्थाभिधानसामर्थ्यानवधारणे च प्रथमश्रुत इव शब्दो नार्थमवधारयितुमलम्, अर्थं चानवबोधयतः प्रामाण्यमयुक्तमिति शब्दस्य प्रामाण्यमिच्छता युक्तमभिधानस्य ( शब्दस्य ) नित्यत्वस्थापनमिति सप्रयोजनम् ।

अपौरुषेयसम्बन्धे शब्दः प्रामाण्यमृच्छति ।
स च नित्यत्वसिद्धौ स्यादिति तत् प्रतिपाद्यते ॥" इत्यादि ।

ननु शक्तिग्रहकाले प्रथमं द्वित्रा सदृशा गोशब्दाः श्रुतास्तेषामर्थप्रतीत्या सहान्वयव्यतिरेकग्रहे जाते तत्सदृशस्य चतुर्थस्य श्रूयमाणस्य गोशब्दस्यार्थेन

पश्चाच्छ्रूयमाणः संबन्धग्रहणं लब्ध्वाऽर्थवान् भवति तदुत्तरकालास्तत्सादृश्यात् प्रत्याययन्तीत्युच्यते ? । तदयुक्तम्—य एवोपलब्धशब्दान्तरेण पश्चाच्छ्रूयमाणोऽर्थवान् निरूप्यते स एवाश्रुतशब्दान्तराणां पुरुषाणां प्रथमश्रुतोऽनर्थक इति विरोधापत्तेः, तदुक्तम्—

"अप्रतीतान्यशब्दानां तत्कालेऽसावऽनर्थकः ।
स एवान्यश्रुतीनां स्यादर्थवानितिविस्मयः ॥" इति ।

अथाऽर्थवानेवायम्,अप्रतीतान्यशब्दास्त्वन्वयव्यतिरेकवैकल्यादर्थवत्त्वं न जानन्तीत्युच्यते ? । तथा सति तदुत्तरकालानामपि शब्दानामेवमऽर्थवत्त्वसंभवात् किमिति सादृश्येन प्रत्यायकत्वम् । तदुक्तम्— "अथाऽस्य विद्यमानोपि" इत्यादिना ।

---

सम्बन्धग्रहो भवतीति सोऽर्थवान् भवतीति तस्य युक्तमेवार्थप्रत्यायकत्वं तदुत्तरकालानां च गोशब्दानां तत्सादृश्यादेवाऽर्थप्रत्यायकत्वमित्याशङ्कते—अथेति । परिहरति—तदयुक्तमिति । येन पुरुषेण प्रथमं द्वित्रा गोशब्दाः श्रुतास्तेन पुरुषेण य एव चतुर्थः श्रूयमाणो गोशब्दोऽर्थवानित्युच्यते स एवाऽश्रुतपूर्वगोशब्दान्तराणां जनानामनर्थक एव स्यात् प्रथमं श्रूयमाणत्वादित्येकस्यैवार्थवत्त्वमनर्थकत्वं च विरुद्धमित्यर्थः । अत्र श्लोकवार्तिकं प्रमाणयति—अप्रतीतेति । तथा च तत्सादृश्यादन्येभ्यो गोशब्देभ्यस्तेषां पुरुषाणामर्थप्रत्ययो न स्यादिति भावः । न च यथा देवदत्तस्य पितृनिरूपितं पुत्रत्वं पुत्रनिरूपितं च पितृत्वं भवति न चापि विरोधो निरूपकभेदेनाविरोधात्तथात्रापि निरूपकभेदादर्थवत्त्वमनर्थकत्वं च न विरुद्धमिति वाच्यम्, निरूपकभेदात्संबन्धाविरोधेप्यर्थवत्त्वानर्थकत्वयोर्विरोधाभावे प्रमाणाभावात् ।

ननु योऽयमर्थवान् गोशब्द उक्तः सोऽर्थवानेव नानर्थको येन विरोधः स्यात् पुरुषान्तरैस्त्वर्थवत्त्वग्रहणकारणीभूतान्वयव्यतिरेकग्रहणस्याऽभावादर्थवत्त्वं न गृह्यते न हि सतो घटस्य ग्रहणाभावेनासत्त्वं संभवतीत्याशङ्कते—अथेति । उत्तरमाह—तथा सतीति, एवं ह्युत्तरकालानामपि गोशब्दानामर्थवत्त्वं एवम्=स्वत एव स्यान्न तत्सादृश्यादित्यर्थः । अत्र श्लोकवार्तिकं प्रमाणयति—

**अथोत्तरकालस्य शब्दस्य कांश्चिदगृहीतसम्बन्धान् प्रत्यऽप्रत्यायकत्वादानर्थक्यमेवाश्रीयते?, ततो योऽसावऽर्थवत्त्वेनाभिमतः शब्दो यत्सादृश्यादुत्तरेषां प्रत्यायकत्वं सोपि केषांचिदऽप्रत्यायक इत्यनर्थक एवेति सर्वेषामानर्थक्यं स्यात्, तदुक्तम्-"अनर्थकत्वमस्य स्यात्" इत्यादिना।**

---

अथाऽस्येति। तथा हि—

"अथास्य विद्यमानोपि कैश्चिदर्थो न गम्यते?।
तत्तुल्यमुत्तरस्येति किं सादृश्येन वाचकः॥" इति।

उत्तरस्यापि गोशब्दस्य तत्=मुख्यमेवार्थवत्त्वं युक्तं न त्वऽर्थवत्पूर्वश्रुतगोशब्दसादृश्यादित्यर्थः।

ननु द्वित्रगोशब्दश्रवणादनन्तरं यस्यैकस्य गोशब्दस्य देवदत्तेन शक्तिग्रहद्वाराऽर्थवत्त्वमवधारितं तस्य तदुत्तरकालवर्तिनश्च गोशब्दस्य गृहीतसंबन्धं देवदत्तं प्रत्यर्थवत्त्वेपि अगृहीतसंबन्धान् यज्ञदत्तप्रभृतीन् प्रत्यऽप्रत्यायकत्वादानर्थक्यमेव तथा च नोक्तविरोधापत्तिः, एकमेव पुरुषं प्रत्येकस्यैव शब्दस्यार्थवत्त्वे चाऽनर्थकत्वे च विरोधसंभवात् पुरुषभेदेन त्वेकस्यापि शब्दस्यार्थवत्त्वानर्थकत्वयोर्विरोधाभावादित्याशङ्कते-अथेति। उत्तरकालस्य=शक्तिग्रहादनन्तरं श्रुतस्य शब्दस्य वस्तुतोर्थवत्त्वस्वीकारे 'स्वत एवार्थप्रत्यायकत्वं स्यान्न तु तत्पूर्वश्रुतशब्दसादृश्यात्' इत्येवं दोषं प्रदर्श्य. अगृहीतसम्बन्धान् प्रत्यानर्थक्यस्वीकारे संप्रति विप्रतिपत्तिं प्रदर्शयन् परिहरति-तत इति, यद्युत्तरकालस्य शब्दस्याऽगृहीतसंबन्धान् प्रत्यऽप्रत्यायकत्वादानर्थक्यं तदा तव मुख्यार्थवत्त्वेनाभिमतस्यापि शब्दस्य कांश्चित् प्रत्यऽप्रत्यायकत्वादानर्थक्यमेव स्यादिति कस्याप्यर्थवत्त्वं न स्यादित्यर्थः। अत्र श्लोकवार्तिकं प्रमाणयति-अनर्थकत्वमिति। तथा हि—

"अनर्थकत्वमिति स्यादथाऽनन्यश्रुतीन् प्रति।
पूर्वस्मिन्नपि तत्सत्त्वात् सर्वानर्थकता भवेत्॥" इति।

अनर्थकत्वमिति-अनन्यश्रुतीन् प्रति=अश्रुतान्यगोशब्दान् प्रति यद्यस्य गोशब्दस्यानर्थकत्वमेवाश्रीयते तदा पूर्वस्मिन्नपि=यत्सादृश्यादुत्तरेषां प्रत्यायकत्वं

किं च व्युत्पत्तिकालवर्ती शब्दोऽर्थवान्, उत्तरे तु व्यवहारकालवर्तिनस्तत्सादृश्यात् प्रत्याययन्तीति ब्रुवाणस्य विरुद्धमापद्यते—य एव हि केषां चिद् व्युत्पत्तिकालवर्ती स एवान्येषां व्यवहारानुपातीत्येकस्यैवार्थवत्त्वं मुख्यं तत्सादृश्याद् गौणमिति विरोधः, तदुक्तम्—"अ-

---

तस्मिन्नपि कांश्चिदगृहीतसंबन्धान् प्रति तत्सत्त्वात्=अप्रत्यायकत्वस्य सत्त्वादानर्थक्यं स्यादिति सर्वेषामेव शब्दानामानर्थक्यं स्यादित्यन्वयः। येन पुरुषेण प्रथमं द्विस्त्रा गोशब्दाः श्रुतास्तस्यैवान्वयव्यतिरेकवशाच्चतुर्थगोशब्दस्यार्थेन संबन्धग्रहो भवतीति तं पुरुषं प्रति स चतुर्थो गोशब्दः सार्थकः प्रत्यायकत्वात्, तदुत्तरश्च पञ्चमो गोशब्दस्तु चतुर्थगोशब्दसादृश्यादेव प्रत्यायकत्वात्सार्थकः, तथा च येन पुरुषेण प्रथमं द्विस्त्रा गोशब्दा न श्रुताः किं तु पञ्चम एव गोशब्दः प्रथमं श्रुतस्तस्य त्वऽन्वयव्यतिरेकग्रहणाभावादर्थेन संबन्धग्रहो न संभवतीति तमश्रुतगोशब्दान्तरं प्रति पञ्चमोपि गोशब्दोऽप्रत्यायकत्वादनर्थक एव, एवं चाश्रुतगोशब्दान्तरं प्रति चतुर्थस्यापि गोशब्दस्याप्रत्यायकत्वादानर्थक्यमेवेति सर्वेषामेव गोशब्दानामाऽऽनर्थक्यमेव स्यात् कांश्चिदगृहीतसंबन्धान् प्रत्यऽप्रत्यायकत्वादिति वार्तिकाभिप्रायः।

दोषान्तरमाह— किं चेति, व्युत्पत्तिकालवर्तिन एकस्य गोशब्दस्य मुख्यमर्थवत्त्वमन्येषां च गोशब्दानां व्यवहारकालवर्तिनां तत्सादृश्यादऽर्थवत्त्वमिति ब्रुवाणस्याऽपरोपि विरोधः स्यादित्यर्थः। विरोधमुद्भावयति— य एवेति। एकस्यैव गोशब्दस्य यज्ञदत्तं प्रति व्युत्पत्तिकालवर्तित्वं देवदत्तं च प्रति व्यवहारकालवर्तित्वं संभवत्येव तत्र व्युत्पत्तिकालवर्तित्वेन मुख्यमर्थवत्त्वं व्यवहारकालवर्तित्वेन चार्थवत्त्वस्य सादृश्यप्रयुक्तत्वाद् गौणमर्थवत्त्वमित्येष विरोधः। अत्र श्लोकवार्तिकं प्रमाणयति—अर्थवदिति। तथा हि—

"अर्थवत्सदृशत्वेन यो वा श्रुतवतां मतः।
मुख्योऽसावऽश्रुतीनां स्यात् तदेकत्वे न युज्यते॥" इति।

श्रुतवताम्=श्रुतार्थवद्गोशब्दान्तराणां जनानां यो गोशब्दः सादृश्येनार्थवान् व्यवहारकालवर्तित्वात् स एवासौ गोशब्दोऽश्रुतीनाम्=अश्रुतार्थवद्गोशब्दान्तराणां जनानां मुख्यार्थवान् व्युत्पत्तिकालवर्तित्वात् तत्=मुख्यं गौणं

**र्थवत्सदृशत्वेन" इति, तस्मान्न सादृश्येन प्रत्यायकत्व-मित्येकत्वमेव शब्दस्याऽऽश्रयितव्यम् ।**

**अथ गत्वादिसामान्यमेकमाश्रित्य वाचकत्वं समर्थ्येत ?, तन्न, तदभावात्–व्यक्तिभेदे हि सामान्यमात्मानं लभते नान्यथा ।**

---

चार्थवत्त्वमेकस्य न युक्तमिति वार्तिकार्थः । उपसंहरति–तस्मादिति । शब्दस्यैकत्वे तु तस्य संबन्धग्रहे जाते मुख्यमेवार्थवत्त्वं न गौणमिति सम्भवति, मुख्यस्याप्यर्थवत्त्वस्य वर्तमानस्य चान्वयव्यतिरेकाभ्यां ग्रहणमिति न कोपि दोषः ।

ननु गवादिशब्दानामऽनेकत्वेनैवोक्तदोषाः प्राप्नुवन्तीति त्वया नित्यत्वमेकत्वं चोच्यते नित्यत्वे चैकत्वात्तस्यैव गोशब्दस्यार्थेन सह सम्बन्धग्रहणात्तस्य मुख्यमेव प्रत्यायकत्वमित्येष त्वदभिप्रायः, तत्र यथा शब्दस्य नित्यत्वैकत्वयोराश्रयणे न कोपि दोषस्तथा गत्वादिसामान्यमप्येकं नित्यं चेति तस्यैव वाचकत्वमस्तु तत्रापि नोक्तदोषाः प्रादुर्भविष्यन्ति. उक्तदोषाणां वाचकानेकत्वमूलकत्वात्, अत्र च पक्षे गोत्वादिसामान्यस्य वाच्यत्वं गत्वादिसामान्यस्य च वाचकत्वमिति तर्कोप्यनुकूल इत्याशङ्कते–अथेति । मीमांसकमते वर्णानामेव शब्दत्वात् "गत्वादिसामान्यम्" इत्युक्तं मीमांसकैर्गोशब्दत्वादिसामन्यस्याऽस्वीकारात् । परिहरति–तन्नेति । तदभावात्=गत्वादिसामान्याभावात् । " एकमनेकानुवृत्तं च सामान्यम् " इति नियमात् गकारादीनां चैकत्वाद् गत्वादिकं सामान्यमेव नास्ति यस्य वाचकत्वं स्यादित्यर्थः । अन्यथा=व्यक्त्यैक्ये । अन्यत्राप्युक्तम्–" प्रत्युच्चारणं भिन्नेष्वपि वर्णेषु न गत्वादिकं कल्पयितुं शक्यते भेदाऽग्रहेणापि शुक्तिकारजतवदऽभेदप्रत्ययाभिमानोपपत्तेः, यत्र हि भेदमध्यवस्यतः एवाभेदज्ञानं तत्रान्यथानुपपत्त्या सामान्याश्रयणं घटते, न चानित्यत्ववादिनो वर्णेषु प्रत्युच्चारणं साक्षाद्भेदाध्यवसानं संमतम् ।" इति ।

ननु न गकरादिव्यक्तिभेदाभावाद् गत्वादीनामऽसामान्यत्वं गकारादिव्यक्तिभेदस्य तन्मते सत्त्वादनेकगकारादिस्वीकारात् किं तु यत्र भेदप्रतीतिरभेदप्रतीतिश्च भवति तत्रैव सामान्यं स्वीक्रियते यथा गवादौ–तत्र खण्डमुण्डादिव्यक्तीनां परस्परं भेदाद् गोरूपेण चाऽभेदाद् गोत्वं सामान्यम्, इह=श-

कश्चित् पुनराह– सत्यपि व्यक्तिभेदे निष्प्रमाणकमेव सामान्यम्, यत्र हि भेदावगतौ सत्यामेवाऽभेदावगतिस्तत्र सामान्यम्, इह तु सन्नपि व्यक्तिभेदो नावगम्यते, अतोऽत्र विवेकाग्रहणादेव प्रत्यभिज्ञा भ्रान्तिरूपा नालं सामान्यं साधयितुमिति ।

तत्त्वऽयुक्तम्–सति हि व्यक्तिभेदे कथमन्तरेण सामान्यं प्रत्यभिज्ञा स्यात्?। विवेकाग्रहणादिति चेत्?, कोयं विवेकाग्रहो नाम?, ह्यस्तनाद्गकाराद्यतनस्य गकार-

---

ब्दे तु व्यक्तिभेदस्य सत्त्वेपि प्रतीतिर्न भवति तस्माद् विवेकाऽग्रहणात्=व्यक्तिभेदप्रतीतेरभावादेव 'स एवायं गकारः' इति प्रत्यभिज्ञा भवति तत्र वस्तुतो गकारादीनां व्यक्तिभेदे सत्यपि या 'स एवायम्' इति ज्ञानरूपा प्रत्यभिज्ञा सा भ्रमरूपैव भेदेप्यऽभेदबोधनात् तस्मान्नालं सामान्यं साधयितुमित्याशङ्कते–कश्चिदिति। अयं भावः–गवादौ गोव्यक्तीनां भेदोपि प्रमाणेन गम्यतेऽभेदोपि च गौर्गौरित्यादि प्रमाणेनैव गम्यते इति तत्र गोत्वं सामान्यं सिद्ध्यति शब्दपक्षे तु गकारव्यक्तीनां भेदप्रत्यक्षमेव नास्ति अभेदश्च स एवायं गकार इति प्रत्यभिज्ञयाऽवगन्तव्यः सा तु विवेकाग्रहादेव जायमाना भ्रान्तिरूपैवेत्यऽभेदस्यापि प्रमेयत्वं नास्तीति प्रत्यभिज्ञया यद् गत्वादिसामान्यं साध्यते तन्न शक्यं तस्माद् व्यक्तिभेदे सत्यपि सामान्यसिद्धिर्न सम्भवतीति यदुक्तम्– "व्यक्तिभेदे हि सामान्यमात्मानं लभते" इति तन्नयुक्तमिति । अभेदग्रहे सत्येव सर्वत्र सामान्यं सिध्यति अभेदग्राहकत्वं चात्र प्रत्यभिज्ञाया वक्तव्यमिति प्रत्यभिज्ञयैव गत्वादिसामान्यं साधनीयं सा च प्रत्यभिज्ञा भ्रान्तिरूपैवेति नालं सामान्यं साधयितुमिति यावत् ।

परिहरति–तत्त्वऽयुक्तमिति । उपपादयति–सतीति । यदि व्यक्तिभेदोस्त्येव तदा स एवायमिति प्रत्यभिज्ञा सामान्यं विना न सम्भवति यतः प्रत्यभिज्ञया अभेद एव विषयी क्रियते व्यक्तीनां त्वभेदो नास्त्येवेति सामान्यमेवाश्रित्य स एवायमिति प्रत्यभिज्ञोपपादनीया सामान्यस्यैकत्वादित्यर्थः । ननु सामान्यं विनापि भेदग्रहाभावादेव स एवायमिति प्रत्यभिज्ञा सम्भवतीति कृतं सामान्येनेत्याशङ्कते–विवेकेति । विवेकाग्रहं पृच्छति–कोयमिति । उत्तरमाह–

स्य यद् व्यावृत्तं रूपं तन्न गृह्यते इत्यर्थः। किं तर्हि गृह्यते ? अद्योच्चारितेऽपि गकारेऽवश्यं किं चिद्रूपं गृह्यते. व्यावृत्तं चेन्न गृह्यते व्यक्तमनुवृत्तग्रहणम्. अनुवृत्तं च सामान्यमित्युच्यते. तस्मात् सिध्यति सामान्यम्। न च सादृश्यादेव प्रत्यभिज्ञासिद्धेरलं सामान्येनेति वक्तव्यम्, अवयवसामन्ययोगात्मकत्वात् सादृश्यस्य वर्णानां चाऽनवयवत्वात्।

---

ह्यस्तनेति, व्यावृत्तम्=भिन्नं यद् रूपं तस्य तद्भिन्नमिदमित्याकारकस्य ग्रहणाभाव एव विवेकाग्रह इत्यर्थः। यदि ह्यस्तनाद् गकारादद्यतनस्य गकारस्य व्यावृत्तं रूपं न गृह्यते तर्हि किंस्वरूपं रूपं गृह्यत इति पृच्छति-किं तर्हीति। स्वचोद्यमाह-अद्येति। स्वाभिप्रायमाह-व्यावृत्तमिति। व्यावृत्तरूपग्रहणाभावे हि व्यक्तम्=स्पष्टमनुवृत्तरूपस्य ग्रहणमित्यर्थः। अनुवृत्तरूपमेव सामान्यमिति गकारादिव्यक्तिभेदस्वीकारे प्रत्यभिज्ञया गत्वादिसामान्यं सिद्धमित्याह-तस्मादिति। ननु गकारादिव्यक्तिभेदपक्षे 'स एवायं गकारः' इति प्रत्यभिज्ञोपपत्त्यर्थमेव गत्वादिसामान्यं स्वीक्रियते तस्यैकत्वान्नित्यत्वात् स एवायमिति प्रत्यभिज्ञाविषयत्वसम्भवात्, सा च प्रत्यभिज्ञा सादृश्येनाप्युपपद्यते यथा सैवेयं दीपज्वालेति कृतं गत्वादिसामान्यस्वीकारेणेत्याशङ्क्याह- न चेति। परिहारहेतुमाह-अवयवेति, अवयवसामान्ययोगरूपस्य सादृश्यस्यानवयवेषु वर्णेष्वऽसम्भवात्, तस्माद् गकारादिव्यक्तिभेदपक्षे स एवायमिति प्रत्यभिज्ञोपपादकं गत्वादिसामान्यं सिध्यत्येव।

अयं च पूर्वपक्षो न प्रभाकरमतेन तेन गकारादिव्यक्तिभेदाऽस्वीकारात्, उक्तं च—

" अभिव्यञ्जकनानात्वाच्छब्दो नानेव लक्ष्यते।
नेत्रवृत्तिविभेदेन चन्द्रस्तैमिरिकैरिव ॥" इति।

नापि तार्किकमतेन तेन " यत्र हि भेदावगतौ सत्यामेवाभेदावगतिस्तत्र सामान्यम्, अतोऽत्र विवेकाग्रहणादेव प्रत्यभिज्ञा।" इत्यादिनियमानङ्गीकारात् नित्यत्वे सत्यनेकसमवेतस्य सामान्यत्वस्वीकारात् व्यक्त्यभेदादेरेव तद्बाधकत्वस्वीकाराच्च, तस्माद् यदुक्तम्-" व्यक्तिभेदे हि सामान्यमात्मानं लभते "

ननु संबन्धिसामन्यमात्रं सादृश्यम्, अतोऽनवय-

इति तत्र तार्किकमतेन वर्णानेकत्वमाश्रित्य स्वकीयरीत्या प्रभाकरेणाशङ्कितम्—सत्यपीत्यादिना। यदि व्यक्तिभेदमात्रेण सामान्यसिद्धिः स्यात्तदा तार्किकेण गकारादिव्यक्तिभेदस्य स्वीकृतत्वात् सेत्स्यत्येव सामान्यम्, तस्मान्न व्यक्तिभेदमात्रेण सामान्यसिद्धिर्वक्तव्या किं तु भेदाभेदयोरुभयोरेव प्रतीतौ सत्यामेव सामान्यं सिध्यतीति वक्तव्यम्, तथा च गकारादिव्यक्तिभेदे स्वीकृतेपि भेदप्रतीतिस्तु न तार्किकेण स्वीकृतेति भेदप्रतीत्यभावादेव गत्वादिसामान्यनिराकरणं युक्तम्। यच्च तार्किकेण स एवायं गकार इति प्रत्यभिज्ञाया गत्वादिसामान्यसाधकत्वमुक्तं तदपि न युक्तं तस्या भ्रमरूपत्वेन गत्वादिसामान्यसाधनसामर्थ्याभावादिति पूर्वपक्षाभिप्रायः। उक्तं च प्राभाकरैः—"यत्र हि भेदमध्यवस्यतः एवाभेदज्ञानं तत्राऽन्यथानुपपत्त्या सामान्याऽऽश्रयणं घटते, न चानित्यत्ववादिनो वर्णेषु प्रत्युच्चारणं साक्षाद्भेदाध्यवसानं संमतम्।" इति। एवं मिश्रितमतेन प्राभाकरेणाशङ्किते व्यक्तिभेदस्य सामान्यसाधकत्वं समर्थितम्—सति हीत्यादिना। व्यक्तिभेदे सति सामान्यं विना प्रत्यभिज्ञा न सम्भवतीति व्यक्तिभेदेन सिध्यति सामान्यम्, गकारादिव्यक्तिभेदस्तु न संभवतीति व्यक्तिभेदाभावादेव गत्वादिसामान्यनिराकरणं युक्तं न भेदप्रतीत्यभावादिति यदुक्तम्—"व्यक्तिभेदे हि सामान्यमात्मानं लभते" इति तद् युक्तमेवेत्युत्तरपक्षाभिप्रायः। यदुक्तं प्रत्यभिज्ञा हि विवेकाग्रहणादेव जायमाना न सामान्यं साधयितुं समर्थेति तस्य परिहार उक्तः—अद्योच्चारितेपीत्यादिना। यदि च विवेकाग्रहणान्न प्रत्यभिज्ञा तदा सादृश्यादेव जायमानाऽस्तु प्रत्यभिज्ञा तथापि न सामान्यसाधनाय समर्था स्यादित्याशङ्क्य परिहृतम्— न चेति। तस्माद्गकारादिव्यक्तिभेदपक्षे भेदप्रतीतेरभावेपि प्रत्यभिज्ञोपपादनाय गत्वादिसामान्यं गले पतितमेवेति न निराकर्तुं शक्यते, अभेदपक्षे त्वस्माकमभेदेनैवोपपन्ना प्रत्यभिज्ञा न गत्वादिसामान्यमपेक्षते इति विवेकः।

ननु यथा ह्यवयवसामान्यं सादृश्यं तथा सम्बन्धिसामान्यमपि सादृश्यं भवति यथा 'गोत्ववदश्वत्वमपि नित्यम्' इत्यत्र गोत्वाश्वत्वयोरवयवसामान्यलक्षणसादृश्यासम्भवात् सम्बन्धिन उभयवृत्त्येकस्य नित्यत्वस्य सामान्यम्=समानतैव सादृश्यं तथा वर्णानामनवयवानां सम्बन्धिनस्ताल्वादिस्थानस्यैव यत्सा-

वानामपि तल्वादिस्थानसामान्यं सादृश्यं भविष्यति?। न, अश्रावणत्वात्, श्रवणजन्या हीयं प्रत्यभिज्ञा तदस्याः श्रवणग्राह्यमेवालम्बनं वक्तव्यम्, न च ताल्वादिसामान्यं श्रावणम्. अतो गत्वादिसामान्यनिबन्धनेयं प्रत्यभिज्ञा सिध्यति। एवं सति व्यक्तिभेदे सामान्यं तदभावात्तु नास्ति सामान्यमित्येव वक्तव्यम्, अतः सिद्धं प्रत्यभिज्ञया शब्दस्य नित्यत्वम्।

किं पुनरिदं प्रत्यभिज्ञाख्यं प्रमाणम्?, प्रत्यक्षमिति ब्रूमः पूर्वानुभवजनितसंस्कारसध्रीचीनेन्द्रियजन्यत्वाद् ग्रहणस्मरणरूपमिदमेकं ज्ञानम्, तत्र पूर्वानुभूतोऽशः स्मर्यते स्मर्यमाणेन तु तेन सहैकत्वविशिष्टं वर्त

---

मान्यं तदेव तेषां सादृश्यं सर्वेषामेव गकाराणां कण्ठस्थानस्य तुल्यत्वादिति सादृश्यादेव प्रत्यभिज्ञेति कृतं गकारादिव्यक्तिभेदपक्षेपि गत्वादिसामान्येनेत्याशङ्कते—नन्विति। परिहरति—नेति। श्रवणजन्यायाः=श्रोत्रेन्द्रियजन्यायाः स एवायं गकार इति प्रत्यभिज्ञाया आलम्बनं श्रोत्रेन्द्रियग्राह्यमेवापेक्षितं न च ताल्वादिस्थानसामान्यं श्रोत्रग्राह्यं तस्मान्न ताल्वादिस्थानसामान्यलक्षणसादृश्यादियं प्रत्यभिज्ञोपपद्यते, गत्वादिसामान्यस्य तु श्रोत्रग्राह्यत्वात्तन्मूलेयं प्रत्यभिज्ञोपपद्यते जातिव्यक्त्योरेकेन्द्रियग्राह्यत्वनियमादित्यर्थः। गकारादिव्यक्तिभेदस्वीकारे गत्वादिसामान्यं विना प्रत्यभिज्ञा नोपपद्यते न चास्ति व्यक्तिभेदो गकारादेरेकत्वात् एकवृत्तिधर्मस्य च सामान्यत्वाऽस्वीकारादिति न गत्वादिसामान्यं सिध्यति, गत्वादिसामान्याभावे च गकारादिव्यक्तिभेदपक्षे 'स एवायं गकारः' इति प्रत्यभिज्ञा नोपपद्यते तस्मान्नित्यः शब्द इति सिद्धम्, नित्यत्वे च तस्य पूर्वापरकालसम्बन्धात् सम्भवति स एवायमिति प्रत्यभिज्ञेत्यभिप्रायेणाह—एवं सतीति। तदभावात्=व्यक्तिभेदाभावात्।

प्रत्यभिज्ञाख्यप्रमाणस्य प्रत्यक्षादिषु कस्मिन्नन्तर्भाव इति पृच्छति—किं पुनरिति। उत्तरमाह—प्रत्यक्षमिति। हेतुमाह—पूर्वेति। प्रत्यभिज्ञास्वरूपमाह—ग्रहणेति। इदम्=प्रत्यभिज्ञाख्यम्। तत्र=स एवायमिति प्रत्यभिज्ञायाम्। एकत्वेति—स्मर्यमाणदृश्यमानरूपयोरेकत्वम्ऽस्त्यत्वेत्येकत्वविशिष्टमित्युक्तम्, स

मानं रूपं प्रत्यभिज्ञया प्रत्यक्षेण गृह्यत इति वेदितव्यम्, तस्मान्नित्यः शब्दः । प्रदीपे तु प्रभामण्डलस्याऽवयवविश्लेषमन्तरेणाऽत्यन्तानुपपत्तेर्विश्लिष्टावयवस्य चाऽवयविनोऽवश्यम्भावी विनाशो विनष्टे च पूर्वस्मिन् प्रदीपे पश्चात्तनमऽवश्यं प्रदीपान्तरमेव भवति दृढे च भेदे प्रत्यभिज्ञा सादृश्यनिमित्तेति कल्प्यते । शब्दे तु न किं चिद्भेदे प्रमाणमस्तीति विशेषः ।

ननु सर्वभावानां क्षणिकत्वात् कथं शब्दस्य नित्यता? । किं पुनः सर्वक्षणिकत्वे प्रमाणम्? प्रत्यक्षं तावत्

---

एवायमिति यावत् । वस्तुगत्या तु तदेकत्वमेव प्रत्यभिज्ञाया विशेषतो विषयः। उपसंहरति—तस्मादिति । नन्वेवं स एवायं प्रदीप इति प्रत्यभिज्ञया प्रदीपस्यापि नित्यत्वं स्यादित्याशङ्क्य प्रदीपस्य नित्यता न संभवतीत्युपपादयति—प्रदीपेति, यदि तैलावयवानां विनाशो न स्यात्तदा प्रभामण्डलमेव नोपपद्येत तैलशोषेणैव प्रभामण्डलस्य निष्पत्तेस्तत्र विश्लिष्टावयवस्य प्रदीपस्य प्रभामण्डलस्य विनाशोऽप्यवश्यमस्त्येव तत्र निरन्तरोपलभ्यमानो दीपो दीपान्तरमेवेति सिद्धान्तः तैलावयवानां भेदेन प्रभाया अपि भेदात् तत्र या प्रत्यभिज्ञा सा सादृश्यं विना नोपपद्यत इति सादृश्यमूलैव । एवं शब्दभेदे तु किमपि प्रमाणं नास्त्येव येन शब्देपि सादृश्यमूला प्रत्यभिज्ञा स्यादित्यन्वयः । वार्तिकेप्युक्तम्—

"एवं स्थितस्य शब्दस्य श्रुतिकालात् क्षणान्तरे ।
सम्भाव्यते विनाशित्वं न भूयोऽन्येन हेतुना ॥
यथा शस्त्रादिभिर्भेदाज्जरया वा पटादयः ।
नश्यन्तीत्यवगम्यन्ते नैवं शब्देस्ति कारणम् ॥" इत्यादि ।

"पर्यायेण यथा चैको भिन्नान् देशान् व्रजन्नपि ।
देवदत्तो न भिद्येत तथा शब्दो न भिद्यते ॥
ज्ञातैकत्वो यथैवासौ दृश्यमानः पुनः पुनः । (ज्ञातमेकत्वं यस्य स ज्ञातैकत्वः शब्दः ).
न भिन्नः कालभेदेन तथा शब्दो न देशतः ॥" इत्यादि च ।

क्षणिकत्ववादी बौद्धः प्रत्यवतिष्ठते—नन्विति । क्षणिकत्वे प्रमाणं पृच्छति—किमिति । बौद्धोत्तरमपेक्ष्य प्रथमं स्वयमेव क्षणिकत्वे प्रमाणाभावं दर्शयति—

**तत्कालसत्तां बोधयति न कालान्तरनिषेधं करोति. नीलप्रत्यक्षमिव न पीतिमानं निषेधति। दृश्यादर्शनेन तु तस्य निषेधः, न च संप्रति कालान्तरं दृश्यं येन दृश्यादर्शनात् तन्निषेधः स्यात्, न चान्यदपि प्रमाणं पश्यामः।**

**पश्यामः-स्वभावहेतुकं प्रमाणं सत्तामात्रानुबन्धि**

---

प्रत्यक्षमिति। कालान्तरनिषेधे एव हि क्षणिकत्वं स्यान्न च स प्रत्यक्षेण क्रियत इत्यर्थः। अत्रोदाहरणमाह-नीलेति, यथा नीलप्रत्यक्षं पीताऽविषयकत्वेपि पीतत्वनिषेधं न करोति नीलमात्रबोधकत्वात् तथा तत्कालसत्ताविषयकं प्रत्यक्षं कालान्तरसत्त्वाऽविषयकत्वेपि कालान्तरसत्तां न निषेधतीत्यर्थः। प्रत्यक्षस्य विद्यमानमात्रोपलम्भकत्वात् पदार्थस्य कालान्तरसम्बन्धविषयकं प्रत्यक्षमेव न भवति येन प्रत्यक्षेण तन्निषेधः स्यादऽभावज्ञानस्य प्रतियोगिज्ञानसापेक्षत्वादिति योग्यानुपलब्ध्यैव तस्य=कालान्तरसम्बन्धस्य कालान्तरस्य वा निषेधो वक्तव्यो न च कालान्तरं दृश्यम्=दर्शनयोग्यं येन दृश्यादर्शनेन=योग्यानुपलब्ध्यापि निषेधः स्यात् न चान्यदपि प्रमाणमस्तीत्याह-दृश्येत्यादिना। "निषेधः" इत्यत्र स्यादिति शेषः। "पश्यामः" इत्यत्र येन कालान्तरनिषेधः स्यादिति शेषः।

यदुक्तम्-"न चान्यदपि प्रमाणं पश्यामः"इति तत्राह क्षणिकवादी-पश्याम इति। स्वप्रतीतिविषयक्षणिकत्वविषयकमनुमानप्रमाणप्रयोगमाह-स्वभावेति। प्रमाणमिति पक्षः सत्तामात्रानुबन्धीतिसाध्यं साध्यविषयत्वादितिहेतुः। स्वभावहेतुकम्=पदार्थ(स्वविषय)सत्ताहेतुकम्, यदि पदार्थसत्ता न स्यात्तदा प्रमाणमपि न स्याद्विषयाभावादसतश्च विषयत्वासंभवादिति पदार्थसत्तैव प्रमाणस्य हेतुरस्ति न तु पदार्थनित्यत्वमपीति स्वभावहेतुकं प्रमाणं सत्तामात्रानुबन्धि=पदार्थसत्तामात्रमूलकं प्रमाणस्य स्वविषयस्य कालान्तरसंबन्धापेक्षा नास्तीति भावः। अथ वा स्वभावहेतुकमित्यस्य विपर्ययानुमापकमित्यर्थः किं वा विपर्ययहेतुकमित्यर्थः विपर्ययपदेन च स्थिरत्वविपर्ययः क्षणिकत्वं ग्राह्यम्-स्थिरस्य पदार्थस्य क्रमेण यौगपद्येन वा वक्ष्यमाणरीत्याऽर्थक्रियाकारित्वं न सम्भवतीति स्वविषयकज्ञानजननरूपार्थक्रियाकारित्वस्याप्यसम्भवात् ज्ञानलक्षणप्रमाणोत्पत्तिर्न स्यादिति जायमानं प्रमाणं क्षणिकत्वस्यानुमापकं क्षणिकत्वहेतुकं चेति भावः। न चास्य निर्हेतुकत्वमर्थः-विशेषणवैयर्थ्यप्रसङ्गात् निर्हेतुकत्वानभ्यु-

साध्यविषयत्वादिति । कथं पुनः सत्तामात्रानुबन्धसिद्धिः?, क्षणिकतायाः विपक्षे बाधकप्रमाणप्रवृत्तेः— क्षणिकत्वविपक्षे ह्यक्षणिकत्वे व्यापकानुपलब्ध्या बाध्यमाना सत्ता क्षणिकत्वेन व्याप्यमाना तदनुमापयति। किं पुनः सत्ताया व्यापकम्?, क्रमाऽक्रमाविति ब्रूमः, तथा हि— अर्थक्रियाकारितैव सत्ता नान्या. न हि

---

पगमाच्च । वस्तुतस्तु प्रायेण लुप्तार्थोयं बौद्धानां साङ्केतिकः शब्दः ।

ननु प्रमाणस्य स्वविषयसत्तामात्रानुबन्धित्वेन यत्पदार्थस्य क्षणिकत्वमुच्यते तत्र सत्त्वे सति क्षणिकत्वमेवेति कथं स्यादित्यभिप्रायेणाशङ्कते—कथमिति । उत्तरमाह—क्षणिकेति, क्षणिकत्वस्य विपक्षेऽक्षणिकत्वे बाधकप्रमाणस्य प्रवृत्तेरित्यर्थः । उक्तं विपक्षे बाधकमेव विशदयति—क्षणिकत्वेति, क्षणिकत्वविपक्षोऽक्षणिकत्वमेव तत्र क्षणिकत्वेन व्याप्या सत्ता व्यापकस्य क्षणिकत्वस्यानुपलब्ध्या=अभावे सति बाध्यमाना=बाधिता स्यादिति स्वाधिकरणे स्वव्यापकं क्षणिकत्वमनुमापयतीत्यर्थः । किं वा प्रमाणस्य स्थिरत्वानुबन्धित्वमेव युक्तमिति कथं सत्तामात्रानुबन्धित्वमुच्यते इत्याशङ्कते—कथमिति । उत्तरमाह—क्षणिकताया इति, क्षणिकत्वादित्यर्थः, यतः पदार्थः क्षणिक एव न स्थिरस्ततः प्रमाणं सत्तामात्रानुबन्धि पदार्थः स्थिरो नास्त्येव येन प्रमाणस्य स्थिरत्वानुबन्धित्वं स्यादिति भावः । अत्रहेतुमाह—विपक्षेति । उक्तविपक्षं विशदयति—क्षणिकत्वेति, तस्माद् यत्सत् तत् क्षणिकं विद्युद्वदितिसिद्धम् । उक्तं च— "तस्माद्विपक्षे क्रमयौगपद्यव्यावृत्त्या व्यापकानुपलम्भेनाधिगतव्यतिरेकव्याप्तिकं प्रसङ्गतद्विपर्ययबलाद् गृहीतान्वयव्याप्तिकं सत्त्वं क्षणिकत्वपक्षे एव व्यवस्थास्यतीति सिद्धम् ।" इति । तथा ज्ञानश्रियाप्युक्तम्—

" यत्सत् तत् क्षणिकं यथा जलधरः सन्तश्च भावा अमी ।
सत्ता शक्तिरिहार्थकर्मणि मितेः सिद्धेषु सिद्धा न सा ॥" इति ।

सत्ताव्यापकं पृच्छति—किमिति । उत्तरमाह—क्रम इति । अक्रमः=यौगपद्यम् । स्थिरस्य क्रमेण वा यौगपद्येन वाऽर्थक्रियाकारित्वं न सम्भवतीति क्रमयौगपद्याभ्यामर्थक्रियाकारित्वेन क्षणिकत्वं सिध्यति, यतोऽर्थक्रियाकारित्वरूपसत्तायाः क्रमाऽक्रमौ व्यापकौ तयोरपि क्षणिकत्वं व्यापकमिति भावः । उप-

स भावः सत्तां लभते यो न कां चिदर्थक्रियामारभते, यतः स्वज्ञानस्यापि सर्वे भावाः कारणम्, यदपि किंचिदऽज्ञायमानमपि सत्त्वेन संभाव्यते तदपि सर्वं विज्ञानं प्रत्याऽऽलम्बनत्वादर्थक्रियाकारि, तदऽर्थक्रियाकारितैव सत्ता, यदेवार्थक्रियाकारि तदेव परमार्थसदिति। सा च क्रमयौगपद्याभ्यां व्याप्ता, न चाऽक्षणिकत्वे ते संभवतः- स्थायी हि पदार्थो न तावदऽर्थक्रियाः सर्वा युगपत्कर्तुमर्हति तथा सति द्वितीये क्षणे कृत्याऽभावादऽर्थक्रियाकारित्वविरहादऽसल्लक्षणापत्तेः क्षणिकत्वमेव स्यात्। नापि क्रमः संभवति- स हि भावः सर्वार्थक्रियासमर्थः किमिति कां चिदेवारभते नाऽन्याम्? समर्थस्य क्षेपायोगात्।

सहकार्यऽपेक्षया विलम्बत इति चेत्?, न, सहका-

---

पादयति- तथा हीति। येन पदार्थेन कापि जलाहरणादिक्रिया न कृता तस्य कथं सत्त्वं स्यादित्याशङ्क्याह-यत इति, स्वविषयकज्ञानजननमप्यर्थक्रियैवेति स्वविषयकज्ञानजननादेव तस्य सत्ता भविष्यतीत्यर्थः। ननु येन स्वविषयकज्ञानमपि नोत्पादितं तस्य कथं सत्त्वं स्यादित्याशङ्क्याह-यदपीति। यदि स ज्ञानविषय एव नास्ति तदा स ज्ञात एव कथं स्यादिति ज्ञाने प्राप्ते ज्ञानजननादेव सत्त्वमित्यर्थः किं वा 'अज्ञातम्' इत्याकारकज्ञानजननादेव तस्य सत्त्वम्। उपसंहरति-तदिति। तत्=तस्मात्। सा=सत्ता। सत्तया क्रमयौगपद्ये क्रमयौगपद्याभ्यां च क्षणिकत्वं सिद्धमित्यर्थः। विपक्षे बाधकमुद्घाटयति-न चेति। ते=क्रमयौगपद्ये। उपपादयति-स्थायीति। युगपत्सर्वार्थक्रियासंपादने दोषमाह-तथा सतीति, सर्वासां क्रियाणां प्रथमक्षणे कृतत्वात् द्वितीयक्षणे कार्याभावादेवासत्त्वं स्यादऽर्थक्रियाकारित्वस्यैव सत्त्वाभ्युपगमाद् द्वितीयक्षणवृत्त्यऽसत्त्वमेव हि क्षणिकत्वं तच्च सिद्धमित्यर्थः।असल्लक्षणापत्तेः=असत्त्वापत्तेः। क्रमेणार्थक्रियाकारित्वंनिराकरोति-नापि क्रम इति।क्षेपायोगात्=विलम्बासंभवात्।

ननु सहकारिणं विना न करोतीति सहकार्यपेक्षया विलम्बत इत्याशङ्कते-सहकारीति। परिहरति-नेति। हेतुमाह-सहकारिण इति, सहकारिणामकिं चि-

रिणो ह्यऽकिंचित्करा अनपेक्ष्याः। किं चित्कराश्चेत् ? यत्तैः क्रियते तदेव कार्यसाधनं स्यात् तदनन्तरं कार्यनिष्पत्तेः. भावस्त्वऽकारणमेव स्यात्- न ह्यागन्तुकेऽतिशये कार्यमारभमाणे भावस्य कारणता संभवति भिन्नत्वात्. अभेदे वा भावोपि तत्कालजन्मा क्षणिक एव स्यात्, भेदाऽभेदौ तु विरुद्धावेव, तस्मान्नाऽक्षणिकस्य सत्ता संभवतीति सिद्धं सन्मात्रानुबन्धित्वं क्षणिकतायाः।

---

त्करत्वादपेक्षा न युक्तेत्यर्थः। विपक्षे बाधकमाह- किं चित्करेति। तैः=सहकारिभिः। तदनन्तरम्=सहकारिकृतोपकाराऽनन्तरं, एवं तु सहकारिकृतोपकार एव कार्यसाधकं स्याद् यदनन्तरं यत्कार्यं भवति तत्प्रति तस्यैव साधनत्वादिति सलिलादिसंयोगकृतस्य बीजविनाशस्यैव कारणत्वापत्तिरिति बीजादिकमकारणमेव स्यादिति भावः। उपपादयति- न हीति। आगन्तुके=तत्क्षणोत्पन्नेऽतिशये कर्तृभूते कार्यं कुर्वति सति भावस्य बीजादेः कारणता न सम्भवत्युभयस्य कारणत्वे गौरवात् । हेतुमाह-भिन्नत्वादिति, भावस्योक्तातिशयापेक्षया भिन्नत्वात्, न हि देवदत्तस्य कारणत्वे तद्भिन्नस्य यज्ञदत्तस्य कारणता भवतीत्यर्थः। अभेदपक्षे दोषमाह-अभेदेति, यद्युक्तातिशयाद् भावोऽभिन्न एव तदा तस्यातिशयस्य तत्कालजातत्वेन भावोपि तत्कालजात एव स्यात् तत्कालजातत्वाच्च क्षणिक एव स्यात् । ननु भेदाभेदौ किं न स्यातां येनाभेदेन कारणत्वं भेदेन चाऽक्षणिकत्वं स्यादित्याशङ्क्याह-भेदाभेदाविति। उपसंहरति- तस्मादिति, अक्षणिकस्य स्थिरस्यार्थक्रियाकारित्वलक्षणा सत्ता न सम्भवतीति सत्तया क्षणिकत्वं भावानां सिद्धम् । क्षणिकताया इति पञ्चम्यन्तम्-पदार्थनिष्ठक्षणिकत्वादेव प्रमाणस्य सत्तामात्रानुबन्धित्वं सिद्धमित्यर्थः। उक्तं च क्षणभङ्गवादिभिः। " तत्र क्षणिकत्वं नीलादिक्षणानां सत्त्वेनानुमातव्यम्-यत्सत् तत् क्षणिकं यथा जलधरपटलं सन्तश्चामी भावाः ( तस्मात् क्षणिकाः ) इति । न चायमसिद्धो हेतुः अर्थक्रियाकारित्वलक्षणस्य सत्त्वस्य नीलादिक्षणानां प्रत्यक्षसिद्धत्वाद् व्यापकव्यावृत्त्या व्याप्यव्यावृत्तिन्यायेन व्यापकक्रमाक्रमव्यावृत्तावऽक्षणिकात् सत्त्वव्या-

किं च कृतकानां भावानामवश्यम्भावी विनाशस्ते-
नापि क्षणिकत्वं घटादीनाम्, तथाहि–यद् येषां ध्रुवभा-
वि न तत्र तेषां हेत्वन्तरापेक्षा ध्रुवभावी च कृतकानां
विनाश इति विरुद्धव्याप्तोपलब्धिः–ध्रुवभाविता हि नि-
षिध्यमानहेत्वन्तरापेक्षित्वव्याप्ता अग्न्युष्णत्वादिषूपल-
ब्धा स्वव्यापकमनपेक्षत्वमुपस्थापयन्ती तद्विरुद्धं सापे-

---

वृत्तेः सिद्धत्वाच्च, तच्चार्थक्रियाकारित्वं क्रमाक्रमाभ्यां व्याप्तं न च क्रमा-
क्रमाभ्यामन्यः प्रकारः समस्ति,

'परस्परविरोधे हि न प्रकारान्तरस्थितिः ।
नैकतापि विरुद्धानामुक्तिमात्रविरोधतः ॥'

इति न्यायेन व्याघातस्योद्भटत्वात्, तौ च क्रमाक्रमौ स्थायिनः सकाशाद् व्या-
वर्तमानावऽर्थक्रियामपि व्यावर्तयन्तौ क्षणिकत्वपक्षे एव सत्त्वं व्यवस्थापयत
इति सिद्धम् ।" इति ।

एवं सत्त्वेन क्षणिकत्वमुपपाद्य संप्रति विनाशित्वेन क्षणिकत्वमाह–किं
चेति । तेन=विनाशेन । यदि घटादिकं क्षणिकं न स्यात्तदा न विनश्येत ।
उपपादयति–तथा हीति, यथा–यत्=उष्णत्वं येषाम्=वन्ह्यादीनां ध्रुवभावि=
अवश्यम्भावि तत्र=उष्णत्वे तेषाम्=वन्ह्यादीनां न हेत्वन्तरापेक्षा तस्य स्वाभा-
विकत्वादित्यन्वयः। कृतकानां घटादीनां विनाशोपि ध्रुवभावीति न तत्र विना-
शे तेषां घटादीनां हेत्वन्तरापेक्षा विनाशस्य स्वाभाविकत्वादिति विनाशे
हेत्वन्तरापेक्षित्वविरुद्धं यद् हेत्वन्तरानपेक्षित्वं तद्व्याप्तस्य ( व्याप्यस्य ) ध्रु-
वभावित्वस्योपलब्धिरस्ति तया चानपेक्षित्वं प्राप्तं हेत्वन्तरानपेक्षित्वाच्च द्विती-
यक्षणे एवावश्यम्भावी विनाशः, द्वितीयक्षणविनाशित्वमेव च क्षणिकत्वमित्यर्थः।
ध्रुवभावित्वेन विनाशस्य हेत्वन्तरानपेक्षत्वमुपपादयति– ध्रुवभावितेति ।
यत्र यत्र ध्रुवभाविता तत्र तत्र निषिध्यमानहेत्वन्तरापेक्षित्वम्= हेत्वन्तरान-
पेक्षित्वं भवत्येव यथाऽग्न्युष्णत्वे ततश्च ध्रुवभाविताया व्यापकमऽनपेक्ष-
त्वमऽनपेक्षत्वविरुद्धं च सापेक्षत्वं तथा च ध्रुवभाविता स्वव्यापकमनपेक्षत्वं सा-
धयन्ती अनपेक्षत्वविरुद्धं सापेक्षत्वं विनाशस्य निवारयति, यतो विनाशो ध्रुव-
भावी ततो न हेत्वन्तरसापेक्षः किं तु निरपेक्षः स्वाभाविक इत्यर्थः, विनाशो

क्षत्वं प्रतिक्षिपति। अथ वा हेत्वन्तरापेक्षाणां वाससि रागादीनामऽध्रुवभावित्वव्याप्तेस्तद्विरुद्धं ध्रुवभावित्वं व्यापकविरुद्धोपलब्ध्या विनाशस्य हेत्वन्तरापेक्षां निवारयति, निरपेक्षश्च विनाशः स्वाभाविको जन्मानन्तरमेव भवतीति सिद्धः क्षणभङ्गः।

मुसलप्रहारादयस्तु विसदृशसन्तानहेतवो न विनाशस्य। प्रतिपत्तारस्तु सदृशपराऽपरोत्पत्त्या क्षणानां भेदमलक्षयन्तस्तत्त्वभ्रान्त्या विनाशमऽबुद्ध्वा मुसलप्र-

---

निरपेक्षत्वाद् द्वितीयक्षणे एव स्यादिति क्षणिकत्वं प्राप्तमित्यग्रेणान्वयः।

व्यतिरेकेणाप्यधुना विनाशस्य हेत्वन्तरानपेक्षत्वमुपपादयति–अथ वेति। यत्र हेत्वन्तरापेक्षित्वं तत्राऽध्रुवभावित्वमप्यस्त्येव यथा वस्त्ररागादौ तद्विरुद्धम्=अध्रुवभावित्वविरुद्धं च ध्रुवभावित्वमिति हेत्वन्तरापेक्षित्वव्यापकाद्ऽध्रुवभावित्वाद् विरुद्धस्यानपेक्षत्वस्य ध्रुवभावित्वव्यापकस्योपलब्ध्या ध्रुवभावित्वं विनाशस्य हेत्वन्तरापेक्षां निवारयति, यत्र ह्यऽध्रुवभावित्वं भवति तत्रानपेक्षत्वं न भवतीत्यनपेक्षत्वस्य विरुद्धत्वमित्यनपेक्षत्वेनाऽध्रुवभावित्वस्य निवृत्तिस्तया हेत्वन्तरसापेक्षत्वस्य निवृत्तिरित्यन्वयः। स्वाभिप्रायमुद्घाटयति–निरपेक्षश्चेति, यदि विनाशो हेत्वन्तरसापेक्षः स्यात्तदा स्वहेतुप्रतीक्षया कदाचिद् द्वितीयक्षणे न स्यादपि न चैवमस्तीति द्वितीयक्षणेऽवश्यम्भावी विनाशः। द्वितीयक्षणविनाशित्वाच्च भावानां क्षणिकत्वं सिद्धम्।

ननु लोके मुसलप्रहारादिना घटादिविनाशो दृश्यत इति कथं विनाशस्य स्वाभाविकत्वं स्यादित्याशङ्क्याह–मुसलेति। विसदृशसन्तानस्य=घटाभावसन्तानस्य हेतवः, मुसलप्रहारे जाते ज्ञानं घटाभावविषयकं भवति विनाशस्तु स्वाभाविक एवेति प्रतिक्षणं विनाशे जायमानेपि मुसलप्रहारेण घटविसदृशस्य विनाशस्य परम्परा विस्तारो भवतीति। लोकप्रतीतेर्हेतुमाह–प्रतिपत्तार इति। प्रतिद्वितीयक्षणं घटोऽपरोऽपर उत्पद्यत इति तत्र सदृशस्यापरापरस्योत्पत्त्या क्षणानां प्रतिद्वितीयक्षणोत्पन्नघटानां भेदस्याऽप्रतीतेः तत्त्वभ्रान्त्या तस्य प्रथमघटस्य भावस्तत्त्वं तद्भ्रान्त्या "तत्तद्भ्रान्त्या" इति पाठान्तरे तु तत्तद्घटस्य प्रथमप्रथमघटस्य भ्रान्त्या विनाशस्याऽबोधेन मुसलप्रहारान-

**हारानन्तरं विसदृशसन्तानदर्शिनस्तदैव विनाशं मन्यमाना मुसलादेर्विनाशहेतुतां मन्यन्ते। परमार्थतस्तु न केऽपि विनाशहेतवः, हेत्वन्तरजन्मा च विनाशो न तावद् भावादभिन्नो भवितुमर्हति हेतुभेदात्, भिन्नत्वे तु तस्मिन् जातेपि भावस्य पूर्ववदुपलब्धिः स्यात् पटजन्मनि घटवत्, तस्मात् स्वहेतुत एव भावा विनाशस्वभावा जायन्ते इति क्षणभङ्गसिद्धिः।**

---

न्तरं विसदृशे सन्ताने जाते पूर्वजातस्यैव विनाशस्य प्राकट्येन तदैव=मुसलप्रहारानन्तरमेव विनाशं मन्यमाना भ्रान्त्या मुसलादेर्विनाशहेतुतां जना मन्यन्ते। अयं भावः–यस्मिन् क्षणे घट उत्पन्नस्तद्द्वितीयक्षणे एव स घटस्तु नष्टः किं तु तस्मिन्नेव क्षणे तत्सदृशं घटान्तरमुत्पन्नमिति प्रतिक्षणं घटस्य विनाशेपि सदृशापरापरघटानामुत्पत्त्या घटविनाशस्य प्रत्यक्षं न भवति सदृशपरम्परायाः ( सन्तानस्य ) प्रतिबन्धकत्वात्, मुसलप्रहारेण तु घटविसदृशसन्तान उत्पद्यत इति प्रतिबन्धकीभूतसदृशसन्तानस्य विनाशाद् घटनाशस्य प्रत्यक्षं भवतीति लोकास्तदैव विनाशं जातं मन्यन्ते वस्तुतस्तु विनाशः स्वाभाविकः पूर्वमेव जात इति क्षणमात्रस्थित्या क्षणिक एव घटादिः। यथा मृदभ्यन्तरे सन्तं जातमपि चाङ्कुरं जना न जानन्ति किं तु प्रकाश्येनैव वदन्ति जातोऽङ्कुर इति तथैव मुसलप्रहारात्पूर्वं जातमपि न जानन्ति विनाशं मुसलप्रहारे जात एव विनाशप्रत्यक्षसंभवादिति ज्ञेयम्। " परापरोत्पत्त्या " इत्यत्र " परम्परोत्पत्त्या " इत्यपि पाठः।

स्वमतमाह–परमार्थत इति। निर्हेतुकत्वाद् विनाशः स्वाभाविक एवेत्यर्थः। विपक्षे बाधकमाह–हेत्वन्तरजन्मेति। यदि विनाशो हेत्वन्तरजन्मा स्यात्तदा भावात्=स्वप्रतियोगितोऽभिन्नो न स्यात् किं तु भिन्न एव स्याद् विनाशतत्प्रतियोगिनोर्भिन्नकारणजत्वात् प्रतियोगिकारणानां विनाशकारणत्वासम्भवात् उक्तं च " अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्च " इत्यादि, हेतुभेदाद्भिन्नत्वे च यथा भिन्नहेतुकपटोत्पत्तावपि घट उपलभ्यते तथा विनाशे जातेपि तत्प्रतियोग्युपलभ्येत न चोपलभ्यते तस्मान्न हेत्वन्तरजन्मा विनाशः किं तु स्वाभाविक एवे-

किं च प्रयत्नरक्षितानामपि घटादीनां कियतापि कालेनाऽवयवक्षयविश्लेषवशेन विनाशो दृश्यते विनैव मुसलप्रहारादिभिः सोयमुत्पत्तिप्रभृति किं चित् किं चिदऽन्यथात्वमन्तरेण नोपपद्यते, प्रत्यक्षेणैव चान्यथात्वमभिनवपुराणावस्थयोरऽज्ञातघटोत्पत्तिकालैरपि पुरुषैरुपलभ्यते, न चैकस्यैव घटस्य नानारूपत्वं संभवति नानात्वैकत्वयोर्विरोधात् तस्मात् प्रतिक्षणमन्यत्वं घटादेः ।, प्रयोगश्च भवति—

विवादाध्यासिता भावाः सत्त्वात् क्षणविनाशिनः ।
दीपवत्. प्रत्यभिज्ञापि स्यात् प्रदीपवदेव नः ॥

---

त्याह–भिन्नत्वेत्यादिना । तस्माद् भावा विनाशस्वभावा एवोत्पद्यन्त इति द्वितीयक्षणे एव विनश्यन्तीति क्षणभङ्गसिद्धिरित्यर्थः ।

प्रकारान्तरेण क्षणिकत्वमुपपादयति–किं चेति । अवयवक्षयविश्लेषवशेनेति–अवयवानां क्षयवशेन=क्रमेण जीर्णतया तथाऽवयवानां विश्लेषवशेन=विभागवशेन विनाशो दृश्यते तच्च प्रतिक्षणमऽन्यथात्वेन वक्तव्यं प्रतिक्षणमन्यथात्वे च स्वीकृते तत्तदन्यथात्वाऽविशिष्टो घटस्तत्तत्क्षणे एव नानेकक्षणस्थायी उत्तरोत्तरक्षणेषूत्तरोत्तरान्यथात्वविशिष्टस्यैव सम्भवादिति प्रतिक्षणमवयवक्षयविश्लेषाभ्यां जायमाने मुसलप्रहाराद्यनपेक्षे हि विनाशे विनाशिनां घटादीनां सिद्धं क्षणिकत्वम् । एतदेवाह–प्रत्यक्षेणेति । ज्ञातघटोत्पत्तिकालैस्तु कदाचिद्ऽन्यथात्वस्य प्रत्यक्षं विनाप्यधिककाले जाते जीर्णत्वमऽल्पकाले जाते च दृढत्वं घटस्योच्येतेत्यभिप्रायेणाह–अज्ञातघटोत्पत्तिकालैरिति, अज्ञातघटोत्पत्तिकालैस्तु जनैरन्यथात्वप्रत्यक्षं विनाऽन्यथात्वं न वक्तुं शक्यत इत्यर्थः । स्वाभिप्रायमाह– न चेति । अन्यथात्वं च नूतनत्वं पुराणत्वं तच्च नानारूपत्वमेव न चैकस्य नानारूपत्वं सम्भवतीति प्रतिक्षणं घटभेदो वक्तव्यस्तथा च सिद्धः क्षणभङ्गवादः । अत्रानुमानप्रयोगं पद्येनाह–विवादेति । भावाः क्षणविनाशिनः सत्त्वात् प्रदीपवदित्यन्वयः । ननु यदि क्षणिको घटस्तदा स एवायं घट इति प्रत्यभिज्ञा न स्यादित्याशङ्क्याह–प्रत्यभिज्ञापीति, यथा दीपे स एवायं दीप इति प्रत्यभिज्ञा सादृश्यमूला प्रतिक्षणं प्रदीपभेदस्योभयमतसिद्धत्वात्

अत्राभिधीयते- न तावदर्थक्रियाकारितैव सत्ता सतो ह्यऽर्थक्रियाकारिता न तु सैव सत्ता-न च सर्वस्य भावस्यार्थक्रियाकारितानियमः, अतत्कारिणोऽपि संभवात् । न च ज्ञानकारणत्वमपि सर्वस्य नियतम्-अज्ञायमानस्यापि स्वरूपसद्भावसंभवात् । न च सर्वेषां विज्ञानं प्रत्यालम्बनहेतुताऽतीताऽनागतानां भावानां संभवति, अविद्यमानानां हेतुत्वानुपपत्तेः । हेतुत्वे वा सर्वज्ञाननिष्पत्तौ सर्वेषां व्यापृतत्वात् क्रमानभ्युपगमेन च पुनर्व्यापारानुपपत्तेः, तल्लक्षणत्वाच्च सत्तायाः सर्वज्ञानानन्तरमेव समस्तस्य जगतः शून्यताप्रसङ्ग इति यत् किं चिदेतत् ।

---

तथा घटादावपि सादृश्यमूलैव प्रत्यभिज्ञा, घटादीनां क्षणिकत्वेपि मुसलप्रहारादिना विसदृशसन्तनोत्पत्तिपर्यन्तं सदृशसन्तानस्वीकारादित्यर्थः ।

एवं क्षणभङ्गवादमुपपाद्य तं परिहर्तुमुपक्रमते-अत्रेत्यादिना । प्रथमं पदार्थस्वरूपनिष्पत्तिर्भवति तदनन्तरं तेन सताऽर्थक्रिया क्रियत इत्येव युक्तं यद्यर्थक्रियाकारितैव सत्ता तदाऽर्थक्रियाकरणात् पूर्वमऽसदेव स्यादिति केनार्थक्रिया क्रियेतेति भावः । सैव=अर्थक्रियाकारितैव । अतत्कारिणोपि=अर्थक्रियाऽकारिणोऽपि, सम्भवात्=सत्त्वात् । नन्वऽन्यार्थक्रियाकारित्वाभावेपि स्वविषयकज्ञानोत्पादनरूपार्थक्रियाकारित्वं तु भविष्यतीत्याशङ्क्याह- न च ज्ञानेति, भूतलन्तःस्थानां ज्ञानात्पूर्वमपि सत्त्वसम्भवात् । उक्तमेव विशदयति- न च सर्वेषामिति । सर्वेषामऽतीतानागतानां भावानामित्यन्वयः । अतीतानागतानां ज्ञानं प्रत्यालम्बनाऽहेतुत्वे हेतुमाह-अविद्यमानेति । विपक्षे बाधकमाह-हेतुत्वेति, यद्यतीतानागतवर्तमानानां सर्वेषां भावानां स्वज्ञानं प्रत्यालम्बनहेतुता तदा सत्ताया अर्थक्रियाकारित्वलक्षणत्वात् सर्वेषां च भावानां सर्वज्ञाननिष्पत्तौ=स्वस्वज्ञानोत्पादने व्यापृतत्वात्=कृतव्यापारत्वात्-उत्पादितस्वस्वविषयकज्ञानत्वात् पुनर्व्यापारानुपपत्तेः=क्षणिकस्यैकव्यापारमात्रसमर्थत्वेन व्यापारान्तराऽसम्भवादिति सर्वविषयकज्ञानानन्तरं सर्वेषां भावानामऽर्थक्रियाकारित्वाभावेनाऽर्थक्रियाकारित्वरूपसत्ताया अभावात् सर्वस्य

संभवति च भावानां क्रमेणार्थक्रियाकारणत्वम्, सहकारिव्यपेक्षया विलम्बोपपत्तेः। सहकारिणश्चाऽतिशयमाऽऽगन्तुकं भावाद् भिन्नाभिन्नं भिन्नमेव वा कुर्वन्त्येव, यथा बीजस्य क्षितिसलिलसंयोगेऽतिशयः, तदलाभे स्थायिनोपि बीजस्य प्रागङ्कुरानारम्भः, लाभे चारम्भ इति न काचिदनुपपत्तिः।

नन्वेवं संयोगस्यैव कारणत्वं स्यान्नतु बीजस्य? । नैवम्, संयोगमात्रात्तदुत्पत्त्यऽदर्शनात्—न हि क्षितिसलि

---

प्रपञ्चस्य शून्यतैव स्यान्न किंचिदपि जगदुपलभ्येत, न चैवमस्तीति नार्थक्रियाकारित्वं सत्तेत्यर्थः । यद्यर्थक्रियाकारितायां क्रमः स्यात्तदा क्रमेणानन्तपदार्थानां स्वविषयकज्ञानोत्पादनायानन्तकालापेक्षा स्यादिति शून्यत्वं न स्यादपि न चैवं भवतीच्यते समर्थस्य स्वसंपाद्यक्रियायां क्रमानभ्युपगमेनेति भावः । उक्तमतस्य युक्तिविहीनत्वादुपेक्षां सूचयति— यत्किंचिदेतदिति, बालैरपि निराकर्तुं शक्यमित्यर्थः ।

स्वाभिप्रायमाह—सम्भवतीति । भावानाम्=स्थिरपदार्थानामपि । अर्थक्रियाकारणत्वम्=अर्थक्रियाकारित्वम् । प्रधानकारणस्य सहकारिसापेक्षत्वमाह—सहकारीति। सहकारिणां च सफलत्वमाह—सह कारिणश्चेति। सहकारिभिः प्रधानकारणस्य स्वरूपे एवातिशयः संपाद्यते स्वरूपस्याभिन्नत्वादभिन्नत्वमतिशयस्यातिशयस्वरूपेण च भिन्नत्वमिति भिन्नाभिन्नत्वम् । उदाहरणमाह—यथेति । तदलाभे=क्षितिसलिलसंयोगालाभे । प्राक्=उक्तसंयोगलाभात् प्राक् बीजस्य योऽङ्कुरस्तस्यानारम्भः=उत्पत्त्यभावः । न काचिदिति—उक्त प्रकारेण प्रधानकारणस्य तथा सहकारिणां च साफल्यादवश्यं सहकार्यपेक्षा भवत्येवेति, सहकार्यऽलाभे च प्रधानकारणस्य कार्योत्पादने सहकारिप्राप्तिकालपरिमितो विलम्बोपि भवत्येवेति क्रमेण कार्यजनकत्वमिति न काचिदनुपपत्तिः ।

नन्वेवं सहकारिण एव कारणत्वं स्यान्नियमेन तत्सत्त्वे एव कार्योत्पत्तेरित्याशङ्कते—नन्विति । परिहरति—नैवमिति । संयोगमात्रात्=क्षितिसलिलसंयोगमात्राद्बीजरहितात् । तदुत्पत्त्यदर्शनात्=अङ्कुरोत्पत्त्यदर्शनात् । विपक्षे बाधकमाह—न हीति । ननु क्षितिसलिलसंयोगमात्रादङ्कुरोत्पत्तेरदर्शने-

**लसंयोगोऽङ्कुरं जनयति। बीजविशिष्टस्य तु संयोगस्य कारणत्वे ? विशेषणीभूतस्य बीजस्यापि कारणत्वमङ्गीकार्यम्। यस्तु सहकार्यऽपेक्षां नानुमन्यते तस्य क्षितिसलिलसंयोगानपेक्षात् कुसूलस्थादेव बीजादङ्कुरो जायेत।**

**नन्वन्त्यक्षणप्राप्तः समर्थ एव भावोऽनपेक्षो जनयितुम्. निरपेक्षोप्यसौ सहकारिभिर्विना नास्तीति तैर्विना न करोति, कुसूलस्थं हि बीजमन्यदेव. अन्यच्चेदं क्षितिसंयुक्तं यतोऽङ्कुरो जायते ?। सत्यम्, इदं त्वत्र वक्तव्यम्- यदिदमन्त्यक्षणप्राप्तं क्षितिसलिलसंयुक्तमङ्कुरजनकं तद् यदि कृषीवलप्रयत्नविरहात् कुसूलस्थमे-**

---

पि क्षितिसलिलसंयोगस्यैव प्राधान्येन कारणत्वमस्तु बीजस्य च तद्विशेषणता भवतु तथा च बीजविशिष्टात् क्षितिसलिलसंयोगादङ्कुरोत्पत्तिस्तु दृश्यत एवेत्याशङ्क्याह-बीजविशिष्टस्येति। पुनरपि सहकारिसापेक्षत्वाभावे बाधकमाह-यस्त्विति। कुसूलस्थात्=क्षितिसलिलसंयोगरहितात् पात्रविशेषस्थात्।

ननु यद्यपि सहकारिनिरपेक्षस्यैव बीजस्याङ्कुरोत्पादकत्वमस्ति तथापि न बीजमात्रस्याङ्कुरोत्पादकत्वमुच्यते येन कुसूलस्थबीजादप्यङ्कुरो जायेत किं त्वन्त्यक्षणं प्राप्त एव बीजादिर्भावोऽङ्कुरादिकार्यमुत्पादयति तस्यान्त्यक्षणप्राप्तिस्तु सहकारिभिर्विना नैव सम्पद्यत इति तैः=सहकारिभिर्विना न कार्यं करोति क्षितिसलिलसंयोगेन यदा बीजं विनाशावस्थां प्राप्नोति तदैव करोति तत्र क्षणभेदेन बीजभेदात् कुसूलस्थक्षितिसलिलसंयुक्तयोर्बीजयोर्भेद एवेति न कुसूलस्थस्याङ्कुरं प्रति कारणता किं तु क्षितिसलिलसंयुक्तस्यैवेति न सहकारिणां कार्योत्पादने व्यापारः किं तु कार्योत्पादकान्त्यक्षणविशिष्टकारणोत्पादन एवेत्याशङ्कते-नन्विति। तथा च भावः=पदार्थः क्षणिक एवेत्यऽनपेक्षोपि जनयितुं समर्थ एवेत्यन्वयः। परिहरति-सत्यमिति। सत्यं क्षणभेदात् कुसूलस्थस्य क्षितिसलिलसंयुक्तस्य च बीजस्य भेदस्तथापि यदि क्षितिसलिलसंयोगमात्रेण बीजस्याङ्कुरोत्पादकत्वं तदा कृषीवलप्रयत्नं विनैव कुसूलस्थादपि क्षितिसलिलसंयुक्तादङ्कुरो जायेत न चैवमस्ति। यदि कुसूलेपि क्षितिसलिलसंयोगेङ्कुरो दृश्यते तदा तावन्मात्रस्य कारणत्वे क्षितिसलिलसंयोगक्षणे ए-

च स्यात् तदापि किमङ्कुरं जनयति ?, ओमिति चेत् ? किमर्थं तर्हि कृषीवलस्य प्रेक्षापूर्वकारिणः प्रयासः, विदुषां च स्वर्गापवर्गार्थं चैत्यवन्दनादिप्रयासः, तदुपदेशश्च देशिकानामनर्थकः स्यात्—अन्त्यक्षणप्राप्ताद्विज्ञानादेव धर्माधर्मानपेक्षात् स्वर्गापवर्गसिद्धेः, तस्मात्सहकार्यऽपेक्षाऽङ्गीकर्तव्या, ततश्च सहकारिसंनिधिक्रमेण संभवति स्थायिनोपि भावस्य क्रमेणार्थक्रियाकरणमिति विपक्षे बाधकप्रमाणाभावादऽनियता क्षणिकत्वेन सत्ता नालं तदऽनुमापयितुम् । न च ध्रुवभावितया विनाशस्य हेत्वन्तरानपेक्षत्वम्—घटसन्ताने

---

चाङ्कुर उत्पद्येत कालातिपातो न स्यादिति दोषः, तस्मात्सहकारिविशिष्टादेव कारणात्कार्योत्पत्तिरिति युक्तम् ।

ओमिति चेदिति । यदि कृषीवलसमीहितस्याङ्कुरस्य कृषीवलप्रयत्नं विनाप्युत्पत्तिः स्यात्तदा कृषीवलप्रयत्नो व्यर्थ एव स्यात्तथा युष्माकं चैत्यवन्दनादिकमपि व्यर्थमेव स्यात् समीहितस्य स्वर्गादेरन्त्यक्षणप्राप्ताद्विज्ञानाद् भवत्प्रयत्नविरहादेव सिद्धिः स्यादित्याह—विदुषामिति, बौद्धानामित्यर्थः । उपसंहरति—तस्मादिति, कृषीवलप्रयत्नादेरपि सहकारिणोऽपेक्ष्यमाणत्वादित्यर्थः । स्वाभिप्रायमाह—ततश्चेति । इत्यनेन. यदुक्तम्—(५७२पृ०)"नापि क्रमः संभवति—स हि भावः सवार्थक्रिया समर्थः"इत्यादि तन्निराकृतं वेदितव्यम् । स्थायिनोपि भावस्य सर्वार्थक्रियासमर्थस्यापि सहकार्यऽपेक्षया विलम्बात् नैकस्मिन्नेव क्षणे सर्वार्थक्रियासंपादकत्वं येन द्वितीयक्षणेऽर्थक्रियाकारित्वाभावादऽसत्त्वं स्यात्तेन च क्षणिकत्वं स्यादिति भावः। यत्तु(५७१पृ)"क्षणिकताया विपक्षे बाधकप्रमाणप्रवृत्तेः" इत्यादिना सत्तायाः क्षणिकत्वानुमापकत्वमुक्तं तत् पराकरोति—विपक्षेति । विपक्षे=क्षणिकत्वविपक्षे स्थिरत्वे, अनियता=अव्याप्ता, तत्=क्षणिकत्वम् । सत्तायाः क्षणिकत्वेन व्याप्तिरेव नास्ति स्थिरेपि सत्तासम्भवादिति कथं सत्तायाः क्षणिकत्वानुमापकत्वं स्यादित्यर्थः । ध्रुवभावित्वेन विनाशस्य हेत्वन्तरानपेक्षत्वं(५७४पृ)यदुक्तं तत्र व्यभिचारं प्रदर्शयन् तन्निराकरोति— न चेति । घटसन्ताने ध्रुवभाविनि कपालसन्ताने हेत्वन्तरानपेक्षत्वं साध्यं

**कपालसन्तानस्य ध्रुवभाविनो मुसलप्रहारादिहेत्वन्तरापेक्षादर्शनादऽनैकान्तिकत्वात् ।**

**ननु हेत्वन्तरेण भावाद् भिन्ने विनाशे जाते विनाशिनोपि भावस्य पूर्ववदुपलब्धिः स्यात् तस्मात् स्वाभाविको विनाशः । किमिदं स्वाभाविकम् ? इति। भावस्वभावादेव विनाशो जायते न हेत्वन्तरादित्यर्थः ।**

**ननु भावादपि जातो विनाशो भावाद् भिन्नश्चेत् ? तुल्य एव दोषः—पूर्ववदुपलब्धिः स्यादिति । अथाऽभि-**

---

नास्ति मुसलप्रहारादिहेत्वन्तरापेक्षत्वादथ च तत्र ध्रुवभावित्वमस्तीति साध्याभाववति वृत्तित्वाद् व्यभिचारि ध्रुवभावित्वं न विनाशस्य हेत्वन्तरानपेक्षत्वं साधयितुं समर्थमित्यर्थः । घटसन्तानस्य कपालसन्तानं विनाऽनुपपत्त्या घटसन्ताने कपालसन्तानो वर्तत एवेति ध्रुवभावी स च कपालसन्तानोपि घटे मुसलप्रहारादिनोपलभ्यत इति हेत्वतरसापेक्षस्तथा च विनाशोपि ध्रुवभाव्यपि हेत्वन्तरसापेक्ष एवेति न विनाशः स्वाभाविको येन द्वितीयक्षणे एव विनाशसम्पत्त्या घटादिः क्षणिकः स्यात् । क्षणिकत्वनिरासप्रकरणे प्रसन्नपदायां माध्यमिकेन चन्द्रकीर्तिनाप्युक्तम्—“ यस्तु विनाशस्याहेतुकत्वमभ्युपेत्य क्षणिकतां संस्काराणामाह तस्य निर्हेतुकत्वात् खपुष्पवद्विनाशाभावात् कुतः क्षणिकत्वं भावानां सेत्स्यति, कुतो विनाशरहितानां संस्कृतत्वमपीति सर्वमेवासमञ्जसं तस्य जायते ।” इति ।

ननु हेत्वन्तरेण जातत्वाद्विनाशः स्वप्रतियोगितो भिन्न एव स्यात्तथा च विनाशे जातेपि तत्प्रतियोगी घटादिरुपलभ्येतेत्येवमाशङ्कते—नन्विति । मीमांसको विनाशस्य स्वाभाविकत्वं पृच्छति—किमिदमिति । बौद्ध उत्तरमाह—भावस्वभावेति । भावः—प्रतियोगी ।

मीमांसकः शङ्कते—नन्विति । विनाशः स्वाभाविकत्वात् भावात्=स्वप्रतियोगिस्वभावाज्जायमानोपि स्वप्रतियोगितो भिन्नो वाऽभिन्नो वेति विकल्प्य भिन्नत्वे तुल्यदोषतामाह—भावादपीति । दोषस्वरूपमाह—पूर्ववदिति । पूर्ववत्=विनाशात् पूर्ववत् । यथा पटसत्त्वेपि घट उपलभ्यते यथा च फलसत्त्वेपि तत्कारणं वृक्ष उपलभ्यते यथा वा शरीरस्वभावाज्जायमानस्य नखलोमादेः

न एव विनाशो भावात्? ततो विनाशस्याऽप्रत्यक्षत्वा-
द् भावोप्यऽप्रत्यक्षः स्यात् । अत्यन्तविपरीतस्वभाव-
योश्च भावाभावयोरेकत्वाभिधानं साहसमात्रम् ।

अथापि विनाशो नाम न किं चिद् भिन्नमभिन्नं वा
तत्त्वं तुच्छत्वादिति ?। ततो जातस्य भावस्याऽसति वि-
नाशे नित्यत्वमेव स्यादिति सुसमर्थितः क्षणभङ्गः ।
तस्माद् भिन्नेनापि विनाशेन भावस्योपलब्ध्यादि नि-
रस्यत इत्यऽकामेनाप्यभ्युपगन्तव्यम् ।

---

सत्त्वेपि शरीरमुपलभ्यते तथा विनाशसत्त्वेपि भावः=विनाशप्रतियोग्युपल-
भ्येत भेदस्योभयत्र समानत्वात् । अभेदपक्षेपि विनाशस्योपलभ्यमानत्वात्
प्रतियोगिनोप्युपलब्धिः स्यात्तथा प्रतियोगिकालेपि तद्विनाशोपलब्धिः स्या-
दिति दोषमुपेक्ष्य दोषान्तरमाह-अथेति । विनाशस्याऽप्रत्यक्षत्वात्=अनुप-
लब्धिगम्यत्वात् विनाशाऽभिन्नो भावोप्यऽप्रत्यक्ष एव स्यादित्यर्थः । यद्यपि
विनाशानन्तरं भावस्याऽप्रत्यक्षत्वं मीमांसकस्याप्यभिमतमेव तथापि बौद्धमते
भावतद्विनाशयोरभिन्नत्वे विनाशस्य च स्वाभाविकत्वे भावस्य च स्वहेतुत एव
विनाशस्वभावस्य जायमानत्वस्वीकारेण प्रथमक्षणेपि भावतद्विनाशयोरभेदा-
पत्त्या विनाशस्य चाऽप्रत्यक्षत्वात् प्रथमक्षणेपि भावोऽप्रत्यक्ष एव स्यादिति
भावः । न च प्रथमक्षणे बौद्धस्यापि भावाऽप्रत्यक्षत्वमिष्टम्, पदार्थस्य क्षणि
कत्वेन क्षणान्तरे प्रत्यक्षासम्भवादित्यनुसन्धेयम् । विनाशस्य प्रत्यक्षत्वे च
विनाशे जातेपि तत्प्रतियोगिनः प्रत्यक्षं स्याद्विनाशाभिन्नत्वादित्येष दोषो
विज्ञेयः । अभेदपक्षे प्रतीतिबाधकमाह-अत्यन्तेति ।

ननु भवेद्विनाशस्य भिन्नत्वं वाऽभिन्नत्वं वा यदि विनाशः किमपि
तत्त्वं स्यान्न चैवमस्ति विनाशस्यातितुच्छत्वात्=असत्कल्पत्वादित्याशङ्कते-
अथेति । उत्तरमाह-तत इति । " विनायकं प्रकुर्वाणो रचयामास वानरम् "
इति न्यायात् घटादीनां क्षणभङ्गं निरूपयता त्वया विनाशस्य तुच्छत्वेन नि-
त्यत्वमेव भावानां स्थापितमिति भावः । उपसंहरति-तस्मादिति । घटस्य
मृदादिकं कारणं विनाशस्य च मुसलप्रहारादिरिति हेतुभेदाद्भिन्न एव भा-
वाद्विनाशः । अकामेनेति-यदि विनाशेन स्वप्रतियोग्युपलब्धिर्न निरस्येत

यत्तु प्रतिक्षणमवस्थाभेद इति, भवतु. नैतावता-ऽवस्थावतो भावस्य प्रतिक्षणं विनाशेन भवितव्यं प्रमाणाभावात्, नानाऽवस्थानामपि युगपदेकस्मिन् धर्मिण्यऽविरुद्धानां क्रमेण विरुद्धानां च संभवात्, ततश्च नूतनाद्यवस्थाः क्रमेणानुभूय पुराणावस्थां प्राप्तस्य प्रयत्नरक्षितस्यापि युक्तोऽवयवविश्लेषाद्विनाशः। न च सत्तया दीपदृष्टान्तमात्रेण घटादेरपि क्षणिकत्वम्—सत्तायाः संदिग्धविपक्षव्यतिरेकादऽहेतुत्वात्। प्रतिज्ञा-

---

तदा प्रतियोगी घटादिर्नित्य एव स्यादिति प्रतियोगिभिन्नेनापि विनाशेन प्रतियोग्युपलब्धिर्निरस्यत इति स्वीकार्यं तस्मान्न भावा विनाशस्वभावा इति भावः।

प्रतिक्षणमवस्थाभेदेनक्षणिकत्वशङ्कामुत्थापयति—यत्त्विति। प्रतिक्षणमवस्थाभेदं स्वीकरोति—भवत्विति। अवस्थाभेदेनविनाशस्तु नैव सम्भवतीत्याह—नैतावतेति। अन्यथा—अवस्था हि धर्म एव धर्मिणस्तथाच विनाशेनावस्थावत एव नष्टत्वात् कस्मिन् प्रतिक्षणमवस्थाभेदः स्यादिति ज्ञेयम्। यदुक्तम्—"न चैकस्य घटस्य नानारूपत्वं सम्भवति नानात्वैकत्वयोर्विरोधात्" तत्परिहरति—नानावस्थानामिति, अनेकासामवस्थानामित्यर्थः। अविरुद्धानामिति—यथोत्पत्तिस्थितिसत्त्वगुणित्वादीनां युगपदपि सम्भवोऽविरोधात्। विरुद्धानामिति—यथा नूतनत्वपुराणत्वयोः शीतोष्णत्वयोः स्थितिविनाशयोः क्रमेण सम्भवः परस्परं विरोधात्। स्वाभिप्रायमाह—ततश्चेति। ततः=विरुद्धानामवस्थानां क्रमेण सम्भवात्। किं च यदि प्रतिक्षणं घट उत्पद्यते विनश्यति च तदा प्रतिक्षणं नूतनघटस्योत्पत्त्या जीर्णघटः कदापि नोपलभ्येत कदाचिन्नूतनः उत्पद्यते कदाचिज्जीर्ण इत्यत्र विनिगमनाविरह एव। यदुक्तम्—"भावाः क्षणविनाशिनः सत्त्वात् प्रदीपवत्" इति तत्पराकरोति—नचेति। दीपदृष्टान्तमात्रेण सत्तया घटादेः क्षणिकत्वं न सम्भवति व्यभिचारसन्देहादित्याह—सन्दिग्धेति। विपक्षव्यतिरकस्य=विपक्षाऽवृत्तित्वस्य सन्दिग्धत्वात्—विपक्षे क्षणिकत्वाभाववति स्थायिनि पदार्थे हेतुभूतायाः सत्ताया वृत्तित्वं नास्त्येवेतिनिश्चयाभावात् हेतोश्च विपक्षाऽवृत्तित्वे निश्चिते सत्येव पक्षे साध्यानुमापकत्वं भवति नैवं सत्तायामस्ति स्थायिन्यपि विपक्षे सत्तायाः सम्भवादिति हेतुदोषः। प्रतिज्ञायां दोषमाह—

याश्च प्रत्यभिज्ञाप्रत्यक्षविरोधात् ।

न च सादृश्यात्तदुपपत्तिः-अवयवसामान्याऽसंभवात्, अनुवृत्तं हि सामान्यं भवति न च सर्वक्षणिकवादिनामनुवृत्तं किं चित्संभवति, संभवे वा न सर्वक्षणिकत्वम्, तस्मान्न सर्वभावानां क्षणिकत्वं न तरां शब्दस्य, तस्य ह्यन्तेपि विनाशो नास्ति यतः सूक्ष्मविनाशकल्पना स्यात्, तस्मान्नित्यः शब्दः । प्रयोगश्च भवति- नित्यः शब्दः श्रावणत्वाच्छब्दत्ववत् ।

---

प्रतिज्ञेति, क्षणविनाशिन इति प्रतिज्ञायाः प्रत्यभिज्ञालक्षणप्रत्येणविरोधोस्ति 'स एवायं घटः' इति प्रत्यभिज्ञया घटादीनां स्थायित्वं प्रतिपाद्यते प्रत्यक्षं चानुमानापेक्षया प्रबलमिति न प्रत्यक्षबाधितस्यानुमानस्योदयः संभवतीत्यर्थः ।

ननु घटस्य क्षणिकत्वेप्यऽपरापरघटस्य सदृशस्यैव प्रतिक्षणमुत्पत्त्या सादृश्यमूलेयं प्रत्यभिज्ञा-स एवायं घट इत्याशङ्क्याह-न चेति । तदुपपत्तिः= प्रत्यभिज्ञोपपत्तिः । हेतुमाह-अवयवेति, भूयोऽवयवसामान्यमेव हि सादृश्यं न च तत् क्षणभङ्गवादे सम्भवतीत्यर्थः । एतदेवाह-अनुवृत्तमिति, नित्यस्य हि कस्य चित्पदार्थस्योत्पादविनाशशालिष्वनुवृत्तत्वं सम्भवति भूतभविष्यद्वर्तमानेष्वनुवृत्तमेव च सामान्यं क्षणभङ्गवादे तु पदार्थमात्रस्य क्षणिकत्वान्न किं चिदप्यनुवृत्तं सामान्यं सम्भवतीति कथमवयवसामान्यलक्षणं सादृश्यं सिध्येत येन प्रत्यभिज्ञा सादृश्यमूला स्यात्, त्वया स्वयमपि सादृश्यस्य निराकृतत्वादिति भावः । विपक्षे बाधकमाह-सम्भवे वेति, यद्यस्ति सादृश्यं तदा तस्य भूयोवयवसामान्यरूपत्वं वक्तव्यं सामान्यं च सर्वानुवृत्तमेव भवति सर्वानुवृत्तत्वं च नित्यत्वं विना नोपपद्यते इति न पदार्थमात्रस्य क्षणिकत्वं स्यात्सामान्यस्य नित्यत्वस्वीकारादित्यर्थः । उपसंहरति-तस्मादिति । तस्य= शब्दस्य तु ह्यन्तेपि=कदाचिदपि विनाशो न भवतीति यथा घटादीनामन्ते विनाशित्वादेकदैव विनाशाभावे च प्रतिक्षणं सूक्ष्मविनाशः=जीर्णताऽवस्थान्तरं वा भवति तथापि शब्दे नास्तीति नित्यः शब्दः । अन्यथा घटादिरिव शब्दोपि कदाचिज्जीर्ण उपलभ्येत । अनुमानप्रयोगमाह-नित्य इति । शब्दत्वस्य श्रावणप्रत्यक्षविषयत्वान्नित्यत्वाच्च तद्दृष्टान्तेन शब्दस्यापि नित्यत्वमित्यर्थः ।

न च शब्दत्वं नास्तीति भ्रमितव्यं प्रत्यभिज्ञानात्—अरण्ये हि गच्छन्तोऽश्रुतपूर्वं शब्दविशेषं श्रुत्वा कस्यायं प्राणिनः शब्द इति संदिहन्ते, न च सामान्यदर्शनमन्तरेण विशेषसंशयो घटते। तथाऽवान्तरजातिरपि वर्गतृतीयगकारादिष्वनुवृत्ता ककारादिभ्यो व्यावृत्ता का चिदस्ति। तथा वर्गप्रथमेषु द्वितीयेषु चतुर्थेषु पञ्चमेषु च यथास्वमनुवृत्ताः सन्ति जातयः।

कथमवगम्यते ?। प्रत्यभिज्ञानादेव, तथा हि—कियत्यपि दूरदेशे दकारमुच्चारितं श्रुतवतां गकारादिषु संशयो भवति न चायं संशयो दत्वनिबन्धनो गकारादिष्वभावात्, अतोऽस्ति तृतीयादिष्वनुवृत्तमऽन्येभ्यो व्यावृत्तं रूपं यदुपलम्भादेष संशयः। तथा धकारोच्चारणे भकारादिषु संशयो नान्येषु. तेन चतुर्थेष्वप्यस्ति सामान्यम्, एवं प्रथमेषु द्वितीयेषु पञ्चमेषु च यथास्वं सामान्यानि, तैरेव दृष्टान्तैः शब्दस्य श्रावणत्वहेतुना नित्यत्वानुमानम्।

---

ननु यदि शब्दत्वं किमपि स्यात्तदा तद्दृष्टान्तेन शब्दस्य स्यादपि नित्यत्वं न च तदेवास्तीत्याशङ्क्याह— न चेति। प्रत्यभिज्ञयैव शब्दत्वसिद्धिरस्तीत्याह-प्रत्यभिज्ञानादिति। स्वाभिप्रेतां प्रत्यभिज्ञामुपपादयति—अरण्येति। विपक्षे बाधकमाह— न चेति, यदि शब्दत्वं किमपि सामान्यं न स्यात्तदा सामान्यज्ञानाभावात् 'कस्यायं शब्दः' इत्येवं विशेषरूपे संशयो न स्यात्, तस्मादस्ति शब्दत्वं सामान्यम्। एवं शब्दत्वं महासामान्यमुक्त्वाऽवान्तरसामान्यान्याह—तथेति। जातय इति—ककारादिषु वर्गप्रथमत्वं जातिः, खकारादिषु वर्गद्वितीयत्वम्, गकारादिषु वर्गतृतीयत्वम्, घकारादिषु वर्गचतुर्थत्वम्, ङकारादिषु वर्गपञ्चमत्वं जातिरित्यर्थः।

अवान्तरसामान्येषु प्रमाणं पृच्छति—कथमिति। उत्तरमाह—प्रत्यभिज्ञेति। उपपादयति—तथा हीति। दकारम्=वर्गतृतीयम्। गकारादिषु=वर्गतृतीयेषु। तस्मादस्ति वर्गतृतीयत्वादिकं सामान्यं यदालम्ब्य संशयो जायते

ननु शङ्खादिनादानामनित्यत्वेऽपि श्रावणत्वादनैकान्तिको हेतुः? । न, तेषामपि प्रत्यभिज्ञया नित्यत्वात् । यदि तेषु प्रत्यभिज्ञा नास्ति ततो 'ध्वन्यऽन्यत्वे सति' इति विशेषणादऽव्यभिचारः । यदा चानित्यत्वं ध्वनीनां तदा कार्यस्याऽनाश्रितस्यानुपपत्तेराश्रयभूतेन केनचिद् द्रव्येण भवितव्यम्, तस्य चाऽनेकत्वे प्रमाणाभावादेकत्वे. द्रव्यस्यैकद्रव्याश्रितस्याऽभावाद् द्रव्यान्यत्वे. शब्दस्य संयोगविभागयोरनपेक्षकारणत्वा-

---

इत्यर्थः । तैः=शब्दत्वादिसामान्यैः । अनुमानप्रयोगस्तूक्त एव ।

ननु नित्यत्वाभाववत्यऽनित्येऽपि शङ्खादिनादे श्रावणत्वमस्तीति साध्याभाववति वृत्तित्वाद् व्यभिचारि श्रावणत्वं हेतुरिति न तेन शब्दस्य नित्यत्वं स्यादित्याशङ्कते–नन्विति । परिहरति–नेति । स एवायं शङ्खनाद इति प्रत्यभिज्ञया शङ्खादिनादानामपि नित्यत्वान्न श्रावणत्वस्य व्यभिचारित्वमित्याह–तेषामपीति । पक्षान्तरमाह–यदीति । यदि तेषु=शङ्खादिनादेषु प्रत्यभिज्ञा न भवति तथा चाऽनित्यत्वमस्ति तदा 'शब्दो नित्यः ध्वन्यऽन्यत्वे सति श्रावणत्वात्' इत्येवं वक्तव्यं तथा च शङ्खादिनादेषु श्रावणत्वस्य सत्त्वेऽपि ध्वन्यन्यत्वाभावेन विशेषणाभावप्रयुक्तस्य विशिष्टाभावस्य सत्त्वान्न व्यभिचारित्वमित्याह–तत इति । संप्रति ध्वनीनां गुणत्वं वाय्वाश्रितत्वं च साधयति–यदेति । ध्वनीनामनित्यत्वात् कार्यत्वं प्राप्तं कार्यं चाऽनाश्रितं नैव भवतीति ध्वनिलक्षणकार्यस्याश्रयभूतेनावश्यं केनचिद् द्रव्येण भवितव्यं यथा घटस्याश्रयभूतं द्रव्यं कपालद्वयं तथा, तस्य=ध्वनीनामाश्रयभूतस्य द्रव्यस्याऽनेकत्वे प्रमाणाभावादेकत्वमेव युक्तं लाघवादित्येकत्वे प्राप्ते, इत्यनेन ध्वन्याश्रयस्य द्रव्यत्वमेकत्वं चोक्तम् । आश्रितत्वेऽपि ध्वनीनां किं द्रव्ये वा गुणे वा कर्मणि वान्तर्भाव इत्याशङ्क्य गुणेऽन्तर्भावमाह–द्रव्यस्येति, ध्वन्याश्रयस्य द्रव्यस्यैकत्वमुक्तमेव तत्र यदि ध्वनिरपि द्रव्यं स्यात्तदैकद्रव्याश्रितो न स्याद् द्रव्यस्यानेकद्रव्याश्रितत्वनियमाद् यथा घटोऽनेककपालयोस्तिष्ठति पटश्चानेकतन्तुषु ध्वनिश्चैकद्रव्याश्रित एवेति न द्रव्यमिति द्रव्यान्यत्वे प्राप्ते, तत्रापि कर्मण्यन्तर्भावो किं न स्यादित्याह–शब्दस्येति, शब्दस्य=ध्वनेः संयोगविभागयोरनपेक्षकारणत्वं नास्ति कर्म च तद् भवति यत् संयोगविभा-

भावादऽकर्मत्वे सति पारिशेष्याद् गुणत्वमेव ध्वनीनां भवति ।

तत्र पार्थिवभेर्यादिगुणत्वे तरङ्गाद्याप्यद्रव्यगुणत्वे वा श्रवणप्राप्त्यऽसंभवान्न तद्ग्राह्यत्वं सिध्येत्, तस्मान्न पृथिव्यादिगुणत्वम् । वायुगुणत्वं तु युक्तम्- मुखशङ्खादिसंयोगाद् भेरीदण्डसंयोगादऽन्यतो वा निष्पद्यमाना वायवस्तच्छब्दविशेषगुणका निष्पन्नाः सर्वासु दिक्षु प्रविशमानाः श्रोत्रेण संयुज्यन्ते ततश्च संयुक्तसमवायात्तद्गतः शब्दः श्रोत्रेण गृह्यते। यस्मादेव वायुगुणः शब्दस्तस्माद् यत्कैश्चिदुच्यते-'शब्दलि-

---

गौ मत्यऽन्यानपेक्षं कारणं स्यात् उक्तं च-" एकद्रव्यमगुणं संयोगविभागयोरनपेक्षकारणमिति कर्मलक्षणम् " इति तथा च ध्वनेः संयोगविभागनिरूपितानपेक्षकारणत्वाभावात् किं वा सयोगेत्यादिकर्मलक्षणानाक्रान्तत्वादऽकर्मत्वे=कर्मान्यत्वे प्राप्ते पारिशेष्याद् गुणत्वमेव युक्तमित्यर्थः ।

एवं ध्वनीनां गुणत्वे प्राप्ते पृथिव्यादिषु कस्मिन् समवेतत्वं स्यादित्याशङ्क्य वायुगुणत्वमाह-तत्रेति । पृथ्वीगुणत्वे च सर्वत्र ध्वनेरनुपलब्धेर्भेर्यादिगुणत्वं वक्तव्यं जलगुणत्वे च तरङ्गादिलक्षणजलद्रव्यगुणत्वं वक्तव्यम्. तत्र भेर्यादीनां तरङ्गादीनां च श्रोत्रदेशे प्राप्त्यऽभावात् तद्गुणभूतस्य ध्वनेरपि श्रोत्रदेशे प्राप्तिर्न स्यादिति ध्वनीनां तद्ग्राह्यत्वम्=श्रोत्रग्राह्यत्वं न स्यादित्यर्थः । एवमेव तेजोगुणत्वमपि निराकार्यम् । स्वसिद्धान्तमाह-वायुविति । ध्वनेः श्रवणग्राह्यत्वप्रकारमाह-मुखेति । मुखशङ्खादिसंयोगात् तच्छब्दविशेषगुणकाः=ध्वनिविशेषगुणवन्त एवोत्पन्ना वायवः श्रोत्रेण संयुज्यन्ते श्रोत्रसंयुक्तेषु च वायुषु तद्गुणभूता ध्वनयस्तत्र समवेता इति संयुक्तसमवायात् संनिकर्षात् तद्गतः=वायुगतः शब्दः=ध्वनिः श्रोत्रेण गृह्यते । ध्वनेराकाशगुणत्वं निराकरोति-यस्मादिति । उच्यत इति, तथा हि-" शब्दो विशेषगुणः चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात् स्पर्शवत् शब्दो द्रव्यसमवेतो गुणत्वात्संयोगवदित्यनुमानेन शब्दस्य द्रव्यसमवेतत्वे सिद्धे शब्दो न स्पर्शवद्विशेषगुणोऽग्निसंयोगाऽसमवायिकारणकत्वाभावे सति अकारणगु-

ङ्गमाकाशम्' इति तन्निरस्तम् । वर्णानां तु नित्यानां द्रव्यत्वमेवाङ्गी क्रियते ।

नन्वेषामपि शब्दत्वाद् ध्वनिवद् गुणत्वानुमानमिति चेत्? । न, वर्णा न गुणा ध्वन्यऽन्यत्वे सति श्रावणत्वाच्छब्दत्ववद् दिग्वत् कालवच्चेति प्रतिसाधनसद्भावात् । यथा च दिक्कालयोः श्रावणत्वं तथा प्रागेवोक्तम् । यत्तु स्पर्शविरहित्वे सत्येकेन्द्रियग्राह्यत्वाद्रूपादिवच्छब्दस्य गुणत्वमिष्यते, तस्यापि यथोक्तमेव प्रतिसाधनमित्यास्तां तावत् । तस्माद् ह्यस्तनाद्यतनयोः

---

णपूर्वकप्रत्यक्षत्वात् सुखवत् शब्दो न दिक्कालमनोगुणः विशेषगुणत्वाद्रूपवत् नात्मविशेषगुणो बहिरिन्द्रियग्राह्यत्वात् रूपवत् इत्थं च शब्दाधिकरणं नवमं द्रव्यं गगननामकं सिध्यति " इत्यादि यदुच्यते तदनेन निरस्तं वेदितव्यम् । एवकारस्य वायुगुणशब्देनान्वयः । न चाऽयावद्द्रव्यभावित्वेन वायुगुणत्वाभाव इति वाच्यम्—वायुगुणानां यावद्द्रव्यभावित्वनियमे प्रमाणाभावात् । ध्वन्यभिव्यङ्ग्या वर्णास्तु न गुणाः किं तु द्रव्यभूता एवेत्याह—वर्णानामिति ।

ननु वर्णा गुणाः शब्दत्वाद् ध्वनिवदित्येवमनुमानेन वर्णानामपि गुणत्वं किं न स्यादित्याशङ्कते—नन्विति । एषाम्=वर्णानाम् । परिहरति—नेति । अत्र सत्प्रतिपक्षमाह—वर्णा इति । ननु दिक्कालयोः कथं श्रावणत्वमित्याशङ्क्याह—यथेति । प्रागेवोक्तमिति—"यद्यपि न स्वातन्त्र्येण दिशः श्रोत्रग्राह्यत्वं तथापि शब्दे गृह्यमाणे तद्विशेषणतया दिगपि श्रोत्रेण गृह्यते इति दृष्टत्वादङ्गीक्रियते कालवत् यथा हि कालो न स्वातन्त्र्येणेन्द्रियैर्गृह्यते अथ च विषयेषु स्वेषु गृह्यमाणेषु तद्विशेषणतया सर्वैरपीन्द्रियैर्गृह्यते " (५५४पृ) इत्युक्तम् । ननु शब्दत्वान्मास्तु गुणत्वं वर्णानां तथापि— वर्णा गुणाः स्पर्शरहितत्वे सत्येकेन्द्रियग्राह्यत्वाद्रूपवदित्येवमनुमानेन गुणत्वं भविष्यति तत्रैकेन्द्रियग्राह्यत्वमात्रोक्तौ वायौ व्यभिचारः स्यात् स्पर्शविरहित्वमात्रोक्तावाऽऽकाशे व्यभिचारः स्यादित्युभयदलमुक्तमित्याशङ्कते—यत्त्विति । परिहरति—तस्यापीति, उक्तानुमानस्यापि उक्तेनैव सप्रतिसाधनेन निरासो विज्ञेय इत्यर्थः । स्वाभिप्रायमाह— तस्मादिति ।

प्रत्यभिज्ञानाद्वर्णानां न तावत् प्रत्युच्चारणमन्यत्वम्। एवं चोच्चारणं शब्दस्य न कारणं किं त्वभिव्यञ्जकमिति सिद्धम्। न चोच्चारणादन्यत् कारणं संभवतीत्यऽकार्यत्वम्, अत एवाऽविनाशान्नित्यत्वसिद्धिः। इदमेव हि नित्यत्वम्-यत्स्वरूपसद्भावे सत्युत्पत्तिविनाशरहितत्वम्॥

---

गकाराद्योरिति शेषः। शब्दस्य नित्यत्वे सिद्धे उच्चारणस्य तदभिव्यञ्जकत्वमाह-एवं चेति। ननूच्चारणादन्यत् किमपि शब्दस्य कारणं भविष्यतीत्याशङ्क्याह- न चेति। अत एव=अकार्यत्वादेव। यतो नोत्पत्तिविनाशावऽतो नित्यत्वं शब्दस्य सिद्धम्। नित्यत्वलक्षणमाह-इदमेवेति। स्वरूपसद्भावे उत्पत्तिविनाशरहितत्वं च वर्णेष्वप्यस्त्येवेति सिद्धं नित्यत्वमित्यर्थः॥

॥ इति षष्ठं शब्दनित्यताधिकरणं समाप्तम्॥

॥ श्रीः॥

( सप्तमं वेदस्यार्थप्रत्यायकताधिकरणम् )

# ७— उत्पत्तौ वाऽवचनाः स्युरर्थ-स्याऽतन्निमित्तत्वात् ॥२४॥

यद्यपि पदपदार्थसंबन्धस्यापौरुषेयत्वाद् वृद्धव्यवहारादेवार्थावगतिः सिध्यति तथापि वाक्यार्थरूपे

---

एवं शब्दस्य शब्दार्थसम्बन्धस्य च नित्यत्वेपि वाक्यार्थप्रत्ययानुपपत्तेर्न चोदना धर्मे प्रमाणमित्याक्षिपति–उत्पत्ताविति । उत्पत्तौ=ऽौत्पत्तिकत्वेपि नित्यत्वेपीत्यर्थः । शब्दस्य शब्दार्थसम्बन्धस्य चेति शेषः । व्याख्यातं च—" प्रकृतानां शब्दार्थसम्बन्धानामौत्पत्तिकत्वेपि वेदवाक्यार्थस्य धर्मस्याऽवचनाः=अप्रतिपादकाः=अप्रमाणमिति यावत्, वर्णपदादीनां प्रत्येकसमुदायविकल्पितानां वाक्यार्थप्रत्ययं प्रति हेतुभावाऽनुपपत्तेः, न च पदार्थानां तन्निमित्तभावोऽसम्बन्धात् तदिदमुक्तम्–" अर्थस्यातन्निमित्तत्वात् " इति। " इति न्यायरत्नाकरे । वेदवाक्यं वेदवाक्यार्थस्य धर्मस्यावचनमऽप्रतिपादकं पदार्थमात्रैर्गृहीतसम्बन्धानां पदानां वाक्यार्थप्रतीतिकारणत्वाऽसम्भवात्, वाक्यस्य तु शक्तिरेव न गृह्यते येन वाक्यस्यार्थप्रतिपादकत्वं स्यादित्यर्थस्यातन्निमित्तत्वम्–चोदनालक्षणवाक्याऽहेतुकत्वं प्राप्तमिति भावः । अवचना इति चोदनानां विशेषणम् । रामेश्वरोपाध्यायस्य त्वत्र सूत्रे "वा ऽवचनाः" इत्यत्र " वा रचनाः " इति पाठोभिमतः । पूर्वपक्षसूत्रमिदम् । तथा च वार्तिकम्—

" पदार्थपदसम्बन्धनित्यत्वे साधितेपि वः ।
नैव वेदप्रमाणत्वं वाक्यार्थं प्रति सिध्यति ॥" इति ।

अधिकरणार्थं स्वयं व्याचष्टे–यद्यपीत्यादिना । पदपदार्थयोः सम्बन्धस्यापौरुषेयत्वात्=अपौरुषेयत्वेपि नित्यत्वेप्यर्थस्यावगतिः=सङ्केतग्रहणं वृद्धव्यवहारादेव भवतीति सङ्केतग्रहद्वारा पदेभ्यः पदार्थावगतिस्तु सम्भवति तथापि वाक्यार्थेन सह सङ्केतग्रहाभावात् पुरुषसङ्केतानपेक्षत्वाच्च वाक्यार्था-

---

१ अस्मिन्नधिकरणे एतत्सूत्राग्रे द्वे सूत्रे स्तस्तथाहि–"तद्भूतानां क्रियार्थेन समाम्नायोर्थस्य तन्निमित्तत्वात् २५। लोके संनियमनात्प्रयोगसंनिकर्षः स्यात् २६।" इति।

धर्मे पुरुषसंकेतानपेक्षत्वान्न किं चिन्मूलं संभवतीत्य-ऽप्रामाण्यं धर्मे चोदनायाः।

तथा हि- प्रत्येकं वा पदानि वाक्यार्थमवगमयेयु-स्तत्संघातो वाक्यं वा पदार्था वा ?, न तावत् प्रत्येकं पदेभ्यो वाक्यार्थप्रतीतिर्दृश्यते, न पदानां वाक्यार्थ-विशेषैः संबन्धग्रहणमस्ति न च संभवत्यऽनन्तत्वा-द्वाक्यार्थानाम्, । वेदार्थस्य च प्रमाणान्तरागोचरत्वात् तेन संबन्धग्रहणमत्यन्तासंभाव्यम्, । अनन्तवाक्यार्थ-साधारणत्वाच्च पदार्थानां प्रत्येकं वाक्यार्थविशेषप्र-

---

वगतिर्न संभवति धर्मश्च वाक्यार्थरूप एव तत्राप्यलौकिक इति न तत्र पुरु-षसङ्केतसंभावनेति धर्मस्य पुरुषसङ्केतानपेक्षत्वात्=पुरुषसङ्केताऽगोचरत्वात् न किं चिदपि मूलमस्ति येन सङ्केतग्रहद्वारा चोदनानां धर्मे प्रामाण्यं स्यादित्यर्थः।

संक्षेपेणोक्तमेव वाक्यार्थप्रतीत्यनुपपत्तिमुपपादयति-तथा हीत्यादिना । त्रिधा विकल्पयति पदानीति। प्रथमकल्पं पराकरोति-न तावदिति। प्रत्येकपदा-द्वाक्यार्थप्रतीत्यभावे हेतुमाह-नेति। अर्थप्रतीतौ संबन्धग्रहस्य हेतुत्वात् पदानां च वाक्यार्थेन सह संबन्धग्रहाभावादित्यर्थः। वाक्यार्थैः संबन्धग्रहासंभवमाह-न च संभवतीति । हेतुमाह-अनन्तत्वादिति । प्रकृते दोषाधिक्यमाह-वेदार्थस्येति, धर्मस्येत्यर्थः। लौकिकवाक्यार्थस्य तु प्रमाणान्तराऽगोचरत्वं नास्ति वेदवाक्यस्य तु प्रमाणान्तरागोचरत्वमपीत्यऽनन्तत्वं प्रमाणान्तरागोचरत्वं चेत्युभयं संबन्धग्र-हप्रतिकूलं प्रमाणान्तरगोचरे एव संबन्धग्रहसंभवात् । किं चैकेनैव पदेन वा-क्यार्थप्रतीतावन्येषां पदानामानर्थक्यमपि स्यात्, तत्रापि केन पदेन वाक्यार्थ-प्रतीतिः स्यादिति विनिगमनाविरहः स्यादिति ज्ञेयम्। न चापि वाक्येन वाक्या-र्थप्रतीतिः संभवति वाक्यानां वाक्यार्थैः सह संबन्धग्रहाभावात्। तृतीयकल्पेपि प्रत्येकं पदार्थानां वाक्यार्थप्रत्यायकत्वं वा पदसंघातवाक्यपदार्थानाम्=पदा-र्थसमुदायस्य वेति विकल्प्य प्रथमं पराकरोति-अनन्तेति । प्रत्येकं पदार्था-नामनन्तवाक्यार्थसाधारणत्वाद्वाक्यार्थविशेषप्रतिपादनमनुपपन्नमेवेत्यन्वयः, अ-न्यथा साधारणत्वं न स्यात्. असाधारणत्वे चान्यवाक्यजन्यप्रतीतिविषयत्वं न स्यात् । तृतीयकल्पस्य द्वितीयपक्षे दोषमाह-अगृहीतेति, यद्यपि पदसं-

तिपादनमनुपपन्नम्, अगृहीतसंबन्धत्वादेव च पदसंघातवाक्यपदार्थानामपि न संभवति प्रत्यायकत्वम्। नचागृहीतसंबन्धः शब्दोऽर्थं प्रत्याययति–बालानामप्रतीतेः, प्रतीतौ व्युत्पत्तिवैयर्थ्याच्च।

[1]यद्यपि पदमज्ञातसंबन्धं न प्रत्यायकं तथापि पदसंघातो वा पूर्वपूर्ववर्णजनितसंस्कारसहितो वाक्यान्त्यवर्णो वा निरवयवो वाक्यस्फोटो वा संबन्धग्रहणाऽनपेक्ष एव वाक्यार्थं प्रत्याययिष्यतीति चेत्? । न, अव्युत्पन्नानामपि प्रसङ्गात्, व्युत्पत्तिवैयर्थ्यप्रसङ्गाच्चेत्युक्तम्। अथ पदार्थवेदनमपि वाक्यार्थप्रतीतावङ्गमतस्तद्रहितानामऽप्रतीतिर्न दोषः, व्युत्पत्तिश्च पदार्था-

---

घातवाक्यपदार्थानां तद्वाक्यार्थेनैव संबन्धात्साधारणत्वं नास्ति तथापि तेषामपि वाक्यार्थेन सह संबन्धग्रहो नास्तीत्युक्तम्–अगृहीतेति। अगृहीतसंबन्धस्यैव शब्दस्यार्थप्रत्यायकत्वं किं न स्यादित्याशङ्क्याह–न चेति। हेतुमाह–बालानामिति। विपक्षे बाधकमाह–प्रतीताविति। विनापि संबन्धग्रहमर्थप्रतीतिस्वीकारे व्युत्पत्तेः=शक्तिग्रहस्य वैयर्थ्यमेव स्यात्। यद्यप्यत्र वाक्याद्वाक्यार्थप्रतीतिरूपस्य द्वितीयकल्पस्य ग्रन्थकृता प्राधान्येन पराकृतिर्न कृता तथापि तस्य "न चागृहीतसंबन्धः शब्दः" इत्यनेन पराकृतिर्विज्ञेया, अत्र च पक्षे "शब्दः" इत्यस्य वाक्यमित्यर्थो ज्ञेयः। किं वाग्रिमग्रन्थेन पराकृतिर्विज्ञेयेत्यनुसन्धेयम्।

ननु संबन्धग्रहणसापेक्षत्वादेवाऽप्रत्यायकत्वमुच्यते तत्रार्थप्रत्यायकत्वे पदानामेव संबन्धग्रहणसापेक्षत्वमस्ति न तु वाक्यस्य वाक्यान्त्यवर्णस्य वाक्यस्फोटस्य चेति वाक्यादीनामेव वाक्यार्थप्रत्यायकत्वमस्त्वित्याशङ्कते–यद्यपीति। परिहरति–नेति। उक्तमेव दोषं स्मारयति–अव्युत्पन्नानामिति–अगृहीतसंबन्धानामपीत्यर्थः। प्रसङ्गात्=वाक्यार्थप्रतीतिप्रसङ्गात्। प्रतीतौ दोषमाह–व्युत्पत्तीति। ननु पदार्थप्रतीतौ सत्यामेव वाक्यार्थप्रतीतिदर्शनाद्वाक्यार्थप्रतीतेः पदार्थप्रतीतिरङ्गमस्तीति पदानां पदार्थैः संबन्धग्रहाभावात्तद्रहितानाम्=पदार्थप्रतीतिराहितानां वाक्यार्थाप्रतीतिर्न दोषोऽङ्गाभावात्, अत एव व्युत्पत्तिः=संबन्धग्रहोपि न व्यर्थस्तस्य वाक्यार्थप्रतीत्यङ्गभूतपदार्थप्रतीतिं प्रति कारणत्वा-

नां नाऽनर्थिकेत्युच्यते ?, तदयुक्तम्-यदि हि पदेभ्यो-ऽर्थान्तरभूतं वाक्यं पदार्थव्यतिरिक्तं वाक्यार्थं साक्षा-देव वाचकतया प्रतिपादयति कस्तदा पदार्थवेदनस्यो-पयोगः ? तदनुपयोगे च पदार्थव्युत्पत्तिरनर्थिका वा-क्यार्थं प्रतिपित्सताम्, न च पदार्थाद्वाक्यार्थावगतिः-असंबन्धात् ।

ननु सामान्यं पदार्थो विशेषो वाक्यार्थः संबन्धश्च सामान्यविशेषलक्षणः ?। सत्यम्-नियतविशेषावगति-स्तु न सिध्यति सर्वविशेषसाधारणत्वात्सामान्यस्य. ततश्च गामानयेति पदावगतमानयनसामान्यं विशेषा-

---

दित्याशङ्कते-अथेति । परिहरति-तदयुक्तमिति । यदि पदेभ्यो वाक्यस्य पदा-र्थेभ्यो वाक्यार्थस्य च भेदस्तथा साक्षादेव=पदार्थोपस्थितिमनपेक्ष्यैव वाक्यं वाक्यार्थं प्रत्याययति तदा पदार्थवेदनस्य=पदार्थोपस्थितेरनुपयोग एव प्राप्तो न हि घटज्ञानं प्रति-पटोपस्थितेरपेक्षा भवति तद्वत्, पदार्थोपस्थितेश्चानुपयोगे पदार्थोपस्थितिकारणीभूतायाः पदार्थव्युत्पत्तेरप्यानर्थक्यमेव स्यात् । तृती-यकल्पं निराकृतमपि पुनः स्मारयति- न चेति ।

ननु यदुक्तम्-" न च पदार्थाद्वाक्यार्थावगतिरसंबन्धात् " इति तन्न युक्तम्-संबन्धस्य सत्त्वादेव, तथा हि-पदार्थानामनन्तवाक्यार्थसाधारणत्वात् सामान्यत्वमऽनन्तवाक्यार्थेषु गवादीनामानयनादीनां च पदार्थानामन्वयित्वात्, वाक्यार्थस्य चाऽसाधारणत्वाद्विशेषत्वं वाक्यार्थान्तरेऽन्वयित्वाभावात् संब-न्धश्चात्र तयोः पदार्थवाक्यार्थयोः सामान्यविशेषात्मक एव सामान्यरूपाणामु-पस्थितानां पदार्थानां विशेषरूपवाक्यार्थप्रत्यायकत्वसंभवादिति पदार्थाद्वा-क्यार्थावगतिः किं न स्यादित्याशङ्कते-नन्विति । किं चिदनुमत्या परिहरति-सत्यमिति । सत्यम्-सामान्यं पदार्थो विशेषो वाक्यार्थः संबन्धश्च सामान्य-विशेषलक्षणस्तथापि नियतविशेषस्य=तद्विशेषस्यावगतिः=बोधो नैव सिध्येत सामान्यस्य सर्वविशेषसाधारणात्-तद्विशेषाऽसाधारणत्वाभावात्, न हि मनु-ष्यत्वस्य सामान्यत्वेन किं चिद्विशेषसापेक्षत्वेपि ब्राह्मणाऽसाधारणत्वम-स्ति सकलविशेषजातिसाधारणत्वात्तद्वत् । नियतविशेषावगत्यभावे दोषमाह-

चेपोन्मुखमपि न गोरेवानयनमाक्षिपेत्, ततश्च न गोरेवानयनं प्रतीयेत। न चाकाङ्क्षासंनिधियोग्यत्वैर्नियमः, सत्स्वपि तेष्वदर्शनात्, न हि प्रत्यक्षेण गामुपलभ्य 'कस्येयम्' इति जिज्ञासमानः संनिहितमपि देवदत्तं स्वामिनमध्यवस्यति, तस्मान्निर्मूलो वाक्यार्थः साङ्केतिकः। न च वेदे सङ्केतयितास्तीत्यप्रामाण्यम्।

अथ वा वेदवाक्यानामपि पौरुषेयत्वमाश्रित्य पुरुष-

---

ततश्चेति। आनयनसामान्यस्य यद्यप्यानयविशेष एव पर्यवसानं तथाप्यानयनविशेषाणामश्वादिकर्मकाऽऽनयनानामनन्तत्वात् कथं गोकर्मकानयने एव पर्यवसानं स्यादित्यर्थः, तथा च गामानयेति वाक्यादपि न गोकर्मकानयनं नियमेन प्रतीयेतेत्याह–ततश्च नेति।

ननु शब्दस्यार्थं प्रतिपादयत आकाङ्क्षासंनिधियोग्यत्वानि सहकारीणीत्याकाङ्क्षादिवशान्नियमः=नियमेन गोकर्मकस्यैवानयनस्य प्रतीतिर्भविष्यति, तथा हि–आनयनस्य स्वकर्माकाङ्क्षास्ति तत्र गोपद संनिधिवशाद् गोरेवान्वयो भविष्यति योग्यश्चेति संभवति गामानयेति वाक्येन नियमेन गोकर्मकानयनस्य प्रतीतिरित्याशङ्क्याह–न चेति। परिहारहेतुमाह–सत्स्वपीति, सांनिध्यादिसत्त्वेपि नियमेन तत्प्रतीत्यदर्शनादित्यर्थः। प्रतीत्यभावमुदाहरति–नहीति। यदि सांनिध्येनान्वयः स्यात्तदा कस्येयं गौरिति जिज्ञासायां सत्यां गोसमीपे च वर्तमाने सति देवदत्ते तत्र संनिहितस्य देवदत्तस्य स्वामित्वेनान्वये जाते देवदत्तस्येयमिति बोधः स्यात्तेन च जिज्ञासाप्युपशाम्येत न चैवं भवतीत्यर्थः। तथा च न सांनिध्यादिवशान्नियमेन तद्विशेषप्रतीतिः संभवतीति भावः। उपसंहरति–तस्मादिति। यस्मान्न वाक्यार्थबोधं प्रति पदादीनां कारणत्वं संभवति तस्माद्वाक्यार्थो निर्मूलः=अकारणक इति प्रमाणान्तरागोचरः सन् साङ्केतिकः=सङ्केतमूलक एव स्यात्, साङ्केतिकत्वमपि लौकिकवाक्यार्थस्य संभवति सङ्केतयितुः पुरुषविशेषस्य संभवाद् वेदवाक्ये तु तदपि न संभवति मीमांसकमते सङ्केतयितुरीश्वरस्यानङ्गीकारात्, तथा चवेदवाक्यस्याप्रामाण्यमेवेत्याह–नचेति।

यदि वेदवाक्यानामप्रामाण्यं नाभिमतं तदा पौरुषेयत्वमङ्गीकर्तव्यम्, तथा च वेदपुरुषस्येश्वरस्य प्रामाण्यात्=आप्तत्वाद्वेदवाक्यानामपि प्रामाण्यं

प्रामाण्यादेव प्रामाण्यमङ्गीकर्तव्यम् । युक्तं च सर्ववाक्यानां पौरुषेयत्वदर्शनादेव वेदवाक्यानामपि पौरुषेयत्वम् । अथ पुरुषाणामीदृशेर्थे प्रामाण्यं न संभवति ?, ततोऽप्रामाण्यमेवास्तु न त्वनपेक्षं प्रामाण्यं सिध्यतीति पूर्वः पक्षः ।

अत्र केचिदाहुः—

वाक्येनैव हि वाक्यार्थः साक्षादेवाभिधीयते ।
उपलक्षणतश्चास्य संबन्धग्रहसम्भवः ॥
वाक्यं गोपदयुक्तं यत् तत्-सास्नादिमदन्वितम्- ।
वाक्यार्थं वदतीत्येवं व्युत्पत्तिः सुकरैव हि ॥

---

स्यादेवेत्याह—अथ वेति । अस्मिन् पक्षे स्वसंमतिमाह—युक्तं चेति । वेदवाक्य पौरुषेयं वाक्यत्वाद् भारतादिवदित्यर्थः । नन्वऽलौकिके वेदवाक्यार्थे पुरुषस्य प्रामाण्यम्=उपदेष्टृत्वं किं वा पुरुषाधीनं प्रामाण्यं न संभवतीत्याशङ्कते—अथेति । उत्तरमाह— तत इति । स्वाभिप्रायमाह—न त्विति । अनपेक्षम्=मूलपुरुषानपेक्षम् । वेदस्याऽप्रामाण्यपौरुषेयत्वयोरन्यतरदवश्यं स्वीकार्यमित्यर्थः ।

इत्येवं पूर्वपक्षमुपपाद्य तत्र यदुक्तम्—'न पदानां न वा पदार्थानां न च वाक्यस्य वाक्यार्थप्रतिपादकत्वं सम्भवति' इति तस्य 'वाक्यास्य वाक्यार्थेन शक्तिग्रहसम्भवाद्वाक्यार्थप्रतिपादकत्वं सम्भवति' इति वैयाकरणमतेन पद्याभ्यां परिहरन्नाह—वाक्येनेति । वाक्येनैव साक्षात्=पदार्थोपस्थितिमनपेक्ष्य वाक्यार्थः प्रतिपाद्यते वाक्यादेव वाक्यार्थप्रतीतिदर्शनात्, अस्य=वाक्यस्य । अत्र च वाक्यवाक्यार्थयोः सम्बन्धग्रहणमप्युपलक्षणतः सम्भवत्येव । उपलक्षणस्वरूपमाह—वाक्यमिति, यद् यद्वाक्यं गोपदयुक्तं तत्तद्वाक्यं सास्नादिमदान्वितं वाक्यार्थं प्रतिपादयतीत्येवमुपलक्षणतो व्युत्पत्तिः=वाक्यवाक्यार्थयोः संबन्धग्रहः सुकरः=सुशक एवेत्यर्थः । वाक्यपदीयेप्युक्तम्—

" अविभक्तेपि वाक्यार्थे शक्तिभेदादपोद्धृते ।
वाक्यान्तरविभागेन यथोक्तं न विरुध्यते ॥
यथैवैकस्य गन्धस्य भेदेन परिकल्पना ।
पुष्पादिषु, तथा वाक्येष्वर्थभेदोऽभिधीयते ॥

सत्यम्–व्युत्पत्तिरेवं स्यात् तथापि तु न वाक्यतः।
वाक्यार्थावगतिर्युक्ता तिरोभावेपि दर्शनात्॥
पूर्वभागेषु वाक्यस्य विस्मृतेष्वपि दृश्यते।
वाक्यार्थावगतिः पुंसां पदार्थस्मृतिशालिनाम्॥

यथैव विस्मृतपूर्ववर्णानामन्तिमवर्णमात्रान्न पदार्थावगतिर्भवति तथैव वाक्यावयवेषु पूर्वपदेषु विस्मृतेषु वाक्यार्थावगतिर्न स्यात्। दृश्यते हि विस्मृतपूर्वपदा-

---

अर्थस्वरूपे शब्दानां स्वरूपाद् वृत्तिरिष्यते।
वाक्यरूपस्य वाक्यार्थे वृत्तिरन्यानपेक्षया॥
वाक्यस्यार्थात् पदार्थानामपोद्धारे प्रकल्पिते।
शब्दान्तरेण सम्बन्धः कस्यैकस्योपपद्यते ?॥
यच्चाप्येकं पदं दृष्टं चरितास्तिक्रियं क्वचित्।
तद्वाक्यान्तरमेवाहुर्न तदन्येन युज्यते॥" इत्यादि।

उक्तं वाक्यस्य वाक्यार्थप्रतिपादकत्वं पद्याभ्यां परिहरति–सत्यमिति। सत्यमेवम्=उपलक्षणतो वाक्यवाक्यार्थयोः सम्बन्धग्रहः सम्भवति तथापि वाक्येन वाक्यार्थस्यावगतिर्न युज्यते। अत्र हेतुमाह–तिरोभावेति। एतदेवविशदयति–पूर्वभागेति, वाक्यपूर्वभागस्य तिरोभावेपि=विस्मृतावपि पदार्थस्मृतिशालिनां पुरुषाणां वाक्यार्थबोधो दृश्यते यदि वाक्यस्यैव वाक्यार्थबोधकत्वं स्यात्तदा वाक्यपूर्वभागविस्मृतौ कथमपि वाक्यार्थबोधो न स्यात्, भवति च पदार्थस्मृतिशालिनामिति स्मृतानां पदार्थानामेव वाक्यार्थबोधजनकत्वं निश्चीयत इत्यर्थः। उक्तं च वार्तिकेपि—

" पदार्थानां च सामर्थ्यं गम्यमानपन्हुतम्।
आनन्तर्याद्धि वाक्यार्थस्तद्धेतुत्वं न मुञ्चति॥" इति।

स्वयं व्याचष्टे–यथैवेति। विस्मृतपूर्ववर्णानां जनानामन्तिमवर्णान्न पदार्थावगतिर्भवतीति तत्र पदस्यैव पदार्थोपस्थापकत्वं युक्तं नैवं वाक्येऽस्ति विस्मृतपूर्वपदानां जनानां संपूर्णवाक्यस्मृत्यभावेपि वाक्यार्थप्रतीतेर्दर्शनादिति न वाक्यस्य वाक्यार्थबोधं प्रति हेतुत्वं किं तु पदार्थानामेव स्मृतानामुपस्थितानामित्यर्थः। न स्यादित्यन्ते 'यद्यन्वयव्यतिरेकाभ्यां पदार्थावगतिं प्रतिं

नामपि दीर्घतमेषु वाक्येषु वाक्यार्थावगतिः । न च स्वरूपेण विस्मृतेपि स्मर्यमाणपदार्थवशादेव तद्वाचिपदयोगितां वाक्यस्यानुमाय ततो वाक्यार्थावगतिरिति वक्तुं युक्तम्, अस्यां प्रणाड्यां प्रमाणाभावात् । अनुसन्धीयमानैरेव हि पदार्थैः साक्षादेव हि वाक्यार्थप्रतीतिसंभवे को नामेदृशीं कल्पनामवलम्बते । संभवति च पदार्थेभ्यो वाक्यार्थावगतिरिति वक्ष्यामः ।

येप्याऽऽकाङ्क्षितसंनिहितयोग्यार्थान्तरान्वितस्वार्थाभिधायीनि पदान्येव वाक्यार्थप्रतीतिनिमित्तमिति ब्रुवते, तेषामपि विस्मृतेषु केषु चित्पदेषु वाक्यार्थावग-

---

पदस्येव वाक्यार्थावगतिं प्रति वाक्यस्य कारणत्वं स्यात्' इति शेषः । यदि वाक्यस्यैव कारणत्वं स्यात्तदा वाक्यावयवविस्मृत्या वाक्याभावे जेते वाक्यार्थप्रतीतिर्नस्यादेव न चैवमस्ति तत्रापि वाक्यार्थप्रतीतिदर्शनादिति भावः । एतदेवाह—दृश्यते हीति ।

ननु स्वरूपेण विस्मृतेपि वाक्यपूर्वभागे स्मर्यमाणपदार्थवशादेव तद्वाचिपदयोगिताम्=स्मर्यमाणपदार्थवाचकपदयुक्ततां वाक्यस्यानुमाय तदनन्तरं वाक्ये संपूर्णे जाते तेन संपूर्णेन वाक्येनैव वाक्यार्थावगतिस्तत्र भवतीति न व्यभिचार इत्याशङ्क्याह—न चेति । परिहारे गौरवं हेतुमाह—अस्यामिति, स्मर्यमाणपदार्थवशात् तद्वाचकपदस्मरणं तेषां च पदानां वाक्यघटकत्वानुमानं ततः संपूर्णवाक्यस्मरणं ततो वाक्यार्थबोध इति प्रणड्याम् । किं च वाक्येन सम्पूर्णार्थप्रतीतौ सत्यामेव तेन हेतुना वाक्यस्य तद्वाचकपदयोगिताऽनुमेयेति प्रथममेव वाक्येन सम्पूर्णार्थप्रतीतौ जातायां तद्वाचकपदयोगितानुमानमपार्थकमेव । सम्पूर्णार्थाऽप्रतीतौ च हेतुभूतायास्तत्पदार्थस्मृतेस्तत्राभावात् स्वरूपासिद्धरेव स्यादिति ज्ञेयम् । स्वसिद्धान्तमाह—अनुसन्धीयेति । पदार्थैरेवेत्यन्वयः । कल्पनाम्=उक्तां प्रणाडीम् । वक्ष्यमाणामुपपत्तिं सूचयति—सम्भवतीति ।

परिहारायाऽन्विताभिधानवादमुपस्थापयति—ये पीति । उक्तमेव दूषणमत्राप्यतिदिशति=तेषामपीति । भवति च वाक्यैकदेशभूतेषु केषुचित् पदेषु विस्मृतेष्वपि वाक्यार्थबोध इति न वाक्यार्थबोधं प्रति पदानां कारणत्वं किं

तिर्न स्यादिति तुल्यमेव दूषणम्। किं चैवं वादिनां प्रतिपदं वाक्यभेदः स्यात् न क्वचिदेकवाक्यता सिध्येत्—गामानयेति गोपदमानयनकर्मभूतां गां प्रतिपादयति तथाऽऽनयतिरपि गोकर्मकमानयनं तयोश्च भेदाद् भिन्न एव वाक्ये स्याताम्।

अथान्वितभेदे सत्यप्येकस्यैवान्वितस्य प्रधानभूत-

---

तु स्मृतानां पदार्थानामेव। दोषान्तरमाह—किं चेति, प्रतिपदं वाक्यर्थप्रतीतिपर्यवसानात् प्रतिपदं वाक्यभेदेन क्वचिदपि पदसमूहस्यैकवाक्यता न स्यादित्यर्थः। प्रतिपदं वाक्यभेदमुदाहरति—गामानयेति। गामानयेत्येकवाक्येपि गामित्येकं वाक्यं स्यात्—आनयनान्वितगोरभिधानात्, आनयेत्येकं वाक्यं स्यात्—गवान्वितानयनाभिधानात्। आनयनमित्यन्तेपि "प्रतिपादयति" इत्यस्यान्वयः। तयोरिति—आनयनकर्मभूतायाः=आनयनान्विताया गोः गोकर्मकस्य=गवान्वितस्याऽऽनयनस्य च परस्परं भेदात् वाक्यभेदः स्यादेव। उक्तं चैतन्मतमुपक्रम्य न्यायरत्नमालायाम्—"अन्विताभिधायि हि पदम्, अन्यच्च गवान्वितादानयनादश्वान्वितमानयनं तत्कथमत्र सम्बन्धग्रहणमऽव्यभिचारो वा ?। तदुच्यते—

संनिध्यपेक्षायोग्यत्वैरुपलक्षणलाभतः।
आनन्त्येप्यन्वितानां स्यात् सम्बन्धग्रहणं मम॥

आकाङ्क्षितं संनिहितं योग्यं च पदार्थान्तरं तेनान्वितं स्वार्थमभिदधाति पदानीत्येकेनैवोपलक्षणेनाऽनन्तानामपि(पदार्थानाम्)वाच्यत्वं सुज्ञानमेव।

प्रमाणान्तरविज्ञातैः पदार्थैर्न हि दृश्यते।
वाक्यार्थवेदनं शब्दप्रतीतेः कारणं त्वथ॥
शक्तित्रयं प्रकल्प्यं स्यात् पदानामर्थगोचरा।
अर्थानामन्विते शक्तिस्तदाधायकता पदे॥

वरमेकैव पदानामन्वितगोचरा शक्तिरभ्युपगता तस्मात् पदान्येवान्विताभिधायीनि वाक्यार्थस्य प्रमाणम्।" इत्यादि तत् तत्रैव विस्तरतो द्रष्टव्यम्।

नन्वन्वितानां पदार्थानां भेदेप्येकस्यैवान्वितपदार्थस्य प्राधान्यात् प्रयोजनस्य चैकत्वादेकमेव वाक्यं भवति यथा गामानयेत्यत्र गोकर्मकानयनस्यै-

त्वात् प्रयोजनैकत्ववशेन वाक्यैकत्वमुच्यते ?। तदयुक्तम्- नह्यनेकं विशिष्टं प्रतिपादयतां प्रयोजनैकत्वमात्रेणैकवाक्यता भवति, यदि स्यात्? 'यजेत स्वर्गः फलं पशुर्हविरग्निर्देवता' इत्यत्राप्येकवाक्यता स्यात्- सर्वेषां द्रव्यदेवताफलविशिष्टयागानुष्ठानप्रयोजनत्वात्! तथा "दर्शपूर्णमासाभ्यां यजेत" इत्यस्य "समिधो यजति" इत्यादिभिरेकप्रयोजनत्वाद्वाक्यैकत्वं स्यात् ।

नन्विष्टमेवैकवाक्यत्वम्, यथा वक्ष्यति-"तद्वाक्यं हि तदर्थत्वात्" इति, भाष्यकारोपि-"वाक्यं ह्येकं दर्शपूर्णमासाभ्यां सह धर्माणाम्" इति?। सत्यम्, प्र-

---

व प्राधान्यात्तेनैव प्रयोजनाच्च गवान्वितानयनस्यैव प्राधान्येन प्रतीतिविषयत्वादेकवाक्यता तथा च न प्रतिपदं वाक्यभेद इत्याशङ्कते-अथेति । परिहरति-तदयुक्तमिति । यदा ह्यनेकं विशिष्टं प्रतिपादनीयं विशिष्टमेव च वाक्यार्थ इति तदा तद्भेदात् प्रयोजनैकत्वेपि प्रतिपदं वाक्यभेदः स्यादेव प्रत्येकपदेन विशिष्टार्थप्रतिपादनादित्याह- न हीति । विपक्षे बाधकमाह-यदीति । यद्यपि "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादिवाक्यानामस्त्येवैकवाक्यता तथापि यागः स्वर्गः फलमित्यादिपदार्थानां तु नास्त्येवैकवाक्यता प्रत्यक्षभूता पृथक् पृथगेव स्वार्थाभिधानप्रवृत्तत्वादिति भावः । तव मते तु प्रयोजनस्यैक्यादेकवाक्यता स्यादेवेत्याह-सर्वेषामिति । उदाहरणान्तरमाह-तथेति । समिदादिप्रयाजविशिष्टदर्शपूर्णमासयोरेकस्वर्गप्रयोजनकत्वादत्रैकवाक्यता स्यादित्यर्थः । यद्यप्यस्त्येवैकवाक्यता प्रकरणवशात्तथापि प्रत्यक्षा नास्तीति प्रत्यक्षैकवाक्यता स्यादित्याक्षेपाभिप्रायः ।

अङ्गप्रधानयोरेकवाक्यतायामिष्टापत्तिमाह-नन्विति । अत्र तृतीयाध्यायसप्तमपादीयचतुर्थसूत्रं प्रमाणयति-तद्वाक्यमिति । सूत्रपाठस्तु-" न तद्वाक्यं हि तदर्थत्वात्" इत्येवं संपूर्णः । उक्तसूत्रस्य भाष्यमपि प्रमाणयति-वाक्यमिति । तस्माद् युक्तं प्रयोजनैकत्वेनैकवाक्यत्वमित्यर्थः । परिहरति-सत्यमिति । सत्यं तत्राङ्गप्रधानयोरेकवाक्यत्वं किं तु प्रकरणेनानुमेयमस्ति न तु प्रत्यक्षमेकवाक्यत्वम्, यदि प्रत्यक्षमेवैकवाक्यत्वं स्यात्तदा धर्माणां वाक्येनैव

करणानुमेयं तु तत्रैकवाक्यत्वं न प्रत्यक्षम्, अन्यथा वाक्यविनियोऽयत्वापत्तेः। एवं गामानयेत्यत्रापि प्रत्यक्षैकवाक्यता साक्षान्न स्यात्. इष्यते चासौ, तस्माद् यत्रैकवाक्यत्वं तत्राऽपर्यवसितव्यापाराणामेव पदानामेकस्मिन्नर्थे पर्यवसानं वक्तव्यम्।

त्वन्मतेचाऽऽनयतिर्गवान्वितानयनं प्रतिपाद्य पर्यवस्यति गोपदमपि गव्येवाऽऽनयनान्विते पर्यवसितमिति स्यादेव वाक्यभेदः। न हि गोपदस्यानयने गवान्विते पर्यवसानं येनैकवाक्यता स्यात्। अथ गोपदमप्यानयनमेव गवान्वितमभिदध्यात्? अनेकार्थत्वं स्या-

---

विनियोग उच्येत न प्रकरणेनैकवाक्यता कल्प्येतेत्याह—अन्यथेति। यथा तत्र प्रकरणानुमेयत्वादेकवाक्यता न साक्षादस्ति तथा गामानयेत्यत्रापि साक्षादेकवाक्यता न स्यात् इष्यते चासौ=साक्षादेकवाक्यता सा न सम्भवत्यन्विताभिधानवाद इत्याह—एवमिति। स्वाभिप्रायमाह—तस्मादिति। यस्मात् पदानां पृथक् पृथग् विशिष्टानेकप्रतिपादनपर्यवसाने एकवाक्यता न सम्भवति तस्मात् यत्रैकवाक्यत्वं विवक्षितं तत्र " शब्दबुद्धिकर्मणां विरम्यव्यापाराभावात् " इति न्यायात् पर्यवसितव्यापाराणां पदानामेकस्मिन् प्रधानार्थबोधने व्यापारो न सम्भवतीत्यपर्यवसितव्यापाराणाम्=असमाप्तव्यापाराणामेव पदानामेकस्मिन् प्रधानेऽर्थे पर्यवसानं वक्तव्यमित्यन्वयः। पर्यवसितव्यापाराणामित्यपि क्वचित् पाठः स तु न शोभनः।

न चैवं त्वन्मतेऽस्ति किं त्वानयपदस्य गवान्वितानयनमात्रे पर्यवसानं गोपदस्य चानयनान्विते गव्येव पर्यवसानं तयोश्चानयनान्वितगोगवान्वितानयनयोरभिधेययोर्भेदाद्वाक्यभेदः स्यादेवेत्याह—त्वन्मतेति। यद्यानयपदवद् गोपदस्यापि गवान्विते आनयने एव पर्यवसानं स्यात्तदाऽऽनयगोपदाभ्यामेकार्थस्य प्रतिपादनादेकवाक्यता स्यादपि न चैवमस्तीत्याह—न हीति। विपक्षे बाधकमाह—अथेति, यदि गोपदं गवान्वितानयने एव पर्यवसितं तदा गोपदेन गोर्गवान्वितानयनस्य च प्रतिपादनाद् गोशब्दस्यानेकार्थत्वं स्यात्, यदि गोपदार्थस्यान्येन केनापि पदेनोपस्थितिः स्यात्तदा तेन पदेनोस्थापितया गवा

त्-गोश्चानयनस्य चाभिधानात्, न हि गोरन्यतः सि-द्धिर्यतस्तामनभिधाय तद्विशिष्टमानयनमेवाभिदध्यात्।

किं च 'अतिशोभनो राजपुरुषः' इत्यत्रातिशया-न्वितस्य शोभनगुणस्य राजान्वितस्य च पुरुषस्य पु-नः परस्परान्वयो गम्यते-समासे हि परस्परान्वय-पूर्वकः पदार्थान्तरान्वयः, तेनाऽन्वितयोरेवात्रान्वयः। न चाऽसावऽभिधानतः सिध्यति- पुरुषशब्दो हि पु-रुषस्यैवाऽर्थान्तरान्वयमभिधत्ते तस्यैव स्वार्थत्वात् अ-तो नाऽन्वितान्वयमलमभिधातुम्, एवं शोभनश-ब्दोपि स्वार्थस्यैव शोभनत्वस्यान्वयमाह नाऽन्यान्वि-तस्य, अतोऽन्वितयोरन्वयोऽवश्यं पदार्थनिबन्धन इ-त्यभ्युपगन्तव्यम्।

---

विशिष्टमानयनमात्रमेव गोपदं बोधयेदिति न स्यादप्यनेकार्थता न चैवम-स्तीत्याह-न हीति। ताम्=गाम्। तद्विशिष्टम्=गवान्वितम्। गोपदमिति शेषः।

अनुसन्धीयमानपदार्थैर्वाक्यार्थबोधं परित्यज्य पदेभ्यो वाक्यार्थबोधस्वी-कारे दोषान्तरमाह- किं चेति। "अतिशोभनो राजपुरुषः" इत्यत्र प्रथमम-तिशयस्य शोभनत्वगुणस्य च परस्परान्वयो भवति तथा राजपुरुषयोः परस्प-रान्वयो भवति तदनन्तरमतिशयान्वितशोभनत्वगुणस्य राजान्वितपुरुषस्य च परस्परान्वयो भवतीत्यन्वितयोरन्वयो भवतीत्यर्थः। अत्र विनिगमनामाह-स-मासेति। प्रकृतमाह-तेनेति। अत्र=उक्तोदाहरणे। पदाभ्यां च नायमन्वितयो-रन्वयः सिध्यतीत्याह-न चेति। अभिधानम्=पदव्यापारः। हेतुमाह-पुरु-षेति, पुरुषपदस्य पुरुष एव स्वार्थ इति पुरुषपदं स्वार्थस्य पुरुषपदार्थस्यैवा-र्थान्तरेण राज्ञाऽन्वयमभिधातुं समर्थं न तु राजान्वितस्य पुरुषपदार्थस्याप्यतिश-यितशोभनत्वगुणेन, एवं शोभनपदमपि स्वार्थस्यैवार्थान्तरेणातिशयेनान्वयम-भिधातुं समर्थं न त्वतिशयान्वितस्यापि स्वार्थस्य शोभनत्वस्य पुरुषपदार्थे-नेति नान्वितान्वयः पदेभ्यः सिध्यतीत्यर्थः। अनुसन्धीयमानपदार्थाभ्यां त्व-ऽन्वितयोरन्वयः सिध्यतीति सर्वत्र वाक्यार्थः पदार्थनिबन्धन एव स्वीकार्य इ-त्याह-अत इति। पदेभ्यो वाक्यार्थबोधस्यात्राऽव्याप्तिरेव ज्ञेया।

किं च 'रूढिर्योगाद्बलीयसी शीघ्रप्रवृत्तित्वात्' इत्यविवादम्, अन्विताभिधाने च विपरीतं बलाबलं स्यात्–अश्वकर्ण इति समुदायो यावद् वृक्षजातिं स्मारयति तावदेवाऽश्वशब्दोपि वाजिनं कर्णशब्दोप्यवयवं स्मारयत्येव, अतो न स्मृतिकाले तावद्विशेषः, अभिधानं तु योगवृत्तौ पदान्तरमनपेक्ष्य स्वावयवाभ्यामेव शीघ्रं मिथो निर्वर्तते । रूढिस्तु प्रतियोगिसंनिधानलिप्सया पदान्तरमपेक्षमाणाऽभिधाने विलम्बत इति वैपरीत्यम् ।

---

किं च योगाद्रूढेर्बलीयस्त्वं सर्वसंमतम्. अन्विताभिधानवादे च रूढितो योगस्यैव बलीयस्त्वं स्यादित्याह–किं चेति । शीघ्रेति–शीघ्रं प्रवृत्तिर्यस्याः सा शीघ्रप्रवृत्तिस्तस्या भावस्तस्मादित्यर्थः । रूढेर्बलीयस्त्वे शीघ्रप्रवृत्तिमत्त्वमेव हेतुरन्विताभिधाने च योगस्यैव शीघ्रप्रवृत्तिमत्त्वमस्तीत्युपपादयति–अश्वकर्णेति । अश्वकर्ण इति सालनामधेयम् । अश्वकर्णशब्देन वृक्षविशेषस्योपस्थितिर्यावद् भवति तावदेवावयवभूताश्वकर्णशब्दाभ्यामश्वश्रोत्रयोरप्युपस्थितिर्भवत्येवेत्याह–अत इति । अभिधानम्=वाक्यार्थबोधः । अन्विताभिधानेऽन्वितस्यैवाभिधानादन्वितप्रतीतिश्च पदद्वयेनैव सम्भवतीति रूढ्यर्थवृक्षविशेषविषयकशाब्दबोधस्य वृक्षेणान्वययोग्यपदार्थान्तरवाचकपदसापेक्षत्वाद्विलम्बो भवति, अश्वश्रोत्रविषयकयौगिकवाक्यार्थबोधस्तु पदान्तरसापेक्षो नास्ति किं त्वश्वशब्देनाश्वोपस्थितिः कर्णशब्देन च श्रोत्रोपस्थितिर्जातेति तयोर्मिथः=परस्परमन्वयात् योगवृत्त्या शीघ्रं निर्वर्तते=सम्पद्यत इति शीघ्रप्रवृत्तिमत्त्वाद् योगस्यैव प्राबल्यं स्यादित्यर्थः । रूढ्यर्थप्रतीतिविलम्बे हेतुमाह–रूढिस्त्विति, प्रतियोगि=सम्बन्धिपदार्थान्तरं येन वृक्षस्यान्वयः स्यात् तद्वाचकं पदान्तरम्=द्रष्टव्य इत्यादिपदमपेक्षमाणा रूढिरभिधाने=वाक्यार्थबोधने विलम्बते । अन्विताभिधानवादेऽन्वितस्याभिधानाद् वृक्षस्याप्यन्वितस्यैवाभिधानं स्यादिति वृक्षेण सहान्वययोग्यपदार्थान्तरवाचकपदस्यावश्यमपेक्ष्यमाणत्वादित्यर्थः । वैपरीत्यमिति–रूढ्यपेक्षया योगस्य प्राबल्यमेव वैपरीत्यम् ।

**स्वरूपमात्राभिधानपक्षे तु पदान्तरापेक्षाभावादक्ष-रश्रवणमात्रादेव रूढ्यर्थोऽभिधानसिद्धोऽवयवार्थलक्षितात् यौगिकाद्वाक्यार्थस्थानीयाद्बलीयान् भवति । एवम्—'अतिमधुरं गोक्षीरम्' 'ईषन्मधुरमजाक्षीरम्' इति 'केतकीगन्धसमानः सर्पगन्धः, इत्यादि दर्शयितव्यम् । तस्मात्पदाभिहितैः पदार्थैर्लक्षणया वाक्यार्थः प्रतिपाद्यते । तत्र गामानयेत्यानयतिरानयनसामान्यमभिधाय तद्व्यक्तिं लक्षयति गोपदमपि स्वार्थद्वारेणाऽऽनयनमेव गोकर्मकत्वाकारेण तत्संबन्धिस्वरूपेण लक्षणया प्रतिपादयति ।**

---

अभिहितान्वयवादे तूक्तवैपरीत्याभावाद् रूढेरेव बलीयस्त्वमित्याह—स्वरूपेति, अभिहितान्वयवादे शब्देन स्वरूपमात्रम्=पदार्थस्वरूपमात्रमभिधीयते न तु पदार्थान्तरेणान्वितमिति पदान्तरापेक्षाया अभावादक्षरश्रवणमात्रात्= अश्वकर्ण इत्यादिशब्दश्रवणमात्रादेव रूढ्यर्थस्य सालवृक्षस्याभिधानं सम्भवतीत्यऽवयवार्थलक्षिताद्वाक्यार्थस्थानीयाद् यौगिकादश्वश्रोत्ररूपार्थाद् रूढ्यर्थस्य शीघ्रं प्रतीतिविषयत्वं भवतीति योगाद् रूढेर्बलीयस्त्वं सिध्यतीत्यर्थः। अश्वश्रोत्रलक्षणोऽर्थोऽवयवाभ्यामश्वकर्णशब्दाभ्यां लक्षितो भवति लक्षितत्वे वाक्यार्थस्थानीयत्वं हेतुः किं चिदन्वितप्रतीतिरेव वाक्यार्थबोधः श्रोत्रस्य चाश्वान्वितस्यैव प्रतीतिरिति वाक्यार्थतुल्यत्वमेव वाक्यार्थश्च पदार्थैर्लक्ष्यत एवेति भावः । अन्वितप्रतीतिलक्षणवाक्यार्थबोधापेक्षया च रूढ्यर्थस्य शीघ्रमेवोपस्थितिरिति रूढेर्बलीयस्त्वम् । वाक्यार्थस्थानीयात्=वाक्यार्थतुल्यात् ।

'अतिशोभनो राजपुरुषः' इत्यत्रोक्तामन्विताभिधानेनाऽनुपपत्तिमन्यत्रातिदिशति—एवमिति । अतिशयमाधुर्ययोः गोक्षीरयोश्च प्रथममन्वयस्तदनन्तरमन्वितयोरेवातिमाधुर्यगोक्षीरयोरन्वयो भवति तदऽन्विताभिधानवादे न सम्भवति पूर्वोक्तरीत्येत्यर्थः। एवमीषन्मधुरमित्यादावपि द्रष्टव्यम्। स्वसिद्धान्तमाह—तस्मादिति। पदार्थैर्वाक्यार्थबोधस्वीकारे तु पदाभ्यामतिशयान्वितस्य माधुर्यस्य गवान्वितक्षीरस्य चोपस्थितिर्भवति तयोश्चान्वितयोः परस्परमन्वयबोधः पदार्थैरिति न कोपि दोषः। गामानयेत्यस्य वाक्यार्थबोधप्रकारमाह—तत्रेति ।

गामानयेत्यत्राऽऽनयपदमानयनसामान्यमभिधाय=उपस्थाप्य तद्व्यक्तिम्=आनयनविशेषं गोकर्मकमानयनं लक्षणया प्रतिपादयति मुख्यार्थस्याऽऽनयनसामान्यस्य बाधात्तत्प्रयोजनाभावात् सामान्यविशेषानयनयोः सम्बन्धश्चानयनत्ववत्त्वमेव ज्ञेयः । गोपदमपि स्वार्थमभिधाय तद्द्वारा स्वार्थकर्मकत्वाकारेणाऽऽनयनमेव लक्षयतीत्येकवाक्यत्वं भवति न वाक्यभेदः । तत्संबन्धिस्वरूपेण = स्वार्थ(गो)संबन्धिस्वरूपेण । तत्त्वप्रदीपिकायामप्युक्तम्—"तदेवमर्थप्रत्यायनशक्तिसद्भावात् पदानां तदभिहितेभ्यः पदार्थेभ्यः संनिधानादिसहकारिवशात् पदार्थानामन्योन्यान्वयप्रतिपत्तिर्लक्षणया सिध्यति, तस्मात् समभिव्याहृतपदकदम्बकस्मारितपदार्थानां परस्परान्वयप्रत्ययो लाक्षणिकः शाब्दश्चेति सर्वमवदातम् । विवादपदानि पदानि लक्षणया पदार्थानामन्योन्यान्वयप्रतिपत्तिपराणि अन्वितप्रतिपत्तिपरत्वे सति पदत्वाद् विषं भुङ्क्ष्वेति पदकदम्बवत् । तस्माद्वाक्यप्रामाण्यानुपपत्तिरेव लक्षणाक्षेपिकेति निश्चिनुमः, अस्ति चेहापि लोकानुसारतो विशिष्टार्थप्रत्यायनप्रयुक्तसमभिव्याहृतीनामर्थमात्रपरत्वे पदानां प्रामाण्यानुपपत्तिः "विशिष्टार्थप्रयुक्ता हि समभिव्याहृतिर्जने" इति न्यायात् ।" इत्यादिकम् । "अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाऽज्ञानसंशयैः" इति न्यायाद् बोधनीयविशिष्टार्थाप्रत्यायने पदानामप्रामाण्यं स्यादेवेति भावः । श्लोकवार्तिकेऽपि यथा—

"एवमेवाश्वकर्णादौ समुदायप्रसिद्धितः ।
वार्यतेऽवयवस्यार्थो वृक्षाद्यर्थावधारणात् ॥,
पदार्थानुगतश्चैष वाक्यार्थो गम्यते सदा ।
न विशिष्टार्थता तस्माद्वाक्यस्वातन्त्र्यसाधिनी ॥
न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेषु पदानि नः ।
तन्मात्रावसितेष्वेषु पदार्थेभ्यः स गम्यते ॥ (तन्मात्रे = पदार्थस्वरूपमात्रे । एषु = पदेषु । सः = वाक्यार्थः)
अशाब्दे चापि वाक्यार्थे न पदार्थेष्वऽशब्दाता ।
वाक्यार्थस्येव नैतेषां निमित्तान्तरसंभवः ॥" इत्यादि ।

न्यायरत्नाकरेऽप्युक्तम्—"यद्यप्यभिधाव्यापारः पदार्थेष्वेव पर्यवसितस्तथापि तात्पर्यव्यापृतेरपर्यवसितताया वाक्यार्थपर्यन्तत्वात् तात्पर्ये शब्दस्य प्रामाण्यात् सिध्यति शब्दप्रमेयतया वाक्यार्थस्य शाब्दत्वम् ।" इति । विस्तरस्त्वाकरेषु द्रष्टव्यः ।

एवं यत्र यत्र वाक्ये यो योऽर्थो विशेष्यत्वेन विवक्षितस्तमेव स्वपदेन सामान्यवाचिना लक्षितं सन्तमितराणि पदानि स्वार्थाभिधानद्वारेण तत्सम्बन्धिरूपेण लक्षयन्ति । यत्राप्यन्वितस्यैव पुनरन्वयान्तरं तत्रापि लक्षितलक्षणापरम्परया सर्वस्य तस्य सिद्धिरित्येषा दिक् ।

ननु कर्मत्वेनाभिहिता गौस्तत्कर्मिकां क्रियां लक्षयन्त्यपि कथमानयनमेव लक्षयति ?, तदेकवाक्यतयेति ब्रूमः- लक्षणा हि साधारण्येनैव प्रवृत्ताप्येकवाक्यतया नियम्यत इति दर्शनबलादङ्गीक्रियते । योपि

---

उक्तार्थं निर्वक्ति-एवमिति । यथा सुन्दरां कपिलां गामानयेत्यत्रानयनमेव विशेष्यत्वेन विवक्षितमिति तदानयनमेव स्वपदेन=आनयनपदेन सामान्यानयनाभिधानानन्तरं गोकर्मकविशेषानयनत्वेन लक्षितं इतराणि सुन्दरां कपिलां गामित्यादीनि पदानि स्वार्थाभिधानद्वारेण स्वार्थसम्बन्धित्वेन रूपेण लक्षयन्ति । अतिशोभनो राजपुरुष इत्यादेर्निर्वचनमाह-यत्रापीति । यत्राऽन्वितयोरेव पुनः परस्परान्वयो भवति तत्र परम्पराभूतया लक्षितलक्षणया तस्य= वाक्यार्थबोधस्य सिद्धिः, यथा-अतिशोभनो राजपुरुष इत्यत्र तथा हि-अत्रातिशोभनपदयोरतिशयशोभनत्वयोः शक्तिः अतिशायितशोभनत्वे लक्षणा तद्द्वारातिशोभनत्वविशिष्टराजपुरुषे च लक्षितलक्षणा, तथा राजपुरुषपदयो राजपुरुषयोः शक्तिः राजान्वितपुरुषे लक्षणा अतिशोभनत्वयुक्ते राजान्वितपुरुषे च लक्षितलक्षणेत्यनुसन्धेयम् ।

ननु गामानयेत्यत्र गोरुपस्थिताया नियमेनाऽऽनयनलक्षकत्वं न सम्भवति-गोपदार्थान्वययोग्यक्रियामात्रस्यापेक्षास्तीति गौरन्यामपि कां चन क्रियां दर्शनस्पर्शनादिरूपां किं न लक्षयेदित्याशङ्कते-नन्विति । अभिहितान्वयवादे पदार्थानामेव वाक्यार्थलक्षकत्वाद् गौरित्युक्तम् । उत्तरमाह-तदेकेति, गोपदस्याऽऽनयपदेन साकमेकवाक्यत्वाद् गौरानयनमेव लक्षयति न क्रियान्तरमित्यर्थः । अत्र निर्वचनमाह-लक्षणेति । यथा गङ्गायां घोष इत्यत्र गङ्गासम्बन्धिनि प्रवृत्ता लक्षणा घोषपदैकवाक्यतया तीरे एव नियम्यते तथा । अ-

**स्त्वऽन्विताभिधानमिच्छति तेनापि सामान्यतः प्रवृत्ता लक्षणा पदान्तरैकवाक्यत्वेन नियम्यत इत्येतदऽङ्गीकृतमेव । यथा हि युगपदधिकरणवाचितायां द्वन्द्वमिच्छन्ति तत्र धवखदिरावित्यत्र खदिरप्रातिपदिके द्विवचनोपपत्तयेऽर्थान्तरं लक्षयदपि धवमेव लक्षयति नार्थान्तरं तत्पदसमभिव्याहारादेव तथा सर्वत्रास्तु । यत एवायमऽन्वयविशेषोऽविनाभावादऽसिध्यन्नेकवाक्यतावशेनैव सिध्यति अत एव शब्दस्य प्रमाणान्तरत्वमनुमानात् ।**

---

न्विताभिधानवादेप्येवमेवेत्याह—योपीति । तेन=अन्विताभिधानवादिना । अन्यथा गङ्गायां घोष इत्यत्रापि सामान्यतो गङ्गासबन्धिनि प्रवृत्ता लक्षणा किमिति तीरमेवोपस्थापयति नान्यं गङ्गासम्बन्धिनं पदार्थम् ? । तस्मात् सामान्यतोपि प्रवृत्ता लक्षणा पदान्तरसांनिध्यान्नियम्यत एव ।

लक्षणानियमस्योदाहरणान्तरमाह—यथेति । युगपदधिकरणवाचिताया-मिति—अधिकरणपदं द्रव्यपरं युगपत्=एकस्मिन्नेव काले—अर्थात् स्वाभिधेयबोधनकाले एव यत्र पदार्थान्तरबोधनं भवति तत्र द्वन्द्वसमासो भवति यथा घटपटौ इत्यत्र पटशब्देन स्वाभिधेयपटपदार्थबोधनकाले एव घटोपि बोध्यते स्वसमभिव्याहृतसकलपदार्थवाचकतायां द्वन्द्वसमास इति यावत् । तत्र=द्वन्द्वे धवखदिरावित्यत्र खदिरशब्दस्यैकार्थबोधकत्वे द्विवचनमनुपपन्नमिति तदुपपत्त्यर्थं पदार्थान्तरलक्षकत्वमुच्यते तत्र खदिरशब्दो यथा धवमेव लक्षयति नान्यं वृक्षं तत्कस्य हेतोः ? धवपदसमभिव्याहारादेवेति वक्तव्यं तथा सर्वत्रास्तु तथा च गामानयेत्यत्र गोः स्वान्वययोग्यक्रियालक्षकत्वेप्यानयनलक्षकत्वमेवाऽऽनयपदसमभिव्याहारादिति ज्ञेयम् । ननु यदि पदैर्वाक्येन वा वाक्यार्थप्रतीतिर्न सम्भवति तदाऽनुमानेनैव वाक्यार्थप्रतीतिर्भवत्वित्याशङ्क्याह—यत इति । अविनाभावात्=व्याप्तेरसिध्यन् । व्याप्तिग्रहाभावान्नानुमानमित्यर्थः । उक्तं च वार्तिके—

" न चानुमानमेषां धीस्तन्मात्रेण प्रसज्यते ।
प्रतिज्ञार्थैकदेशत्वात् पदार्थानां ह्यलिङ्गता ॥

ननु प्रत्यक्षेण गवि देवदत्ते चाऽवगते सत्स्वप्याकाङ्क्षासंनिधियोग्यत्वेषु न परस्परान्वयप्रतीतिर्भवति तस्मान्न पदार्था वाक्यार्थं गमयन्तीति, पदानामेवान्विताभिधानं युक्तम् ?। अन्विताभिधानेपि तुल्योयं दोदोषः- यौ तावदर्थौ प्रत्यक्षप्रतिपन्नौ तयोर्वाचकावपि शब्दौ तस्मिन् समये स्मृतिस्थौ भवतः न च तौ स्वार्थयोराकाङ्क्षादिसद्भावेप्यऽन्वयं प्रतिपादयतः।

अथ यादृगवस्थितैः पदैरन्वयो वृद्धव्यवहारे दृश्यते

---

पदार्थैरनुरक्तोसौ वाक्यार्थः संप्रतीयते।
नात्मना गमयन्त्येनं विना, धूमोग्निमत्त्ववत् ॥" इति।

ननु यदि पदार्थानामेव वाक्यार्थगमकत्वमस्ति तदा यत्र प्रत्यक्षेण गौर्देवदत्तश्च दृष्टस्तत्र कस्यायमित्याकाङ्क्षाप्यस्ति गोदेवदत्तयोः संनिधिरप्यस्ति योग्यश्च गोदेवदत्तयोः सम्बन्ध इति योग्यताप्यस्तीति तत्र वाक्यप्रयोगं विनापि गोदेवदत्तयोः परस्परान्वयभूतस्य वाक्यार्थस्य बोधः स्यादेव न च भवति तस्माज्ज्ञायते न पदार्था वाक्यार्थं गमयन्ति किं तु पदान्येव गमयन्तीत्याशङ्कते-नन्विति। उत्तरमाह-अन्विताभिधानेपीति। अतिदिष्टमेवदोषं विवृणुते-यौ तावदिति। गोदेवदेत्तयोः प्रत्यक्षकाले सत्स्वप्याकाङ्क्षासंनिधियोग्यत्वेषु "एकसंबन्धिज्ञानमपरसंबन्धिस्मारकम्" इति न्यायात् तद्वाचकयोर्गोदेवदत्तशब्दयोः स्मृतेरपि सत्त्वे परस्परान्वयलक्षणवाक्यार्थबोधो नैव भवतीति पदानामप्यन्वितार्थाभिधायकत्वं वाक्यार्थबोधहेतुत्वं न स्यादिति तुल्यो दोषः। तौ=गोदेवदत्तशब्दौ। यथान्विताभिधानवादे पदार्थानां प्रत्यक्षकाले स्मृतानां पदानामन्वितार्थाऽप्रत्यायकत्वेपि श्रावणप्रत्यक्षे सति प्रत्यायकत्वं तथाभिहितान्वयवादेपि पदार्थानां प्रत्यक्षकाले परस्परान्वयाऽप्रत्यायकत्वेपि तद्वाचकशब्दश्रवणे सति परस्परान्वयप्रत्यायकत्वं संभवतीति भावः।

ननु वृद्धव्यवहारेण शक्तिग्रहकाले श्रुतैरेव पदैः पदार्थान्वयः प्रतिपाद्यते न तु वाच्यभूतपदार्थदर्शनेन "एकसंबन्धिज्ञानमपरसंबन्धिस्मारकम्" इति न्यायात् स्मृतैरपीति पदश्रवणाभावादेवोक्तस्थलेऽन्वितार्थप्रतीतिर्न भवतीति न दोषः पदार्थानां वाक्यार्थबोधकत्वस्वीकारे तूक्तस्थले पदार्थप्रत्य-

**तादृशान्येवान्वयं प्रतिपादयन्ति नान्यादृशानीत्युच्यते?। तत् पदार्थेष्वपि तुल्यम्—तेऽपि हि पदार्था एकैकविशिष्टार्थप्रतिपादनाय समाहृता वाक्यार्थं प्रतिपादयन्तीति न दोषः। तेषां च समाहारे यत्र पुरुषस्य स्वातन्त्र्यं तत्र तद्बुद्ध्यधीनं प्रामाण्यम्, अस्वातन्त्र्ये चाऽनपेक्षम्, अतो न पदानामन्विते शक्तिः प्रमाणवती, निरस्तश्चायमन्विताभिधानवादो न्यायरत्नमालायामित्यास्तां तावत्।**

---

क्षे जाते तैस्तेषामन्वयबोधः किं न स्यादित्याशङ्कते—अथेति। उत्तरमाह—तदिति। एतत्समाधानं पदार्थेष्वपि तुल्यमेवेत्यर्थः। उक्तं विवृणुते—ते पीति। ते पदार्था अपि समाहृताः=शब्देनोपस्थापिता एव वाक्यार्थं प्रतिपादयन्तीति दृष्टं न तु प्रत्यक्षेणावगता अपीति पदार्थप्रत्यक्षकाले शब्देनोपस्थित्यभावाद् वाक्यार्थाऽप्रतिपादकत्वेपि न दोष इत्यर्थः। ननु यदि पदानां पदसमूहवाक्यस्य वा वाक्यार्थगमकत्वमेव नास्ति तदा कथं कस्य चिद्वाक्यस्य प्रामाण्यं कस्य चिदप्रामाण्यमित्युच्यते? बोधकत्वेनाभिमतस्यैवाऽप्रामाण्यसंभवादित्याशङ्क्य निर्वक्ति—तेषामिति। तेषाम्=पदार्थानां समाहारे=पदैः प्रत्यायने यत्र पुरुषस्य स्वातन्त्र्यं यथा पौरुषेयवाक्येषु तत्र तद्बुद्ध्यधीनम्=वक्तृबुद्ध्यधीनं प्रामाण्यं भवति यदि वक्ताऽऽप्तः स्यात्तदा वाक्यस्य प्रामाण्यं वक्तुरनाप्तत्वे चाऽप्रामाण्यमित्यर्थः। किं वा यदि वक्तुरुक्तवाक्यार्थविषये बुद्धिः प्रमात्मिका तदा वाक्यस्य प्रामाण्यं यद्यप्रमात्मिका तदाऽप्रामाण्यम्। तस्माद्वक्तुराप्तत्वाधीनत्वात् पौरुषेयवाक्यानां प्रामाण्यं सापेक्षमेव। यत्र च पदार्थानां समाहारे पुरुषस्य न स्वातन्त्र्यं तत्र न वाक्यस्य सापेक्षं प्रामाण्यं किं त्वनपेक्षमेव यथा वेदवाक्यानामित्याह—अस्वातन्त्र्येति। तेषामित्यादिना प्रासङ्गिकविषयमुक्त्वा प्रधानविषयमुपसंहरति—अत इति। न्यायरत्नमालायामिति, यथा—

"अदृष्टकल्पनैतस्मिन् मते हि स्याद् गरीयसी।
दृष्टबाधप्रसङ्गश्च तस्मादभिहितान्वयः॥
दृष्टानुगुण्यं तत्र स्यात्कल्पना च लघीयसी॥" इत्याद्युक्तम्।

विस्तरस्तु न्यायरत्नमालायामेव द्रष्टव्यः।

**वाक्यस्फोटोपि पदस्फोटन्यायेनैव निरस्तः। वाक्यार्थस्य च निर्भागत्वं भागाऽवगमात् प्रसङ्गाद्यनुपपत्तेश्च निरसनीयम्- तथा हि—**

**प्रसङ्गतन्त्रबाधोहाऽतिदेशाधिक्रियाक्रमाः।**
**प्रयुक्तिशेषभेदाश्च कथं निर्भागवादिनाम् ?॥ ६**

**यदा हि "अग्नीषोमीयं पशुमालभेत" इति निर्भागस्य**

---

पूर्वोक्तपदस्फोटनिरासप्रकारेणैव वाक्यस्फोटोपि निरस्तो ज्ञेय इत्याह—वाक्येति। निरासप्रकारश्च पूर्वोक्तस्फोटवादे (३७०पृ) द्रष्टव्यः कृतमत्र पुनर्विन्यासेन। किं च वैयाकरणैर्वाक्यस्य स्फोटरूपस्य निर्विभागत्वाद्वाक्यार्थोपि निर्विभाग एवेत्युच्यते, उक्तं च वाक्यपदीयद्वितीयकाण्डे—

" शब्दस्य न विभागोस्ति कुतोर्थस्य भविष्यति।
विभागैः प्रक्रियाभेदमविद्वान् प्रतिपद्यते॥"
"अविभक्तेपि वाक्यार्थे शक्तिभेदादपोद्धृते।
वाक्यान्तरविभागेन यथोक्तं न विरुध्यते॥"
" अविकल्पेपि वाक्यार्थे विकल्पा भावनाश्रयाः।"
" समुदायोऽभिधेयः स्यादऽविकल्पसमुच्चयः। "इत्यादि।

तट्टीकाकारेणाप्युक्तम्–"सकलविशेषणखचितश्च प्रथमतरमेवोपक्रान्तः संसृष्ट एवार्थो वाक्यार्थः।" "येनार्थो वाच्यस्वरूपो व्यावृत्तभेदोऽखण्ड एव पदार्थोपाधिवशाद् भेदवानिवोपलभ्यते न परमार्थतः" " येनाऽखण्डवाक्यवादिना व्रीहिकरणिका यजतिक्रिया निरस्ताऽवयवार्था "व्रीहिभिर्यजेत " इत्यत्र वाक्यार्थ इत्युच्यते " इत्यादि। विस्तरस्तु वाक्यपदीये एव द्रष्टव्यः। तन्निराकरोति–वाक्यार्थस्येति, वाक्यार्थस्य भागानामवगमाद् यथा–गामानयेत्यत्र कर्मभूताया गोरानयनस्य च भेदेन ज्ञानान्न निर्भागो वाक्यार्थः। वाक्यार्थस्य निर्भागत्वे प्रसङ्गादीनामुपपत्तिर्न स्यादित्याह–प्रसङ्गादीति। प्रसङ्गेति–निर्भागवादिनाम्= अखण्डवाक्यार्थवादिनां वैयाकरणानां मते वाक्यार्थैकदेशसमवायार्हाणां प्रसङ्गादीनां कथमुपपत्तिः स्यादित्यर्थः।

स्वाभिप्रायं पद्येनोक्तं विवृणुते–यदा हीति। यदि निर्भागो वाक्यार्थस्तदा " अग्नीषोमीयम् " इत्यादिविधिवाक्यानामप्यर्थो निर्भाग एव स्यात्

साङ्गप्रधानविधेरर्थो निर्भागः– न साध्यं न साधनं नाप्यङ्गानि तदा न पशुर्न प्रयाजा न पुरोडाशो न तदीयाः अनुयाजाः सन्तीति किं कुत्र सप्रज्जते? । एवं तन्त्रादिष्वपि दर्शयितव्यम् । तस्मादनेकपदार्थानुरक्तो वाक्यार्थः, स च पदार्थमूलो न निर्मूलो न च सङ्केतमूलः, तस्मान्नाऽप्रामाण्यं चोदनायाः । यत्तु वाक्यत्वात् पौरुषेयत्वमित्युक्तं तदुपरितनेऽधिकरणे निराकरिष्यामः॥

---

निर्भागत्वे च तस्य साध्यसाधनादिकं न स्यात् साध्यसाधनादीनामेव वाक्यार्थभागत्वाद् यदा च न साध्यसाधनादिकं तदा पशुप्रयाजपुरोडाशानुयाजादयः पदार्था नैव स्युस्तथा च किं कुत्र प्रसज्येत–कस्य क्व प्रसङ्गाद् प्राप्तिः स्यादिति प्रसङ्गादिवैयर्थ्यात् तत्प्रतिपादकशास्त्रमपि व्यर्थमेव स्यादित्यर्थः । एवं वाक्यार्थस्य निर्भागत्वे तन्त्रादीनामप्यानर्थक्यं प्रदर्शनीयम् । तस्मान्न वाक्यार्थो निर्भागः किं त्वऽनेकपदार्थसमूहरूपत्वात् सभाग एवेत्याह–तस्मादिति । अनुरक्तः=विशिष्टः । स च वाक्यार्थो न निर्मूलो येनाऽप्रामाण्यं स्यात्, न च सङ्केतमूलो येन पदानां वाक्यस्य वा वाक्यार्थप्रतिपादकत्वं स्यात् किं तु पदार्थमूलः=स्मृतपदार्थैः प्रतिपाद्यत इत्याह–स चेति । यदुक्तम्–"वेद वाक्यानामपि पौरुषेयत्वम्" इति तस्य निरसिष्यमाणतां सूचयति–यत्त्विति । प्रसङ्गादीनां स्वरूपं त्वग्रे स्वयं द्रष्टव्यं तत्र प्रसङ्गो द्वादशे. तन्त्रमेकादशे. बाधो दशमे. ऊहो नवमे. अतिदेशोऽष्टमे सप्तमे च. अधिक्रिया=अधिकारः षष्ठे. क्रमः पञ्चमे. प्रयुक्तिश्चतुर्थे. शेषस्तृतीये. भेदो द्वितीये. अध्याये द्रष्टव्यः । उक्तं च—

"धर्मो द्वादशलक्षण्या व्युत्पाद्यः, तत्र लक्षणैः– ।( लक्षणैः=अध्यायैः )
प्रमाण–भेद–शेषत्व–प्रयुक्ति–क्रमसंज्ञकाः ॥
अधिकारो–ऽतिदेशश्च सामान्येन विशेषतः । (सामान्यातिदेशो सप्तमे विशेषातिदेशश्चाष्टमे)
ऊहो बाधश्च तन्त्रं च प्रसङ्गश्चोदिताः क्रमात् ॥" इति ।

॥ इति सप्तममऽधिकरणं समाप्तम् ॥

( अष्टमं वेदाऽपौरुषेयताधिकरणम् )

# सू- वेदांश्चैके संनिकर्षं पुरुषाख्याः ॥२७॥

सङ्केतानपेक्षैरेव पदैः पदार्थाः प्रतिपाद्यन्ते तैरप्य-नपेक्षितसङ्केतैर्वाक्यार्थ इत्युक्तम्। इदानीं तु किं पौ-रुषेयाणि वेदवाक्यानि उताऽपौरुषेयाणीति चिन्त्य-ते । पौरुषेयत्वे तु संजातस्यापि वाक्यार्थप्रत्ययस्य स्वतः प्राप्तमपि प्रामाण्यं पौरुषेयस्येदृशेऽर्थे मूलप्रमा-

---

वेदापौरुषेयत्वप्रतिपादनाय वेदपौरुषेयत्वस्य पूर्वपक्षस्य सूत्रं निर्दिशति— वेदांश्चेति । यतो वेदे पुरुषाख्याः=काठकं कौथुममित्याद्याः पुरुषघटिता आख्या नामानि सन्त्यत एके नैयायिका वेदान् संनिकर्षम्=कृतकान् सादीन् वदन्तीत्यन्वयः। संनिकर्षान् इति वक्तव्ये संनिकर्षमित्यऽसमानवचनत्वमार्षम् । किं वा "वेदाः प्रमाणम्" इतिवत्समाधेयम् । साधितमर्थं स्मारयति-सङ्के-तेति । पदानां पदार्थप्रतिपादने शक्तिग्रहमापेक्षत्वेपि सङ्केतापेक्षत्वं नास्त्येव स-ङ्केतस्येश्वरेच्छारूपत्वादीश्वरानङ्गीकर्तृमीमांसकमते ईश्वरेच्छाया अप्यसंभवादि-ति भावः। तैः=पदार्थैः। वाक्यार्थबोधकत्वं पदार्थानामेवेति वार्तिकेप्युक्तम्—

"पदार्थपूर्वकस्तस्माद्वाक्यार्थोयमवस्थितः ॥"

"मानसेनाऽपराधेन पदार्थान् ये न गृह्णते ।
ते तद्वाक्यं गृहीत्वापि नार्थं गृह्णन्ति कर्हि चित् ॥"

"पदार्था गमयन्त्येतं प्रत्येकं संशये सति ॥" इत्यादि ।

एतदधिकरणप्रतिपाद्यमाह-इदानीमिति । प्रथमं वेदानां पौरुषेयत्वे प्रामाण्यं न स्यादिति दोषमाह-पौरुषेयत्वेति । ईदृशेऽर्थे=अपूर्वे ऽप्रत्यक्षभूतेर्थे पौरुषे-यस्य वाक्यस्य मूलप्रमाणासंभवात् प्राप्तमपि प्रामाण्यमपोद्यत इत्यन्वयः । पौ-रुषेयवाक्यस्य हि तद्वक्तुर्वाक्यबोध्यविषयविषयकं प्रत्यक्षादिकमेव मूलप्रमाणं संभवति अपूर्वविषये, च प्रत्यक्षादेरसंभवात् मूलप्रमाणाभावः प्राप्तः. मू-

---

१ अस्मिन्नधिकरणे एतत्सूत्राग्रे पञ्च सूत्राणि सन्ति तथा हि-" अनित्यदर्श-नाच्च २८ । उक्तं तु शब्दपूर्वत्वम २९ । आख्याः प्रवचनात् ३० । परं तु श्रुतिसा-मान्यमात्रम् ३१ । कृते वा विनियोगः स्यात् कर्मणः सम्बन्धात् ३२ ॥" इति ।

णासंभवाद् विप्रलम्भभ्रान्त्यादिमूलतयाऽपोद्यते।

तत्र—

वेदानां पौरुषेयत्वं वाक्यत्वाद् भारतादिवत्।
काठकादिसमाख्यापि कृतकत्वे समर्थ्यते॥

नन्वऽपूर्वात्मा वेदार्थोऽलौकिकः कथंचिदपि बुद्धा-वाऽऽरोपयितुमशक्यः कथं तत्र पुरुषा वाक्यं रचये-युः?। भवानपि वा कथमीदृशे तस्मिंल्लिङादेः शक्तिं गृह्णीयात्?। अधिकारिनियोज्यान्वययोग्यं स्वर्गसा-धनक्षमं कार्यरूपमित्यादिरूपेण कथं चिद् हृदयमा-नीय शक्तिग्रहणम्। तथा वाक्यरचनाविधिः संभवि-

---

लप्रमाणाभावे च वेदवाक्यानां विप्रलम्भनभ्रान्त्यादिमूलकत्वं प्राप्नुयात्तथा चाऽप्रामाण्यं स्यादित्यर्थः।

संप्रति पूर्वपक्षं पद्येनाह—वेदानामिति, वेदवाक्यं पौरुषेयं वाक्यत्वाद् भारतादिवदित्यनुमानम्। पौरुषेयतायामुपपत्त्यन्तरमाह—काठकादीति। यदि वेदोऽपौरुषेयः स्यात्तदा काठकं कौथुममित्यादिसमाख्या नोपपद्येत काठका-दिसमाख्यानां पौरुषेयत्वापादकत्वात् तस्मात् काठकादिसमाख्यापि वेदानां कृतकत्वे एव समर्थ्यते=समर्थिता भवतीत्यर्थः।

मीमांसकः शङ्कते—नन्विति, ज्ञानविषयविषयिकैव वाक्यरचना संभवति वे-दार्थस्य चापूर्वस्याऽलौकिकत्वान्न ज्ञानविषयत्वं संभवतीति कथं तत्र=तद्विषयकं पुरुषेण वेदरूपं वाक्यं रचितं स्यादित्यर्थः। तार्किकः प्रतिबन्द्युत्तरमाह—भवा-नपीति। भवन्मतेपि ज्ञानाविषये ह्यलौकिकेर्थे शक्तिग्रहो न संभवति व्यवहारेणैव शक्तेर्ग्राह्यत्वात् शक्तिग्रहाभावे च वेदवाक्यार्थबोधो न स्यात्. अबोधकत्वाच्चा-ऽप्रामाण्यमेव स्यात्. उक्तं च—"अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाऽज्ञानसं-शयैः" इति। ईदृशे=अलौकिके। तस्मिन्=अपूर्वे। मीमांसक उत्तरमाह—अधिकारीति। संभवतीति शेषः। अधिकारिनियोज्यशब्दयोरेकार्थत्वेप्येक-स्यैव यजमानस्य फलस्वामित्वेनाधिकारित्वं कर्मणि नियुक्तत्वेन यजमानत्वेन वा नियोज्यत्वमिति भाव्यम्। नित्यकर्मसु नियोज्यत्वमेव भवति फलाभावा-द्। नित्यकर्मोत्पन्नस्य पण्डापूर्वस्य नियोज्येनैवान्वय इति नियोज्यग्रहणम्।

ष्यति, तस्माद्वाक्यत्वात् पौरुषेया वेदाः । तथा च काठकादिसमाख्या युज्यते, नहि प्रवचननिमित्ता समाख्या संभवति- प्रवचनस्यानेकपुरुषसाधारणत्वात् काठकविशेषणाऽसंभवात्, कर्तृत्वं चैकस्यैवेति युक्तं विशेषणम् । किं पुनर्वाक्ये पुंसः कर्तृत्वम् ? । यः स्वातन्त्र्येण पदानि वाक्यत्वेन रचयति स कर्ता, स्वातन्त्र्यं चैकस्यैवेति युक्तं विशेषणम् । यस्तु यथैव पुरुषान्तरेणोच्चारितं तथैवोच्चारयामीत्येवमुच्चारयति नासौ कर्ता, तादृगुच्चारणं च बहूनामप्येकस्मिन् वाक्ये संभवतीति विशेषणानुपपत्तिः, तस्मात् कर्तृनिमित्तेयमिति प्राप्ते,

अभिधीयते—

उक्तं तु शब्दपूर्वमत्वमाऽऽख्याप्रवचनादिति ।

---

अपूर्वमुत्पाद्यं भवतीति कार्यरूपमित्युक्तम् । तार्किक उत्तरमाह–तथेति, यथा कथं चिदुक्तरूपेण हृदयमानीय=स्मृत्वा तस्मिन्नऽपूर्वे लिङादीनां शक्तिग्रहः संभवति तथा कथं चिद् हृदयमानीय तद्विषयकवाक्यरचनापि संभवतीत्यर्थः । तथा च सिद्धं पौरुषेया वेदा इत्याह–तस्मादिति । तथा च=पौरुषेयत्वे सिद्धे काठकादिसमाख्यापि युज्यत इत्याह–तथा चेति । ननु समाख्या प्रवचननिमित्ता किं न स्यादित्याशङ्क्याह–न हीति । प्रवचनम्=अध्यापनं व्याख्यानं वा । हेतुमाह–प्रवचनस्येति, प्रवचनस्यानेकपुरुषसाधारणत्वेन कठमात्रेण सम्बन्धनियमाऽसंभावात् काठकमिति न स्यात् । कर्तृत्वस्य तु कठमात्रेण सम्बन्धाद् युज्यते काठकमिति विशेषणमित्याह–कर्तृत्वमिति ।

वाक्यनिरूपितकर्तृत्वस्वरूपं पृच्छति–किमिति । उत्तरमाह–य इति । वाक्यत्वेन=वाक्यरूपेण । प्रवक्तुरध्येतुर्वा कर्तृत्वं न सम्भवतीत्याह–यस्त्विति । तादृगुच्चारणम्=अनुकरणस्वरूपमुच्चारणम् । उपसंहरति–तस्मादिति । कर्तृनिमित्ता=कर्तृत्वनिमित्ता । इयम्=काठकादिसमाख्या । तस्माद्वेदाः पौरुषेया इति सिद्धम् ।

एवं पूर्वपक्षमुपपाद्योत्तरमारिप्सुरुत्तरपक्षस्य " उक्तं तु शब्दपूर्वत्वम् २९

---

१ यद्यपि सूत्रद्वयमिदं पद्यस्वरूपपरिहारेण सूत्रस्वरूपत्वेनाप्युपन्यसितुं शक्यते

**वाक्यत्वात् पौरुषेयत्वं दृश्यादर्शनबाधितम्।**
**प्रतिहेतुविरुद्धश्च हेतुः, तस्मादऽकृत्रिमाः॥**
**यदि वेदानां कर्ता कश्चिद्ऽभविष्यत् ततोऽवश्यम-**

---

आख्या प्रवचनात् ३० ” इति सूत्रद्वयं पद्यार्धेन ग्रथ्नाति—उक्तमिति, श-ब्दस्य पूर्वत्वम्=नित्यत्वमुक्तम्=पूर्वमेव षष्ठाधिकरणे निरूपितं वेदश्च शब्द-समूह एवेति नित्यो नित्यत्वाच्चापौरुषेय इत्यर्थः। आख्या=काठकादिसमा-ख्या तु प्रवचनात्=प्रवचननिमित्तास्ति न कर्तृत्वनिमित्ता येन वेदस्य पौ-रुषेयत्वं स्यादित्यर्थः। उत्तरपक्षाभिप्रायं पद्येनाह—वाक्यत्वादिति। यदि वे-दः पौरुषेयः स्यात्तदामुकेन निर्मितो वेद इत्येवं वेदे उपलभ्येत न चोपल-भ्यते तस्माद् दृश्यादर्शनेन निरस्तं पौरुषेयत्वं वाक्यत्वादिति हेतुना न सिध्य-तीत्यर्थः किं वा वाक्यत्वादिति हेतुना प्राप्तं पौरुषेयत्वं दृश्यादर्शनेन बाधि-तमित्यर्थः। किं च वेदः पौरुषेयो वाक्यत्वादिति वाक्यत्वं हेतुः वेदाध्ययनं गुर्वध्ययनपूर्वकं वेदाध्ययनत्वादिति सत्प्रतिपक्षभूतवेदाध्ययनत्वहेतुना विरु-द्धः=निरुद्धः—निरुद्धशक्तिक इत्याह—प्रतीति। वेदाध्ययनत्वहेतुना वक्ष्यमाण-रीत्याऽपौरुषेयत्वसाधनादिति भावः। स्वाभिप्रायमाह—तस्मादिति। अ-कृत्रिमाः=अपौरुषेया वेदाः। प्राभाकरैरप्युक्तम्—

“ पदानां तत्पदार्थेषु शक्तिः स्वाभाविकी स्थिता।
पुंवाक्येषु विसम्वादशङ्कया सा तिरोहिता॥
वेदेषु त्वऽस्मर्यमाणकर्तृकेषु स्वरूपतः।
प्रमाणान्तरसंस्पर्शरहितार्थावबोधिषु—॥
न कर्तुरनुमानं स्याद्वाक्यत्वादिति लिङ्गतः।
न कर्ता शक्नुयाद्वाक्यं कर्तुं कार्ये ह्यऽलौकिके॥
तेन वेदे विसम्वादशङ्का नास्ति कथं चन।
अर्थनिश्चयहेतुत्वादर्थसंस्पर्शिता स्थिता॥” इत्यादि।

पौरुषेयत्वस्य यद् दृश्यादर्शनबाधितत्वमुक्तं तदुपपादयति—यदीति। यदि

---

तथाप्येतावत्पर्यन्तं सन्दर्भैकारेणाधिकरणस्यैकैकमेवसूत्रं सर्वत्रोपन्यस्तमितिहे-तोस्तथा पूर्वं क्वचिदपि सूत्रान्ते इतिपदं नोपन्यस्तमत्र चेतिपदमुपन्यस्तमितिहेतो-र्ज्ञायते ग्रन्थकारस्य सूत्रद्वये इतिपदं योजयित्वा पद्यरचनायामेवात्राभिप्राय इति।

ध्येतृपरम्परया बुद्धादिवदऽस्मरिष्यत् न ह्यस्य विस्मरणं सम्भवति-तत्प्रत्ययेन हि तदा सर्वपुंसां वेदार्थानुष्ठानं प्रमाणान्तराऽगोचरत्वात् फलसाधनत्वस्य, अतोऽर्वाचीनैः कथमसौ विस्मर्येत, यतः स कर्ताऽवश्यं स्मर्तव्यो न च स्मर्यते तेन स्मृतिरूपदर्शनयोग्यत्वे सत्यप्यदृश्यमानः कर्ता शशविषाणवदऽभावात्मनाऽध्यवसीयते ।

येपि हि पौरुषेयतां मन्यन्ते तेपि नैव परम्परया तत्र कर्तृविशेषस्मरणं शक्नुवन्ति वदितुम्, सामान्यतो दृष्टेन कर्तारमनुमाय स्वाभिमतं कर्तारं तत्र निक्षिप-

---

वेदानां कोपि कर्ता स्यात्तदा सोऽमुकेन कृता वेदा इत्येवमस्मरिष्यत् नच स्मर्यते तस्मान्नास्तीत्यपौरुषेया वेदा इत्यर्थः । ननूपक्षेया वेदकर्ता विस्मृतः स्यादित्याशङ्क्याह- नहीति । विस्मरणस्याऽयोग्यत्वे हेतुमाह- तत्प्रत्ययेनेति । यथा हि पौरुषेयस्य भारतस्य यत् प्रामाण्यं तत्कस्य हेतोः ? परमाप्तश्रीव्यासदेवविरचितत्वादित्येव वक्तव्यं व्यासदेवविस्मरणे च न भारतस्य प्रामाण्यं संभवेत्तथैव यदि वेदाः पौरुषेयाः स्युस्तदा तत्कर्तृविस्मरणे तेषां प्रामाण्यं नस्यात् पौरुषेयवाक्यप्रामाण्यस्य तत्कर्त्राप्तत्वज्ञानाधीनत्वादिति न वेदकर्तुर्विस्मरणं सभवतीत्यर्थः । तत्प्रत्ययेन=वेदकर्त्राप्तत्वेन । अनुष्ठानमित्यत्र स्यादिति शेषः । वेदोक्तानां ज्योतिष्टोमादीनां या फलसाधनता तस्याः प्रत्यक्षादिप्रमाणान्तरागोचरत्वात् वेदकर्त्राऽऽप्तत्वमात्राधीनत्वान्न वेदकर्तुर्विस्मरणं सम्भवति । उपसंहरति-अत इति । दृश्यादर्शनस्वरूपमाह-यत इति । अभावात्मना=नास्तीति रूपेण ।

विपक्षे बाधकमाहह-येपीति । ये=तार्किकाः । तत्र=वेदे । वेदपौरुषेयत्ववादिनां पौरुषयेत्वप्रतिपादनप्रकारमाह-सामान्यतोदृष्टेनेति । प्रत्यक्षायोग्यविषयसाधकमनुमानं सामान्यतोदृष्टमित्युच्यते, उक्तं च-" अपरं च वीतं सामान्यतोदृष्टम्-अदृष्टस्वलक्षणसामान्यविषयं यथेन्द्रियविषयमनुमानम्, अत्र हि रूपादिज्ञानानां क्रियात्वेन करणवत्त्वमनुमीयते, यद्यपि च करणत्वसामान्यस्य छिदादौ वास्यादि स्वलक्षणमुपलब्धं तथापि यज्जातीयं रूपादिज्ञाने करणवत्त्वमनुमीयते

न्ति—केचिदीश्वरम्, अन्ये हिरण्यगर्भम्, अपरे प्रजाप-
तिम्, न चायं नानाविधो विवादः परम्परया पाणिनि
मन्वादिवत् स्मर्यमाणे कथं चिदप्यवकल्पते, न हि मा-
नवे भारते शाक्यग्रन्थे वा कर्तृविशेषं प्रति कश्चिद्विव-
दते, तस्मात् स्मर्तव्यत्वे सत्यऽस्मरणाद् दृश्यादर्शनबा-
धितं सामान्यतोदृष्टं न शक्नोति कर्तारमवसाययितुम् ।

सप्रतिसाधनश्च हेतुः 'वाक्यत्वात्' इति, विवादा-
ध्यासितं वेदाध्ययनं गुर्वऽध्ययनपूर्वकं वेदाध्ययनत्वाद्-

---

ज्जातीयस्य करणत्वस्य न दृष्टं स्वलक्षणं प्रत्यक्षेण, इन्द्रियजातीयं हि तत्
रणं न चेन्द्रियत्वस्य सामान्यस्य स्वलक्षणमिन्द्रियविशेषः प्रत्यक्षगोचरो-
र्वाग्दृशां यथा वन्हित्वस्य सामान्यस्य स्वलक्षणं वन्हिः, सोयं पूर्ववतः ( दृ-
स्वलक्षणविषयस्य ) सामान्यतोदृष्टात् सत्यपि वीतत्वेन तुल्यत्वे विशेषः ।"
ति, तदत्रापि प्रत्यक्षायोग्यवेदकर्तृसाधकस्यानुमानस्य सामान्यतोदृष्टत्वं यु-
क्तमेव । तथा च यद् यद् वाक्यं तत्तत् सकर्तृकं भारतादिवदिति सामान्य-
तोदृष्टेन वेदस्यापि वाक्यत्वेन सकर्तृकत्वमनुमाय तत्र=वेदे कर्तारं निक्षिप-
न्ते, तत्रापि कर्तृविशेषे विप्रतिपत्तिरेवेत्याह—केचिदिति । ईश्वरम्=विष्णुम् ।
हिरण्यगर्भम्=चतुर्मुखं विराट्पुरुषं वा । प्रजापतिम्=प्रपञ्चोत्पादने नि-
युक्तम् । नन्वीश्वरेण वा प्रजापतिना वा वेदा विरचिता इत्यस्त्येव परम्प-
रया वेदकर्तृस्मरणमित्याशङ्क्याह—न चायमिति । यदीदं स्मरणं स्यात्तदा ना-
नाविधो विवादो न स्यात्, एकस्यैव वेदकर्तृत्वसम्भवात्सकलैरेकस्यैव वेदक-
र्तृत्वमुच्येत न तु मतभेदेनाऽनेकेषामित्यर्थः । विपक्षे दृष्टान्तमाह—न हीति ।
उपसंहरति—तस्मादिति । कर्तारम्=वेदकर्तारम् । अवसाययितुम्=निश्चा-
ययितुं न शक्नोति ।

उक्तानुमानस्य सत्प्रतिपक्षतामाह—सप्रतीति । प्रयोगमाह—विवादेति ।
विवादाध्यासितं वेदाध्ययनं तज्ज्ञेयं यस्य पूर्वपक्षिणाऽऽद्यत्वमुच्यते पौरु-
षेयत्वे ह्याद्यं वेदाध्ययनं गुर्वध्ययनपूर्वकं न सम्भवति प्रथमाध्ययनकर्तुर्गुरुणैव
वेदस्य विरचितत्वापत्तेरिति भावस्तत्र प्रथमत्वेनाभिमते वेदाध्ययनेऽनेनानुमा-
नेन गुर्वध्ययनपूर्वकत्वे सिद्धे किं वा सकलेषु वेदाध्ययनेषु गुर्वध्ययनपूर्व-

ऽध्ययनाध्ययनवदिति, तदिदमाह सूत्रकारः–" उक्तं तु शब्दपूर्वत्वम् " इति, शब्दशब्देनात्र शब्दजन्यमध्ययनम्, तदयमर्थः–सर्वपुंसामध्ययनमऽध्ययनान्तरपूर्वकम्. सर्वे हि यथैव गुरुणाऽधीतं तथैवाऽधिजिगांसन्ते. न पुनः स्वातन्त्र्येण कश्चिदपि प्रथमोऽध्येता वेदानामस्ति यः कर्ता स्यात् ? तस्मादपौरुषेया वेदाः। समाख्यापि -योग्यानुपलब्धिनिराकृते कर्तरि तन्निमित्ता न सम्भवतीति प्रवचननिमित्ताऽध्यवसीयते–प्रवचने एवातिशययोगेनाऽसाधारण्यं कठस्य संभवतीति न विशेषणत्वानुपपत्तिः।

यद्वा नायं पुरुषविशेषवचनः कठशब्दः किं तु नित्यस्य चरणविशेषस्यैवेयं संज्ञा तच्चरणैः पुरुषैः परम्प-

---

कत्वे सिद्धे वेदस्याऽनादित्वापत्त्याऽपौरुषेयत्वं सिद्धमिति वाक्यत्वादिति हेतुः सत्प्रतिपक्षः सन् न वेदस्य पौरुषेयत्वं साधयितुं समर्थः। न च वाक्यत्वहेतुना वेदाध्ययनत्वहेतुरेव किं न सत्प्रतिपक्षः स्यादिति वाच्यम्, कर्तुर्दृश्यादर्शनेन बाधितत्वात् तत्साधकस्य वाक्यत्वहेतोरबलत्वात् तदभावसाधकस्य वेदाध्ययनत्वहेतोश्च तेनैव दृश्यादर्शनेन सबलत्वात्। अत्र सूत्रं प्रमाणयति–उक्तं त्विति। सूत्रोक्तशब्दपदार्थमाह–शब्देति, विवक्षितमिति शेषः। मया तु वृत्त्यनुसारेण पूर्वमस्य व्याख्या कृता। सूत्रमाश्रित्य स्वाभिप्रायमाह–तदयमिति। अधिजिगांसन्ते= अध्येतुमिच्छन्ति। अध्यापयितुरेव कर्तृत्वसम्भवेनाध्येतुः कर्तृत्वासंभवात् "यः कर्ता " इत्यस्य यतः कर्ता स्यादित्यर्थो ज्ञेयः किं वा " अध्येता " इत्यस्याऽध्यापयिता वोच्चारयिता वेत्यर्थः। उपसंहरति–तस्मादिति। यत्तु काठकादिसमाख्यया पौरुषेयत्वमुक्तं तस्योत्तरमाह–समाख्यापीति। तन्निमित्ता=कर्तृनिमित्ता। समाख्यायाः प्रवचननिमित्तत्वमुपपादयति–प्रवचनेति। कठशाखायाः कठसदृशप्रवचनस्याऽन्यत्राभावात् कठशाखेति समाख्या प्रसिद्धिं प्राप्तेत्यर्थः।

अपौरुषेयत्वपक्षे काठकादिसमाख्याया उपपत्त्यन्तरमाह–यद्वेति। पुरुषविशेषवचनः=पुरुषविशेषवाचकः। चरणविशेषस्य=शाखाविशेषस्य। उक्तं च कौमुद्याम्–" चरणे ब्रह्मचारिणि " इति सूत्रे " चरणः शाखा " इति।

रयाऽधीयमाना शाखा काठकशब्देनाभिधीयते ।

तस्मादपौरुषेयत्वाच्चोदनानां प्रमाणता ।
चोदनेति प्रतिज्ञार्थः पादेनानेन साधितः ॥

यद्धि चोदनासूत्रे प्रतिज्ञातम्— भेदशेषप्रयुक्तिक्रमनियमाऽधिकाराऽतिदेशोहबाधतन्त्रप्रसङ्गसर्वविशेषणविशिष्टे धर्मस्वरूपे चोदनैव प्रमाणं प्रमाणमेव चोदनेति तत्र चोदनैवेत्यवधारणेन यच्चोदनानिरपेक्षाणां तया सह तुल्यकक्षतया स्पर्धमानानां प्रत्यक्षादीनामप्रामाण्यं प्रतिज्ञातं तत् प्रत्यक्षसूत्रेण साधितम् । "औत्पत्तिकस्तु" इत्यादिना पादशेषेण प्रमाणमेवेत्ययमंशः साधितः । तदेवमस्मिन्नेव पादे चोदनासूत्रप्रतिज्ञातार्थविशेषे साधिते उपरितनं पादत्रयं चोदनासूत्रशेषतया न सङ्गच्छते किं तु प्रथमे सूत्रे किं-

---

तच्चरणैः=कठशाखीयैः पुरुषैः । यदि कठ इति पुरुषविशेषनामधेयं स्यात्तदा कदाचित्तस्य कर्तृत्वेन वेदे समावेशः स्यादपि नैवमस्तीति भावः ।

पादोक्तविषयं संक्षेपेण वदन्नुपसंहरति—तस्मादिति । एवमुक्तप्रकारेणाऽपौरुषेयत्वं सिद्धं तथा च पौरुषेयत्वेन यच्चोदनानां धर्मेऽप्रामाण्यमुक्तं तदपि निरस्तमित्याह—चोदनानामिति, सिद्धेति शेषः । उत्तरार्धविषयं विशदयति—यद्धीति । प्रतिज्ञातमेवाह—भेदेति । भेदादयो द्वितीयाद्यध्यायप्रतिपाद्याः प्रथमाध्यायस्य प्रमाणप्रतिपादकत्वात् । प्रसङ्गेति—भेदादिप्रसङ्गान्तसर्वविशेषणविशिष्टे । अवधारणेन=नियमेन । तया=चोदनया सह तुल्यकक्षतया=समबलतया ( प्रमाणरूपतया ) । प्रत्यक्षसूत्रेण प्रत्यक्षादीनां धर्मं प्रत्यऽसामर्थ्यं प्रतिपादितमिति स्पष्टोर्थः । इत्यादिना=इत्यारभ्य । चोदनासूत्रेति—चोदनासूत्रेण यः प्रतिज्ञातोर्थविशेषः—चोदनैव प्रमाणं प्रमाणमेव चोदनेति तस्मिन् साधिते । न सङ्गच्छत इति—चोदनासूत्रेण प्रतिज्ञातस्यार्थस्य चोदनैव प्रमाणं प्रमाणमेव चोदनेत्यस्यार्थस्याऽस्मिन्नेव पादे प्रतिपादितत्वाच्चोदनासूत्रशेषतयोपरितनं पादत्रयं न सङ्गच्छते चोदनासूत्रप्रतिपाद्यस्य शेषाभावात्, तथापि सङ्गतिप्रकारमाह—किं त्विति । यथा चोदनासूत्रादारभ्यायं पादः

लक्षणो धर्म इति धर्मस्य प्रमाणं वक्तव्यत्वेन प्रतिज्ञा-
तं तत्राद्येन पादेन चोदनायाः प्रामाण्यमुक्त्वाऽर्थवाद-
स्मृतिनामधेयानामुपरितनेन पादत्रयेण प्रामाण्यं प्रति-
पाद्यते तेन चोदनासूत्रवदेव पादत्रयं जिज्ञासासूत्रो-
क्तया 'को धर्मः' इत्यनयैव प्रतिज्ञया सङ्गच्छते ।

न चार्थवादादीनां प्रामाण्ये चोदनैवेति प्रतिज्ञाव्या-
घातः स्यादिति वाच्यम्, तुल्यजातीयापेक्षत्वादवधा-
रणस्य, यथा 'शुक्लः पटः' इत्युक्ते कृष्णादीनामेव
निवृत्तिर्न द्रव्यत्वादीनाम्. एवं चोदनैवेत्यवधारणेन प्र-
त्यक्षादीनामेव चोदनावत् स्वातन्त्र्येण प्रमाणीबुभूष-
तां व्यावृत्तिर्न त्वऽर्थवादीदानां चोदनैकवाक्यतया
चोदनामूलतया च प्रमाणीभवतां चोदनाविषयेणाव-
धारणेन प्रामाण्यं निरस्तं नापि साधितम्, उपरित-
नेन तु पादत्रयेण तत्साधयिष्यते यथाऽऽह—

---

प्रथमसूत्रस्यैव शेषस्तथाग्रिमपादत्रयमपि प्रथमसूत्रस्यैव शेष इत्यर्थः । तत्रापि प्रथमपादे तृतीयसूत्रादारभ्य सकलस्य पादस्य चोदनासूत्रशेषत्वमप्यस्त्येवेति विज्ञेयम् ।

ननु यद्यर्थवादादीनामपि धर्मे प्रामाण्यं तदा चोदनैव प्रमाणमिति प्रतिज्ञायाः(नियमस्य)व्याघातः स्यादित्याशङ्क्य परिहरति—न चेति । हेतुमाह—तुल्येति, अवधारणस्य चोदनातुल्यजातीयप्रत्यक्षाद्यपेक्षत्वात्—अवधारणेन प्रत्यक्षादीनामेव व्यावृत्तिरभिप्रेता न तु चोदनाङ्गभूतार्थवादादीनामपीत्यर्थः । उक्तमेव विशदयति—यथेति । कृष्णादीनाम्=कृष्णत्वादीनाम् । प्रमाणीबुभूषताम्=धर्मे प्रमाणीभवितुमिच्छतां प्रत्यक्षादीनाम् । न त्विति—न त्वर्थवादादीनां प्रामाण्यं निरस्तमित्यन्वयः । अर्थवादादीनां विशेषणमाह—चोदनैकेति, चोदनाया धर्मं प्रति प्रामाण्ये सिद्धे तदेकवाक्यतां प्राप्तानामर्थवादादीनामपि धर्मे प्रामाण्यं युक्तमेवेति कथं निरस्तं स्यात् किं तु साधितमपि नेत्याह—नापीति । यद्यर्थवादादीनां धर्मे प्रामाण्यं न साधितं तदा कथं तेषां प्रामाण्यं स्यादित्याशङ्क्याह—उपरीति । तत् = अर्थवादादीनां धर्मे प्रामाण्यम् । अत्र श्लोकवार्तिकं प्र-

" इति प्रमाणत्वमिदं प्रसिद्ध-
मुक्त्वेह धर्मं प्रति चोदनायाः ।
अतः परं तु प्रविभज्य वेदं
त्रेधा ततो वक्ष्यति तस्य योर्थः ॥"

॥ इति पदवाक्यप्रमाणपारावारपारीणमीमांसासाम्राज्यधुरन्धरमहा-
महोपाध्यायविद्वद्वरश्रीमत्पार्थसारथिमिश्रशास्त्रिप्रणी-
तायाः शास्त्रदीपिकायाः प्रथमाध्यायस्य
प्रथमः पादः
समाप्तः ॥

---

माणयति–इतीति, इति=इत्येवं प्रथमपादेन धर्मं प्रति चोदनायाः प्रसिद्धं प्र-माणत्वम्=प्रामाण्यमुक्त्वा, अतः=प्रथमपादात् परम्=अग्रिमपादत्रये, वेदं त्रेधा= विध्यर्थवादमन्त्रात्मना त्रिधा विभज्य तस्य= त्रिधा विभक्तस्य वे-दस्य यः= विधिस्तत्स्तुत्यादिरूपश्च योऽर्थस्तं वक्ष्यतीत्यन्वयः ॥ इति ॥

अत्र च विद्वद्वरैर्महाशयैः—

" तद्विद्वांसोनुगृह्णन्तु चित्तश्रोत्रैः प्रसादिभिः ।
सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः ॥
न चात्राऽतीव कर्तव्यं दोषदृष्टिपरं मनः ।
दोषो ह्यविद्यमानोपि तच्चित्तानां प्रकाशते ॥
निर्दोषत्वैकवाक्यत्वं क्व वा लोकस्य दृश्यते ।
सापवादा यतः केचिन्मोक्षस्वर्गावपि प्रति ॥
आगमप्रवणश्चाहं नापवाद्यः स्खलन्नपि ।
न हि सद्वर्त्मना गच्छन् स्खलितेष्वप्यऽपोद्यते ॥"

इत्यादीनि श्लोकवार्तिकस्य वाक्यान्यनुसंधेयानि यद् वै मीमांसाप्रधानपुरुषप्र-वरेण महामहोपाध्यायश्रीकुमारिलभट्टपादेन विरचितं का कथा पुनरत्र मादृ-शामन्दमतीनामित्युपरम्यते ॥

श्रीमद्गुरुमुखाज्ज्ञातपदार्थानां हि संग्रहः ।
स्वकीयज्ञानरक्षायै कृतोयं युक्तयत्नतः ॥
मूलान्वये विशेषेण संरम्भो विस्तरभिया ॥

काश्यां वेदर्तुनन्देन्दु(सं१९६४)विक्रमाङ्कसमामधौ ।
बालानामुपकाराय प्रकाशोयं प्रकाशितः ॥
वन्दे श्रीमद्धयग्रीवं मन्देभ्यः करुणानिधिम् ।
श्रीमद्रामानुजं वन्दे मीमांसा येन पालिता ॥
वन्दे सुदर्शनाचार्यं दर्शनागाधसागरम् ।
श्रुतप्रकाशिका टीका श्रीभाष्ये येन निर्मिता ॥
वन्दे दीक्षागुरुं श्रीश्रीनिवासाचार्यदेशिकम् ।
विद्यागुरुं तथा वन्दे श्रीगङ्गाधरशास्त्रिणम् ॥
यः सांख्ये कपिलः पतञ्जलिरलं शाब्दे कवित्वे परं
श्रीहर्षोऽद्वयदर्शने शिवतनुस्तर्केषु यो गौतमः ।
मीमांसामतजैमिनिर्ध्रुवमुपाध्यायो महद्भ्यो महान्
स्याऽऽईईपदभृद् गुरुर्विजयते शास्त्री स गङ्गाधरः ॥

॥ इति पञ्चनदीयसुदर्शनाचार्यविरचितस्तर्कपादीयः
शास्त्रदीपिकाप्रकाशः
समाप्तः ॥